कृष्णदास संस्कृत सीरीज १३६

# संस्कृतसाहित्येतिहासः

( संस्कृतवाङ्मयस्य समग्रोऽभिलेखः )

लेखक

आचार्य लोकमणि दाहालः



चौखम्बा कृष्णदास अकादमी, वाराणसी

कृष्णदास संस्कृत सीरीज
१३६
***

# संस्कृतसाहित्येतिहासः

( संस्कृतवाङ्मयस्य समग्रोऽभिलेखः )

लेखकः
आचार्य लोकमणि दाहालः
आचार्य, एम. ए. (डबल)




चौखम्बा कृष्णदास अकादमी, वाराणसी

**प्रकाशक** : चौखम्बा कृष्णदास अकादमी, वाराणसी
**मुद्रक** : चौखम्बा प्रेस, वाराणसी
**संस्करण** : तृतीय, वि०सं० २०६२, सन् २००५
**मूल्य** : रू० १३५.००

ISBN : 81-218-0028-5


के० ३७/११८, गोपाल मन्दिर लेन
गोलघर (मैदागिन) के पास
पो० बा० नं० १११८, वाराणसी–२२१००१ (भारत)
फोन : (०५४२) २३३३४५८ P.P. & २३३५०२०

*अपरं च प्राप्तिस्थानम्*
**चौखम्बा संस्कृत सीरीज आफिस**
के० ३७/९९, गोपाल मन्दिर लेन
गोलघर (मैदागिन) के पास
पो० बा० नं० १००८, वाराणसी—२२१००१ (भारत)
फोन : (आफिस) (०५४२) २३३३४५८
(आवास) (०५४२) २३३५०२०, २३३४०३२
Fax : 0542 - 2333458
e-mail : cssoffice@satyam.net.in
web-site : www.chowkhambaseries.com

KRISHNADAS SANSKRIT SERIES
136

***

# SANSKRITASAHITYETIHASAH

( AN ANALYTIC & SYSTEMATIC STUDY OF THE SANSKRIT LITERATURE : ITS BEGINNING & DEVELOPMENT TO UP-TO-DATE )

By

**Lok Mani Dahal**

Acharya, M.A. ( Double )




CHOWKHAMBA KRISHNADAS ACADEMY
VARANASI

**Publisher** : Chowkhamba Krishnadas Academy, Varanasi
**Printer** : Chowkhamba Press, Varanasi

ISBN : 81-218-0028-5


Oriental Publishers & Distributors
K. 37/118, Gopal Mandir Lane
Post Box No. 1118, Varanasi- 221001
( INDIA )
Phone : (0542) 2333458 P.P. & 2335020

*Also can be had from :*
**CHOWKHAMBA SANSKRIT SERIES OFFICE**
Publishers and Oriental and Foreign Book-sellers
K . 37/99, Gopal Mandir Lane
At the North Gate of Gopal Mandir
Near Golghar ( Maidagin )
Post Box No. 1008, Varanasi- 221001 ( India )
Phone { Office : (0542) 2333458
Resi. : (0542) 2334032, 2335020
Fax : 0542-2333458
e-mail : cssoffice@satyam.net.in
web-site : www.chowkhambaseries.com

# समर्पणम्

श्रीमतां ब्रह्मलीनानां निगमागमपारदृश्वनां

सोमनाथशर्मबराल

महोदयानां गुरुचरणानां दिगन्तविततसुयशसां
पुण्य-स्मृतौ
श्रद्धापुष्पमिदं समर्प्यते ।

यस्यात्यन्तप्रयासेन मूढोऽसौ किञ्चिदवाप्तवान् ।
ज्ञानं ज्ञानिजनाराध्यविषयं हि यथामति ॥

श्रद्धयाऽवनतः
लोकमणिदाहालः

# पुरोवाक्

विदितचरमेव सर्वेषां यत्संस्कृतसाहित्यार्णवोऽगाधः सुनाविकैरप्यपारगम्यः। अद्यावधिप्रणीता इतिहासग्रन्था नैतस्य सर्वाङ्गीणं स्वरूपमुपस्थापयितुं समर्थाः। अस्य कतिपये ग्रन्थाः कालेन कवलिताः, कतिपये तु सन्तोऽपि नैवास्माकं दृष्टिपथमागताः। ये हि दृष्टास्तेष्वपि सन्ति कतिपये खण्डिताश्च। तेन न कोऽप्यस्यापि पारदृश्वा। तत्र तत्र ग्रन्थेषु यदेव ज्ञातं प्रणेत्रा तत्तदेवोपन्यस्तम्। सम्प्रति हि लभ्यन्ते पञ्चाशदधिका लघुकाया बृहत्कायाश्च अस्येतिहाससम्बद्धग्रन्थाः। प्रस्तुतग्रन्थस्तु तेषामपि सारसङ्क्षेप एव।

ग्रन्थानामध्ययनादेतज्ज्ञायते यत्सन्ति मूलतश्चत्वारो वेदा येषाञ्च प्रत्येकं शाखाविस्तरः। ऋग्वेदो हि एकविंशतिशाखः स्मृतः। एवमेव यजुर्वेदस्य प्रथमतः शुक्लकृष्णभेदौ तत्रापि शुक्लस्य पञ्चदशशाखाः कृष्णस्य षडशीतिः। सामवेदः सहस्रवर्मा स्मृतः। अथर्ववेदश्च नवधा परिकीर्तितः, इत्थं हि वेदतरुर्मूलत एव ( २१+१०१+१०००+९=११३१ ) एकत्रिंशदुत्तरशताधिकसहस्रशाखः स्मृतः। तत्रापि प्रतिशाखं सन्ति ब्राह्मणा आरण्यकानि उपनिषदश्च। चत्वार उपवेदाः इति वैदिकसाहित्यमेव सङ्ख्यातुं न हि कश्चिज्जानाति। ततश्च स्मर्यन्ते षड् वेदाङ्गानि शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। सहस्राधिकशाखस्य वेदस्य प्रतिशाखं शिक्षाग्रन्थाः, कल्पग्रन्थाः, व्याकरणग्रन्थाः, निरुक्तानि, छन्दोग्रन्थाः, ज्योतिषमिति, तेषां गणनैव न सम्भवति। एवमेव सन्त्यनेकानि वेदस्योपाङ्गानि धर्मशास्त्र-पुराण-इतिहास-दर्शनादीनि। धर्मशास्त्रं स्मृतिः। स्मृतयो मूलतोऽष्टादश स्मृताः। तावत्य एवानुस्मृतयः। पुराणानि मूलतोऽष्टादश, तावन्त्येवोपपुराणानि अनुपुराणानि च। दर्शनं स्वयमेव विविधशाखं स्मर्यते। रामायणमहाभारतेऽपि काव्यस्वरूपेऽपि वेदस्यैव व्याख्यातृणी। लौकिकं काव्यमपि प्रथमतो द्विविधं श्रव्यं दृश्यञ्च। श्रव्यं त्रिविधं पद्यमय-गद्यमय-चम्पूभेदात्। तानि च विविधरूपाणि महाकाव्यखण्डकाव्यमुक्तकादिभेदात्। तेषामपि चरित-ऐतिहासिक देव-श्लेष-यमकादिभेदाद् बहूनि रूपाणि। तथैव कथाऽऽख्यायिका-प्रभृतयो भेदा अपि। कथाऽपि नीत्युपदेशभेदाद् द्विविधा। दृश्यकाव्यं मूलतो दशविधं वस्तुनेतृरसभेदात्। तथैवास्य सन्त्यष्टादशोपभेदाश्च स्मृताः। इत्थं हि वैदिकलौकिकसाहित्यसङ्ख्या भवति गणनाबाह्या नाम्नाऽपि वर्णनस्य तु का कथा। इतीत्थं विततं विशालञ्च संस्कृतसाहित्यं लघुकाये ग्रन्थेऽस्मिन्

समायोजनं तु घटसागरस्योपन्यास इव । तेन ह्यत्रापि तावानेव भाग उपन्यस्तो यावान् हि पूर्ववर्तिभिः स्मृतो बहुश उल्लिखितश्च । तर्हि कोऽस्योपयोगः किं वा पिष्टपेषणेनेति प्रश्ने एतावदेव कथयितुं पार्यते यदत्र त एव विषया यथासम्भवं क्रमबद्धतया विश्लेषणात्मकरूपेण सरलया बालैरपि बोद्धया भाषया वर्णिताः, यथामति ग्रन्थसमालोचनञ्च यथावसरं समुपन्यस्तम् । अनेन हि नापि प्रबुद्धाः किन्तु बालाः संस्कृतसाहित्यप्रविविक्षवोऽवश्यमेव लाभान्विता भवेयुरेव । ग्रन्थस्यास्य प्रणयने ये हि ग्रन्था उपयोजिता गुरवश्च साधिता मित्राणि च क्लेशितानि तेषां सर्वेषामेवाहमधमर्णः । तान् सर्वान् ग्रन्थकारान् गुरून् सुहृदश्चाहं प्रणिपत्य क्षमापये । तदत्रापि स्मर्तव्यम्—

न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ।।

इति । 'निरीक्षते केलिवनं प्रविश्य क्रमेलकः कण्टकजालमेव' इतिवन्न व्यवहर्तव्यं पण्डितैः सुधीभिः । किञ्चात्रापि सैव विनतिः—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्तु ते किमपि तान् प्रति नैष यत्नः ।

तर्हि चेत् ?

यत्नस्त्वयं मम कृतेऽल्पधियां जनानां
साहित्यमन्थनसमुत्सुकमानसानाम् ।।

इति शम् ।

काशी
महानवमी
२०४५ वैं०

विनीतः
लोकमणिदाहालः

# विषयानुक्रमणिका

## १. प्राक्कथनम्



## २. आर्याणामादिभूमिः



## ३. भाषा



## ४. संस्कृतभाषा



## ५. संस्कृतभाषाया वैशिष्टयं स्वरूपञ्च



## ६. संस्कृतसाहित्यस्य महत्त्वम्



## ७. वैदिकसाहित्यम्

## ८. उपवेदाः



## ९. वेदाङ्गवाङ्मयम



## १०. आगमसाहित्यम्



## ११. पुराणसाहित्यम्

## १२. धर्मशास्त्रम्



## १३. अर्थशास्त्रम्



## १४. कामशास्त्रम्



## १५. मोक्षशास्त्रम्

## २२. लौकिककाव्यप्रकरणम्

# संस्कृतसाहित्येतिहासः



## १. प्राक्कथनम्

### १. मङ्गलाचरणम्—

हृदाकाशेऽपूर्वं किमपि भवनं या प्रथयति
क्रमादेतत्स्वान्ते स्फुरितमिव या भावयति च।
तदेव स्पष्टं याऽनुभवविषयत्वे कलयति
नमस्तस्यै देव्यै प्रकटयति प्रत्यक्षमपि या॥ १॥

नत्वा परां तां वचसां प्रणेत्रीं नेपालजो लोकमणिर्दहालः।
छात्रोपकाराय हि संस्कृतस्य तनोति साहित्यविचारगुम्फम्॥ २॥

### २. विषयनिर्देशः—

साहित्यं नाम शब्दार्थयोः सहितभावः। तच्च कमपि विषयमधिकृत्य प्रवर्तते। तदेव तात्कालिकसामान्यमूल्यस्य दर्पणस्तन्निर्द्धारकञ्च। यस्य कस्यापि समुदायस्योत्कर्षस्य साहित्यमेव परं प्रमाणम्। यथा यथा समुदाय औत्कर्ष्यं भजते तथा तथा तस्य साहित्यमपि उत्कृष्टतरं सञ्जायत एव। तेन साहित्यं भाषा-भाव-विषयनिमित्तं समाजस्याधमर्णं भवति मूल्यविस्थापने तस्य तदुपरि उत्तमर्णताऽपि। अतः साहित्यसमाजावन्योन्यस्य प्रयोजकौ भवतः।

प्रतिसमाजं लिखितमलिखितं वा स्वानुकूलप्रकृतिकं साहित्यं तु भवत्येव किन्तु पूर्वमेवापरापेक्षया प्रभावि भवति स्थायिप्रकृतिकत्वाल्लिपिबद्धतया। अपरञ्च, अलिखितमपि साहित्यं कालान्तरे लिपिबद्धं भवत्येव। सम्प्रति ह्युपलब्धेषु सर्वेष्वपि साहित्येषु संस्कृतसाहित्यं प्राचीनतमं परिष्कृतञ्च दृश्यते। "ह्युगल्ट टीवर्ट्"स्य कथनं यत्संस्कृतसाहित्यं संस्कृतभाषा च नितान्तमेवावास्तविके, ते हि सिकन्दरस्य भारतविजयानन्तरं धूर्तब्राह्मणैर्ग्रीकसमाजीयादर्शाधमर्णत्वेन रचितं प्रतिरूपमात्रमिति तन्नितान्तमेवायथार्थं भ्रमात्मकञ्च। सम्प्रति तु तस्य प्राचीनत्वं याथार्थ्यञ्च निर्विवादमेव।

संस्कृतं नाम दैवी वागिति सम्मतम् । मतमिदं ऋग्वेदस्य कथनेऽस्मिन्नाघृतम् । यथा तत्रोक्तं—

'देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।' इति (८.१००.११)। दैवी वागेव कतिपयैर्विशेषैः प्रकृतिप्रत्ययसमवायैर्भूषितेति संस्कृतमप्युच्यते। इयमेव विश्वभाषासमुदायस्य मूलमिति भाषाविचक्षणा वदन्ति। अस्मिन्नेव आर्यसभ्यतायाः संस्कृतेश्च मौलिकस्वरूपं लिखितमस्ति। अस्मिन् सुविपुलं साहित्यं निबद्धमस्ति यद्वयं पाठसौविध्यदृष्ट्या वैदिकलौकिकादिरूपेण विभजामस्तथैव तदवान्तरभेदेष्वपि। संस्कृतसाहित्यस्य मूलतोऽनेकाः शाखाः कल्पिताः सन्ति—**वैदिकसाहित्यं** पूर्वोत्तरोपभेदयुतं, संहिता-ब्राह्मणारण्यकोपनिषच्छिक्षाकल्पव्याकरणनिरुक्तछन्दः प्रभृत्यवान्तरभेदसमलङ्कृतं, **व्याकरणसाहित्यं** प्राचीननव्योपभेदयुतं, **ज्यौतिषसाहित्यं** सिद्धान्तफलितादिभेदयुतं, **दर्शनसाहित्यमनन्तशाखम्**, **आयुर्वेदसाहित्यं** शतशाखं, **काव्यसाहित्यं** गद्यपद्यचम्पू-प्रबन्धमुक्तकश्रव्यदृश्यलक्ष्यलक्षणप्रभृत्यनेकोपभेदयुतम्, **आगमसाहित्यमसङ्ख्यप्रभेदयुतम्**, **पुराणसाहित्यं**, **धर्मशास्त्रसाहित्यम्**, **अर्थशास्त्रसाहित्यं**, **कामशास्त्रसाहित्यं** **मोक्षशात्रसाहित्यं**, **गान्धर्वसाहित्यं**, **शस्त्रास्त्रविद्या**, **कोषसाहित्यं**, **प्रकीर्णकसाहित्यञ्चेति**।

इदमेवार्यचिन्तनस्याक्षयकोषः। आर्यश्च खलु वेदनिर्दिष्टकर्माबद्धश्रद्धो वर्णाश्रमव्यवस्थाव्यवस्थापितमर्यादः पुरुषार्थसाधननिरतः समुदायविशेषः। यथोक्तं—

**"व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः ।**
**त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ॥"**

## २. आर्याणामादिभूमिः

आर्याणामादिभूमिमधिकृत्य विपश्चितो विवदन्ते। केचिदार्यान् भारतमूलनिवासिनो मन्यन्तेऽपरे तु तान् बहिरागतान् मन्वते। तत्र विभिन्नैर्विद्वद्भिर्विभिन्नान्यनुमानानि विहितानि दृश्यन्ते। अत्र च ऐतिहासिकाः पुरातात्त्विका भाषावैज्ञानिका प्रागैतिहासिका नृविज्ञानदक्षा अपि स्वस्वदृष्ट्या स्वं स्वं मतं समर्थयन्ति। प्राधान्येन मध्यैशियाभाग-यूरोपखण्डोत्तरध्रुवभारतादिप्रदेशा आर्याणामादिभूमित्वेन सङ्केतिताः।

तत्र मध्यैशियाभागो जनश्रुतिमाधृत्य रहोडपदाभिधेन विदुषा प्रथमं १८७७ मितवैक्रमाब्दे सङ्केतितः। तदनन्तरं पाटश्लीगाट-मैक्समूलरप्रभृतिविपश्चिद्भिः मतमिदं पूर्णतः समर्थितम्। ते तथाकथने ऋग्वेदीयान्कतिचिन्मन्त्रानपि साक्ष्यत्वेन प्रस्तुवन्ति। ऋग्वेदगतकतिपयमन्त्रतो ज्ञायते यदार्या खलु हिमाधिक्य-

प्रदेशे निवसन्ति स्म । 'अतिक्रामन्तो दुरितां पदानि शतं हिमाः सर्ववीरा मदेम', 'यस्य तरेम तरसा शतं हिमाः' इत्यादिषु हिमशब्दोल्लेखात् । तथैव तत्र यातायातसाधने नौकारथाश्वानां, पशुषु गोऽश्वसिंहमृगहस्तिनां, वृक्षेषु भूर्जपत्र-देवदारु-पिप्पलानामोषधिषु यवस्य लताजातेषु सोमलताया बहुधोल्लेखो विद्यते । तेषाञ्च तत्रैव सुलभतेति । तत्रापि नौकासञ्चलनदृष्ट्या काश्यपायनसमुद्र-मभितो हिन्दूकुशपर्वतस्यापरभागस्थपामीरोपत्यका तैः सङ्केतिताऽस्ति । यजुर्वेदेऽप्येको मन्त्र आयाति यत्र रुद्रस्य कृत्तिवाससो भूजवत्पर्वतस्य परस्ताद्वसतिः कथिताऽस्ति । 'एतत्ते रुद्रावसं तेन परो भूजवतोऽतीहि' इति । स च हिन्दू-कुशपर्वतश्रृङ्खलायामेवासीदिति विश्वस्यते यत्र सोमो बाहुल्येन लभ्यते स्म ।

विश्वस्यते यत्पुनः पुनराक्रामकैः शकैरातङ्किता आर्यास्ततो देशान्तरं चलिताः सन्तः केचित्पश्चिमां दिशमाश्रयन्तो ये खलु शार्मण्यभूखण्डं प्राप्ताः परं विकासमवापुः । केचित्तु पूर्वस्यां दिशि प्रस्थिताः सन्तोऽपि किञ्चिद् दूरं गत्वा द्वयोः शाखयोर्विभक्ता यत्रैका दक्षिणां दिशमाश्रित्य पश्चादार्यायणाभिधप्रसिद्ध-भूखण्डे न्यवसन् येषाम् 'अवेस्ता', 'जरथुस्त्र ( जरत्स्तोत्र ) धर्मश्च सांस्कृति-करिक्थे । अपरा च शाखा सिन्धुं तीर्त्वा ततश्च कियत्कालानन्तरं पञ्चनदप्रदेशं प्राप्य गृहीतास्पदा अभूत् यतश्च गङ्गासमस्थलभूखण्डं व्याप्तवन्ती । एषैव शाखा भारतीयेति कथ्यते ।

क्रिश्चियनानां बाइबिलाभिधो धर्मग्रन्थोऽपि मतमेवामुमनुमोदयति । स च मनुष्याणां पूर्वतः पश्चिमं प्रति प्रव्रजनं निर्दिशति तावत्पर्यन्तं मनुष्यमात्रस्यैकैव भाषाऽप्यासीद् यस्याः कतिपये एव शब्दा आसन्निति । तद्यथा—

**"When men migrated from east to west, thre was only one language and a few words."**

शतपथब्राह्मणञ्च देशे जलाप्लाविते सत्यार्याणामन्यत्र प्रव्रजनं सङ्केतयति । तत्र तु आर्या कुत आगता वा तत्रैव स्थितिमाप्ता इति तु तेनैव निर्णीयते । केचित्तु मध्यैशियायामेव यूरालपर्वतमालाया दक्षिणे पार्श्वे आर्याणां स्थितिं मन्यन्ते यतस्ते केनापि कारणेन चतुर्दिक्षु प्रस्थिता इति ।

अपरे तु मध्ययूरोपभूखण्डमेवार्याणामादिभूमिं मन्यन्ते । तेषां मते यूराल-पर्वतादारभ्यातलान्तिकार्णवपर्यन्तो भूखण्डः इतरापेक्षयाऽऽदिमानवसभ्यता-विकासायोपयुक्तस्तत्र शीतोष्णाधिक्याभावात् । अपरञ्च समस्तेऽपि यूरोपखण्डे समानप्रकृतिका एव भाषा गद्यते जनैः । यैव भाषाऽऽर्यैः सह सम्बध्येति कथ्यते सा यावती यूरोपखण्डे प्रयुज्यते न तावत्यन्यत्र कुत्रापि । तत्रापि हङ्गेरीप्रखण्डः शार्मण्यप्रखण्डो वा तत्स्थानत्वेन निर्दिष्टोऽपि । भाषादृष्ट्या वाञ्छनीयमपि

मतमिदं कतिपयाभिख्याभिदृष्टिभिर्न साधु उपलक्ष्यते यतो यूरोपतो भारतपर्यन्तं जनानामाप्रवासः कल्पनातीतो यथा भारतात्तत्र। इदञ्च स्वदेशगौरवप्रतिपादन-परायणतापरिणाम एव। अधस्तात्कृषियोग्योपरिष्टाच्च गोचरयोग्यभूमिर्न केवलं हङ्गेरी-आष्ट्रिया-बोहेमियाप्रान्तेष्वेवापितु प्रशान्तक्षेत्रादारभ्यातलान्तिकक्षेत्र-पर्यन्तमेव लभ्यते। बेनफेमहाभागस्तु पूर्वोक्तव्यतिरिक्तं कृष्णसागरस्योत्तरीय-विस्तृतभूखण्डमेवार्याणामादिभूमित्वेन निर्दिशति। पूर्वसङ्केतापेक्षया मतमिदं यथार्थनिकटवर्ति दृश्यते। यथा निर्दिशति गाइल्डमहोदयो यतः समस्तयूरोप-खण्डः किञ्चित्कालपूर्वमपि काननाच्छन्न एवासीत्, पामीरश्च रूक्षतमः प्रदेशः, मध्यैशियाक्षेत्रं प्रायो निर्जलं, तत्पार्श्वगतक्षेत्रमपि न तथा दृश्यते यथा आदि-भूमितां परिणमेत। एतदंशतः सत्यमपि न पूर्णतो ग्राह्यम्। हेनरिङ्गमहोदयो रूसस्य दक्षिणवर्तिप्रदेशमार्याणामादिभूमिं मन्यते। स्याद्यत्किञ्चिदपि।

केचित्तु तद्व्यतिरिक्तमेवोत्तरध्रुवप्रदेशमार्याणामादिभूमिं मन्यन्ते। एषु बालगङ्गाधरतिलकोऽग्रणीः। स हि स्वमतप्रतिपादनाय ऋग्वेदोपवर्णितं प्राकृतिकदृश्यम्, उषाया दैर्घ्यं दिवारात्रेः षण्मासावधिव्यापकत्वमुत्तरध्रुवप्रदेशे तदवस्थितिश्च सङ्केतयति। तदनुसारमुत्तरध्रुवस्य कटिबन्धप्रदेश एव सृष्टेरादि-भूमिरासीत्। कालान्तरे तत्प्रदेशे हिमाच्छादिते जना निवासयोग्यभूभागान्वेषणा-येतस्ततो व्यचरन्। तेषु केचिद्भारतं प्रविष्टा इति।

इतरे तु मानवजातेरुत्पत्तिस्थलत्वेन भारतभुवं तत्राप्यार्यावर्तमेवोपस्था-पयन्ति। केचित्सिन्धप्रदेशमपि निर्दिशन्ति तथात्वेन। तेषां मते भारते बहिः-प्रदेशान्न कापि जातिरत्रागत्यावसत्। ये खलु भारतीयास्ते हि मूलरूपेण भार-तीया एवेति।

स्यादेतदप्यंशतः सत्यम्। किन्तु वेदास्तु कथयन्ति तारस्वरेण—'उपह्वरे गिरीणां सङ्गमे च नदीनाम्। धिया विप्रो अजायत', 'त्वं समुद्रोऽसि (ऋ. ९।८६।२९)', "समान्या वियुते दूरे अन्ते ध्रुवे पदे तस्थतुजागरूके (ऋ. ३।५४।७), 'अश्मन्वती नदी स्यन्दत इयम्' (अथर्व० १२।२।२७) एतादृशेन स्थलेन तु समुद्रपार्श्ववर्तिना पार्वत्यप्रदेशेनैव भाव्यमिति तु कथितुं शक्यते। किन्तु वेदास्तु सभ्यावस्था परिणामा एव। तन्मन्त्रदर्शनकाले ते द्रष्टारो यत्र न्यवसन् तत्र तस्यैव स्थानस्य चित्रं समुपलभ्यत इति नाश्चर्यम्।

प्रत्येकमपि मतं यत्किञ्चिदपि तथ्यं त्वङ्गीकृत्यैव चलति, तेन न तत्समूलमेव भ्रामकमिति तु नैव शक्यते वक्तुम्। नैव च प्रचलितेषु मतेष्वेकमपि निर्दोष-मपि प्रतिभाति येन तस्याविचिन्त्यानुसरणं सम्भवेत्। तथापि, सत्स्वपि बहुविधेषु समापत्तिप्रतिपादनेषु बालगङ्गाधरतिलकमतमेवात्र समीचीनतरं प्रतिभाति।

वयमपि चिन्तयामो यदार्यप्रकृतिकानां जनानामादिभूमिरवश्यमेव शाद्वला, वृक्षबहुलाऽऽसन्नजला पार्वत्याऽपि रथसञ्चरणयोग्या, सरोवरप्राचुर्यविशिष्टा, देवदारुपिप्पलादिवृक्षमण्डिता, कृषियोग्या, पशुपालनानुकूला, सम्भवमहाग्रामा च भवितुमर्हति वेदेषु तथैव प्रसङ्गविशेषे वर्णितत्वात्। तादृशी च भूमिः समग्रलक्षणत्वेनोत्तरध्रुवप्रदेशस्य कटिबन्धप्रदेश एव सम्भवति यत्किञ्चित्काश्यपनपार्श्ववर्तिनी च तेनेदमनुमीयते यदार्याः प्रथममुत्तरध्रुवकटिबन्ध एव विकसिता आसन्। चतुर्थकर्तुविपर्यये स प्रदेशो नितान्तमेव हिमाच्छादितत्वाद्वसत्ययोग्यः सञ्जातः। तेनार्या अनिच्छयाऽपि स्वं चिरवसन्तं मातृप्रदेशं विहाय दक्षिणां दिशं प्रति चलिताः। चलिताश्च ते इतस्ततः भ्रमन्त उच्चसमस्थलीस्तीर्त्वा सप्तसैन्धवप्रदेशं प्राप्ताः। यदा ते समस्थल्यामेवासन्, तदैव तेषामेका शाखा धार्मिकवैमनस्यात्पारसीकप्रदेशं प्रति प्रस्थिता। तावत्पर्यन्तं 'महद् देवानामसुरत्वमेकम्' इति असुरस्यापि देवत्वं मतमासीत् किन्तु शाखाविभाजनानन्तरमसुरस्य देवत्वमार्यायणशाखायामेवावशिष्टं यतस्ते सुरसद्मनिमित्तम् 'अहुरहज्म' इति वदन्ति। ते हि सकारस्य 'ह' इत्युच्चारणं कुर्वन्ति। सप्तसैन्धवप्रदेशप्राप्तानामार्याणां यत्रत्यैरनार्यैः सह महान् सङ्घर्षः सञ्जातो यस्य वर्णनं वेदेषु दृश्यते। दिङ्मात्रं यथा—

"सङ्क्रन्दनो निमिष एकवीरः शतं सेनाऽअजयत्साकमिन्द्रः।"

"देवसेनामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्।"

"मर्माणि ते वर्मणा च्छादयामि।"

"इन्द्रं सखायो अनुसंरभध्वम्।" इति।

युद्धे च यथाकथञ्चिद्विजयं लब्ध्वाऽऽर्यास्तत्र तत्र स्वग्रामनिवेशनाय प्राभवन्। कालश्चास्य विक्रमात् ६०००–४००० मितवत्सरपूर्वं पतति। तत्रार्याणां सुमहान् कालो व्यतीतो यतस्ते क्रमशो गङ्गासमस्थलप्रदेशेष्वपि व्याप्ताः। तेषां दक्षिणदिक्प्रयाणस्तु त्रेतायामेव समभवत्।

इत्थमुत्तरध्रुवकटिबन्धप्रदेशादारभ्य गङ्गासमस्थलप्रदेशं यावद् विस्तारे आर्यैर्महानुत्कर्ष उपार्जितः। तादृशेषूत्कर्षेषु भाषायाः सुसंहतत्वं सुसंस्कृतत्वञ्चैकः।

## ३. भाषा

सामान्यतस्तु भाषा नाम व्यक्ता वाक् अर्थाद् भावाभिव्यक्तये प्रयुक्तानां सार्थकशब्दानां समष्टिरेव भाषेति कथ्यते। भाव्यते व्यक्तरूपेण किञ्चिन्मनोगतमभिव्यज्यते इति भाषा (व्यक्तायां वाचि) धातोः 'गुरोश्च हलः' इति

स्त्रियामप्रत्यये टापि भाषेति सिध्यति यस्य योगार्थो भवति व्यक्तरूपेण जल्पनम्। तेन भाषाविद्भिर्भाषेत्थं परिभाषिताऽस्ति—

'भाषा नाम यादृच्छिकवाचिकध्वनिसङ्केतानां सा पद्धतिर्यया जनाः परस्परं विचारस्य विनिमयं कुर्वन्ति' इति।

अनेनैतत्सिध्यति यत् – तादृशी यादृच्छिकरूढध्वनिसङ्केतप्रणाली भाषा भवति यामवलम्ब्य जनाः परस्परं विचारविनिमयं कुर्वन्ति।

जगत्यामनेका भाषाः सन्ति। ताश्च तासां प्रकृत्यनुसारं कतिपयेषु वर्गेषु विभक्ता दृश्यन्ते। द्रविड-एकाक्षरो-सेमेटिक-यूराल-काकेशियन-मलय बुशमैना-बाण्टू-सुडान-अमरीकी-भारोपीयाद्यनेके भाषापरिवारा निर्धारिताः सन्ति तज्ज्ञैः। तत्र भारतयूरोपसम्बद्धा भाषा भारोपीयेति कथ्यते। भारोपीयपरिवारस्याप्यनेके भेदास्तदुपभेदाश्च सन्ति। मूलभारोपीयभाषा तु कीदृश्यासीदिति नैव यथार्थतो ज्ञातमधुनाऽपि। तथापि तज्ज्ञैस्तस्याः किमपि स्वरूपं तु कल्पितमेव। यथा शतमित्यस्य 'क्मुतुम्' ( **Kmutum** ) शब्दः। शब्दमेवामुमाधृत्य भारोपीयभाषा-परिवारो द्विधा विभाजितः शतंवर्गे केन्टुमवर्गे च। तत्र केन्टुमवर्गे भाषा यूरोपीया भाषा गृहीता, शतंवर्गे च आर्यायणीया भारतीया च। शतंवर्गे संस्कृतमेव प्राधान्येन विराजते।

## ४. संस्कृतभाषा

संस्कृतभाषा विश्वभाषासमुदाये मूर्द्धन्यं स्थानं गृह्णाति। अस्याः प्राचीनतमं स्वरूपमृग्वेदे एव दृश्यते। तेन तस्याः प्राचीनतमस्वरूपावधारणाय न ऋग्वेदा-दन्यत्प्रमाणम्। किन्तु सम्बद्धविद्वांसस्तत्रापि वाञ्छितनिष्कर्षं नैव लभन्ते प्रामाणिकत्वेन। तत्रानेके प्रश्ना उत्तिष्ठन्ते किमृग्वेदलब्धमेव संस्कृतस्य प्राचीन-तमं रूपमथवा तस्मादपि प्राचीनतमं रूपमासीत्? ऋग्वेदस्यैवापि नवविधाः शाखा उच्यन्ते, तेषु कतमा प्राचीनतमा? संस्कृतस्य मौलिकरूपे विकासः सम्भवति न वा? किमिदं प्राग्भाषितभाषाऽऽसीद्वा केवलं साहित्यिकभाषैव? तस्या व्यवहार्यत्वेऽपि किमिदं जनसाधारणस्य भाषाऽऽसीद्वा कस्यचिद्वर्गविशे-षस्यैवेति?

इयं देवभाषेत्यप्युच्यते। "दैवी वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति" इत्याद्या अनेका उक्तयो वेदेष्वेव दृश्यन्ते। किन्तु तत्रापि 'के च ते देवाः' इति विषये विपश्चितो नैवैकमत्यं पालयन्ति। केचिदिन्द्राद्यान् देवान् मन्यन्ते ये खलु त्रिदशालये वा देवनगरे निवसन्ति। अपरे तु 'देवा वै विद्वांसः' इति मतमनुसृत्य संस्कृतं विद्वत्समुदायस्य भाषेति व्यवहरन्ति। अधिकांशविच-

क्षणास्तु देवशब्देन त्रिदिवौकसः एव गृहीत्वा तत्पर्यायवाचिशब्दानामपि तत्र प्रयोगं कुर्वन्ति यथा गीर्वाणभाषा, सुरभाषा।

अत्रोच्यते—संस्कृतभाषा निःशङ्कमेव विश्वभाषासु प्राचीना सुसंहता च। अस्याः प्राचीनत्वं न केवलं ग्रन्थत एवाऽपितु व्यवहारादपि सिध्यति। किन्तु अस्याः सम्प्रति यादृशं स्वरूपमस्ति तादृशमेवातिप्राचीनकालेऽप्यासीदिति नैव शक्यते निश्चेतुम्। तस्याः किल वैदिकलौकिकरूपयोरेव सुमहदन्तर दृश्यते। यथा वैदिकरूपे अकारान्तस्य पुंल्लिङ्गशब्दस्य प्रथमाविभक्तिबहुवचने 'असस्' अस्' च प्रत्ययौ भवतः किन्तु तस्या एव लौकिकरूपे 'अ (ज) स्' प्रत्यय एव। यथा देवासः, देवाः इति वैदिकरूपे 'देवाः' एव लौकिकरूपे। तथैव वैदिकरूपे तृतीयाविभक्तिबहुवचने 'देवेभिः', 'देवैः' इति च, लौकिके तु देवैः इति। एवं च नपुंसकलिंगप्रथमाविभक्तिबहुवचने वेदे विश्वानि विश्वा इति च लौकिके तु 'विश्वानि' एव। तथैव वेदे अन्नन्तानां 'इ-उ-ई'—अन्तानाञ्च शब्दानां सप्तम्येकवचने विभक्तिप्रत्ययाभावो दृश्यते यथा – अहन्, मूर्धन्, इत्यादिलौकिक-प्रयोगे तु 'अह्नि', 'मूर्ध्नि' इति विभक्त्यन्तररूपमेव। वेदे यत्र कुत्र तु तृतीयैक-वचनेऽपि विभक्तिप्रत्ययाभावोऽपि दृश्यते किन्तु लौकिके तु तदविहायेतैव। वेदे दशैव लकारा दृश्यन्ते लौकिके तु नवैव। तेषामपि वेदे बाहुल्येन प्रयोगो लौकिके नियमितत्वेन। तेषां रूपरचनायामपि तादृशमेवान्तरं दृश्यते। यथा—

| वैदिकरूपे | लौकिकरूपे |
|---|---|
| स्मसि, स्मः | स्मः |
| चरामसि, चरामः | चरामः |
| भवा, भवानि | भवानि |
| गन्तुं, गमध्यै | गन्तुं |
| जीवितुं, जीवसे | जीवितुं |
| पातुं, पातवै | पातुं |
| इयक्षा | यियक्षा |

नैतावन्मात्रमपि तु लौकिके लङादौ अडागमो दृश्यते वैदिके तदभावोऽपि। तथैव लौकिके उपसर्गाणां धातोः पूर्वमेव प्रयोगो वैदिके तु यथेच्छम्। वैदिके धातूनां पदविषये यथेच्छप्रयोगो लौकिके तु नियमत एव। वैदिके द्वित्राणामेव पदानां समासो लौकिके तु बहूनामपि।

न केवलं रूपदृष्ट्याऽपि तु अर्थतत्त्वदृष्ट्याऽपि तत्र महदन्तरं दृश्यते। यथा वेदे बलवज्रवाचको वधशब्दो लौकिके तु हत्यार्थे, देववाचकोऽसुरशब्दो राक्षसार्थे (महद् देवानामसुरत्वमेकं, देवासुरमभूद्युद्धं), कर्मवाचको धीशब्दो बुद्ध्यर्थे

( धिया विप्रोऽअजायत, कृतधियां ) शत्रुतावाचकोऽरातिशब्दो शत्रौ, ओको-वाचकः क्षितिशब्दः पृथ्व्यर्थे, इवार्थको नशब्दोऽभावार्थे ( वृषभो न भीमो घनाघनः, न जायते ) ।

एवमेव ध्वनिदृष्ट्याऽपि तयोरन्तरं स्पष्टमेव । वैदिकस्वरूपे दन्त्योरवर्णो लौकिके मूर्ध्न्यो भवति । एवमेव यत्र कुत्र तु रकारस्य लकारोऽपि यथा रघुः इत्येतस्य 'लघुः' इति । वैदिके रकारस्य स्वरत्वं व्यञ्जनत्वञ्च, किन्तु लौकिके व्यञ्जनत्वमेव । तथैव वेदे स्वराघातबलादर्थेऽप्यन्तरं यथा क्षयः इत्येतस्य आद्युदात्ते निवासवाचकता, अन्त्योदात्ते नाशवाचकता, किन्तु लौकिके स्वर-प्रक्रियाया नितान्तमेवाभावः ।

अनेनैतत्सिध्यति यत्सत्यामपि देववाण्यां संस्कृतभाषाऽपि ध्वनि-रूपार्था-दिपरिवर्तनं सहत एव । तथैवास्या अपि प्रदेशभेदेन रूपभेदत्वमपि प्रसिद्धमेव । पाणिनिना यदा व्याकरणं निबद्धं तदापि दाक्षिणात्य-पौर्वात्योदीच्यभेदास्तस्या आसन् तत्र तत्र रूपभेदा अपि आसन्नेव । पाणिनिस्तत्सर्वानपि सङ्गृह्णाति स्वीयायामष्टाध्यायीसंहितायाम् । यथैव 'उदीचामातः स्थाने यकपूर्वायाः' ( ७।३।४६ ) चटकिका, चटकका, प्राचां ष्फस्तद्धितः ( ४।१।१७ ) वात्स्यायनी, वात्सी, प्राचां कटादेः ( ४।२।१३९ ) कटघोषीयं, काटघोषः, प्राचामवृद्धात् फिन् बहुलम् ( ४।१।१६० ), एकस्मिन्नेव प्रदेशेऽपि रूपसिद्धावाचार्याणां वैमत्यम-प्यासीत् । यथा भारद्वाजमतेन तासाविव नित्यानिटः स्थल इणभावः ऋतो भारद्वाजस्य ( ७।२।६३ ), स्फोटायनस्य मते गो इत्येतस्याचि परेऽवङादेशो भवति । अन्यमते तु न तेन गवेन्द्रः, गविन्द्रः । शाकल्यस्य मते अवर्णपूर्वयोः पदान्तयोर्यवयोरशि परे लोपो भवति, अन्यमते तु न तेन क आस्ते, कयास्ते । गार्ग्यमते तु ओकारादुत्तरस्य यस्यापि तथा । यथा भो अत्र । हलि परे तु सर्वेषामेव मते यकारस्य लोपो भवति । एवं विधान्यन्यान्यप्युदाहरणानि तत्र तत्र प्रस्तुतानि दृश्यन्ते । स्वयमेव पाणिनिर्मध्यदेशीयप्रभावित आसीत् । तेन स पाश्चात्यभेदेन सहैव मध्यदेशीयभेदमपि मौनमेवाङ्गीकरोति ।

एवञ्च वैदिकलौकिकरूपयोरन्तरदर्शनेन लौकिकेऽपि प्रदेशानुसारिभेददर्शनेन प्रदेशगतरूपेष्वपि आचार्यानुसारिभेददर्शनेन च संस्कृतभाषायाः परिवर्तनसहत्वं प्रमाणितमेव । यदि तस्याः परिवर्तनसहत्वं तदा तु तस्या अपि प्राग्वैदिकरूपमपि निश्चयमेवासीदेव, यद्यपि तदित्थमेवासीदिति न शक्यते वक्तुं प्रमाणाभावात् । स्यान्नाम सा मूलभारोपीयभाषा वाऽपरा या काऽपि, किन्तु प्राग्वैदिक-भाषाऽवश्यमेव सरलप्रकृतिका सुबोध्याऽप्यासीदिति लौकिकसंस्कृतापेक्षया वैदिक-रूपस्य सारल्येनानुमातुं शक्यते । तेनैव सा प्रकृतिशब्देनापि अभिहिताऽऽसीद्यतः

प्राकृतं समुत्पन्नम्। यदैव ह्यार्या ध्रुवप्रदेशकटिबन्धमभित आसंस्तदा सैव मूल-भाषा व्यवह्रियमाणाऽऽसीत्। यदा ते हृद्यं प्रदेशं विहायान्यत्र गन्तुं विवशी-कृतास्तदा ते स्वभूम्याः स्मृतौ गानकानि गातुं स्वभावत एव प्रवृत्ता येन पश्चाद्गत्वा भाषायाः साहित्यिकं रूपं प्रेरितम्। एतादृशानि गानकानि वेदेषु यत्र तत्र बहुशो लभ्यन्ते। यथा—

"भूमे मातर्निधेहि या भद्रया सुप्रतिष्ठितम्।
संविदाना दिवा कवे श्रियां मा धेहि भूत्याम्।" (अथर्व १२।१।६३)
"यस्यां पूर्वे पूर्वजना विचक्रिरे यस्यां देवा असुरानभ्यवर्तयन्।"
"त्वज्जातास्त्वयि चरन्ति मर्त्यास्त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः।
तवेमे पृथिवि पञ्च मानवा येभ्यो ज्योतिरमृतं मर्त्येभ्य उद्यत्सूर्यो रश्मिभिरातनोति।"

एवमेव तत्र घटितासु घटनासु सूर्याया विवाहो जनेष्वविस्मरणीय आसीत्। तत्स्मृतौ च जना यत्किञ्चिद्गातुं प्रवृत्ता येन काव्यसाहित्यस्य प्रादुर्भावः समजनि। तद्यथा—

"यस्ते गन्धः पुष्करमाविवेश यं सञ्जभ्रुःसूर्याया विवाहे।
अमर्त्याः पृथिवी गन्धमग्रे तेन या सुरभिं कृणु मा नोद्विक्षत कश्चन।" (तत्रैव)

इत्थं प्रकृतिरूपाया भाषायाः साहित्यिकं रूपमपि समजनि यस्मिन् गायन्तः स्वभूमिस्नेहेन रुदन्तस्ते उच्चसमस्थलीप्रदेशं प्राप्ता यत्र तैस्तादृशानामेव गायनानां सङ्ग्रहरूपेण वेदसङ्कलनं सम्पादितम्। एतादृशे गायनादौ एकरूपताप्रयोजन-मपेक्ष्य तत्र कतिचिन्नियमा अपि स्वीकृता येन भाषायाः साहित्यिकं रूपं संस्कृतं सञ्जातम्, पश्चात्तेनैव नाम्ना व्यवहृतञ्च। कालान्तरे प्रदेशगता भेदा अपि समजनिषत प्रकृतेर्यतस्ते प्रकृतेरागता इति प्राकृतसंज्ञया व्यवहृताः। साहित्यिकरूपं तु न तथा परिवर्तितं स्थायिप्रकृतिकत्वात्। कालान्तरे भाषायाः साहित्यिकव्यावहारिकरूपयोर्महदन्तरमुत्पन्नं येन तत्सामञ्जस्य स्थापनाय क्रमशः साहित्यिकरूपस्याऽपि नवीनतररूपं स्वीकृतं यल्लौकिकशब्देनाभिधीयते।

यावदार्याः सप्तसैन्धवप्रदेशानभितो विचरन्ति स्म तावत्पर्यन्तं तेषां भाषित-भाषाऽपि संस्कृतमेवाऽऽसीत् कामं प्रादेशिकव्यवहारे प्राकृता अपि व्यवहृताः स्युरेव। तस्य रूपबाहुल्यमेव तस्य भाषितभाषात्वे परं प्रमाणम्। अपरञ्चाद्यापि लेखादौ व्यावहारिके प्रायः संस्कृतपदानामेव प्रयोगो भवति कर्मकाण्डप्रवर्तनादौ

च। तेनापि तस्य व्यवह्रियमाणत्वं प्रसिध्यति। तथापि तत्रैतावत्तु सत्यमेव यत्संस्कृतं शिष्टानामेव भाषाऽऽसीद्यदा जनाः प्राकृत एव व्यवहारं प्रवर्तयन्ति स्म। तेनैव नाटकादौ पात्रानुसारं भाषाप्रयोगो निर्दिष्टोऽस्ति।

कालान्तरे आर्याः सप्तसैन्धवप्रदेशादपि प्रस्थिताः सन्त आर्यावर्तं व्याप्ताः। इत्थं परस्परसम्पर्काभावेन साहित्यिकभाषायामपि पुनः किञ्चिदन्तरं समुत्पन्नम्। स्वभावत एव दाक्षिणात्या मधुरप्रिया गौडाश्चौजःप्रकृतिकाः पाञ्चालास्तूभयप्रकृतिकाः। इत्थं प्रदेशभेदेन व्यवकीर्णं रूपं पुनः संहतीकृत्य पाणिनिना सुसंहृता नियमसंहिताप्रणीता यत्स्ववस्थितं भाषास्वरूपमद्यापि चापरिवर्तितमेवाऽस्ति। प्राकृतानां तु स्वाच्छन्द्येन विकासः सञ्जातो येन तेषां बहवो भेदा अपभ्रंशा देशभाषाश्च सञ्जाता यत आधुनिकभाषाः समुत्पन्ना इति।

## ५. संस्कृतभाषाया वैशिष्ट्यं स्वरूपञ्च

पूर्वप्रकरणे कथितं यद्भाषायाः साहित्यिकं रूपं संस्कृतपदेनाभिहितं सामान्यरूपं तु प्राकृतपदेनेति। तत्र वयमेतावदेव ब्रूमो यत्संस्कृतान्नियमाबद्धात्प्राकृतस्योत्पत्तेर्नैव सम्भवो न च प्राकृतस्य परिष्कृतं रूपमेव संस्कृतं भवितुमर्हति। नैव च कस्या अपि भाषायाः साहित्यिकमेव रूपं सम्भवति समाजानपेक्षसाहित्यस्य नितान्तासम्भवात्। एकयोनित्वादेव संस्कृतप्राकृतयोर्नियमसाम्ये समानप्रवृत्तिकत्वञ्च। तयोर्मौलिकवैशिष्ट्यमपि समानमेव। तानि च वैशिष्ट्यान्यत्र सारतयोद्ध्रियन्ते।

१. संस्कृतभाषा मूलतः संश्लेषणप्रवृत्तिका। अस्या शब्दरूपाणि प्रकृत्या सह प्रत्ययानां संश्लेषणे भवन्ति। यथा रामस्य, रामस्स, गृहे, घरम्मि, भवति, होदि। वैशिष्ट्यमिदं केण्टुमवर्गेऽपि दृश्यते यथा दो+तीर्+इ=दोत्रि।

२. प्रत्ययाणां योगश्च प्रकृत्यनन्तरमेव भवति न तु तत्पूर्वं वा तन्मध्येऽपि। यस्मात्प्रत्ययो विधिः सा प्रकृतिः प्रकृत्यनुयोगी प्रत्ययः। प्रकृतिश्च धातुप्रातिपदिकभेदेन द्विधा। प्रत्ययस्तु बहुविधः सुप्तिङ्कृदन्ततद्धितस्त्रीप्रत्ययादिभेदात्। यथा रामस्य, रामस्स, जानाति, जाणइ।

३. अत्राधिकांशधातव एकस्वरयुताः व्यञ्जनानां बाहुल्येऽपि । यथा क्लृप्, स्वप्, भू ।

४. पदानां पदयोर्वा समस्तताऽप्यस्या वैशिष्ट्यमितरविलक्षणम् । अत्र एकाधिकानि पदान्यपि समस्तत्वेनैकपदवद्भासन्ते । यथा बल + देवः = बलदेवः, बलदेओ ।

५. अस्या अपरञ्च वैशिष्ट्यं स्वराणामवश्रुतिर्यत्र सन्ध्यादिना स्वरा स्वेषामेवापराण्यपि रूपाणि प्रतिपादयन्ति । यथा रमा + ईशः = रमेशः ।

केचिदस्याः 'संस्कृतम्' इति नामाधृत्येमां कृत्त्रिमामिति कथयन्ति । तदनुसारं प्रकृतिर्जनभाषा ततः संस्कृत्य निर्मितं संस्कृतमिति तेषां मतम् । यथाऽऽह नमिसाधुः काव्यालङ्कारटीकायां—"सकलजगज्जन्तूनां व्याकरणादिभिरनाहितसंस्कारः सहजो वचनव्यापारः प्रकृतिः । तत्र भवं सैव वा प्राकृतम् । 'आरिसवयणे सिद्धं देवाणं अद्धमागहा वाणी' इत्यादिवचनाद्वा प्राक्पूर्वं कृतं प्राकृतं बालमहिलादिसुबोधं सकलभाषानिबन्धनभूतं वचनमुच्यते । मेघनिर्मुक्तजलमिवैकस्वरूपं तदेव च देशविशेषात्संस्कारकरणाच्च समासादितविशेषं संस्कृताद्युत्तरविभेदानाप्नोति । अत एव शास्त्रकृता प्राकृतमादौ निर्दिष्टं तदनु संस्कृतादीनि । पाणिन्यादिव्याकरणोदितशब्दलक्षणेन संस्करणात्संस्कृतमुच्यते इति । अपरे तु तद्विपरीतं प्रकृतिरेव संस्कृतमिति वदन्ति तत आगतत्वात्प्राकृतमिति । वस्तुतस्तु न तु प्राकृतस्य संस्कृतरूपं संस्कृतं नैव च प्रकृतिः संस्कृतमपि । उभे एव मते अतिवादितामारोहत इत्यस्माकं मतम् । वयन्तु जनभाषायाः साहित्यिकं रूपमेव संस्कृतपदेनाभिधीयते सामान्यस्वरूपन्तु प्राकृतमिति । अत एव भगवान् पाणिनिरपि संस्कृतं भाषाशब्देनैव व्यवहरति यत्र कुत्र । एतावदेव तत्रान्तरं यत्संस्कृतस्य साहित्यस्वरूपत्वात्तच्छिष्टानां भाषितभाषाऽऽसीत् तद्विपरीतं सामान्यजनास्तु प्राकृते एव व्यवहरन्ति स्म किन्तु तेऽपि संस्कृतमवश्यमेव जानन्तिस्म । आदिकालादारभ्य मौर्यकालपर्यन्तं संस्कृतमेव लिखितभाषाऽप्यासीत् । अशोकस्य शिलालेखेष्वेव प्रथमं प्राकृतस्यापि प्रतिष्ठितरूपं दृश्यते । तेन संस्कृतं नैव कृत्त्रिमभाषाऽपि तु शिष्टजनभाषितभाषैव ।

भाषितभाषारूपेण संस्कृतस्य स्वरूपे स्वाभाविके वैविध्यमपि दृश्यत इति पूर्वमेवोक्तम् । तत्र संस्कृतप्राकृतभाषाविस्तारं इत्थमाकल्यते—




## ६. संस्कृतसाहित्यस्य महत्त्वम्

संस्कृतसाहित्यं न केवलमार्याणामेवापि तु मानवजातेरेवामूल्योऽक्षयश्च सांस्कृतिकनिधिः। अस्य रचनाचारुत्वमर्थनिधानं प्रतिपादितमूल्यञ्चेति त्रीणि मुख्यवैशिष्ट्यानि यैरिदमितरसाहित्यापेक्षया नितान्तोत्कर्षमावहति। अस्य विषयव्यापकत्वं तत्प्रतिस्पर्धिनोऽपि नतमस्तकान् करोति। अस्मिन् मानव-

जीवनस्य चत्वारो मुख्यपुरुषार्था धर्मार्थकाममोक्षाः साङ्गोपाङ्गं विवेचिताः सन्ति। अस्य किंवा वैदिकमुत वा लौकिकमपि साहित्यं समग्रमेव मानवमूल्यमात्मसात्कृत्य व्याख्याति। विश्वसाहित्यापेक्षया नितान्तप्राचीनतमसाहित्यरूपेणेदं सर्वेषामेव साहित्यानामादर्शो गुरुश्च। अत्र च सर्वमेव मानवज्ञानं मूर्तिमत्त्वेनावभासते। अज्ञातकालादारभ्याद्य यावद् धाराप्रवाहरूपेण सततं प्रवर्तमानमिदं नैकासां सभ्यतानां संस्कृतीनां, सृष्टीनां, प्रलयानाञ्च साक्षित्वेनापि विराजते। अत्र हि चत्वार एव सखशाखा वदाः, ब्राह्मणानि, आरण्यकानि, उपनिषदः, कल्पसूत्राणि, गृह्यसूत्राणि, शुल्वसूत्राणि, शिक्षाः व्याकरणानि, निरुक्तं, छन्दांसि, ज्योतिषं, धनुर्वेदम्, आयुर्वेदः, गान्धर्ववेदम्, अर्थशास्त्रं, पुराणानिः शिल्पशास्त्राणि, धर्मशास्त्राणि, काव्यानि, लक्षणशास्त्रम्, अलङ्कारशास्त्रम्, आगमाः, दर्शनानि च स्वस्वभेदोपभेदयुतानि यथायथं प्रकरणानुरूपं समुपवर्णिताः सन्ति। ईदृशं विस्तृतं परिपूर्णञ्च साहित्यं नान्यस्यां भाषायां कुत्रापि दृश्यते। अत एव सगौरवमित्थमुद्घोषितमस्ति--

"यन्नेहास्ति न तत्क्वचित्"

इति।

तदित्थं गरिमामण्डितं संस्कृतसाहित्यं कदा कथमुत्पन्नमिति जिज्ञासा सर्वेषां भवत्येव किन्तु तत्तर्पणं न तथा सुकरम्। अपौरुषेयत्वेन वाऽज्ञातपौरुषेयत्वेन वा प्रथमं तु वेदा एव श्रुतिपथमागताः। तेषां मन्त्राश्च प्रथममृषिभिर्दृष्टाः सङ्कलिताश्च। मन्त्राश्च द्विविधा कर्मविवेचका ज्ञानविवेचकाश्च। कालक्रमेण मन्त्रा दुर्बोध्याः सञ्जाता अतस्तेषां व्याख्यानाय ब्राह्मणानि सृष्टानि। अत एव तान्यप पिश्चाद्वेदेष्वेवान्तर्भावितो इति मन्त्रब्राह्मणयोर्वेदनामधेयत्वमुररीकृतम्। ततश्चापि आरण्यककर्मविवेचनाय आरण्यकान्यपि सृष्टानि। वेदोक्तज्ञानविषयव्याख्यानायोपनिषदः प्रतिपादिताः।

तथैव वेदमन्त्राणामुच्चारणज्ञानाय शिक्षाः प्रणीताः, श्रौतगृह्यादिकर्मज्ञानाय श्रौत-गृह्य-शुल्वसूत्राणि प्रणीतानि। शब्दानां साध्वसाधुत्वविवेचनाय व्याकरणमाविष्कृतम्। भगवान् खलु शङ्करः प्रथमो वैयाकरणो द्वितीयश्च बृहस्पतिस्तृतीय इन्द्रः। शब्दनिर्वचनज्ञानाय निरुक्तग्रन्था निर्मिताः। वेदमन्त्राणां वृत्तज्ञानाय छन्दःशास्त्रं प्रवर्तितम्। वेदोक्तकर्मनिर्मित्तककालज्ञानाय ज्यौतिषमपि व्याख्यातम्। इत्थं वेदानां षडङ्गानि व्याख्यातानि। तथैव ऋग्वेदात्सारमादाय आयुर्वेदो व्याख्यातः, यजुर्वेदस्य साररूपेण धनुर्वेदः प्रणीतः, सामवेदस्य सारत्वेन गान्धर्ववेदो निर्मितः, अथर्ववेदस्य साररूपेण अर्थवेदः,

शिल्पशास्त्रं, वार्ताशास्त्रं, वाणिज्यशास्त्रं, 'भूतविद्या चेत्याद्याः प्रणीताः। इत्थं साङ्गोपाङ्गं वैदिकसाहित्यं प्रथमं प्रपञ्चितम्।

ततश्च तत्प्रवेशसौकर्याय कान्तासम्मिततयोपदेशयुक्काव्यसाहित्यमपि प्रचालितम्। अत्रान्तरे वेदोक्तधर्मव्याख्यानाय धर्मशास्त्राण्यपि प्रणीतानि मन्वादिभिः। ततश्च वेदार्थोपबृंहकं पुराणसाहित्यमपि बहुशाखत्वेन प्रणीतम्। तत्तच्छब्दावबोधनाय सुविस्तृतं कोषसाहित्यमपि प्रचालितम्। काव्यसाहित्ये क्रमशः गद्य-पद्य-चम्पू-दृश्य-श्रव्याद्यनेकप्रकारा अपि उन्नायिताः। तेषाञ्च स्वरूपज्ञानाय तत्तल्लक्षणग्रन्थाश्च भरतभामहादिभिः प्रणीताः। जीवजगदीश्वरविषयकज्ञानविवेचनाय बहुशाखं दर्शनशास्त्रं प्रणीतम्। इत्थं लौकिकसाहित्यमेव आयुर्वेद-ज्यौतिष-व्याकरण-काव्य-दर्शन-कोष-धर्म-अर्थ-कामसम्बद्धानि अनेकानि साहित्यानि स्वरूपतामायातानि। तदित्थं श्रीमन्नृपविक्रमार्कात् षट्सहस्रमितवत्सरपूर्वकालादारभ्य अद्ययावदनवरतरूपेण प्रणीयमानं व्याख्यायमानमभ्यस्यमानञ्च संस्कृतसाहित्यं यदि कृत्रिमत्वेन गृह्यते तदा तु जगदवस्थितिरेव कृत्रिमा सम्पद्येत।

तदिदं सुविस्तृतं परिपूर्णञ्च संस्कृतसाहित्यं द्विधा विभक्तं विषयदृष्ट्या — वैदिकं लौकिकञ्च। तत्र वेदैः सह प्रत्यक्षतः सम्बद्धं वैदिकमप्रत्यक्षरूपेण मनोहारितया तद्व्याख्यातृ लौकिकञ्चेति। वैदिकलौकिकरूपोऽयं संस्कृतसाहित्यमहार्णवः सर्वा अपि निम्नगाः संहतीकृत्य कृत्वा चात्मसात्सततं स्वपरिधौ प्रवहतास्तीति।

## ७. वैदिकसाहित्यम्

### १. वैदिकसाहित्यस्य वैशिष्ट्यम्—

वैदिकसाहित्यस्य सर्वातिशायिवैशिष्ट्यं न शब्दैरभिव्यक्तुं शक्यते। यदेव संस्कृतसाहित्यस्य वैशिष्ट्यं तत्सर्वमपि वैदिकसाहित्यस्यैवेति नातिशयोक्तिः। वेदाः खलु मानवज्ञानस्य विश्वकोषस्तेन तत्र किमस्तीति अनुसन्धानापेक्षया किं नास्तीतिगवेषणं सुकरं भवति। वेदाः खलु विश्वस्यैव प्राचीनतमं साहित्यम्। ते खलु भारोपीयसाहित्यस्यैव प्राचीनावशेषरूपेण विश्वसाहित्ये न केवलं प्राचीनत्वमपि तु प्रामुख्यमपि भजन्ते। तत्रैव सम्पूर्णभारतीयवाङ्मयस्योपजीव्यं विद्यते। इतरसाहित्यानि तु तद्व्याख्यातॄणि एव। अत एवोक्तं वेदाः खलु तस्य महाभूतस्य निःश्वसितमेतदिति। तस्यान्तःस्पर्शमन्तरा भारतीयजीवनस्य न कोऽपि पक्षः शक्यते ज्ञातुम्।

स्वरूपदृष्ट्याऽपि वैदिकसाहित्यं नितान्तमेव सुविपुलमस्ति। चत्वारो वेदा ऋग्यजुःसामाथर्वाख्याः, तत्रापि एकविंशतिधा विभक्त ऋग्वेदः, एकोत्तरशतशाखः शुक्लकृष्णात्मा यजुर्वेदः, सहस्रवर्त्मा सामवेदः, नवधाऽथर्वणो वेद इति वेदानामेव ( २१+१०१+१०००+९=११३१ ) एकत्रिंशदधिकैकशतोत्तरैकसहस्रभेदाः, तेषां प्रत्येकं ब्राह्मणग्रन्थाः, आरण्यकानि, उपनिषदः, शिक्षाग्रन्थाः, कल्पादिसूत्राणि इति चानन्तविषयता तेषाम्।

वैदिकसाहित्यस्य स्वप्रकृतिकमेव व्याकरणमपि विद्यते येन तस्य लौकिकसाहित्यात्पार्थक्यं सिध्यति। मानवानां यावन्तोऽनुभवविषयास्ते साकल्येन तत्र वर्णिताः सूत्ररूपेण। विषयबाहुल्येऽपि रचनासौष्ठवं क्रमबद्धतां च वैदिकसाहित्यस्योल्लेखनीयं वैशिष्ट्यम्।

## २. वेदपरिचयः—

विदन्त्यनेनेति ज्ञानार्थकाद्विद्धातोः 'हलश्च' इति करणेऽर्थे घञि वेदशब्दसिद्धिर्यस्य योगार्थो ज्ञानम्। ज्ञानस्यैव मूलस्रोतोरूपेण ऋग्वेदादीनां वेदशब्दबोध्यत्वम्। तेषामेव काव्यातृत्वाद्ब्राह्मणग्रन्थानामपि तत्पदाभिधानत्वम्। तेन मन्त्रब्राह्मणयोर्वेदाभिधानत्वम्।

वेदस्य कर्तृत्वविषये विपश्चितो विवदन्ते। केचित्तमपौरुषेयं मन्यन्ते, अपरे तु ईश्वरकर्तृकं मन्यन्ते, इतरे तु यस्य मन्त्रस्य य ऋषिरुक्तः स एव तस्य प्रणेतेति न पुरुषकर्तृकं मन्यते। केचिद्वेदं जीवनानुभवानां सङ्ग्रहमपि मन्वते। कः परमार्थ इति तु नैवाधुनाऽपि सम्यग् ज्ञातमस्ति। स्वयं वेद एवात्मानं परमपुरुषाज्जातमिति कथयति। यथा पुरुषसूक्ते—

"तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे। तस्माद्यजुस्तस्मादजायत।"

तथैवाथर्ववेदेऽप्युक्तं—

"यस्यादृचो अपातक्षन् यजुर्यस्मादपाकषन्।
सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखम्।
स्कम्भ तं ब्रूहि कतमः स्विदेव सः॥' (१०।७।२०)

एवमेव बृहदारण्यकोपनिषद्यप्युक्तं—

"यथाऽद्रेरिन्धनाग्नेरभ्याहितात् पृथग्धूमा विनिश्वसन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणानि विद्या उपनिषदः इति ( २।४।११ )।"

इत्थमेव साङ्ख्य-वेदान्त-मीमांसकानां मतेन वेदा अपौरुषेया नित्याश्च किन्तु न्यायवैशेषिकयोर्मतेन ते पौरुषेया ईश्वरकर्तृकत्वाद्नित्याश्च। सर्वाण्यपि धर्मशास्त्राणि पुराणानि च वेदानामपौरुषेयत्वमेव स्वीकुर्वन्ति। ये खलु ऋषयो मन्त्रविशेषैः सह सम्बद्धा उक्तास्तेऽपि तेषां मन्त्राणां द्रष्टार एव न तु कर्तारः। ऋषयः खलु लोकोत्तरसामर्थ्यशालित्वाद् दिव्यया प्रतिभया स्वीयया मन्त्रान् ददर्शुरिति। किञ्च—

**"प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।**
**एतं विदन्ति वेदेन तस्मादेतस्य वेदता॥"**

अतो वेदानां स्वतः प्रामाण्यं भवति न केवलं शब्दप्रमाणमात्रम्। वेदा यदेव कथयन्ति तत्तु प्रमाणमेव यदपि प्रत्याययन्ति तदपि प्रमाणमेव। तथा सति तेषामृषिकर्तृकत्वमपि नैव सिध्यति, अशब्दविहितस्यापि तत्र प्रामाण्यात्। अपरञ्च छान्दोग्यब्राह्मणे अग्नेऋचो वायोर्यजूंषि सामान्यादित्याद्दुदुपोहेति प्रतिपाद्यते( ६।१७ )। तमेवार्थं मनुरनुवदति—

**"अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्॥"** (१।१३) इति।

एषामपौरुषेयत्वं तु एतावताऽपि सिध्यति यदेते नैवैककाले समुत्पन्नाः। काले काले ये खलु मन्त्रा ऋषिभिर्दृष्टाः श्रुताः स्मृताश्च त एवात्र सङ्कलिताः सन्ति। पुरुषकर्तृकत्वेऽपि बहुकर्तृकत्वात्सङ्ग्रहरूपत्वाच्चैतेषामपौरुषेयत्वमेव सिध्यति।

एवमेव वेदानां सङ्ख्याविषयेऽपि पण्डिता नैकमत्यं भजन्ते। केचन वेदानां त्रयीत्वमेव मन्यन्ते। यथाऽऽह भगवान् जैमिनिः—

'तेषामृग्यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या, शेषे यजुः शब्द इति।'

एवमेवान्येषु ग्रन्थेष्वपि त्रयाणामेव वेदानामुल्लेखोऽपि दृश्यते। सम्भवति गद्यपद्योभयरूपरचनात्रैविध्यादपि तथा मतं स्यात्। तथामतं अथर्ववेदस्य वेदपरिशिष्टत्वमेव सिध्यति। किन्तु विषयभेदात्तु तेषां चातुर्विध्यमेव सिध्यति होत्रध्वर्यूद्गातृब्रह्मप्रयोजनेन। तेषां त्रयीति पदेनाभिधानं तु गद्यपद्यगीतिरूपरचनात्रैविध्याद्वा त्रैगुण्यविषयाद्वाऽपि। अपि च, 'ओम्' इत्येतस्यैकाक्षरब्रह्मस्वरूपवर्णनपरकत्वेनापि। यथोक्तं—

**"वेद्यं पवित्रमोङ्कारः ऋक् साम यजुरेव च।"**

तत्रेदमपि विश्वस्यते यत्पुरा वेदोऽप्येक एवासीद्यजुर्वेदः। स च लोकस्य धारणाशक्तिह्रासं दृष्ट्वा तस्य भागलोपो मा भूदितिधिया चतुर्षु भागेषु

विभक्तः। तथाकरणे स्तुतिवाक्यानाम् ऋग्वेदे, याजकीयमन्त्राणां यजुर्वेदे, गायनसम्बन्धमन्त्राणां सामवेदेऽभिचारिकमन्त्राणाञ्चाथर्ववेदे सङ्ग्रहः कृत इति। मतान्तरे तु ऋग्वेदस्यैकवेदत्वमपि समर्थ्यते। मतान्तरे तु चतुर्मुखस्य ब्रह्मणः प्रत्येकं मुखादेकैकस्य वेदस्योत्पत्तिरपि सम्मता। यथोक्तं विह्लणेन—

'चत्वारि काव्यानि चतुर्मुखस्य यस्य प्रसिद्धाः श्रुतयश्चतस्रः इति।'

वेदानां निमज्जनं तेषामुद्धारश्च नैकवारमभूदिति पुराणेषु कथितं दृश्यते। हयग्रीवेण प्रणाशितान् वेदान् मत्स्यशरीरी भगवानुद्दधार एवमेव तामसे चतुर्थे मन्वन्तरे वैधृतयो देवा कालेन प्रणष्टान् वेदानुद्दध्रुः तथैव—

"चतुर्युगान्ते कालेन ग्रस्ताच्छ्रुतिगणान्यथा।
तपसा ऋषयोऽपश्यन् यतो धर्मः सनातनः॥" इत्यपि।

सत्यवतीसुतस्तु व्यासपरम्परायां चतुर्विंशतितमः। स च वेदान् चतुर्धा विभज्य सुमन्तुप्रभृतिभ्यश्चतुर्भ्यः शिष्येभ्यस्तान् पाठयामास। तत्र पैल ऋग्वेदं जग्राह, वैशम्पायना यजुर्वेदं, जैमिनिः सामवेदं, सुमन्तुरथर्ववेदञ्च। ते च स्वीयां शाखां स्वशिष्येभ्योऽध्यापयामासुस्ते च स्वशिष्येभ्य इति शिष्यप्रशिष्यपरम्परया वेदानामनेके विभागा जाताः। तत्रर्ग्वेद एकविंशतिधा विभक्तः, यजुर्वेदस्त्वेकाधिकैकशतधा, सामवेदः सहस्रधाऽथर्वणस्तु नवधेति। ताश्च शाखाप्रशाखा अपि कालेन कतिपयास्तु प्रणष्टाः। सम्प्रति तु ऋग्वेदस्यैकविंशतिशाखासु आश्वलायनशाकलवाष्कलाख्यास्तिस्र एव, शुक्लयजुर्वेदस्य वाजसनेय-काण्वेति द्वे एव, कृष्णयजुर्वेदस्य तैत्तिरीयमैत्रायणिकठाख्यास्तिस्र एव, सामवेदस्य कौथुमीराणायनीजैमिन्याख्यास्तिस्र एव, अथर्ववेदस्य पैप्पलादशौनकाख्ये द्वे एवेति त्रयोदशशाखा एवावशिष्टा अस्माकं ज्ञानविषयत्वेन। तत्र पैलेन्द्रप्रमिति वाष्कलपराशर-याज्ञवल्क्याग्निमित्र-माण्डूकेय-देवमित्र-सौभरि-शाकल्य-वात्स्य-मृदुलशालीय-गोखल्यशिशिरजातुकर्ण्यबलाकपैलवैतालविरजबालखिल्यबालायनिभज्यकासाराद्याऋग्वेदाचार्या बह्वृचाख्या शौनकाद्याश्च। वैशम्पायनचरकाध्वर्युयाज्ञवल्क्यकण्वमाध्यन्दिनाद्या यजुर्वेदाचार्याः, जैमिनिसुमन्तुसुन्वन्सुकर्मंहिरण्यनाभकौसल्यपैषञ्जि-आवन्त्यलौगाक्षिमाङ्गलिकुल्यकुसीदकुक्षिप्रभृतयः सामवेदाचार्याः, सुमन्तुशिष्य-वेददर्श-शौक्लायनि-ब्रह्मबलिमोदोषपिप्पलायनि-पथ्य-कुमुद-शुनक-जाजलि-बभ्रु-अङ्गिरससैन्धवायनसावर्णिकश्यपाङ्गिरसाद्या आथर्वणाचार्याश्च।

वेदानामादित्वे नित्यत्वे कालापरिच्छिन्नत्वेऽपि तेषामाविर्भावकालमधिकृत्य बुधैर्विचिन्तितमेव। शार्मण्यदेश्यो मैक्समूलरमहोदयो १९४६ मितवैक्रमाब्दे प्रतिपादितवान् यदृग्वेदाविर्भावकालस्य एकविंशत्यधिकद्वित्रिंशच्छतकसमा व्यतीता इति। बालगङ्गाधरतिलकस्तु शार्मण्य एव याकोबी च वेदाविर्भावस्य

चतुर्विंशतिशतवर्षाणि यातानीति मन्येते। हूगोविनकलरमहोदयस्तु तं कालं चतुस्त्रिंशच्छतवर्षपूर्वं मन्यते। अविनासचन्द्रदासस्तु ऋग्वेदरचनायाः प्रायेण सप्तविंशतिसहस्राब्दा अतिक्रान्ता इति। दीननाथमहोदयस्तु वेदावतारस्य लक्षत्रयसंवत्सरा व्यतीयुरितिमन्यते। सन्त्यन्येऽप्येतादृशा मतविशेषाः किन्तु न कोऽपि समर्थो याथार्थ्यतस्तन्निर्णेतुम्। एतावदेव निश्चयेन वक्तुं शक्यते यन्महाभारतकाले कृष्णद्वैपायनस्य जन्मासीत् यः कलिप्रारम्भकालात्किञ्चिदेवपूर्वमापतति। सम्प्रति कलेः ५०८९ मितवत्सरा व्यतीता इति अन्तिमवेदविभागस्य न्यूनमपि ५२०० हायना अतिक्रान्ताः। वेदानामेतादृशो विभागस्तु तत्पूर्वमपि अतीतकल्पान्ते मत्स्यरूपेण भगवता ततश्च चतुर्थे तामसमन्वन्तरे वैधृतिपदाभिधैर्देवैरपि विहित इत्यपि पुराणेभ्यो ज्ञायते ( श्रीमद्भागवते ८।१।२९ )। सम्प्रति सप्तममन्वन्तरस्याष्टाविंशतितमः कलियुगः। ततश्च वेदानामाविर्भावस्य पूर्वकालस्तु अद्यतनात् ५२०० मितहायनेभ्यः प्रागज्ञातातीत एव।

वेदानां प्रतिपाद्यो विषयः सामान्येन कर्ममीमांसा एव। विशेषतस्तु समस्तस्य मानवज्ञानस्य सूत्ररूपेण तत्र वर्णनान्न शक्यते एतावदेवेति व्यवच्छेतुम्। तथापि देवतास्तुतिः कर्मसाधना, ज्ञानमीमांसा चेति वेदवर्णितेषु प्रमुखेषु विषयेषु समुल्लेखनीया विषयाः।

वेदानां पाठप्रकारश्च पद-क्रम-घन-जटा-शिखा-रेखा-ध्वज-दण्ड-रथ-घन-रूपैर्बहुधा निर्दिष्टः। तत्र पदच्छेदपूर्वकपाठः पदपाठः। प्रतिपदे पूर्वोत्तरपदाभ्यां सङ्गमय्य द्विरुच्चारणं क्रमपाठः। प्रतिपदयुगलं त्रिरुच्चारणं द्वितीयावृत्तौ प्रातिलोम्येनोच्चारणं जटापाठः। जटापाठे एव यद्यन्यच्चैकं पदमग्रे संश्लिष्टतां याति तदा शिखापाठो भवति। पदानामनुलोमविलोमक्रमेणासकृदुसुच्चारणं घनपाठः।

वेदेषु पाठसंरक्षणायार्थनिर्द्धारणाय च स्वराणामुपयोगः क्रियते। स्वरास्त्रिविधा उदात्तानुदात्तस्वरितभेदात्। उच्चैरुदात्तो नीचैरनुदात्तः समाहारश्च स्वरितः। स्वरावबोधनाय चिह्नान्यपि प्रयुज्यन्ते। स्वरविशेषेण पदार्थनिर्णयो वाक्यनिर्णयश्च क्रियते। तत्रानुदात्तत्वे पूर्वान्वयिपदं आद्युदात्तत्वे तूत्तरान्वयि भवतीति।

प्रतिवेदं संहिता-ब्राह्मण-आरण्यक उपनिषद्भागाः। तत्र मन्त्राणां सङ्ग्रहसंहिताविषयप्रतिपादकवचनं मन्त्रः, यज्ञादिवर्णनपरगद्यभागो ब्राह्मणे, वानप्रस्थकर्मविवेचकवचनमारण्यकं, ब्रह्मज्ञानादिविषयविवेचकवचनमुपनिषत्।

## २. ऋग्वेदः

यद्यपि कर्मप्रभृतिविपश्चितो वेदेषु पौर्वापर्यविचारं निर्मूलं मन्यन्ते तथापि भाषिकसंरचनादृष्ट्या ऋग्वेदस्य प्राथम्यं दृश्यते इतरवेदापेक्षया। तेषां क्रमस्तु

कुत्रचित् ऋक्सामयजुरथर्वाणि इति क्वचित्तु ऋग्यजुःसामाथर्वाणि इत्यपि। वस्तुतस्तु ऋक्सामयजुरेव मान्यः क्रमः 'ऋचः सामानि जज्ञिरे,इति पुरुषसूक्ते कथितत्वात्। स्थाद्यः कोऽपि क्रमः किन्तु ऋग्वेदस्य वेदेषु प्राथम्यं भाषिक-संरचना-प्रतिपाद्यविषयादिदृष्ट्या सिध्यत्येव। ऋक् नाम ऋच्यन्ते स्तूयन्ते देवा अनयेति व्युत्पत्त्या स्तुतिवचनम्। वेदविशेषे तु तस्य यत्रार्थवशेन पादव्यवस्थिति-रर्थाद्यत्रार्थवशेनैकान्वयित्वेन पादव्यवस्थितिः ऋग्वेदस्यैकविंशतिशाखाः सन्ति येषां विकासक्रमः पुराणेषु इत्थं निर्दिष्टः—पैलो हि बह्वृचाख्यामाद्यामृक्संहितां व्यासादधीतवान्। पैलश्च तां स्वशिष्यायेन्द्रप्रमितये वाष्कलाय च प्रोक्तवान्। स च तां चतुर्धा व्यस्य बोध्य-याज्ञवल्क्य-पाराशराग्निमित्रेभ्यः पाठयामास। इन्द्रप्रमितिश्च माण्डूकेयं कविं पाठयामास। कविश्च देवमित्रं स च सौभर्यादीन् देवमित्रश्च शाकल्यं स च तत्पञ्चधा व्यस्य वात्स्य-मृदुल-शालीय-गोखल्य-शिशिरान् पाठयामास। वात्स्यश्च जातूकर्ण्यं प्रोवाच। स च बलाक-पैल-वैताल-विरजेभ्यो ददौ। वाष्कलिश्च बालायनि-भज्य-कासारानुवाचेति शिष्यप्रशिष्यपर-म्परया तस्य एकविंशतिशाखात्वम्। किन्तु तासु शाकलवाष्कलसंहिते एवोप-लभ्ये। शाकलसंहिता दशमण्डलेषु विभक्ता, प्रतिमण्डलं सूक्तानि प्रतिसूक्त-मृचश्च सन्ति। वाष्कलसंहिता तु अष्टाष्टकेषु विभक्ता। यत्र प्रत्यष्टकमष्टा-वध्यायाः प्रत्यध्यायं वर्गाश्च। ऋग्वेदे १०२८ मितसूक्तानि ११००० मित-मन्त्राश्च, गृत्समदविश्वामित्रवामदेवात्रिभरद्वाजवशिष्ठादयो मन्त्रद्रष्टारः ऋषयः। अस्यापि द्वितीयमण्डलमारभ्य सप्तममण्डलपर्यन्तभागः प्राचीनतमस्ततश्च क्रमेण प्रथमाष्टदशमण्डलानि भाषाविज्ञानदृष्ट्या। तत्रापि दशम मण्डलं नितान्त-मेवार्वाचीनं प्रतिभाति विषयप्रौढिदृष्ट्याऽपि।

ऋग्वेदे सायणाचार्यस्य भाष्यं नितान्तं प्रमाणिकं गरिमामण्डितं च विद्यते। एवमेव वेङ्कटमाधवभाष्यञ्च।

अस्य चायुर्वेद उपवेदः ऐतरेयकौषीतक्यौ च ब्राह्मणे यत्र प्रथमे अष्टौ पञ्चिकाः प्रतिपञ्चिकं पञ्चाध्याया इति संहत्य चत्वारिंशदध्यायाः द्वितीये तु त्रिंशदध्याया एव। एवमेवास्य ऐतरेयशाङ्खायनौ च आरण्यके। अस्य दश-सङ्ख्याका उपनिषद ऐतरेयप्रभृतयः समुपलब्धा ऋग्वेदशाखा शाकलसंज्ञिता। एषा च अग्निसूक्तस्य "अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्" इत्यग्निप्रार्थनापरकमन्त्रेण प्रारभते, संज्ञानसूक्तस्य—

"समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति॥"

इति मन्त्रेण समाप्तमेति च। अस्य मन्त्रेषु इन्द्राग्निवरुणविष्णुप्रभृतितदेवानां स्तुतिः प्राधान्येन विलसति। तत्रत्या उषास्तुतिश्च नितान्तमेव मनोहरा। एतदतिरिक्तं सवितापूषामित्ररुद्रमरुत्पर्जन्यादयश्च स्तुतास्तत्र तत्र मन्त्रेषु। सर्वास्वपि स्तुतिषु उषास्तुतिरत्यन्तं हृद्या प्रभावोत्पादिका च। एतदतिरिक्तं यत्र कुत्र दानस्तुतिरपि दृश्यत इति विप श्चतः कथयन्ति।

ऋग्वेदः परमतत्त्वमेकमेव मन्यते न द्वितीयम्। तच्च सर्वविधरूपेण सर्वाकारत्वेन च लभ्यं भवति। तदेव ब्रह्म आप प्रजापतिः पिता, मित्रञ्च।

उषास्तुतिर्यथा—

भगस्य स्वसा वरुणस्य जामि रुषः सूनृते प्रथमा जरस्य।
पश्चा स दध्या यो अधस्य धाता जयेम तं दक्षिणया रथेन॥ (१।१२३।५)

जानन्त्यह्नः प्रथमस्य नाम शुक्रा कृष्णादजनिष्ट श्वितीची।
ऋतस्य योषा न मिनाति धामारहर्निष्कृतमाचरन्ती॥ (१।१२३।९)

कन्येव तन्वा शाशदानाँ एषि देवि देवमियक्षमाणम्।
संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाती॥ (१।१२३।१५)

सुसङ्काशामातृमृष्टेव योषा विस्तन्वं कृणुषे दृशे कम्।
भद्रा त्वमुषो वितरं व्युच्छ न तत् ते अन्या उषसो नशन्त। (१।१२३।११)

ऋग्वेदस्य संवादसूक्तान्यपि काव्यमयत्वादत्यन्तमेव हृद्यानि। तेषु पुरूरवोर्वशीसंवादः यमयमीसंवादः एवं सरमापणिसवादश्च प्रसिद्धाः। अत्र च सामाजिकरीतिसम्बद्धानि सूक्तानि च लभ्यन्ते येषां सङ्ख्या प्रायो विंशतिर्विद्यते। एवमेव शकुनसूक्तं, विवाहसूक्तं, पितृसूक्तं, रहस्यसूक्तमिति च तत्र प्रसिद्धानि। तत्रत्यानि नासदीय-पुरुष-हिरण्यगर्भवाक्सूक्तानि दार्शनिकविषयाणि।

## ४. ऋग्वेदस्य भाष्याणि तत्सम्बद्ध इतरग्रन्थाश्च

ऋग्वेदे सायणाचार्यस्य भाष्यमत्यन्तं प्रसिद्धमस्ति। सायणाचार्यो हि मायणपुत्रो माधवाचार्यावरजः। एवमेवास्य वेङ्कटमाधवभाष्यमपि प्रसिद्धमेव। तथैव सायणाचार्यस्य ऋग्वेदभाष्यभूमिका, दयानन्दस्य ऋग्वेदादिभाष्यभूमिका च प्रसङ्गेऽस्मिन् स्मरणीयाः।

## ५. यजुर्वेदः

वैदिकसाहित्ये प्रतिपादितविषयदृष्ट्या ऋग्वेदानन्तरं यजुर्वेदस्यैव स्थानम्। यजुर्नाम गद्यात्मकवचनमिति केचन शेषे यजुरिति जैमिनिः वस्तुतस्तु इज्यतेऽने-

नेति यजुः ( यज+औणादिक उसिप्रत्ययः ) यजुषां यज्ञविधानानां वेदो यजुर्वेदः। अत्र हि अध्वर्युसम्बद्धा प्रार्थनानमन्त्राः सङ्गृहीताः।

यजुर्वेद एकाधिकशतशाखासु विभक्त इत्युच्यते। मूलतस्तस्य द्वौ भेदौ शुक्लः कृष्णश्च। तत्र शुक्लस्य पञ्चदश कृष्णस्य षडशीतिः शाखाः। तस्य तथा हेतुत्वेनेदमुच्यते यद्वैशम्पायनो हि कृष्णद्वैपायनादधीतं यजुर्वेदं याज्ञवल्क्यादिभ्यः शिष्येभ्य उक्तवान्। तच्छिष्येषु देवरातसुतो याज्ञवल्क्यः आसीत्। कदा वैशम्पायनः स्वस्त्रीयं बालकं पदधृष्टमघातयत्तेन तत्कृते शिष्यान् ब्रह्महत्यापहव्रताचरणाय समादिदेश। याज्ञवल्क्यस्तु ब्रह्मतेजोऽभिमानेन कथितवान्—"...... ... ....किमेतैर्बहुर्भिर्द्विजैः। क्लेशितैरल्पतेजोऽभिश्चरिष्येऽहमिदं व्रतम्" इति॥ तेन क्रुद्धश्च गुरुरधीतत्यागाय तं कथितवान्। आज्ञप्तश्च स रुधिराक्तानि यजूंषि छर्दयित्वा यथेच्छं गतः। शेषाश्च शिष्या गुरोराज्ञया तित्तिरा भूत्वा तानि जगृहुरतस्ते तैत्तिरीयाः सञ्जाताः। याज्ञवल्क्यश्च भगवन्तं भास्करं समाराध्य तस्मादयातयामानि यजूंषि प्राप्तवान्। तदध्येतारो वाजिनस्तच्छाखा च शुक्लयजुर्वेदसम्बद्धा तैत्तिरीयाश्च कृष्णयजुर्वेदसम्बन्धाः। वाजसनेयीयास्तु माध्यन्दिनकाण्वपाराशरबोधायनजाबालाद्याः पञ्चदश कृष्णे तु चरकाणां द्वादश, मैत्रायणीयानां सप्त, तैत्तिरीयानां षट्, कठानां चतुश्चत्वारिंशत् शाखाः। वस्तुतस्तु शुक्लकृष्णयोर्भेदेऽयमेव विशेषो यच्छुक्ले केवलं मन्त्रभाग एव विद्यते कृष्णे तु व्याख्याविनियोगावपि। सम्प्रति तु शुक्लस्य माध्यन्दिनकाण्वभिधे द्वे एव शाखे कृष्णस्य च चतस्र एव तैत्तिरीयमैत्रायणीकाण्वकपिष्ठलाभिधाः।

तत्र माध्यन्दिनशाखायां चत्वारिंशदध्यायाः १९७५ मितमन्त्राश्च सन्ति। काण्वशाखायामपि तावन्त एवाध्यायाः किन्तु मन्त्रास्तु २०८६ सङ्ख्याकाः। संहितैषा 'इषेत्वा' इत्यादिमन्त्रेण प्रारभ्य 'हिरण्मयेन पात्रेण' इतिमन्त्रेण समाप्नोति। अत्र दर्शपौर्णमासौ, पिण्डपितृयज्ञः, अग्निहोत्रं, चातुर्मास्येष्टिः, अग्निष्टोमविधानं सोमयागः, राजसूयवाजपेययज्ञौ, सौत्रामणिः उखाचयनं, वसोर्धारा, शतरुद्रीयं राष्ट्रभृत्, सोमसम्पादनविधिः, अश्वमेधप्रसङ्गः, पुरुषमेधः, सर्वमेधः, पितृमेधः, ईशावास्योपनिषद् इत्यादिविषयाः सप्रपञ्चमुपवर्णिताः। अत्र च मानवमात्रस्येतिकर्तव्यता सविवृत्ति निबद्धा श्रेयःप्रेयःसाधनरूपा। 'वयं राष्ट्रे जागृयाम पुरोहिताः'। 'मा गृधः कस्य स्विद्धनम्', यजमानस्य पशून्पाहि' 'पितरञ्च प्रयन्तस्वः' 'आत्मा क्षत्रमुरो मम' 'न तं विदाथ व इमा जजान', 'सुखं मेषाय मेष्यैः' एतत्ते रुद्रावसं', 'गुहाभ्यः किरातम्', इत्याद्यस्य वचनानि। 'तिस्रो देवीर्हविषा वर्धनीया' ( सरस्वती, भूमिः भारती च ), 'यथेमां वाच कल्याणो मा वदानि जनेभ्यः' 'मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षामहे',

'सुमित्रिया न आपः औषधयः सन्तु', 'विश्वानि देव सवितर्दुरितानि परा सुव। यद्भद्रं तन्न आ सुव' इत्यादीनि च।

कृष्णयजुर्वेदे तैत्तिरीया प्रमुखा। अत्र सप्त काण्डानि चतुश्चत्वारिंशत् प्रपाठकानि ६३१ मितानुवाकः। अत्र ब्राह्मणारण्यकोपनिषच्छ्रौत-गृह्यधर्म-शुल्वसूत्रादिसमस्तविषयणां समावेशः। अस्यापि विषयो यागानुष्ठानमेव। मैत्रायण्यां चत्वारि काण्डानि २१४४ मितमन्त्राश्च विद्यन्ते। काठकसंहितायां चत्वारिंशत्स्थानकानि, ८४३ मितानुवाकश्च। अस्याऽपि यागानुष्ठानमेव विषयः। कपिष्ठलकठसंहिताऽद्ययावत्खण्डितैव लब्धा।

यजुर्वेदस्य धनुर्वेद उपवेदः। शतपथब्राह्मणं शुक्लस्य शताध्याय निबद्धं, तैत्तिरीयब्राह्मणं कृष्णस्य तैत्तिरीयमारण्यकञ्च। शुक्लसम्बद्धा ईशाद्या एकोनविंशतिसङ्ख्याका उपनिषदः, कृष्णयजुर्वेदसम्बद्धा द्वात्रिंशदिति यजुर्वेदसम्बद्धा एकपञ्चाशदुपनिषदः।

यजुर्वेदे भागद्वयं दृश्यते ऋग्भागो यजुर्भागश्च। ऋग्भागे ऋग्वेदीया एव मन्त्रा सङ्गृहीताः सन्ति, यजुर्भागोऽस्य मौलिकः।

शुक्लजुयर्वेदे उव्वटस्य महीधरस्य च भाष्यं प्रसिद्धम्। काण्वसंहितायां (पूर्वार्द्धंय्यापि) भाष्यं सायणस्योपलब्धम्। तैत्तिरीये सायणस्य भाष्यं प्रसिद्धम्।

## ६. सामवेदः

सामन्नाम गानम्। यदैव ऋचो गीयन्ते तदा साम भवति। उक्तमेव ऋगेव साम, सा ऋक् अम=गानमिति साम। सा स्त्री अम पुरुष इति साम। तेनैव या ऋक्तदेव साम। सा च अमश्च तत् साम्नः सामत्वम्।

सामवेदे वस्तुतः वा १८१० मन्त्राः सन्ति येषु पञ्चसप्ततिसङ्ख्याका एव मौलिका अवशिष्टास्तु ऋग्वेदसम्बद्धा एव। तत्राप्यनेके तु बहुवारं पुनरुक्ता अपि। पुनरावृत्तिविरहे तु तत्र केवलं ९८५ सङ्ख्याका एव मन्त्राः।

अस्यैकसहस्रसङ्ख्याकशाखासु सम्प्रति तिस्र एवोपलभ्यन्ते। ताश्च राणायनीयकौथुमजैमिनीयाख्याः। तत्रापि कौथुमस्य केवलं सप्तमोऽध्याय एव लभ्यते। सामवेदस्य व्यासप्रभृतयस्त्रयोदशाचार्याः। अयञ्च सहस्रधा गीयत इत्यस्य सहस्रवर्त्मत्वम्।

अस्य च प्रधानविषय उपासनैव। अधिकांशमन्त्रा अत्र सोमयागसम्बद्धाः। तस्य च गाने—

"सप्त स्वरास्त्रयोग्रामा मूर्च्छनास्त्वेकविंशतिः।
ताना एकोनपञ्चाशदित्येतत्स्वरमण्डलम् ॥"

इति प्रपञ्चः ।

सामवेदः पूर्वोत्तरार्चिकखण्डयोर्विभक्तम् । तत्र पूर्वम् आग्नेय-ऐन्द्र-पवमान-आरण्यकपर्वसु विभक्तमपरं बहुधा दशरात्रसंवत्सरैकाहाहीनसत्रप्रायश्चित्तक्षुद्रादि-भेदात् ।

सामवेदस्य गान्धर्ववेद उपवेदः । अस्य च ताण्ड्यप्रभृतयोऽनेके ब्राह्मणाः । तेषु ताण्ड्यस्य प्रसिद्धिः सर्वाधिका । तदेव पञ्चविंशब्राह्मणसंज्ञयाऽपि ज्ञायते । छान्दोग्यप्रभृतयः षोडशोपनिषदः सामवेदीयाः ।

अस्य च सायणकृतभाष्यं प्रसिद्धम् । तस्यैव कात्यायनश्रौतसूत्रे गोभिल-गृह्यसूत्रे च भाष्यं लभ्यते ।

## ७. अथर्ववेदः

थर्वन् गतिस्तस्याभावोऽथर्वन्निति व्युत्पत्त्या अथर्ववेदश्चित्तस्थिरीकरणो-पायसम्बद्धः । थर्वतिश्चरति कर्मा इति निरुक्तम् । अथवा अथ अर्वाक् इति अथर्वा । अर्वाक् इति अनन्तरार्थक वा आभ्यन्तरार्थकम् । अनन्तरार्थेऽयं वेदस्यावशिष्टभागः आभ्यन्तरार्थे तु आत्मनः साक्षात्कारोपदेशकभागः । वस्तु-तस्तु अथर्वा नाम कश्चिदृषिः, तद् दृष्टमन्त्राणां सङ्ग्रहत्वेनायमथर्ववेदः । अथर्वणां भृगूणां सह वेदेषूल्लखो दृश्यते । यथा —

**'अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।'**

इति । अयमेव अथर्व-अङ्गिरस-अथर्वाङ्गिरस-ब्रह्म-भृग्वङ्गिर-क्षत्रभैषज्यछन्दो-महीत्यादिविविधसंज्ञाभिर्बोध्यते यथा —

**'स आथर्वणो वेदोऽभवत्', 'स आङ्गिरसो वेदोऽभवत्', 'ऋचः सामानि भेषजा' इत्याद्युक्तेः ।**

नवधाऽथर्वणो वेदः पैप्पलादतोदमोदशौनकीयजाजलजलदब्रह्मवेददेवदर्श-चारणभेदात् । तत्र शौनकपैप्पलादशाखे एव समुपलभ्ये ।

तत्र शौनकसंहिता नितान्तप्रसिद्धा या 'शं नो' इति मन्त्रेण प्रारभते । तत्र विंशतिः काण्डानि, ७३० सूक्तानि, ५९८७ मिता मन्त्राश्च । अयमपि पद्य-गद्यमयः ।

पैप्पलादशाखा 'ये त्रिषप्ताः' इति मन्त्रेण प्रारभते ।

अथर्ववेदस्य प्रतिपाद्यविषयाः अध्यात्म (ब्रह्मचर्यगृहस्थवानप्रस्थायुर्वेदादि) अधिभूत ( राष्ट्र राज्यादि ) अधिदैवतादीनि ।

अस्य च शौनकसंहितायां सायणभाष्यमुपलभ्यते ।

अथर्ववेदस्य पञ्चोपवेदाः सर्पपिशाचासुरेतिहासपुराणभेदात्। तत्रान्तिम द्वे एव सम्प्रति समुपलभ्ये। अस्य च ब्राह्मणं गोपथाख्यम्, उपनिषदश्च कठाद्या एकत्रिंशत्।

## ८. वेदाः किं सन्दिशन्ति ?

वेदाः खलु भारतीयार्यसंस्कृतेरमूल्यो निधिः। तेष्वेव अनादिकालोपार्जितं मूल्यं सञ्चितमस्ति। ते हि खलु चतुर्वर्गस्य साधकाः। धर्माचरणाय ते खलु यज्ञसम्पादनेन सहैव ऋत-सत्य-दीक्षा-तपो-ब्रह्मादीनामपि रूपं निर्धारयन्ति। यथोक्तं—

सत्यं वृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति। (अथर्व १२।१।१)।

सत्यं, बृहद्, ऋतम्, उग्रं, दीक्षा, तपः, ब्रह्म = ज्ञानं, यज्ञः = यागादिक्रिया, एते खलु पृथिवीं धारयन्ति इति। ते हि निर्दिशन्ति—

अर्चत प्रार्चत प्रियमेधासो अर्चत (ऋ० ८।६९।८) इति। स हि देवानां नामधा एक एव तं सम्प्रश्नं भुवना (नि) यत्पन्या (नी) (ऋ० १०।८२।३)। स नः पिता जनिता स उत बन्धुरिति। शर्म वर्म ममान्तरम्। (सा० १८।७२)। सुवर्णं विप्राः कवयो वचोभिः, एकं सन्तं बहुधा कल्पयन्ति (ऋ० १०।११४।५)। स हि प्रपाकं शास्ति (ऋ० १।३१।१४)। विश्वं तत्रैवैकनीडं भवति। (यजु० ३२।८)। स हि जारः कनीनां तु पतिर्जनीनाम् (१।६६।८)। स तथैव सेवितव्यो यथा जनयः पतिं परिष्वजन्ते (ऋ० १०।४३।१)। स हि पतिरिव जायाम् अभि नो न्येति (ऋ १।१४९।४)। स हि विश्वेषमदितिर्यज्ञियानां मानुषाणामतिथिः (ऋ० ४।१।२०)। त्वमस्माकं वयं तव (८।९२।३२)। स हि प्रार्थनीयः—'वर्चोदा आस वर्चो मे देहि' इति (यजु० ३।१७)। तेन सखायः क्रतुमिच्छत (ऋ० ८।७०।१३)। व्रतेन दीक्षामाप्नोति दीक्षयाऽऽप्नोति दक्षिणाम्। दक्षिणया श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते। (यजु० १९।३०)। तमेव विदित्वाऽतिमृत्युमेति (यजु० ३१।१८)। अश्मन्वती रीयते संरभध्वम् उत्तिष्ठत प्रतरता सखायः। अत्राजहाम ये असन्नशेवाः शिवान् वयमुत्तरे माभि वाजान्। (ऋ० १०।५३।८)। उत्तिष्ठत प्रतरता सखायः अश्मन्वती नदी स्यन्दत इयम्। (अथ० १२।२।२७)। अतिक्रामन्तो दुरितां पदानि शतं हिमाः सर्ववीरा मदेम। (अथ० १२।२।२८)। अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः (ऋ० १०।३४।१३)। स्वस्ति पन्थामनु चरेम (ऋ० ५।५१।१५)। जायेदस्तम् (ऋ० ३।५३।४)। विश्व-

मायुर्व्यश्नुत्तम् ( ऋ० १०।८५।४२ )। समानी प्रपा सहवोऽन्नभागः समाने योक्त्रे सह वो युनज्मि ( अथ० ३।३०।६ )। यत्र ब्रह्म च क्षत्रञ्च सम्यञ्चौ चरतः सह। तल्लोकं पुण्यं प्रज्ञेयं यत्र देवाः सहाग्निना ( यजु० २०।२५ )। नमो मात्रे पृथिव्यै ( यजु० ३।२२)। कृष्यै त्वा क्षेत्राय त्वा रथ्यै त्वा पोषाय त्वा ( यजु० ९।२२ )। सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः ( ऋ० १०।७१। १० )। सोमो वीरं कर्मण्ये ददाति ( ऋ० १०।१।२० )। समानमस्तु वो मनो यथा वः सुसहासति ( ऋ० १०।१९।१ )। यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय च (यजु०२६।२)। सर्वा आशा मम मित्रं भवन्तु ( अथ० १९।१५।६ )। तवेमे पृथिवि पञ्च मानवाः ( अथ० १२।१।१५ )। यज्ञेन वाचः पदवीयमायन् (ऋ० १०।७१।३ )। ऋतस्य पन्थां न तरन्ति दुष्कृतः ( ऋ० ९।७३।६ )। इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति ( ऋ० ८।२।१८ )। न ऋते श्रान्तस्य सख्याय देवाः ( ऋ० ४।३३।११ )। मा नो निद्रा ईशत नोत जल्पिः ( ८।४८।१४ )। सुवीरासो विदधमा वदेमः ( ऋ० ८।४८।१४ )। ईशावास्यमिदं सर्वं यत्किञ्च जगत्याञ्जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ( यजु० ४०।१ )॥ कुर्वन्नेवेह कर्माणि जीजीविषेच्छतं समाः ( यजु० ४०।२ )। अग्ने नय सुपथा राये अस्मान् ( यजु० ४०।१६ )। अविद्यया मृत्यु तीर्त्वा विद्ययाऽमृतमश्नुते ( ४०।१४ )। यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विचिकित्सति। ( यजु०४०।६ )। वायुरनिलममृतमथेदं भस्मान्तं शरीरम्। क्रतो स्मर क्लीबे स्मर कृतं स्मर॥ ( यजु०४०।१५ )।

इत्थं वेदा धर्मार्थकाममोक्षाणां चतुर्णामेव वर्गाणां साधकाः। वेदाः परलोकसाधका इति ज्ञानहीनानामेवोक्तिः। ते तु यज्ञसम्पादनद्वारा धर्ममाचारयन्ति सत्यऋतदीक्षातपोब्रह्मादिभिश्च। कृषिवाणिज्यपशुपालनशिक्षया अर्थोपार्जनमुपदिशन्ति। परिमितभोगसहजीवनगृहस्थोपपदेशादिभिः कामसेवनमुपदिशन्ति। एकेश्वरभक्तिसर्वसमानभावशिक्षया मोक्षधर्ममुपदिशन्ति। ते हि त्रैगुण्यविषयं तु शिक्षयन्त्येव, गुणातीतविषयमपि ते प्रतिपादयन्ति। तेन 'त्रैगुण्यविषया वेदाः' इति कथनमेकाङ्गमेव। 'ऋचो अक्षरे परमे व्योमन्' इति गुणातीतपदप्रशंसैव। सर्वातिशायित्वेन वेदाः कर्मोपदिशन्ति। ते हि 'न ऋते श्रान्तस्य देवाः' इति समुद्घोष्य तथा च 'अतिक्रामन्तो दुरितां पदानि शतं हिमाः सर्ववीरा मदेम' इति समुपदिश्य च कर्मशिक्षामेव निर्दिशन्ति। तेन वेदाः पुरुषार्थसाधकाः।

## ९. ब्राह्मणग्रन्थाः

ब्राह्मणं हि वेदनिर्दिष्टकर्मप्रतिपादकग्रन्थः। वेदव्याख्यातृत्वादेव ब्राह्मणस्यापि वेदत्वम्। अधिकांशब्राह्मणसाहित्यं गद्यात्मकं विद्यते। ब्राह्मणप्रतिपाद्यानां

विषयाणां त्रेधा विभागः कृतोऽस्ति-विधिभागः अर्थवाद उपनिषद् च। विधिभागे यज्ञविषयकप्रयोगात्मकनियमानां वर्णनमस्ति। अर्थवादे उपाख्यानकथादि-माध्यमेन प्रायोगिकरहस्यस्य सूक्ष्मतापरिज्ञानं सम्पाद्यते। उपनिषद्भागे आध्यात्मिकदार्शनिकतत्त्वानि मीमांस्यन्ते। विशेषतो ब्राह्मणग्रन्था गृहस्थाश्रमोपयोगिनः। अपरतश्च ब्रह्मप्रतिपादनाद् ब्राह्मणानां ब्राह्मणत्वम्। यज्ञप्रतिपादनमेव ब्रह्मप्रतिपादनम्। 'एष वै प्रत्यक्षं यज्ञो यत्प्रजापतिः' (शतपथ० ४।३।४।३) ब्राह्मणेषु मन्त्राणां कर्मणां विनियोगानाञ्च व्याख्योपस्थापिताऽस्ति। यथोक्तं—

"नैरुक्त्यं यस्य मन्त्रस्य विनियोगः प्रयोजनम्।
प्रतिष्ठानं विधिश्चैव ब्राह्मणं तदिहोच्यते॥"

एवमेव—

"हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः।
परिक्रिया पुराकल्पो व्यवहारणकल्पना।
उपमानं दशैते तु विधयो ब्राह्मणस्य तु॥"

तत्र विधिर्नाम कर्मसम्पादननियमः, विनियोगो मन्त्राणां प्रयोगनिर्देशः, हेतुः कर्मप्रवर्तनप्रयोजनम्, अर्थवादः प्ररोचनात्मकविषय उपाख्यानादिः। निरुक्तिर्नाम वैदिकशब्दानां निर्वचनोद्देशः। आख्यानं नाम प्ररोचककथानकम्।

ब्राह्मणेषु भाषा गद्यमय्येव किन्तु तत्र प्रौढता परिनिष्ठितता च स्पष्टं दृश्यते। तत्र नवीनानां शब्दानां धातूनाञ्च प्रयोगोऽपि दृश्यते।

वेदानां प्रत्येकं पृथक्-पृथक् ब्राह्मणम्। तत्र ऋग्वेदस्य ऐतरेयशाङ्खायनाख्ये, शुक्लयजुर्वेदस्य शतपथाख्यं, कृष्णयजुर्वेदस्य तैत्तिरीयाख्यं, सामवेदस्य ताण्ड्य-षड्विंश-साम-आर्षेय-दैवत-उपनिषद्-संहितोपनिषद्वंश-जैमिनीयाख्यानि, अथर्ववेदस्य गोपथाख्यञ्च ब्राह्मणानि समवाप्तानि। एषां सङ्क्षेपेण परिचयोऽत्र दीयते—

**ऐतरेयब्राह्मणम्**—ऋग्वेदसम्बद्धमिदं ब्राह्मणं प्राधान्येन सोमयागप्रतिपादनपरम्। अष्टासु पञ्चिकासु विभक्तं यत्र प्रतिपञ्चिकं पञ्चाध्याया इति समष्टौ चत्वारिंशदध्यायाः। अस्मिन् प्रथमाद्वितीययोरग्निष्टोमविधानं, तृतीयचतुर्थ्यो प्रातःसायंसवनविधिरग्निहोत्रविधानञ्च, पञ्चम्यां द्वादश यागविधिः, षष्ठ्यां सोमयागविधानं, सप्तम्यां राजसूयविधिः अष्टम्यामिन्द्राभिषेकपूर्वकं राज्याभिषेकविधिः। एषु हि प्राधान्येन विष्णुः स्तूयते तन्महत्त्वं प्रतिपाद्यते च। ग्रन्थमिदमधिकृत्य सायणेन कृतं भाष्यं प्रसिद्धं यदानन्दाश्रमतः प्रकाशितम्। तथैव षड्गुरुशिष्यस्य लघुव्याख्याऽपि। गोविन्दस्वामिनाऽपि अस्य भाष्यं प्रणीतमस्ति।

**शाङ्खायनब्राह्मणम्**—कौषीतक्यपरपर्यायमिदं ब्राह्मणमृग्वेदीयमेव। इयं त्रिंशदध्यायात्मकं यत्र प्रत्यध्यायं सप्तदशपर्यन्तखण्डाः अस्यापि प्रतिपाद्य-

विषयस्तु ऐतरेयवत् सोमयाग एव। तस्यापि विस्तृतरूपेण प्रतिपादनमस्य वैशिष्ट्यम्। अत्र हि अग्न्याधानविधिः, प्रातःसायंसवनविधानम्, अग्निहोत्र-दर्शपूर्णमास-चातुर्मास्येष्टयः, रुद्रस्य माहात्म्यं, शिवव्रतविधानं, विष्णोः श्रेष्ठत्व-प्रतिपादनं च मुख्यविषयाः। अत्र चोदीच्यानां परिनिष्ठितत्वं, गोत्रमहत्त्वप्रति-पादनञ्च प्रकीर्णविषयाः।

**शतपथब्राह्मणम्**—ब्राह्मणमिदं शुक्लयजुर्वेदसम्बद्धं शताध्यायेषु विभक्तत्वा-त्तथाख्यम्। अस्य च प्राधान्येन प्रतिपाद्यविषयो यज्ञानुष्ठानमेव। इदं सम्प्रति समुलब्धब्राह्मणेषु प्राचीनतमं शुक्लयजुर्वेदस्योभयशाखासम्बद्धम्। माध्यन्दिन-शाखासम्बद्धेऽस्मिन् चतुर्दशकाण्डानि शतमध्यायाः अष्टषष्टि प्रपाठकाः ४३८ मितब्राह्मणानि ७३२४ मितकण्डिकाश्च। काण्वे तु सप्तदश काण्डानि चतुरुत्तर-शतमध्यायाः ४३५ मितब्राह्मणानि, ६८०६ मितकाण्डिकाश्च। अत्र सामान्य-यज्ञविधानप्रतिपादनादतिरिक्तं पुरुषाश्वसर्वपितृमेधादीनामपि सप्रपञ्च वर्णनं लभ्यते। सरसशैल्योपाख्यानमुखेनाध्यात्मिकरहस्यविवेचनमस्य वैशिष्ट्यम्। अत्र हि प्रथमकाण्डे हविर्यज्ञः पूर्णमासदर्शयागौ, द्वितीयकाण्डे अग्न्याधेय-पुनरा-धेय-अग्निहोत्र-अग्न्युपस्थान-पिण्डपितृयज्ञ-आग्रयणेष्टि-दाक्षायणयज्ञ-चातुर्मास्यानि, तृतीयेऽग्निष्टोमश्चतुर्थेऽपि, पञ्चमे राजसूयः, षष्ठे चयनं सप्तमेऽपि, अष्टमे चितिरेव, नवमे सञ्चितिः, दशमेऽग्निरहस्यम्, एकादशेऽन्याधानादिकालाः, द्वादशे दीक्षादिक्रमः, त्रयोदशेऽश्वमेधादिनिरूपणं, चतुर्दशे धर्माद्युपनिषन्निरूपण-मिति प्रतिकाण्डविषयनिरूपणम्।

अत्र च सायणस्य भाष्यमुपलभ्यते।

अस्य प्रणयनकालमादाय पण्डिता विवदन्ते। बालगङ्गाधरप्रभृतिविप-श्चितोऽस्य रचनाकालः श्रीमन्नृपविक्रमार्कात् पञ्चशतोत्तरद्विसहस्रवत्सरपूर्वं इति मन्यन्ते। अन्ये केचन तत्पूर्वमपि निर्दिशन्ति। तस्य याथार्थ्यं तु अद्याप्य-नुद्घाटितमेव।

**तैत्तिरीयब्राह्मणम्**—कृष्णयजुर्वेदसम्बद्धे ब्राह्मणेऽस्मिंस्त्रीणी काण्डानि, प्रथम-द्वितीयकाण्डयोर्द्वादशाध्यायास्तृतीये तु त्रयोदशेति सप्तत्रिंशदध्यायाः। अत्र हि संहितायां वर्णितानां यज्ञादीनां सविस्तरवर्णनेन सहैव तत्रावर्णितानामपि केषाञ्चिद्यज्ञानामपि प्रतिपादनं दृश्यते। प्रथमे काण्डेऽन्याधान-गवानयन-वाजपेय-सोमनक्षत्रेष्टिराजसूयादीनां वर्णनं, द्वितीयेऽग्निहोत्रसौत्रामणिबृहस्पतिसववैश्या-दीनां प्रतिपादनं. तृतीये तु नक्षत्रेष्ट्यादीनां प्रतिपादनं, वैश्यक्षत्रियब्राह्मणानां ऋग्यजुःसामादिभ्य उत्पत्तिकथनं शूद्रस्य यज्ञानधिकारकथनञ्चेति प्राधान्येन

विषयक्रमोऽत्र। अत्र हि वेदोपवर्णितज्यौतिषविषयस्य रहस्यमपि सप्रपञ्चं वर्णितमस्ति।

अस्मिन्नपि सायणप्रणीतं भाष्यं समुपलभ्यते।

**ताण्ड्यब्राह्मणम्**—सामवेदसम्बद्धमिदं ब्राह्मणं पञ्चविंशाभिधया महाब्राह्मणाभिधया च संज्ञितमपि। सामवेदस्य ताण्डीसंहितासम्बद्धत्वेनेदं ताण्ड्यमुच्यते। पञ्चविंशत्यध्यायात्मकत्वात्पञ्चविंशब्राह्मणमपि। तथैवात्यन्तविस्तृतत्वान्महाब्राह्मणमपि। अत्र नानाविधयज्ञानां विधिर्निर्दिष्टोऽस्ति यत्र हि ऐकदिनसाध्यादारभ्य साहस्रवार्षिकयज्ञानामपि विधानयुक्तमस्ति। अत्र हि प्रथमाऽध्यायादारभ्य तृतीयाध्यायपर्यन्तं त्रिवृत्पञ्चदशसप्तदशप्रभृतिस्तोमविष्टुतीनां विस्तृतं वर्णनमस्ति। चतुर्थपञ्चमयोर्गवानयनविधिर्निरूपितः। एवमेव षष्ठे ज्योतिष्टोमोक्थाहिरात्राणां सप्तमे प्रातःसवनस्याष्टमे माध्यन्दिनसवनस्य नवमे सायंसवनस्य रात्रिपूजायाश्च विधिः कथितः। दशमाध्यायादारभ्य पञ्चदशाध्यायपर्यन्तद्वादशाहयागानां विधानं वर्णितमस्ति। तथैवैकदिनादारभ्य दशदिनपर्यन्तसाम्नामपि तत्र वर्णनम्। षोडशादारभ्यैकोनविंशाध्यायपर्यन्तमेकाहयज्ञविधानं विंशादारभ्यद्वाविंशतितमाध्यायपर्यन्तमहीनयज्ञविधानं शेषेषु साम्नः सोमयागस्य च विधानं निर्दिष्टमस्ति। तत्र तत्र साम्नो महत्त्वप्रतिपादकोपाख्यानामपि प्रस्तुतिर्दृश्यते।

**षड्विंशब्राह्मणम्**—ब्राह्मणमिदमपि सामवेदसम्बद्धमेव पञ्चविंशब्राह्मणपरिशिष्टरूपत्वात् षड्विंशसंज्ञया ज्ञातम्। अत्र हि पञ्च प्रपाठकाः प्रतिप्रपाठकमवान्तरभेदाश्च। अत्र हि प्राधान्येन भूकम्प-अकालपुष्पफलागमादिविविधोत्पातशान्तिविधिर्वर्णितः। तथैव सन्ध्यादिकालश्चात्रोपवर्णितः।

**सामविधानब्राह्मणम्**—इदमपि सामसम्बद्धमपि इतरब्राह्मणापेक्षया भिन्नविषयत्वम्। अत्र हि प्राधान्येन विविधोपद्रवशान्त्यर्थं सामगायनेन सहैव तत्तदनुष्ठानादीनामपि विधानमस्ति। इदं त्रिषु प्रकरणेषु विभक्तम्। तत्र प्रथमे विविधानां व्रतानां समुल्लेखः, द्वितीये पुत्रप्राप्तिनिमित्तकविविधानुष्ठानानां निर्णयः, तृतीये वैभवप्राप्तिनवगृहप्रवेशादीनामनुष्ठानविधिर्निर्दिष्टः। अत्र हि पापवत्प्रायश्चित्तादीनामपि विधानं निर्दिष्टमस्ति। इदं धर्मसूत्राणां पूर्वपीठका।

**आर्षेयब्राह्मणम्**—ब्राह्मणमिदं सामसम्बद्धमितरापेक्षया लघु च। इदं त्रिषु खण्डेषु विभक्तं प्रतिखण्डमनेका कण्डिकाश्च। तत्र प्रथमे खण्डे षड्विंशकण्डिकाः सन्ति यत्र अग्नीन्द्रप्रजापतिसोमवरुणत्वष्ट्रङ्गिरसपूषसरस्वतीप्रभृतीनां सामवेदीयदेवतानां वर्णनमस्ति। द्वितीये एकादश कण्डिका यत्र हि छन्दसां देवतानां वर्णनाञ्च निरूपणं कृतमस्ति। भाषादृष्ट्यास्य खण्डस्येतरापेक्षया महत्त्वम्।

**उपनिषद्ब्राह्मणम्**—सामसम्बद्धे ब्राह्मणेऽस्मिन् दशप्रपाठकाः। अस्य हि द्वौ भेदौ मन्त्रब्राह्मणं छान्दोग्योपनिषद् च। मन्त्रब्राह्मणं तु द्वयोः प्रपाठकयोर्विभक्तमस्ति। छान्दोग्योपनिषत्तु सम्बद्धप्रकरणे वर्ण्यते।

**संहितोपनिषद्ब्राह्मणम्**—सामवेदीयं ब्राह्मणमिदं पञ्चसु खण्डेषु विभक्तं प्रतिखण्डं सूत्रेषु च। प्रथमे खण्डे देवहू-वाक्-शवहू-अमित्तहूसंहितासंज्ञितानां गानसंहितानां स्वरूपं फलञ्चोपवर्णितमस्ति। यत्र प्रथमा कल्याणप्रदाऽवशिष्टे द्वे मङ्गलप्रदे च कथिते। द्वितीयतृतीययोर्गानसंहिताविधेः स्तोमस्य, अनुलोम-प्रतिलोमादिविविधस्वराणां प्रतिपादनं दृश्यते। सामगानसंहितासम्बद्धत्वादिदं संहितोपनिषदभिधम्। अत्र हि सायणस्य द्विजराजभट्टस्य च भाष्यं समुपलब्धम्।

**वंशब्राह्मणम्**—त्रिषु खण्डेषु विभक्तेऽस्मिन् सामवेदीये ब्राह्मणे सामवेदाचार्याणां परम्परा वर्णिताऽस्ति, येन तदभिधमपि।

**जैमिनीयब्राह्मणम्**—इदं हि सामवेदीयं ब्राह्मणं बृहत्कलेवरं यागाद्यनुष्ठानविधिनिर्देशकञ्च।

**गोपथब्राह्मणम्**—ब्राह्मणमिदमथर्ववेदसम्बद्धम्। इदं हि पूर्वोत्तरभागयोर्विभक्तम्। तत्राद्य पञ्चापरस्मिन् षट् प्रपाठकाः। प्रतिप्रपाठकं कण्डिकाश्च यासां सङ्ख्या २५८ मिताऽस्ति। प्रथमे हि प्रपाठके ओङ्कारस्य गायत्र्याश्च महिमा वर्णिताऽस्ति। द्वितीये हि ब्रह्मचारिणो धर्मा निरूपिताः। तृतीयचतुर्थयोरित्विजां कार्यविधिर्दीक्षा च वर्णिता। पञ्चमे संवत्सराणां विवेचनम्। चरमे च अश्वमेधपुरुषमेधाग्निष्टोमादीनां विवेचनमस्ति। उत्तरभागे विविधयज्ञानां तत्सम्बद्धोपाख्यानाञ्च समुल्लेखो दृश्यते।

इत्थं सुसमृद्धं ब्राह्मणसाहित्यं स्वप्रकृष्टगुणैर्वेदाभिधेयत्वं लभते। ब्रह्म यज्ञ एव। तेन यज्ञरूपब्रह्मप्रतिपादकत्वादिदं ब्राह्मणमिति।

## १०. आरण्यकग्रन्थाः

आरण्यकं हि ब्राह्मणानां परिशिष्टमेव। अरण्ये पाठ्यमानत्वादिदमारण्यकसंज्ञितमिति सायणाचार्यमतम्। यथोक्तं—

> "अरण्याध्ययनादेतदारण्यकमितीयते।
> अरण्ये तदधीयीतेत्येवं वाक्यं प्रचक्षते॥"

इत्थं विश्वस्यते यदारण्यकं खलु यज्ञयागादिसम्बद्धाध्यात्मिकतत्त्वनिरूपकम्। तेनैवेदं प्राणविद्याऽप्युच्यते। तादृशानां गूढतत्त्वानामध्ययनं ग्रामादावसम्भवमिति

तेषामरण्य एव पठनपाठनव्यवस्थया यदारण्यकमुक्तमिति। वस्तुतस्तु ब्राह्मणानि गृहस्थसम्बद्धकर्मनिर्देशकानि तत्परिशिष्टत्वेन आरण्यकानि वनस्थसम्पाद्यकर्मविधिनिर्देशकानि। आरण्यकान्यपि ब्राह्मणसाहित्यवत्प्रतिवेदं सन्तीति विश्वस्यते किन्तु सम्प्रति तु पञ्चैव तान्युपलभ्यन्ते। तान्यत्र यथोपलब्धमुपस्थाप्यन्ते—

**ऐतरेयारण्यकम्**—ऋग्वेदसम्बद्धमिदमारण्यकं पञ्चधा विभक्तम्। तत्र प्रथमे महाव्रतवर्णनं, द्वितीये प्राणविद्यापुरुषवर्णनं, तृतीये संहितापदक्रमपाठस्वरव्यञ्जनादिनिरूपणं, चतुर्थे महाव्रतान्तरकृत्यवर्णनं, पञ्चमे निष्कैवल्यशास्त्रनिरूपणम्। एषु प्रथमत्रयाणां प्रणेता महिदासश्चतुर्थस्याश्वलायनः पञ्चमस्य शौनक इति कथितः। इदं निरुक्तपूर्ववर्तित्वान्न तथार्वाचीनम्।

**शाङ्खायनारण्यकम्**—ऋग्वेदसम्बद्धमिदमारण्यकं पञ्चदशस्वध्यायेषु विभक्तम्। अस्य प्रथमाः षडध्यायाः कौषीतक्युपनिषत्त्वेन प्रसिद्धम्।

**तैत्तिरीयारण्यकम्**—कृष्णयजुर्वेदसम्बद्धमिदमारण्यकं दशप्रपाठकेषु विभक्तम्। अस्य सप्तमाष्टमनवमप्रपाठकाः तैत्तिरीयोपनिषदिति ज्ञायन्ते। दशमस्तु महानारायणीयोपनिषदेव। अत्र हि समुपासनाविधिरिष्टिसञ्चयनं स्वाध्यायः पञ्चमहायज्ञाः तृतीये चातुर्होत्रचितिमन्त्राः, चतुर्थे प्रवार्योपयुक्तमन्त्राः अभिचारमन्त्राश्च, पञ्चमे यज्ञविधिः, षष्ठे पितृमेधविषयकमन्त्राः इति।

**तलवकारारण्यकम्**—सामवेदसम्बद्धमिदमारण्यकं चतुर्ष्वध्यायेषु विभक्तम्। अध्यायास्तु अनुवाकेषु विभक्ताश्च। अत्र केनोपनिषदन्तर्भूतास्ति चतुर्थाध्यायस्य दशमेऽनुवाके।

**बृहदारण्यकम्**—शुक्लयजुर्वेदसम्बद्धमिदमारण्यकं शतपथब्राह्मणपरिशिष्टत्वेन चतुर्दशकाण्डे चतुर्थाध्यायादारभ्य नवमाध्यायपर्यन्तं निबद्धमस्ति। अत्र हि एकत्रिंशदध्यायाः। अत्रापि यज्ञादीनामध्यात्मस्वरूपं निर्दिष्टमस्ति।

इत्थमारण्यकसाहित्यमुपनिषत्साहित्यस्यैकतः पूर्वपीठिकाऽपरतश्च ब्राह्मणसाहित्यस्य परिशिष्टमपि।

## ११. उपनिषदः

आध्यात्मिकजगति उपनिषदां महत्त्वं वर्णनातीतमेव। उपनिषदो हि वेदानां शीर्षाणीत्युच्यन्ते। ता एव मोक्षसाधकाः। विशेषेण जीवो जगदीश्वरश्चोपनिषदां प्रधानविषयाः। उपनिषदां सङ्ख्या नैवाधुनाऽपि निश्चिता। सामान्येन ईशादिविंशोत्तरशतोपनिषदो योगाद्यष्टोत्तरषष्ट्युपनिषद इति कृत्वा अष्टाशीत्युत्तरैकशतसङ्ख्यका उपनिषदो मुद्रिता दृश्यन्ते। तासु ऋग्वेदसम्बद्धा ऐतरेयाद्या

दश, शुक्लयजुर्वेदसम्बद्धा ईशाद्या एकोनविंशतिः, कृष्णयजुर्वेदसम्बद्धा तैत्तिरीयाद्याः द्वात्रिंशत्, सामवेदसम्बद्धाः छान्दोग्याद्या षोडश, अथर्ववेदसम्बद्धा कठाद्या एकत्रिंशदिति प्राधान्येन अष्टोत्तरशतमुपनिषदः। ता हि कतिचन गद्यात्मिकाः कतिचन पद्यात्मिकाः कतिचन उभयात्मिकाश्च। तास्वपि ईश-केन-कठ-प्रश्न-मुण्ड-माण्डुक्य-तैत्तिरीय-ऐतरेय-छान्दोग्य-वृहदारण्यकसंज्ञका दश प्रसिद्धाः सन्ति। सर्वासामेवोनिपषदां परिचयस्त्वत्र नैव सम्भवः तेन कासाञ्चिन्मुख्यत्वेन गृहीतानामेवात्र सङ्क्षेपेण विवेचना क्रियते।

**ईशोपनिषद्**—उपनिषदियं शुक्लयजुर्वेदस्य माध्यन्दिनशाखासम्बद्धा तच्चत्वारिंशदध्यायगता। अत्र हि अष्टादशश्लोका येषां हि प्रथमः श्लोकः—

'ईशावास्यामिदं सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥'

इति। यथोपनिषद् वेदानां शीर्षं तथैवेशोपनिषदुपनिषदां शीर्षमिति तस्य प्राधान्यं सर्वत्र सम्मतम्। अत्र हि ज्ञानकर्मणोः समन्वयः साधितस्तथैव निष्कामकर्मास्याः सन्देशः। एवमेव अविद्याविद्याया भेदप्रदर्शनपूर्वकमध्यात्मविद्या निरूपितास्ति। शरीरं तु भस्मान्तमेव तस्य क्रतुः कृतमेव हि स्मृतिविषया भवन्ति। निष्कर्मणां जीवनेऽपि नाधिकारः। यदि कश्चिदपूर्णं जीवनमुपभोक्तुमिच्छति तदा स कर्म कुर्यादेव। आत्माभीष्टमेव कर्म कर्तव्यं न तु तद्वीपरीतम्। पराबाधेन सर्वैर्जीवितव्यं न तु परपीडया। इतिप्रभृतिविषयनिरूपिकेयमुपनिषन्निश्चयमेवोपनिषदां शिर इति।

"हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
योऽसावादित्ये पुरुषः सोसावहम्।" 'ॐ खं ब्रह्म'।

**केनोपनिषद्**—उपनिषदियं सामवेदस्य तलवकारशाखासम्बद्धा। केनेति प्रश्नपूर्वकमारब्धत्वादियं केनेति शब्दिता। अस्य चत्वारः खण्डाः यत्र द्वौ द्वौ पद्यबद्धौ द्वौ च गद्यमयौ। प्रथमे खण्डे निर्गुणोपास्यब्रह्मयोरन्तरं प्रतिपादितम्। द्वितीये ब्रह्मणो रहस्यात्मकरूपनिरूपणम्। तृतीये चतुर्थे च परब्रह्मणः सर्वशक्तिमत्त्वप्रतिपादनमित्यस्याः प्रतिपाद्यविषयाः। जीवात्मनः परमात्मांशत्वप्रतिपादिकेयमुपनिषद् संवादरूपेण गुम्फिताऽस्ति।

**कठोपनिषद्**—इयञ्च कृष्णयजुर्वेदस्य कठशाखासम्बद्धा। अत्र द्वावध्यायौ प्रत्यध्यायं तिस्रो वल्ल्यश्च। अत्र नचिकेतोयमसंवादरूपेण परमात्मनो रहस्यमयतत्त्वमुद्घाटितमस्ति। काव्यात्मकसङ्घटनयोत्कृष्टतमदार्शनिकविषयस्य प्रतिपादनमेवास्य सर्वातिशायि वैशिष्ट्यम्। आत्मनोऽमरत्वमात्मानुभवस्य प्रकृष्टत्व निष्कामभावश्चास्याः प्रतिपाद्यविषयेषूल्लेखनीयाः।

**प्रश्नोपनिषद्**—इयमुपनिषदथर्ववेदस्य पिप्पलादशाखासम्बद्धा। इयञ्च प्रश्नोत्तररूपेण निबद्धत्वात्प्रश्नोपनिषदित्युक्ता। अत्र च प्राणस्य महिमा तथा तत्स्वरूपम् ओङ्कारस्योपासना, परब्रह्मण आध्यात्मिकदृष्ट्योपासनविधिः, ब्रह्मणो जगदधिष्ठातृत्वप्रतिपादनमित्यस्य मुख्यप्रतिपाद्यविषयाः।

**मुण्डकोपनिषद्**—इयमथर्ववेदस्य शौनकशाखासम्बद्धा त्रिषु मुण्डकाख्यविभागेषु विभक्ता। प्रतिमुण्डकं द्वौ द्वौ खण्डौ च। तत्र प्रथमे भागे ब्रह्मणो वेदानाञ्च व्याख्या द्वितीये ब्रह्मणः स्वभावस्य वर्णनम्। पराऽपराविद्याप्रतिपादनमेवास्या वैशिष्ट्यम्।

**माण्डूक्योपनिषद्**—द्वादशवाक्यात्मिका गद्यनिबद्धेयमुपनिषद् ओङ्कारस्य व्याख्यापरा। जाग्रत्स्वप्नसुषुप्तितुरीयावस्थस्य चैतन्यस्याधिपत्येनात्मनो वैश्वानरतैजसप्राज्ञशिवेतिप्रकारनिरूपणमस्य मुख्यविषयः।

**तैत्तिरीयोपनिषद्**—इयं कृष्णयजुर्वेदस्य तैत्तिरीयशाखया सम्बद्धा। इयं त्रिषु खण्डेषु शिक्षावल्ली, ब्रह्मानन्दवल्ली, भृगुवल्ली चेत्याख्येषु विभक्तम्। शिक्षावल्ल्यां वेदमन्त्राणामुच्चारणनियमाः स्नातकशिक्षा च निबद्धाः। ब्रह्मानन्दवल्ल्यां प्रतिपाद्यविषयः ब्रह्मप्राप्तिसाधनानां निरूपणं ब्रह्मविद्याविवेचनञ्च। तत्रैव अन्नप्राणमनोविज्ञानानन्दमयकोषाणां निरूपणमानन्दमयकोषे परब्रह्मणो निवासश्च निरूपितोऽस्ति। भृगुवल्ल्यां ब्रह्मप्राप्तिसाधनस्वरूपतपावर्णनं कृतमस्ति।

**ऐतरेयोपनिषद्**—ऋग्वेदसम्बद्धेयमुपनिषद् ब्रह्मविद्याप्रतिपादिका। अस्य त्रयोऽध्यायाः सर्वे च गद्यात्मकाः। आत्मनो जगतः सृष्टिः, जीवानां जन्मजीवननिधनावस्थानां निरूपणं, प्रज्ञानमाहात्म्यञ्चास्याः प्रतिपाद्यविषयाः। तत्रापि चैतन्यतत्त्वनिरूपणमद्वैततत्त्वमीमांसा पुनर्जन्मविवेचनञ्चास्या वैशिष्ट्यानि।

**छान्दोग्योपनिषद्**—सामवेदस्य तलवकारशाखासम्बद्धेयमुपनिषदष्टस्वध्यायेषु विभक्ता। प्रत्यध्यायञ्चानेके खण्डाः। आख्यायिकामाध्यमेन निगूढदार्शनिकतत्त्वप्रतिपादनमेवास्याः सर्वातिशायि वैशिष्ट्यम्। परमात्मनो विविधप्रकारेण प्रतीकोपासना, अनेकविधाविद्यानां निरूपणम्, ओङ्कारस्य गूढरहस्यविवेचनमिति चास्याः मुख्यविषयाः।

**बृहदारण्यकोपनिषद्**—उपनिषदियं शुक्लयजुर्वेदस्य माध्यन्दिनशाखासम्बद्धा। इयमध्यायषट्कात्मिका यत्र प्रत्येकमध्याया ब्राह्मणेषु विभक्ताः। अत्र ब्रह्मणः सार्वरूपत्वं, चातुर्वर्ण्यसृष्टिः, अन्नानामुत्पत्तिः, मनोवचनप्राणरूपेण सृष्टेविभागः, मधुविद्याया उपदेशः, आत्मनो विविधरूपाणां वर्णनं, ब्रह्मात्मनोः शिक्षेत्याद्या अस्याः प्राधान्येन प्रतिपाद्यविषयाः।

श्वेताश्वतरोपनिषद्—रुद्रमाहात्म्यप्रतिपादनपरेयमुपनिषद् षट्स्वध्यायेषु विभक्ता। इयमपि कृष्णयजुर्वेदसम्बद्धा। अत्र हि परमात्मनो जगन्नियन्तृत्वेन प्रतिपादनं योगशैव-सिद्धान्त-साङ्ख्ययोगादिविवेचनं गुरुभक्तिः मायाधिपतित्वेन महेश्वरवर्णनञ्च मुख्यविषयाः। इतरापेक्षयाऽस्या नवत्वमत्र वेदान्त-योगशास्त्रादीनामपि वर्णनादिति।

इत्थं सुसमृद्धमुपनिषत्साहित्यं संस्कृतसाहित्योद्याने सदापुष्पितं कुसुमं यदादाय पाश्चात्यका अपि समालोचका नतमस्तका भवन्ति भारतीयानां तु का कथा।

## ८. उपवेदाः

### १. प्राक्कथनम्

उपवेदो नाम मूलवेदान्निःसृतो वेदः। वेदान्समभ्यस्य तत्र तत्र व्यस्तरूपेण स्थितं विषयविशेषमादाय प्रणीतो वेद एव उपवेदसंज्ञितः। स च चतुर्विधः आयुर्वेदः धनुर्वेदः गन्धर्ववेदः अर्थवेदश्च। तेषु आयुर्वेदः प्राधान्येन ऋग्वेद-निष्पन्नः, धनुर्वेदः यजुर्वेदस्य विषयः, गान्धर्ववेदः सामवेदसम्बद्धः अर्थवेदश्चाथर्ववेदभवं इति। तत्तत्सम्बद्धविषया चतुर्ष्वेव वेदेषु समुपलभ्यन्ते तथापि प्राधान्यविवक्षया तेषां वेदविशेषमूलत्वमुक्तम्।

### २. आयुर्वेदः

आयुर्वेदो हि आयुर्विज्ञानसम्बद्धः। अत्र हि प्राधान्येन रोगास्तन्निदानोपायाश्च वर्ण्यन्ते। कथ्यते यदसौ ब्रह्मणा वेदानभ्यस्य जनकल्याणहेतवे आदौ सृष्टः। तं ततश्च प्रजापतिर्जग्राह, प्रजापतेरश्विनौ, अश्विभ्यामिन्द्रः ततो धन्वन्तरिर्भरद्वाजश्च, ताभ्याञ्च सुश्रुत उशभ्र-अग्निवेश-भेलप्रभृतयस्तमगृह्णन्। स च पश्चाद्बहुधा व्याख्यातोऽनन्तशाखत्वं प्राप्तः। अस्य च त्रीणि प्रस्थानानि हेतुर्लक्षणमौषधज्ञानञ्च। अस्य च प्रधाना आचार्यश्चिरकसुश्रुतवाग्भटमाधव-शार्ङ्गधरभावमिश्रप्रभृतयः। चरकसंहितास्य समुपलब्धेषु ग्रन्थेषु प्राचीनतमा संहिता।

इदमप्युच्यते यच्छरीरशक्तिदौर्बल्यात्पुरुषार्थसिद्धौ समुत्पन्नबाधानिराकरणाय महर्षयः हिमालये समवेताः सन्तो मन्त्रणाञ्चक्रुः। ते चायुर्वेदज्ञानाय भरद्वाज-मिन्द्रसकाशं प्रेषयामासुः। स च तत्र गत्वेन्द्रमाराध्यायुर्वेदज्ञानं प्राप्य पुनर्भुवं प्रत्यागत्यायुर्वेदं प्रचारयामासेति। नितान्तजटिलत्वात्तं ब्रह्मा मुनीनामनुरोधेन शल्य-शालाक्य-कायचिकित्सा-भूतविद्या-कौमारभृत्य-अगदतन्त्र-रसायन-वाजीकरण-

भेदादष्टधा विभज्य पृथक्पृथग्ग्रन्थान् निर्ममे। तत्र शल्यचिकित्सां धन्वन्तरिः कायचिकित्सां पुनर्वसुः जगृहतुः। पुराणेषु तु धन्वन्तरिरेवाष्टाङ्गविभाजकत्वेन सम्मतो दृश्यते। स हि प्रथमद्वापरस्यान्ते काशीराजशौनहोत्राज्जन्मावाप्य भरद्वाजादायुर्वेदमधीतवान्। तत्प्रणीतं हि धन्वन्तरिसूत्रमायुर्वेदशास्त्रे प्रामाणिकग्रन्थत्वेन सम्मतम्। तत्पूर्वमपि पुष्कलसंहिता-ब्रह्मसंहिता-भेलसंहिता-अग्नीध्रसूत्रराज-किरणप्रभा-धातुवादप्रभृतयो ग्रन्था आर्षत्वेन प्रचलिता आसन्। मानससूत्रमपि प्रकरणेऽस्मिन् स्मरणीयं मन्यते। लौकिकपरम्परायां तु चरक एवाद्याचार्यो य आयुर्वेदविषये प्रामाणिकं ग्रन्थं प्रणिनाय। चरकानन्तरमपि सुश्रुतवाग्भट-माधवशार्ङ्गधरभावमिश्रादिभिरायुर्वेदसम्बद्धा ग्रन्थाः प्रणीता येषां परिचयः पश्चादायुर्वेदप्रकरणे दास्यते।

## ३. धनुर्वेदः

धनुर्वेदः प्राधान्येन यजुर्वेदसम्बद्धः अस्य सम्प्रति मूलरूपं तु नैवोपलभ्यते। गोरक्षपीठाधीशेन परममहर्षिणा नरहरिनाथेन एको धनुर्वेदनामको ग्रन्थः प्रकाशितोऽस्माकमपि दृष्टिगोचरीभूतः किन्तु स नितान्तमेवार्वाचीनः प्रतीयते भाषिकदृष्ट्या। श्लोकबद्धोऽयं लघुकायग्रन्थो धनुर्वेदस्य चतस्र एव शाखा व्याप्नोति संक्षेपेण। धनुर्वेदस्य हि चत्वारः पादाः दीक्षा-शास्त्रादिज्ञान-शस्त्राद्यभ्यास-देवार्चनाभिधाः। तत्र दीक्षापादे धनुषस्तदधिकारिणश्च लक्षणं कृतमस्ति। धनुर्वै आयुधः मुक्तकामुक्तकमुक्तामुक्तकयन्त्रमुक्तेति भेद-चतुष्टयात्मको यत्र मुक्तकश्चादिरमुक्तः खड्गादिः मुक्तामुक्तकः शल्यादिः यन्त्र-मुक्तश्च शरादिः। ते च नारायणपाशुपतब्राह्मवैष्णववायवपार्वतवारुणाग्ने-यमेद्यप्रभृतिभेदादनेकविधः। द्वितीयपादे शस्त्रास्त्रविज्ञानम्। तृतीयपादे शस्त्राणां ग्रहणमभ्यासः सिद्धिश्च। चतुर्थपादे प्रयोगविधिश्च। श्रूयते हि वसिष्ठ-विश्वामित्र-जामदग्न्य-वैशम्पायन-भरद्वाज-प्रभृतिभिर्मुनिभिरपि धनुर्वेद-मधिकृत्यानेके ग्रन्थाः प्रणीता इति। किन्तु ते कालकवलिताः सञ्जाताः। कौरवाचार्येण द्रोणेन धनुष्प्रदीपाख्यो ग्रन्थो जामदग्न्येन परशुरामेण धनुश्चन्द्रोदय-नामको ग्रन्थश्च प्रणीत आसीत्। पराशुरमेऽष्टोत्तरशतप्रकरणान्यासन्निति कथ्यते। किन्तु तेऽपि कालवशात्स्मृतिपथमेव गता इति नास्त्यधुना कश्चिदपि धनुर्वेद-विषयकः प्रामाणिको ग्रन्थ इति परमखेदावहम्।

## ४. गान्धर्ववेदः

सामवेदोपवेदत्वेन प्रसिद्धो ग्रन्थोऽयं सामज्ञानस्य सङ्गीतविद्यायाश्च निरूपकः। अस्य च गीत-नृत्य-वाद्यादिभेदैर्बहुप्रस्थानवत्त्वमनुमीयते। किन्तु गान्धर्व-

वेदस्यापि मौलिकं रूपमद्य लुप्तप्रायमेव। विषयेऽस्मिन् यत्र-तत्र सामब्राह्मणेषु वर्णितं लभ्यते किन्तु प्रामाणिकत्वेन तु भरतस्य नाट्यशास्त्रमेव प्रथमं दृश्यते। तदनन्तरं नारदशिक्षा–सङ्गीतमकरन्दसङ्गीतसमयसारसङ्गीतरत्नाकर-प्रभृतिग्रन्थाः प्रणीताः किन्तु तेषामवाचीनत्वं स्वतः सिद्धमेव।

### ५. अर्थवेदः

अथर्ववेदस्योपवेदत्वेन सम्मतोऽर्थवेदोऽपि लुप्तप्राय एव। विश्वस्यते यदर्थ-वेदे राजनीतितन्त्र-अर्थतन्त्र-कृषितन्त्र-वाणिज्यतन्त्र पशुपालनतन्त्र-समाजतन्त्र-प्रभृतिविषया आसन्। अस्यापि आर्षरूपेषु बृहस्पतिप्रणीतत्वेन ख्यातमर्थशास्त्र लभ्यते तदनु कौटिलीयमर्थशास्त्रमेव। पश्चाच्च, शुक्राचार्योपदिष्टः शुक्रनीतिसारः सोमदेवस्य नीतिवाक्यामृतञ्च, सोमेश्वरस्य मानसोल्लासः, इत्याद्याः कतिपयग्रन्था विषयपर्यालोचकाः। आधुनिकयुगे तु लक्ष्मीधर भट्टस्यकृत्यकल्पतरुः, मित्रमिश्रस्य वीरमित्रोदयः, नीलकण्ठस्य नीत्यादिमयूखाश्च। अत्याधुनिकयुगे तु हरिहर-नाथस्य भारतीयविचारदर्शनं, लोकमणिदाहालस्य प्राचीनराजशास्त्रार्थशास्त्र-दर्शनञ्चेति समुपलब्धग्रन्थाः येषां सङ्क्षिप्तविवरणं तत्प्रकरणे दास्यते

## ९. वेदाङ्गवाङ्मयम्

### १. परिचयः

अङ्ग्यन्ते ज्ञायन्ते एभिरिति गत्यर्थकाद् अगि धातोर्घत्र बहुत्वे अङ्गानि वेदानामङ्गानि वेदाङ्गानि इति यैरधीतैर्वेदानां तत्तद्विषयाः सम्यग्ज्ञायन्त इति तेषां वेदाङ्गत्वम्। कालक्रमेण क्षीयमाणबुद्धीनां जनानां कृते वेदा दुरूहाः सञ्जाताः। अत एव तत्र तत्र मन्त्राणामुच्चारणविषये, वेदनिर्दिष्टकर्मप्रतिपादन-विषये, वैदिकशब्दज्ञानविषये, तन्निर्वचनविषये, तद्गतवृत्तविषये, तत्प्रतिपाद्य-कर्मविधानकालविषये च पृथग्विवेचनमपि आवश्यकं सञ्जातम्। उक्तमेव—

"साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उप-देशेन मन्त्रान् सम्प्रादुरुपदेशाय ग्लायन्तोऽवरेभ्यो बिलमग्रहणायेमं ग्रन्थं समाम्ना-सिषुर्वेदञ्च वेदाङ्गानि च।" इति। अत एव वेदार्थबोधाय सहायकत्वात्तेषामुप-कारकत्वं सिध्यत्येव। प्रथमं तु वेदाङ्गानां वेदमन्त्रैः सहैवाध्ययनमभिमतमासीत् किन्तु कालक्रमेण ते पृथग्ग्रन्थत्वेनोपस्थापिता दृश्यन्ते।

वेदाङ्गानामुल्लेखो गोपथब्राह्मणादावपि दृश्यते। तथैव मुण्डकोपनिषदि पराऽपराविद्यायाः पृथक्पृथगुल्लेखः कृतः। तत्र पराशब्देन ब्रह्मविद्याऽपराशब्देन वेदानां तदङ्गानाञ्च ग्रहणम्। यथोक्तम्—

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। ( १।१।५ )

वेदार्थावगमनाय विशिष्टाध्ययनप्रणाली वेदाङ्गत्वेन समाख्याता। कालान्तरे तानि एव षण्णां वेदाङ्गानां स्थितिः पृथक्तया स्वातन्त्र्यमाधत्त। तानि च षट्—शिक्षा, कल्पः, व्याकरणं, निरुक्तं, छन्दः, ज्यौतिषमिति। तत्र छन्दो वेदस्य पादौ, कल्पो वेदस्य हस्तौ, ज्यौतिषं चक्षुः, निरुक्तं श्रोत्रे, शिक्षा घ्राणं, मुखं व्याकरणमिति। तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयत इति पाणिन्यनुशासनम्।

अथैषां सङ्क्षेपेण विवेचनं क्रियते—

## २. शिक्षा

शिक्ष्यते प्रतिबोध्यते वर्णाद्युच्चारणमनयेति विद्योपादानार्थकात् शिक्षधातोः स्त्रीत्वविवक्षायाम् 'अ प्रत्ययात्' इत्यनुवृत्य 'गुरोश्च हलः' इत्यप्रत्यये टापि शिक्षेति। तैत्तिरीयोपनिषदि उक्तं—

"वर्णः स्वरः। मात्रा बलम्। साम सन्तानः।"

तेन वर्णस्वरमात्राबलसामसन्तानात्मका शिक्षा-यत्र वर्णा अकारादयः, स्वरा उदात्तादयः मात्रा ह्रस्वादिः, बलं स्थानप्रयत्नौ साम निषादादिः सन्तानो विकर्षणादिः येषामवबोधनमेव शिक्षायाः प्रयोजनम्। शिक्षायाम् अक्षरविज्ञानं स्वरविज्ञानं सन्धिविज्ञानं निवृत्तिविज्ञानं संहितापाठः पदपाठश्चेत्यादिविषयाः समाविष्टाः। तत्र वर्णानामुच्चारणविधिरक्षरविज्ञानं, स्वराणामुदात्तानुदात्तस्वरितभेदेनोच्चारणज्ञानं स्वरविज्ञानम्। द्वयोरेव वेदपाठे महानुपयोगः। यथोक्तं—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

इति। वर्णेषु शषसानां वबयो रलयोरपि समुच्चारणे विशिष्टध्यानमपेक्षते। स्वराणामाद्युदात्तत्वेन वा अन्त्योदात्तत्वेन अर्थपार्थक्यं वा वाक्यार्थभिन्नत्वं भवति।

प्रतिसंहितं शिक्षाग्रन्थोऽपेक्ष्यते किन्तु सम्प्रति ते त्रिंशत्सङ्ख्याका एव लभ्यन्ते। ते च याज्ञवल्क्य-वसिष्ठ-कात्यायन-पराशर-माण्डव्य-अमोघानन्दन-नारद-शौनक-गौतम-माण्डूक-पाणिनिप्रभृतिप्रणीता येषां पाणिनीयशिक्षा सर्वोत्कृष्टत्वेन गृहीता। शिक्षाग्रन्थाश्च सूत्रशैल्या सङ्गृहीताः सन्ति। शिक्षाग्रन्थानां संरचनाकालः श्रीमन्नृपविक्रमार्कात् १५०० मितवत्सरपूर्वतः ५०० मित-

वत्सरपूर्वपर्यन्तं निर्धारितोऽस्ति । अधस्तनकालस्तु पाणिनिकालमपेक्ष्य निर्धारितः किन्तु पूर्वकालस्त्वनुमित एव ।

कानिचिच्छिक्षाशास्त्राण्यत्र सङ्क्षेपेण विविच्यन्ते—

**पाणिनीयशिक्षा**—शिक्षेयं दासीपुत्रस्य पाणिनेः कृतित्वेन सम्मता । अत्र हि मन्त्राणामुच्चारणविधिर्निर्दिष्टोऽस्ति । अस्या अनेके टीकाग्रन्थाः लभ्यन्ते ।

**याज्ञवल्क्यशिक्षा**—शिक्षेयं याज्ञवल्क्यकृतित्वेन सम्मता शुक्लयजुर्वेदस्य वाजसनेयीयसंहितासम्बद्धा । अत्र हि वैदिकस्वराणां सोदाहरणविवेचनपूर्वकं वर्णानां लोपागमविकारप्रकृतिभावादिसन्धीनाञ्च विवेचना कृताऽस्ति । तथैव वर्णानां भेदस्य स्वरूपस्य पारस्परिकसाम्यवैषम्ययोश्च विवेचनं दृश्यते तस्या इयं प्रतिज्ञावचनम् –

'अथातस्त्रैस्वर्यलक्षणं व्याख्यास्यामः—

उदात्तश्चानुदात्तश्च स्वरितश्च तथैव च ।
लक्षणं वर्णयिष्यामि दैवतं स्थानमेव च ॥'

इति ।

**वासिष्ठी शिक्षा**---एषाऽपि शुक्लयजुर्वेदसम्बद्धैव । अत्र निर्दिष्टं यद्यजुर्वेदे ऋचां १४६७ मितसङ्ख्याऽस्ति यदा यजुषां २८२३ मिता ।

**कात्यायनी शिक्षा** – इयमपि तथा । अत्र हि जयन्तस्वामिनो विवृतिर्लभ्यते ।

**पाराशरी शिक्षा**---अस्यां हि १३० मिताः श्लोकाः सन्ति येषु स्वराणां वर्णानां सन्धेश्च विवेचनं लभ्यते ।

**माण्डव्यशिक्षा**—इयमपि यजुर्वेदसम्बद्धा । अत्र हि केवलमोष्ठ्यवर्णानां सङ्ग्रहो दृश्यते ।

**माध्यन्दिनी शिक्षा**-- एषाऽपि तथैव । अत्र हि द्वित्वनियमविवेचनं दृश्यते ।

**वर्णरत्नप्रदीपिका** – अत्र हि वर्णानां स्वराणाञ्च विवेचनं लभ्यते ।

**केशवी शिक्षा**—अत्र हि प्राधान्येन स्वरविचारः ।

**नारदीयशिक्षा**—एषा सामवेदसम्बद्धा । अत्र हि शोभाकरस्य टीका समुपलभ्यते । एवमेव **गौतमी शिक्षा लोमशी शिक्षा** च ।

**माण्डूकी शिक्षा** – एषाऽथर्ववेदसम्बद्धा ।

एतदतिरिक्तं **मल्लशर्मशिक्षा, स्वराङ्कुरशिक्षा, षोडशश्लोकी शिक्षा, अवसाननिर्णयशिक्षा, स्वरभक्तिलक्षणशिक्षा, प्रातिशाख्यप्रदीपशिक्षा, क्रम-**

सन्धानशिक्षा, गलदृक्शिक्षा, मनःस्वारशिक्षा च प्राकाश्यमागताः सन्ति। श्रूयते च पञ्चाशन्मिता अन्येऽपि शिक्षाग्रन्थाः सन्तीति।

## ३. प्रातिशाख्यम्

प्रातिशाख्यमपि शिक्षाया एव अङ्गम्। प्रातिशाख्यं प्रतिसंहितं विद्यत इति विश्वस्यते। अत्र हि उच्चारणं, स्वरविधानं, वर्णानां लोपागमादिविचारश्च, वर्ण्यविषयाः। यथोक्तमृक्प्रातिशाख्ये—

"गुरुत्वं लघुता साम्यं ह्रस्वदीर्घप्लुतानि च।
लोपागमविकाराश्च प्रकृतिर्विक्रमः क्रमः॥
स्वरितोदात्तनीचत्वं श्वासो नादस्तथोभयम्।
एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयता॥"

इति। केषुचित्तु छन्दसामपि विवेचनमस्ति। प्रातिशाख्यं ह्येकतो व्याकरणस्य पूर्वपीठिकामाबध्नन्ति, अपरतश्च संहितायाः पाठस्वरूपं विवेचयन्ति। अत्र समुपलब्धानां केषाञ्चित्प्रातिशाख्यानां सङ्क्षिप्तविवरणं प्रस्तूयते—

**ऋक्प्रातिशाख्यम्**—इदमृग्वेदस्याश्वलायनशाखासम्बद्धम्। अत्र हि उव्वटेन कृतं भाष्यमपि लभ्यते। इदमष्टादशपटलेषु विभक्तम्। अत्र हि स्वरव्यञ्जन-स्वरभक्तिरक्तनाभिप्रगृह्यादीनां परिभाषा प्रथमे पटले, द्वितीये तु प्रश्लिष्ट-क्षैप्रभुग्नोद्ग्राह्यादिसन्धीनां लक्षणं, तृतीयादारभ्य नवमपर्यन्तं स्वरपरिचयः विसर्गसन्धिः नकारविकारः क्रमव्यञ्जनप्लुतसन्धयश्च, दशमैकारदशयोः क्रमपाठ-विवरणं शेषेषूच्चारणादिविचारश्च वर्ण्यविषयाः।

**वाजसनेयिप्रातिशाख्यम्**—कात्यायनप्रणीतत्वेन प्रथितमिदं शुक्लयजुर्वेदस्य माध्यन्दिनशाखासम्बद्धम्। इदमष्टास्वध्यायेषु विभक्तं यत्र हि परिभाषा-स्वर-संस्कारादीनां क्रमबद्धविवेचनं कृतमस्ति। तत्राद्ये पारिभाषिकशब्दानां लक्षणं, द्वितीये त्रिविधस्वराणां विवेचनं वैशिष्ट्यप्रतिपादनञ्च, तृतीयादारभ्य सप्तमाध्यायपर्यन्तं सन्धीनां विवेचनं, चरमे वर्णानां गणना तथा स्वरूपविवेचनञ्च। अत्र हि उव्वटभाष्यम्, अनन्तभट्टकृता व्याख्या च समुपलभ्येते। पाणिनीय-व्याकरणे हि अस्मादनेकानि सूत्राणि गृहीतानि दृश्यन्ते। अतोऽनेन तत्पूर्ववर्तिना भाव्यमिति तर्कः।

**तैत्तिरीयप्रातिशाख्यम्**—कृष्णयजुर्वेदसम्बद्धमिदं प्रातिशाख्यं द्वयोः खण्डयोर्विभक्तं, प्रतिखण्डं द्वादशाध्यायाश्चेति। तत्र प्रथमेऽध्याये वर्णसमाम्नाय-शब्दस्थान-शब्दोत्पत्ति-विविधस्वर-विसर्गसन्धि-मूर्धन्यीभवनादीनां विवरणं,

द्वितीये तु णत्वविधान-संहितारूपविचरणादिवर्ण्यविषयाः। अत्र हि वररुचि-माहिषेय-आत्रेय-सोमाचार्य-गोपालादीनां भाष्याणि लभ्यन्ते। इदं वाजसनेयि-प्रातिशाख्यानन्तरवर्ति मन्यते किन्तु पाणिनिपूर्ववर्ति।

**अथर्वप्रातिशाख्यम्**—अथर्ववेदसम्बद्धमिदं प्रातिशाख्यं सन्धि-स्वर-संहिता-पदादिविवेचनपरम्। अत्र हि प्रकृतिप्रत्ययविभागश्च प्रदर्शितोऽस्ति।

**शौनकीयचतुरध्यायी**—इदमथर्ववेदस्य पैप्पलादशाखासम्बद्धम्। अत्रापि पूर्ववद्विषयक्रमः।

**सामप्रातिशाख्यम्** –सामतन्त्राभिधमिदं प्रातिशाख्यं सामवेदसम्बद्धम्। एवमेव **पुष्पसूत्रं, ऋक्तन्त्रं** च। एषु हि व्याकरणस्य विशिष्टपारिभाषिकशब्दानां लक्षण, वर्णनमुच्चारणस्थानादिविवरणं, सन्ध्यादिनियमाश्च वर्ण्यविषयाः। पुष्पसूत्रं प्राधान्येन गानसंहितया सम्बद्धम्, ऋक्तन्त्रं तु पदानामृचाञ्च पारस्परिक-सम्बन्धनिर्धारणपरम्।

इत्थं सुसमृद्धं प्रातिशाख्यसाहित्यं शिक्षाग्रन्थस्य परिशिष्टं व्याकरणसाहि-त्यस्य पूर्वपीठिका च। पाणिनीयव्याकरणस्य वैदिकप्रकरणं प्रायः प्रातिशाख्यानु-गृहीतमेवेति।

## ५. कल्पः

वेदोक्तकर्मणामानुपूर्वेण कल्पनया कल्पसाहित्यस्य कल्पत्वम्। यथोक्त-मृक्प्रातिशाख्ये—

"कल्पो वेदविहितानां कर्मणामानुपूर्वेण कल्पनाशास्त्रम्।"

साहित्यमिदं ब्राह्मणसाहित्येन सह प्रत्यक्षतः सम्बद्धम्। ब्राह्मणेषु निरूपितानां यज्ञानां क्रमबद्धनिरूपणमेव कल्पसाहित्यस्य प्रयोजनम्। इदञ्च कल्पसाहित्यं श्रौतसूत्र-गृह्यसूत्र-धर्मसूत्र-शुल्वसूत्रभेदाच्चतुर्धा विभक्तम्। अथैषां सङ्क्षेपतो विवरणं प्रस्तूयते—

**श्रौतसूत्रम्**—श्रौतसूत्रं हि वेदोक्तयागादीनां क्रमबद्धमध्ययनम्। अत्र हि दर्श–पूर्णमास-पिण्डपितृयाग–आग्रयणेष्टिचातुर्मास्य–निरूढपशु-सोमयाग-सत्र-गवा-नयन-वाजपेय-राजसूय-सौत्रामणि-अश्वमेध-पुरुषमेध-अहीनादीनां यथाक्रमं विवेचनं लभ्यते। प्रतिसंहितं पृथगेव श्रौतसूत्रं कल्प्यते। किन्तु सम्प्रति ऋग्वेदस्य आश्वलायनशाङ्खायनभिधे द्वे एव श्रौतसूत्रे, यजुर्वेदस्य एकमेव कात्यायनाभिधं, कृष्णयजुर्वेदस्य बोधायन-आपस्तम्ब-हिरण्यकेशीय-सत्याषाढ-वैखानस-भारद्वाज-मानवादिश्रौत्रसूत्राणि, सामवेदस्य लाट्यायन-द्राह्यायण-राणायनीयाभिधानि

त्रीणि अथर्ववेदस्य वैतानाख्यमेकमेव श्रौतसूत्रं च समुपलभ्यन्ते। कात्यायन-श्रौतसूत्रे कर्काचार्यस्य भाष्यमपि लभ्यते। अत्र हि षड्विंशाध्यायाः।

**गृह्यसूत्रम्**—गृहे भवं गृह्यमिति गृहस्थकर्मसम्बद्धं यत्कर्म तादृशकर्मनिरूपकं सूत्रम्। गृह्यसूत्रे प्राधान्येन यज्ञाग्निसन्दीपनं गृह्ययज्ञविभाजनं, सायंप्रातःपूजा, पक्वान्नहवनं, वार्षिककृत्यं, संस्कारा निषेकादिनिधनान्ताः षोडश वा चत्वारिंशत्, छात्रधर्माः, स्नातकनियमाः, श्राद्धकर्म, मधुपर्कविधानमित्याद्या विषयाः प्रतिपाद्याः। प्रतिवेदं पृथगेव गृह्यसूत्रमिति विश्वस्यते किन्तु सम्प्रति द्वादशैव गृह्यसूत्राणि लभ्यन्ते। तेषां सङ्क्षिप्तविवरणमत्र प्रस्तूयते—

तत्र ऋग्वेदसम्बद्धानि त्रीण्येव गृह्यसूत्राणि आश्वलायन-शाङ्खायन-कौषीतकसंज्ञितानि। तत्र प्रथमे चत्वारोऽध्याया यत्र गृह्यकर्मणां संस्काराणाञ्च वर्णनं दृश्यते। शाङ्खायने षडध्यायाः यत्र गृहनिर्माणं, गृहप्रवेशविधिश्च विशेषेण वर्ण्यविषयाः। कौषीतके संस्काराणां वैश्वदेवविधेः कृषिकर्मणः श्राद्धविधेश्च विशेषेण वर्णनं लभ्यते। चरमाऽध्याये पितृमेधवर्णनम्।

यजुर्वेदसम्बद्धमेकमेव गृह्यसूत्रं पारस्कराख्यम्। अत्र त्रीणि काण्डानि यत्र प्रथमे आवसथाग्न्याधानं विवाहः, गर्भाधानादारभ्यान्नप्राशनपर्यन्तसंस्काराणां वर्णनं च वर्ण्यविषयाः, द्वितीये चूडोपनयनसमावर्तनपञ्चमहायज्ञश्रवणाकर्म-सीतायज्ञादीनां वर्णनम्। अन्तिमकाण्डे श्राद्धविकीर्णिप्रायश्चित्तादिविधानम्। अत्र हि कर्कजयरामगदाधरहरिहरविश्वनाथादीनां भाष्याणि लभ्यन्ते।

कृष्णयजुर्वेदसम्बद्धानि गृह्यसूत्राणि बौधायन-आपस्तम्ब-सत्याषाढ-भारद्वाज-मानव-काठकाभिधानि। सर्वेष्वेव वर्ण्यविषयस्तु प्रायः समान एव।

सामवेदीयानि गृह्यसूत्राणि तु गोभिलखादिरजैमिनीयाभिधानि।

अथर्ववेदसम्बद्धमेकमेव गृह्यसूत्रं कौशिकाख्यम्। इदं हि चतुर्दशाध्यायेषु विभक्तम्। अत्र हारिलस्य केशवस्य च व्याख्या लभ्यते।

इत्थं सुसमृद्धं गृह्यसूत्रसाहित्यं संस्कृतसाहित्यकानने दृढमूलवृक्षम्।

**धर्मसूत्रम्**—धर्मसूत्रं नाम कल्पसूत्रस्य तृतीयः प्रकारः। अत्र हि वर्णानामाश्रमाणाञ्चाचारवर्णनेन सहैव राज्ञा कर्तव्यमपि निरूपितमस्ति। इमानि खलु तात्कालिकजीवनस्य दर्पणा एव। गौतम-बौधायन-आपस्तम्ब-हिरण्यकेशि-वसिष्ठ-विष्णु-हारीत-शङ्खलिखिताभिधान्येव धर्मसूत्राणि समुपलभ्यानि। धर्मस्वरूपं, चतुर्णामेव वर्णानामाचाराः कर्तव्यानि जीवनवृत्तयश्च, चतुर्णामेवाश्रमाणामाचाराः, मिश्रितजातेः स्वरूपादिविवेचनं, सपिण्डनं, पापास्तेषां प्रायश्चित्तानि

च, व्रतानां नियमाः, आशौचं, न्यायव्यवहारौ, राजधर्माः, स्त्रीधर्माः, पुत्रविचारः, स्त्रीधनं, दायव्यवस्था चेत्याद्या धर्मसूत्रस्य विषयाः।

शुल्वसूत्राणि—शुल्वं नाम रज्जुस्तेन शुल्वसूत्रं नाम वेद्या मापनिर्धारकसाहित्यं श्रौतसूत्रसम्बद्धम्। सम्प्रति त्रीण्येव शुल्वसूत्राणि लभ्यन्ते बौधायन-आपस्तम्ब-कात्यायनाभिधानि। तत्र शुक्लयजुर्वेदीयं कात्यायनशुल्वसूत्रं, कृष्णयजुर्वेदीये बौधानायपस्तम्बाख्ये।

केचित्तु कल्पसूत्रं श्रौतस्मार्तभेदेन द्विधा विभज्य श्रौतस्य श्रौतशुल्वाख्ये द्वे कल्पसूत्रे स्मार्तस्य गृह्यधर्माख्ये द्वे ते इति कथयन्ति। स्यादेवमपि।

भारतीयजीवने सूत्रसाहित्यस्य महती उपदेयता दृश्यते। एतद्धि भारतीयजीवनपद्धतेर्दर्पण एव। इह विशेषतो धर्मसूत्रेषु वर्णाश्रमधर्मदृष्टया भारतीयजीवननिर्वहणाय सङ्गतिश्चेष्टिता। इहैव चतुर्णां वर्णानामाश्रमाणाञ्च साङ्गोपाङ्गं विवेचनं लभ्यते। अत्र हि सर्वेषामपि कर्तव्यैः सह धार्मिक्यः प्रथा निरूपिताः सन्ति। ब्राह्मणानां परिशिष्टत्वेनैषां वेदाङ्गत्वम्।

## ५. व्याकरणम्

व्याकरणं नामापरं वेदाङ्गम्। व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्युत्पत्त्या व्याकरणं हि शब्दव्युपत्तिपरकसाहित्यम्। यथाऽऽह भर्तृहरिः—

"साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।" इति।

शब्दसाधुत्वासाधुत्वव्याख्यानरूपेण व्याकरणेन हि पदादिविभागश ऋग्वेदादयो ज्ञायन्त इति व्याकरणस्य न केवलं वेदाङ्गत्वमपितु वेदानां वेदत्वमपि। उक्तमेव यथा छान्दोग्ये—

'वेदानां वेदं··· ···· ···· ···· ····अध्येमि' (६।२)

वेदव्याख्यानाय शब्दानुशासनस्य प्रतिशाख्यनिरुक्तव्याकरणरूपा समृद्धा परम्पराऽतिप्राचीनकालादेवाऽऽसीत्। व्याकरणं हि वेदाङ्गेषु मुख्यत्वेन गृहीतमपि दृश्यते। यथोक्तं महाभाष्ये—

**"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च। प्रधानञ्च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति" इति।**

तथैव व्याकरणं हि वेदस्य मुखस्थानीयं मतं–'मुखं व्याकरणं स्मृतम्' इति पाणिनीयशिक्षादावप्युक्तत्वात्। तेन हि व्याकरणपरम्पराऽनादिकालादेव प्रचलिताऽऽसीत्। ब्राह्मणेष्वपि व्याकरणस्य क्रमबद्धमध्ययनं दृश्यते। स्वयमृग्वेदेऽपि तस्य स्वरूपावधारणं लभ्यते इति पण्डिताः। तत्प्रतिपादकमन्त्रश्च यथा—

"चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तास्सोते अस्य।
त्रिधा बद्धो वृषयो रोरवीति
महो देवो मर्त्याँ आ विवेश॥" ( ऋ० ४।५८।६ )

अयं निरुक्तकारेण व्याख्यातो यश्चत्वारि शृङ्गा इति चत्वारो वेदाः, त्रयः पादा इति त्रीणि सवनानि, द्वे शीर्षे इति प्रायणीयो दयनीये, सप्त हस्तास इति सप्त छन्दांसि, त्रिधा बद्ध इति मन्त्रब्राह्मणकल्पैः रोरवीति इति रोरवणमस्य ऋग्भिः शंसन्ति, यजुर्भिर्यजन्ति, सामभिः स्तुवन्ति, देव इति यज्ञः इति। अयमेव व्याकरणस्वरूपनिर्देशकत्वे व्याख्यायते यद् चत्वारि शृङ्गा इति नामाऽऽख्यातोपसर्गनिपाताः, त्रयः पादा इति भूतवर्तमानभविष्यदिति त्रयः कालाः, द्वे शीर्षे इति सुप्तिङौ, सप्त हस्तासः इति सप्त विभक्तयः स्वादयः, त्रिधा बद्ध इति उरःकण्ठशिरः स्थानीयम्।

पदानां प्रकृतिप्रत्ययविवेचनेन तस्य वास्तविकस्वरूपप्रतिपादनपरकशास्त्रमेव व्याकरणम्। विनैतदेकमपि वाक्यं न सिध्यतीति परं प्रमाणं व्याकरणस्य वेदानां वेदत्वस्य।

महाभाष्ये व्याकरणस्य सामान्यतस्त्रयोदशप्रयोजनान्युक्तानि। तत्रापि शब्दानुशासनमेव व्याकरणस्य मुख्यं प्रयोजनम्। तच्च रक्षोहागमलध्वसन्देहार्थमेव यत्र रक्षा वैदिकशब्दानाम्, उहः, अर्थकल्पना प्रकृतिप्रत्ययविश्लेषणतः आगमो व्युत्पत्तिज्ञानं ज्ञाते च तस्मिन्सर्वं ज्ञातं भवति, लघु लघुनोपायेन शब्दज्ञानाय, असन्देहः सन्देहस्य प्रागभावायेति। तथैव अपभाषणविरहाय, दुष्टशब्दनिराकरणाय, अर्थज्ञानाय, धर्मलाभायाभिधानायापि शब्दानुशासनं ज्ञेयमिति।

तेनैवोक्तं भवति—

"सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते।
तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा॥"

व्याकरणस्य विशिष्टपरम्परामुल्लिखन् भाष्यकारः कथयति—'बृहस्पतिरिन्द्राय दिव्यं सहस्रवर्षं प्रतिपदोक्तानां शब्दानां पारायणं प्रोवाच' इति।

शास्त्रान्तरवद् व्याकरणशास्त्रस्यापि ब्रह्मण एवोत्पत्तिं मत्वा प्रथमव्याकरणत्वेन ब्राह्म व्याकरणमेव गृह्यते। कथ्यते यद्—

"प्रथमं प्रोच्यते ब्राह्मं द्वितीयमैन्द्रमुच्यते।
याम्यं प्रोक्तं तथा रौद्रं वायव्यं वारुणं तथा॥
सावित्रञ्च तथा प्रोक्तमष्टमं वैष्णवं तथा।"

तदेतज्ज्ञायते यत्प्रथमं ब्रह्मा समग्रं व्याकरणशास्त्रं प्रणीय बृहस्पतये प्रोवाच स चेन्द्राय स चान्येभ्यः। अतः खलु हीन्द्रः प्रथमः शब्दानुशासनपारङ्गः। यथोक्तं तैत्तिरीयसंहितायाम्—

"वाग्वै पराच्यव्याकृतावदत्।' ते देवा इन्द्रमब्रुवन् इमां नो वाचं व्याकुर्विति।.........तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्" इति (६।४।७)। उक्तिमिमां विवृणन् सायणाचार्येणोक्तम्—

'तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययविभागं सर्वत्राकरोत्' इति। एवमेव माहेश्वरश्च सम्प्रदायोऽपि प्राचीनतमत्वेनोल्लिखितः। महेश्वरः खलु वेदात् षडङ्गानि उद्धृत्य व्याकरोदिति महाभारते( १२।२८४।१९२ )ऽप्युक्तम्। तेन व्याकरणपरम्परा द्विमुखी दृश्यते—बार्हस्पती माहेश्वरी च। ब्रह्मणा हि प्रणीतं व्याकरणशास्त्रमेकतो बृहस्पतिर्जग्राहापरतो महेश्वरः। बार्हस्पत्यं हि इन्द्रः प्रोक्तवान् यस्य कातन्त्रमपरं रूपम्। यच्च महेश्वरः प्रोक्तवांस्तस्य च पाणिनीयमपर रूपम्। अत एवोक्तम्—

"समुद्रवद् व्याकरणं महेश्वरे तदर्धकुम्भोद्धरणं बृहस्पतौ।
तद्भागभागाच्च शतं पुरन्दरे कुशाग्रविन्दूत्पतितं हि पाणिनौ॥" इति।

अनेन तु महेश्वरस्य प्रथमवैयाकरणत्वं सिध्यति। स्याद्यत्किञ्चित्। इदं तु निश्चयेन वक्तुं शक्यते यद् व्याकरणं हि प्रथमं शास्त्रं, यस्य परम्परा वेदवदनादिः। प्रथमं शिक्षासाहित्यं तत्परिशिष्टरूपे प्रातिशाख्यसाहित्ये च व्याकरणस्य व्यवस्थितमध्ययनं दृश्यते।

प्रथमं हि वैदिकशब्दा एव व्याकरणस्य विषया आसन्। अनन्तरं तत्र लौकिकशब्दानामपि समावेशः सञ्जातः।

व्याकरणसम्प्रदायस्य या महती परम्परा श्रूयते, सा अष्टधा वा नवधा विभक्ता। यथा—

ब्राह्ममैशानमैन्द्रञ्च प्राजापत्यं बृहस्पतिम्।
त्वाष्ट्रमापिशलिञ्चेति पाणिनीयमथाष्टमम्॥

अपि च

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ हि शाब्दिकाः॥

तथैव

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकल्यं पाणिनीयकम्॥

इत्यपि।

तथैव भागुरि-माध्यन्दिन-व्याघ्रपाद-स्फोटायन-व्याडि-काश्यप-गार्ग्य-गालव-चाक्रवर्णन-सेनक-भारद्वाजादीनामपि तत्र तत्र वैयाकरणत्वेन प्रसिद्धिः श्रूयते। सर्वेऽपि प्रातिशाख्यकारा वैयाकरणाः।

सत्यामपि गणनातीताचार्यपरम्परायां सम्प्रति तु पाणिनीयमेव व्याकरणं सर्वातिशायित्वं भजते।

पाणिनीयं हि व्याकरणं माहेश्वरापररूपं मतम्। तत्राष्टावध्यायाः द्वात्रिंशत्पादाः सूत्राणि च सन्ति। स्वीयायामष्टाध्याय्यां पाणिनिना स्वयमेव वृत्तिरपि कृताऽसीत्परं साऽधुना लुप्ता केवलमष्टाध्याय्येव सुलभा। अष्टाध्याय्यां कः खलु प्रथमो वृत्तिकार इति सम्प्रत्यपि नैव निर्णीतम्, तथापि भाष्यकृतैव वृत्तिकारस्योल्लेखनादवश्यमेव तत्पूर्ववर्तिना भाव्यमिति प्रबलस्तर्कः। स च व्याडिर्वा वररुचिर्वा भवितुमर्हति। तत्रापि व्याडिः सङ्ग्रहप्रबन्धस्य महाभाष्यकारोऽपि स्मरति। सम्भवति प्रबन्धे वृत्तिग्रन्थोऽपि स्यात्। पाणिनिना वृत्तिग्रन्थोऽपि निरमायीति कथनमत्र विचारणीयं दृश्यते। एवमेव वररुचिरपि पाणिनिसमकालीन एवेति कथासरित्सागराज्ज्ञायते। तत्र हि पाणिनिना सह वररुचेः शास्त्रार्थे पराजयस्ततस्तस्य हिमालयगमनं तत्र शम्भोराराधनं शङ्करात्तस्यापि व्याकरणज्ञानाप्तिस्ततस्तेन पाणिनीयव्याकरणे वृत्त्यादीनां निर्माणञ्चेत्यादिकथा वर्णिताऽस्ति। अनेन वररुचेः वृत्तिकारित्वं सिध्यति। ततश्च जयादित्यवामनयोः काशिकावृत्तिः प्रसिद्धा। पाणिनीयसूत्रे यदनुक्तं दुरुक्तं वा तत्कथनाय वा व्याख्यानाय कात्यायनेन वार्तिकानि कृतानि। एतादृशानां वार्तिकानां सङ्ख्या षट्त्रिंशोत्तराष्टशतं परित आगण्यते। एतत्सूत्रवृत्तिवार्तिकरूपग्रन्थत्रयोपरि महर्षेः पतञ्जलेर्महाभाष्यं लभ्यते। महाभाष्योपरि च कैयटस्य प्रदीपाख्या नागेशभट्टस्य उद्द्योताख्या भट्टोजिदीक्षितस्य शब्दकौस्तुभाख्या च विवृतिर्लभ्यते। एवमेव काशिकावृत्तौ जिनेन्द्रबुद्धेर्न्यासाख्या हरदत्तस्य पदमञ्जर्यभिधा च वृत्तिर्लभ्यते।

अष्टाध्याय्यां कालक्रमात्सौकर्याभिनिवेशनाय ओरम्भट्टेन प्रणीता व्याकरणदीपिका, जैनेन पुरुषोत्तमदेवेन भाषावृत्तिनामिका वृत्तिरपि प्रणीताऽस्ति।

एतदन्तरे धर्मकीर्तिनामा कश्चिद्वैयाकरणोऽध्यापनसौविध्यदृष्ट्या रूपावतारं नाम प्रक्रियाक्रमग्रन्थं प्रणीतवान्। अत्र हि पाणिनीयसूत्राणां शब्दसाधनापेक्षया विन्यासः कृतोऽस्ति न तु विषयक्रमेण। क्रमेण नारायणभट्टस्य प्रक्रियासर्वस्वं, प्रक्रियारत्नाख्योऽपरो ग्रन्थः, विमलसूरिणो रूपमाला, रामचन्द्रस्य प्रक्रियाकौमुदी, भट्टोजिदीक्षितसम्पादिता सिद्धान्तकौमुदी, वरदराजसम्पादिता तस्यैव संक्षिप्तरूपंमध्यसिद्धान्तकौमुदी लघुसिद्धान्तदौमुदी च, सोमनाथशर्मसङ्कलिता प्रति-

संस्कृतासिद्धान्तकौमुदी, लोकमणिदाहालसंक्षेपिता प्रतिसंस्कृता मध्यसिद्धान्तकौमुदी, प्रतिसंस्कृता लघुसिद्धान्तकौमुदी च, सुरेशझाप्रणोता श्लोकसिद्धान्तकौमुदी च प्रक्रियाग्रन्थेषूल्लेखनीयाः। एवमेव कृष्णकुतूहल—शब्दालङ्कारपदचन्द्रिकाद्या ग्रन्थाश्च प्रक्रमेऽस्मिन् समुल्लेखनीयाः।

तथैव भट्टोजिदीक्षितप्रणीता प्रौढमनोरमाख्या सिद्धान्तकौमुदीव्याख्या, तस्या एव विज्ञानभिक्षुविरचिता तत्त्वबोधिन्याख्या व्याख्या, वासुदेवदीक्षितप्रणीता बालमनोरमाख्या व्याख्या, नागेशभट्टप्रणीता लघुशब्देन्दुशेखराख्या व्याख्या तस्य तस्य चान्या विवृतयश्च प्रकरणेऽस्मिन्नुल्लेखनीयाः। तथैव कौण्डभट्टस्य बृहद्वैयाकरणभूषणसारः तत्सम्बद्धा भैरव्याद्या व्याख्याः, नागेशभट्टस्य परिभाषेन्दुशेखरस्तत्सम्बद्धा विवृतयः, सीरदेवकृता परिभाषावृत्तिः, अमृतलालस्य परिभाषेन्दुप्रभा, च प्रक्रमग्रन्थाः।

एवञ्च वैयाकरणदर्शनाभिनिष्टात्मवाक्यपदीयं नाम ग्रन्थरत्नं भर्तृहरिप्रणीतं, गोकुलनाथप्रणीतः पदवाक्यरत्नाकरः इत्याद्या ग्रन्थाश्च विषयेऽस्मिन्नध्ययनीयाः।

एवमेव सारस्वतं, कातन्त्रं, काशकृत्स्नं चान्द्रञ्च पाणिन्यतिरिक्तव्याकरणानि सम्प्रति समुपलभ्यानि।

इत्थं सुसमृद्धं व्याकरणसाहित्यं संस्कृतसाहित्ये शब्दानुशासनस्य शास्त्रं भाषिकसंरचनानिर्धारकञ्च।

## ६. निरुक्तम्

निरुक्तं वेदस्य प्रधानेष्वङ्गेष्वन्यतमम्, निरुक्तस्यावस्थितिस्तु ब्राह्मणकालेऽपि दृश्यते किन्तु मूर्तत्वेन प्रथमं निरुक्तं तु यास्कप्रणीतमेव।

निरुच्यते निश्शेषेणोपदिश्यते तत्तादर्थावबोधनाय पदजातं यत्र तन्निरुक्तम्। वैदिकपदानां व्युत्पादनमेवास्य विषयः। तत्प्रतिपाद्यविषया यथा—

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥

इति।

निरुक्तस्य परम्परा नितान्तप्राचीना दृश्यते। स्वयं यास्क एव स्वपूर्ववर्तिनोऽग्रायण–औपमन्यव-औदम्बरायण और्णनाम–कात्थक्यक्रोष्टुकि–गार्ग्य–गालव–तैरोकि–वार्ष्यायणि-शाकपूणि – स्थौलाष्ठीविप्रभृतिद्वादशनैघण्टुकान्निरुक्तकारान् स्मरति काम तेषां ग्रन्थाः सम्प्रति नैवोपलभ्यन्ते।

वैदिकशब्दानामर्थनिर्धारणमेव यास्कप्रणीतनिरुक्तस्य प्रतिपाद्यविषयः। अस्य च वर्ण्यविषयस्य त्रीणिरूपाणि, मन्त्रार्थज्ञानं, देवविद्या, निर्वचनञ्च। शेषयो—

द्वयोरपि साधनत्वान्निर्वचनस्याधिकं वैशिष्ट्यम् । केचिच्चिन्तयन्ति यदज्ञातकर्तृक-निघण्टोरेव भाष्यमिदं यास्कीयं निरुक्तमिति किन्तु स्थितिस्तु तदन्यथैव। यास्काचार्यः काम प्रथमं निघण्टुमेवोपस्थापयति प्रथमे नैघण्टुककाण्डे किन्तु स नैव तावत्पर्यन्तमेव बद्धसीमो भवति । स हि प्रसङ्गप्राप्तानामन्येषामपि शब्दानां निर्वचनं प्रस्तौति । नैतावन्मात्रमपितु तत्पुष्ट्यै मन्त्रानप्युद्धरति । स हि तथा-करणे प्रथमं शब्दानां वेदसम्मतमर्थं प्रस्तौति ततश्च तेषां लौकिकानमर्थानपि परीक्षते । तत्र हि निर्वचनेन सहैव प्रसङ्गप्राप्तान् व्याकरणसाहित्यप्रभृतिविषयानपि निर्दिशति ।

ग्रन्थोऽयं द्वादशस्वध्यायेषु विभक्तः । यत्राद्यास्त्रयोऽध्यायाः नैघण्टुकाः तदन्तर-त्र्यध्याया नैगमाः, सप्तमाध्यायादारभ्य द्वादशाध्यायपर्यन्तं षडध्याया दैवताः परिशिष्टञ्च । ग्रन्थारम्भे निघण्टुः पञ्चाध्यायात्मकः । केचिन्निघण्टुमज्ञातकर्तृकं वा कश्यपकर्तृकं मन्यते । किन्तु वस्तुततु निघण्टुर्नाम वैदिकशब्दानां सङ्ग्रह एव । तस्य यास्ककर्तृकत्वे काऽऽपत्तिः । सङ्ग्रहादौ परवर्तिनः पूर्ववर्तिभ्योऽनुगृहीतास्तु स्यादेतत् । ग्रन्थे नैघण्टुके आद्येऽध्यायत्रये १३१४ सङ्ख्याकशब्दाः सङ्गृहीताः । तदाश्च चतुर्थपञ्चमाध्याययोस्तेषु २३० मितशब्दा व्याख्याताः सन्ति । दैवतकाण्डे विभिन्नानां देवतानामुल्लेखः ।

ननु निर्वचनमुखेन पदानामर्थावगमो व्याकरणादपि सिध्यति । वर्णोच्चारणा-विज्ञानमपि शिक्षाग्रन्थत एव भवत्येव। तेन कथङ्कारं निरुक्तस्य तद्भिन्नत्व-मित्यपेक्षायामुच्यते मन्त्रघटकपदार्थज्ञानाय निरुक्तस्य पृथगावश्यकतेति । तर्हि किं निघण्टोरपि वेदाङ्गत्वमुत वा निरुक्तस्यैवेत्याकाङ्क्षायामुच्यते निघण्टुर्नाम शब्दसङ्ग्रह एव, तत्र नैव वेदोपकारकत्वं निरुक्तस्य तु तादृशपदव्याख्यानेनार्थाव-बोधकत्वाद्वेदोपकारकत्वेन वेदाङ्गत्वं सिद्धयति ।

यास्को हि निरुक्तकारः कदाऽभूदिति विषये विदुषां विमतिः । केचित्तं विक्रमपूर्वसहस्राब्द्यां विद्यमानं मन्यन्तेऽन्ये तु ततोऽपि प्राग्वर्तिनम् । यास्को हि निरुक्तकारेष्ववरजो यतो हि स स्वप्राग्वर्तिनो द्वादशाचार्यान् स्मरति । तेन तस्य स्थितिकालः पाणिनेः प्रागेव किन्तु विक्रमपूर्वसहस्राब्दीं यावदेवानुमीयते । अधि-कांशविपश्चितस्तु तं विक्रमपूर्वसप्तमशतकभवं मन्यन्ते । वयमपि तथैवा-नुमामः ।

निरुक्तस्य बहवो भाष्यकारा अभूवन् येषु दुर्गाचार्यो मूर्धन्यत्वेन स्मर्यते । स्कन्दस्वामी सर्वेषु तेषु प्राचीनतमः । दुर्गाचार्यस्तु विक्रमानन्तरत्रयोदशशतको-द्भवः । तत्र हि विक्रमानन्तरपञ्चदशशतकोद्भवस्य महेश्वरस्य टीकाऽपि लभ्यते ।

न केवलं वैदिकशब्दार्थावबोधनदृष्ट्याऽपितु भाषाशास्त्रदृष्ट्याऽपि निरुक्तस्य महत्त्वं सर्वानतिशेते।

## ७. छन्दः

"यदक्षरपरिमाणं तच्छन्दः"। सङ्ख्याविशेषे वर्णानां सत्ता छन्दः। यास्काचार्यानुसारेण यदेभिरच्छादयंस्तच्छन्दसां छन्दत्वम्। तेन हि छादनात् छन्दांसि। वैदिकमन्त्राणां छन्दोबद्धतया तेषां ज्ञानं विना मन्त्राणां सम्यगुच्चारणं न सम्भवतीति छन्दसां वेदाङ्गत्वम्।

वेदे खलु वार्णिकच्छन्दांस्येव प्रयुक्तानि सन्ति। तेषां हि प्रतिपादं निर्धारित-वर्णसङ्ख्या। वेदेषु हि गायत्री-त्रिष्टुब्-जगती-अनुष्टुप्-पङ्क्ति-बृहती-उष्णिक्-ककुप् शक्वरीप्रभृतीनि छन्दांसि प्रयुक्तानि दृश्यन्ते।

छन्दःशास्त्रं हि प्राचीनतमं साहित्यम्। ऋक्षु एव तत्र तत्र तेषा नामानि परिगणितानि दृश्यन्ते। यथा यजुर्वेदे—

"गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह।
बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तु त्वा॥" (२३।३३)।

"गायत्रेण त्वा छन्दसा परिगृह्णामि त्रैष्टुतभेन त्वा छन्दसा परिगृह्णामि जागतेन त्वा छन्दसा परि गृह्णामि।"( १।२७ )

छन्दसां स्वरूपञ्च यथा तत्रैव—

द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः।
विच्छन्दा याश्च सच्छन्दाः सूचीभिः शम्यन्तु त्वा॥ (२३।३४)

एवमेव—

"गायत्रं त्रैष्टुभं जगत्"। (साम० १८३०)

"गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम्।
वाकेन वाकं द्विपदा चतुष्पदाक्षरेण मिमते सप्तवाणीः॥"
( ऋ० १।६४।२४)

"यद्गायत्रे अधिगायत्रमाहितं त्रैष्टुभान्निरतक्षत।
यद्वा जगज्जगत्याहितं पदं य इत्तद्विदुस्ते अमृतत्वमानशुः॥"
( अथर्व० ९।१०।१ )

एवमेव ब्राह्मणेष्वपि छन्दसां विषये बहूक्तमस्ति। ग्रन्थाकारत्वेन ऋक्प्रातिशाख्यं प्रथमा कृतिर्यत्र वैदिकच्छन्दसां सविवेचना कृताऽस्ति। तत्र हि षोडश-सप्तदशाष्टादशपटलेषु वैदिकच्छन्दो विषय एव बहुशो निर्दिष्टमस्ति। एवमेव

शाङ्खायनश्रौतसूत्रे, सामवेदस्य निदानसूत्रे, पिङ्गलस्य छन्दःसूत्रे च छन्दोविषयः सोपपत्तिकं प्रतिपादितोऽस्ति। कात्यायनस्य सर्वानुक्रमण्यामपि छन्दोविषये बहु प्रतिपादितमस्ति। वस्तुतः पिङ्गलछन्दःसूत्रं तु वैदिकलौकिकच्छन्दसोः सन्धिस्थलम्। तत्र हि पूर्वार्धे वेदप्रयुक्तच्छन्दसां विवेचनमस्ति उत्तरार्धे तु लौकिकच्छन्दसामेव।

वैदिकच्छन्दसां सङ्ख्या स्थूलतया षड्विंशतिर्निर्दिष्टाऽस्ति। कात्यायनस्य सर्वानुक्रमण्यां छन्दांसि तद्ग्रथितमन्त्राणां सङ्ख्या च निर्दिष्टाऽस्ति।

छन्दोविषये उक्तमस्ति—

छन्दोज्ञानमिदं भवाद्भगवतो लेभे सुराणां पतिः
तस्माद्दुश्च्यवनस्ततः सुरगुरुर्माण्डव्यनामा ततः।
माण्डव्यादपि सूतवस्तत ऋषिर्यास्कस्ततः पिङ्गल-
स्तस्येदं यशसा गुरोर्भुवि धृतं प्राप्यास्मदाद्यैः कृतम्॥

अनेन च्छन्दोज्ञानस्य प्राचीनत्वेन सहैव पिङ्गलस्य यास्कादवरवर्तित्वमपि सिध्यति। स्यादप्येतत्।

छन्दःसाहित्ये पिङ्गलसूत्रमेव प्रथममार्षग्रन्थरत्नम्। ततश्च केदारभट्टस्य वृत्तरत्नाकरः षडध्यायैर्निबद्धो यस्य हि पञ्चविंशतितोऽभ्यधिकाष्टीकाः सन्ति, गङ्गादासस्य छन्दोमञ्जरी षड्भिः स्तवकैर्निबद्धा, क्षेमेन्द्रस्य सुवृत्ततिलकम्, हेमचन्द्रस्य छन्दोऽनुशासनञ्चेति केचन ख्याताश्छन्दोविषयकग्रन्थाः।

इत्थं छन्दः साहित्यमपि वेदस्य पादत्वेन सम्मतं सुविपुलं सुस्पष्टञ्च।

## ८. ज्यौतिषम्

ज्यौतिषं हि वेदानां चक्षुस्त्वेन सम्मतमस्ति। सर्वस्य लोचनं शास्त्रं, शास्त्राणां लोचनं वेदास्तेषामपि लोचनं ज्यौतिषमित्यहो महनीयता ज्यौतिषस्य। उक्तमेव—

यथा शिखा मयूराणां नागानां मणयो यथा।
तद्वद्वेदाङ्गशास्त्राणां गणितं मूर्धनि स्थितम्॥ इति।

ज्यौतिषं हि त्रिस्कन्धं स्मर्यते होरा-सिद्धान्त-संहिताभेदात्। ज्यौतिषसाहित्यमपि संहितावदेव प्राचीनम्। संहितासु यत्र तत्र ज्यौतिषविषये बहूक्तमस्ति।

यागादयो निर्धारितमुहूर्ते एव सम्पादनीया भवन्ति। तत्र केचित्तु प्रातः सम्पाद्याः केचिद्रात्रिसाध्याः, केचिद्वसन्तकालीनाः, केचित्तु नक्षत्रतिथिवारादिसम्बद्धाश्च यागादयः। तादृशकालज्ञानाय ज्यौतिषं परमावश्यकमिति ज्यौतिषस्य वेदाङ्गत्वं वेदनिर्दिष्टकर्मसम्पादनयोग्यकालसंसूचनेन तस्योपकारकत्वात्।

तत्र तत्र संहितासु ब्राह्मणादिषु च ज्यौतिषविषये यदेवोक्तं तत्संहृत्य संहृत्य लब्धाख्येन विपश्चिता प्रणीतो वेदाङ्गज्यौतिषाख्यो लघुग्रन्थः प्रसङ्गेऽस्मिन् प्रथमः। तत्र हि ऋग्वेदीयज्यौतिषसम्बद्धा षट्त्रिंशत्, यजुर्वेदीयज्यौतिषमधिकृत्य त्रयश्चत्वारिंशत्, आथर्वणविषये द्विषष्ट्युत्तरशतमिति एकचत्वारिंशदुत्तरद्विशतमितपद्यानि सन्ति। तत्र हि यजुर्वेदसम्बद्धभागे सोमाकरस्य भाष्यमपि लभ्यते। तत्रोक्तम्—

"वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः।
तस्मादिदं कालविधानशास्त्रं यो ज्यौतिषं वेद स वेद यज्ञान् ॥" इति।

ज्यौतिषसम्बद्धा आचार्या यथा—

"सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः॥
लोमशः पुलिशश्चैव च्यवनो यवनो भृगुः।
शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्तकाः॥"

लौकिकप्रकरणे आर्यभटस्यार्यभटीयं, वराहमिहिरस्य पञ्चसिद्धान्तिका, बृहज्जातकं लघुजातकञ्च. ब्रह्मगुप्तस्य ब्रह्मस्फुटसिद्धान्तः खण्डखाद्यं ध्यानग्रहश्च, लल्लस्य रत्नकोशः धीत्तद्धियन्त्रञ्च, उत्पलाचार्यस्य तत्तद्ग्रन्थटीकाः, श्रीपतेः सिद्धान्तशेखरः, धीकोटिकरणं रत्नमाला जातकपद्धतिः, भोजदेवस्य राजमृगाङ्ककरणम्, भास्कराचार्यस्य सिद्धान्तशिरोमणिः करणकुतूहलञ्च, केशवस्य ग्रहकौतुकं, मुहूर्ततत्त्वं जातकपद्धतिः, गणेशस्य ग्रहलाघवम्, कमलाकरस्य सिद्धान्ततत्त्वविवेकः इति ज्यौतिषविषयकख्यातग्रन्थाः केचन। एवमेव गणितशास्त्रं शकुनशास्त्रञ्च ज्यौतिषस्यैवाङ्गशास्त्रे। विषयेऽस्मिन् विस्तृतविवरणं पश्चादुपस्थापयिष्यते।

## ९. प्रकीर्णकवैदिकग्रन्थाः

वैदिकसाहित्यमधिकृत्यान्येऽपि बहवो ग्रन्थाः प्रणीताः सन्ति। तेषां सङ्क्षिप्तविवरणमत्रोपस्थाप्यते—

**अनुक्रमणी**—वेदमन्त्राणामृषिच्छन्दोदेवताऽनुवाकादिनिर्देशकग्रन्था अनुक्रमणीशब्देनाभिधीयन्ते। तत्र हि—

आर्षानुक्रमणी—मन्त्रदर्शकानामृषीणां मन्त्रक्रमेण नामनिर्देशिका।
छन्दोऽनुक्रमणी—मन्त्रप्रयुक्तच्छन्दसां क्रमेण संसूचिका।

देवताऽनुक्रमणी—मन्त्रसम्बद्धदेवतानां निर्देशिका।

सर्वानुक्रमणी—सर्वानुक्रमणीसारत्वेन कात्यायनप्रणीता।

बृहद्देवता—ऋग्वैदिकदेवताविषयसम्बद्धा शौनकप्रणीता।

एवमेव अनुवागनुक्रमणी, ऋग्विधानं, पादविधानं, सूक्तानुक्रमणी, शुक्ल-यजुर्वेदानुक्रमसूत्रं, सामानुक्रमणी, लघुऋक्सङ्ग्रहः, पञ्चषालिका, चरणव्यूहः बृहत्सर्वानुक्रमणी त्वेत्याद्या वैदिकसाहित्यस्य प्रकीर्णकग्रन्थाः। अनुक्रमणीकारेषु शौनककात्यायनर्मूर्धन्यस्थानम्। यजुर्वेदे सर्वानुक्रमसूत्रं प्रतिज्ञासूत्रम् अनुवाक्सूत्रञ्च कात्यायनप्रणीतत्वेन प्रसिद्धम्। शौनकीया दशाधिका ग्रन्थाः सम्प्रति उपलभ्यन्ते। तदित्थम्—

वेदवेदाङ्गसाहित्यं संङ्क्षेपात्परिचायितम्।

इदानीं तत्प्रणयनकालविषये पूर्वोक्तमपि पुनः संहृत्य किञ्चिदुच्यते प्रकरणसिद्धये।

## १०. वेदवेदाङ्गरचनाकालविषये किञ्चित्

वेदानां रचनाविषये न्यूनतममपि चत्वारिंशन्मतानि प्रवर्तितानि सन्ति। एवमेव तत्कालविषयेऽपि बह्व्यो विमतयः। प्रथमं वेदप्रणयनविषये चतस्रो विमतयः प्राधान्येन—वेदाः स्वयमेवाविर्भूताः, वेदा ईश्वरप्रणीताः, वेदा ऋषिभिर्दृष्टा तदङ्गानि तु प्रोक्तानि, वेदाः खलु भाण्डधूर्तानामाजीविकासाधनान्येवेति। तत्र हि प्रथमे मीमांसकाः, द्वितीया हि नैयायिका वैशेषिकाश्च, तृतीयो हि वात्स्यायनश्चतुर्थश्च नास्तिकाः।

मीमांसकाः कथयन्ति यद्वेदाः स्वतः समुत्पन्ना अपौरुषेयास्तेन स्वतः प्रमाणञ्च। ते हि खलु कथयन्ति—

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।
एवं विन्दन्ति वेदेन तस्माद् वेदस्य वेदता॥'

ते हि खलु जगदपि नित्यं सनातनञ्च मन्यन्ते।

किन्तु नैयायिकास्तु वेदमीश्वरकर्तृकं मन्यन्ते। ते हि तथाचिन्तने वेदवचनान्येवाश्रयन्ते—"तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे। छन्दाꣳसि जज्ञिरे। तस्माद्यजुस्तस्मादजायत (ऋ० १०।९०।९), यस्मादृचो अपातक्षन् यजुर्यस्मादपाकषन्। सामानि यस्य लोमानि अथर्वाङ्गिरसो मुखम्। (अथर्व० १०।७।२०) 'महाभूतस्य निःश्वसितमेतद्यदृग्वेदः सामवेदो यजुर्वेदोऽथर्ववेदश्चेत्यादीति।"

वात्स्यायनमते तु द्रष्टृप्रवक्तृसामान्याच्चानुपपत्तिः। य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेदप्रभृतीनाम्। प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते। ते वा खल्वेतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यवदन् इतिहासपुराणं पञ्चमं वेदानां वेदः। द्रष्टृप्रवक्तृसामान्याच्चानुपपत्तिः। य एव हि मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति। अत्रेदमुच्यते यदृषयो मन्त्राणां द्रष्टार इतिहासपुराणादीनां प्रवक्तारश्च। तेन ब्राह्मणेषु इतिहासपुराणांशोपस्थितिर्नाश्चर्यकारिणी। इतिहासकारैः कतिपयेषामेतादृशामृषीणां सूचिरपि निर्दिष्टाऽस्ति ये खलु मन्त्रद्रष्टारो ब्राह्मणादिप्रवक्तारश्चासन्। यथा आङ्गिरसो मन्त्रद्रष्टा आयुर्वेदस्य प्रवक्ता चेत्यादि। वेदेष्वेवोक्तम् —

'अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत।
स देवाँ एह वक्षति।' ( ऋ० १।१।२ )
यामृषयो मन्त्रकृतो मनीषिणोऽन्वैच्छन् देवास्तपसा श्रमेण।
तां देवीं वाचं हविषा यजामहे।' ( तै० ब्रा० २।७।७ )

'यास्काचार्योऽपि तथैव पुष्णाति—

"साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च।" ( निरुक्तम् – १।१ )

चतुर्थञ्च मतं नास्तिकानाम्। ते हि वेदान् धूर्तानामुदरपूरणसाधनानि मन्यन्ते। ओल्डेनवर्गाऽऽख्यः कश्चित्पाश्चात्यविपश्चित् वेदानार्याणां ग्राम्यगीतानि मन्यते।

एषु हि तृतीयमतमेव यथार्थं परिलक्ष्यते। अधिकांशविचक्षणा अपि तदेवोरीकुर्वन्ति।

एवमेव वेदावतारकालविषयेऽपि पण्डिता भृशं विवदन्ते। तत्र मीमांसकास्तु वेदमनादिमपौरुषेयञ्च मन्यन्ते। तेषां कृते तु न कोऽपि कालो वेदानाम्। नैयायिकानां ये खलु वेदानामीश्वरकर्तृकत्वं मन्यन्ते तेषां मते तु वेदाः सृष्टेः पूर्वमेव ब्रह्मणो वक्त्रान्निसृताः। अतस्तेषामाविर्भावकाल असङ्ख्येयः। यथोक्तम्—

"ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह।"
( मु० उ० १।१।१ )

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।"
( श्वेता० ६।१८ )

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥"

प्रसिद्धो विपश्चिदविनाशचन्द्रदासस्तु भूगर्भशास्त्रसम्बद्धतत्त्वाधारेण वेदाविर्भावकालः पञ्चविंशतिसहस्रवत्सरपूर्वः इति निर्णीते। तदनुसारेण यदा हि वेदा अवतरितास्तदा राजस्थानप्रदेशे महानर्णवा विलसति स्म यत्र सरस्वती मिलतिस्म। तादृशः कालश्च तदैव सम्भवति।

मैक्समूलरमहोदयस्तु वेदा श्रीमनृपविक्रमार्कात् १२०० मितवत्सरपूर्वमाविर्भूता इति अनुमाति। स हि छन्दोमन्त्रब्राह्मणसूत्राख्येषु चतुर्षु युगेपु वैदिकसाहित्यं विभज्य प्रतियुगविकासं वर्षशतद्वयकालमादाय बुद्धावतारात् षट्शतमितवत्सरपूर्वमेव छन्दोयुगं मन्यते। मतमिदमपि कल्पनामूलमेव न तु यथार्थपरं यतः छन्दोमन्त्रयोः समान एव कालश्छन्दसां मन्त्राणां पादत्वेन वर्णनात्।

शङ्करबालकृष्णमहोदयस्तु शतपथब्राह्मणगतं "तस्मात्कृत्तिकासु आदधीत। एता ह वै प्राच्या दिशो न च्यवन्ते। सर्वाविह वा अन्यानि नक्षत्राणि प्राच्या दिशश्च्यवन्ते"। ( २।१।२ ) इति वाक्यमाधारीकृत्य सम्प्रति तासामीषदुत्तरस्यामुदयनं गणयित्वा तादृशस्य कालस्य विक्रमात्त्रिसहस्रमितवत्सरपूर्वत्वमनुमाय तदैव शतपथब्राह्मणं सम्पादितमिति सप्रमाणं प्रतिपादयति। तस्मादत्यन्तप्राचीनेन ऋग्वेदेन न्यूनमपि तस्माद्वत्सरसहस्रपूर्वमाविर्भूतेन भाव्यमिति मत्वा चतुःसहस्रमितविक्रमपूर्वकाले ऋग्वेदमाविर्भूतमासीदिति स निर्दिशति।

वेदोक्तज्यौतिषतत्त्वमाधारीकृत्य रामचन्द्रस्तु वेदानां २५५० विक्रमपूर्वकालिकतां प्रतिपादयति।

बालगङ्गाधरतिलकस्तु वेदेषु मृगशिरोनक्षत्रे वसन्तसम्पातवर्णनमाधारीकृत्य तादृशस्य कालस्य कृत्तिकाकालादपि २००० वर्ष पूर्वभावितामनुमाय वेदा षट्सहस्रवत्सरमितविक्रमपूर्वकालेऽपि अवतीर्णा आसन्निति प्रतिपादयति। स हि पुनर्वसौ वसन्तसम्पातवर्णनमपि विलोड्य वैदिककालं चतुर्धा विभजते। तद्यथा—

विक्रमकालात् षट्सहस्रवत्सरपूर्वतः चतुःसहस्रवत्सरपूर्वपर्यन्तमदितिकालः। अत्र हि यज्ञसम्बद्धा गद्यपद्यमया मन्त्रा अवतीर्णा इति। ततश्च विक्रमपूर्वचतुःसहस्रवत्सरतः २५०० मितवत्सरपर्यन्तं मृगशिरः कालो यत्र हि अवशिष्टमन्त्रा दृष्टा आसन्।

तस्मादपि कालात् १४०० मितवत्सरकालपर्यन्तं कृत्तिकाकालो यत्र शतपथब्राह्मणादीनि प्रोक्तानि।

ततश्च विक्रमपूर्वपञ्चशतवत्सरपर्यन्तमन्तिमकालो यत्र हि कल्पसूत्राणि प्रणीतानि।

वयमपि तिलकमतं प्रत्येव बद्धश्रद्धाः।

वेदाः प्रणीता वा ज्ञाता इति तु विषयो विवादस्य। वस्तुतस्तु वेदाः केनचिद्वा कैश्चिन्नैव प्रणीता अपि तु प्रकीर्णा एव ऋषिभिर्दृष्टाः। ते कदा आविर्भूता इति न शक्यते तत्त्वतः कथयितुम्। नष्टप्राया एव वेदा बहुवारं बहुभिरुद्धृता इति पुराणेषु दृश्यते। भगवता मत्स्येन, वैधृतिभिः, वसिष्ठेन, अपान्तरतमसा, कृष्णद्वैपायनेन च वेदाः पुनरुद्धृता विभक्ताश्च। अपरञ्च वेदा एवं वेदावतारं प्रत्यक्षतो नैव जानन्ति अतो यजुर्वेदे उक्तम्—

इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे' (४०।१०)।

तथैव –

'पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो न रश्मीन्' (३४।४९)।

तथैव—

'सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्' (ऋ० १०।१९०।१)।

'अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत' (ऋ० १।१।२)।

'देवा भागं यथा पूर्वे सञ्जानाना उपासते।' (ऋ० १०।१९१।२)

तथा च—

'यस्यां पूर्वे पूर्वजना विचक्रिरे
यस्यां देवा असुरानभ्यवर्तयन्।' (अथर्व० १२।१।५)
'दैवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।'

इत्यादिवचनैरेतदनुमीयते यद्वेदानां साम्प्रतिकं स्वरूपं तु यथार्थपूर्णस्वरूपस्यांशमात्रम्। सा च श्रुतिः। यावदेव श्रुतं यस्य च श्रोतारोऽवशिष्टा आसंस्तदा तावदेव ऋषिभिः सङ्कलितं संहितारूपेणेति तस्याः श्रुतित्वम्। अश्रुतो विगतश्रोतृकश्च भागस्तु लुप्तप्राय एव। तेन यदि अदितिकालो वेदावतारस्य, स तु सङ्कलनकाल एव। श्रुतिकालस्तु तस्मादपि पूर्वतमस्तस्मादपि च पूर्वतनोऽवतारकाल इत्यनादिता वा अज्ञातादिता वेदानाम्। संहिता स्वयमुद्घोषयति—

'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति।'
(यजु० १७।३१)

# १०. आगमसाहित्यम्

वेदस्तु निगमः प्रोक्तस्तद्भिन्नः पन्था आगमम्। सामान्यतः आगमशब्दस्तन्त्रशास्त्रावबोधनपरः। नामवैषम्येऽपि आगमस्तन्त्रशास्त्रं संहिता च विषयसादृश्यं जनयति शब्दत्रयम्। किन्तु तेष्वयं विशेषो यद्वैष्णवानां ग्रन्थाः संहिताशब्देनाभिधीयन्ते, त एव शैवानामागमशब्देन, शाक्तानाञ्च त एव तन्त्रशब्देन। आगमशब्दव्युत्पत्तिर्यथा—

'आगतं पञ्चवक्त्रात्तु गतञ्च गिरिजामुखे।
मतञ्च वासुदेवस्य तस्मादागममुच्यते॥" इति।

एतल्लक्षणञ्च यथा—

सृष्टिश्च प्रलयश्चैव देवतानां तथार्चनम्।
साधनञ्चैव सर्वेषां पुरश्चरणमेव च॥
षट्कर्मसाधनञ्चैव ध्यानयोगश्चतुर्विधः।
सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदुर्बुधाः॥

आगमे हि ज्ञान-योग-क्रिया-चर्याणामन्तर्भावः।

**आगमानि**—आगमानि खलु शिवप्रोक्तानि गिरिजया श्रुतानि। तेषाञ्च सङ्ख्या प्राधान्येनाष्टाविंशतिर्मन्यते तथैवोपागमानाञ्च। एषु दश शैवागमा अष्टादश रुद्रागमाश्च। ते हि सिद्धान्तागमरूपेण ख्यातिं प्राप्ताः। एतदतिरिक्ता भैरवागमाश्चतुःषष्टिसङ्ख्यकाः। एते सर्वेऽपि मूलरूपेण शैवागमा एव। अत्र हि शाक्तागमश्चांशिकरूपेण मिश्रिताः। एषु द्वैतभावादारभ्य परमाऽद्वैतभावं यावच्चर्चा विद्यते। सामान्यत आगमग्रन्थानां चत्वारः पादाः—ज्ञानपादः योगपादश्चर्यापादः क्रियापादश्च।

वैष्णवमतसम्बद्धा वा तन्मतप्रतिपादिका संहिता। ताश्च पाञ्चरात्रसंज्ञका अष्टोत्तरशतसङ्ख्याकाः। तासु द्वादशं परितः मुद्रिताः सन्ति। तत्र अहिर्बुध्न्यसंहिता तु प्राचीनतमा। तस्याः प्रणयनकालो विक्रमपूर्वश्चतुर्थशतकमिति तज्ज्ञानां मतम्।

तन्त्रश्च सामान्येन शक्तिसम्बद्धः। तन्त्र्यते अनेनेति धारणार्थकाद् 'तत्रि धातोः' घत्रि सिद्धस्तन्त्रशब्दोऽभ्युदयनिःश्रेयसधारणपरः। यद्वा विस्तारार्थकात्तनुधातोः ष्ट्रनि सिद्धोऽपि तन्त्रशब्दोऽपि तदर्थक एव। पदमिदं सामान्यतः शास्त्ररूपेऽर्थेऽपि प्रयुक्तं दृश्यते यथा ऋक्तन्त्रं, कपिलतन्त्रम्। तन्त्रलक्षणं यथा कालिकाऽऽगमतन्त्रे—

'तनोति विपुलानर्थास्तन्त्रमन्त्रसमन्वितान् ।
त्राणञ्च कुरुते यस्मात्तन्त्रमित्यभिधीयते ॥'

तथैव वाराहीतन्त्रे—

'सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च ।
देवतानाञ्च संस्थानं तीर्थानाञ्चैव वर्णनम् ॥
तथैवाश्रमधर्मश्च विप्रसंस्थानमेव च ।
संस्थानं चैव भूतानां मन्त्राणां चैव निर्णयः ॥
.... .... .... .... ....
इत्यादिक्षलणैर्युक्तं तन्त्रमित्यभिधीयते ।'

तानि च तन्त्राणि असङ्ख्येयानि सन्ति येषु कुलिका-कात्यायनी-प्रत्यङ्गिरा-त्रिपुरार्णव-योगिनी-वाराही-ज्ञानार्णव-दक्षिणामूर्तिसंज्ञितानि प्रसिद्धानि ।

तन्त्राणां हि समनुष्ठानेन भोगेन सहैव मोक्षस्यापि सिद्धिरिति तेषामुपादेयत्वम् । तत्राप्ययं विशेषः—

'कृते श्रुत्युदितो मार्गस्त्रेतायां स्मृतिभाषितः ।
द्वापरे वै पुराणोक्तः कलावागमसम्भवः ॥'

आगमपदमत्र तन्त्रस्यापि बोधकम् ।

मखास्त्रिविधा वैदिकस्तान्त्रिको मिश्रश्च । यस्मिन् यस्य श्रद्धा स तेनैव पथा मखं सम्पादयेत् । तन्त्राणां वेदवत्प्राचीनत्वाभावेऽपि पुरातनत्वं तेषां नैव विरुध्यते । तेषामपि वेदवत्प्रामाण्यं सम्मतमेव । यथोक्तं हारीतेन—

"श्रुतिप्रमाणको धर्मः । श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च ।"

तन्त्राणामाथर्वणत्वं प्रसिद्धमेव । तत्र तत्र ग्रन्थेषु आगमस्य श्रुतिमूलकत्वं सम्मतम् ।

तन्त्राणामनेके भेदास्तत्र तत्र प्रतिपादिताः । तत्रापि प्राधान्येन—

'चतुःषष्ट्यागमाः प्रोक्ताः पञ्चधा निगमास्तथा ।
यामलञ्च चतुर्धोक्तं डामराः षड्विधास्तथा ॥'

तत्रागमो व्याख्यातः । निगमस्तु —

'निर्गतः शङ्करीवक्त्राद् गतश्च गिरिजानने ।
मतः श्रीवासुदेवस्य तस्मान्निगम उच्यते ॥'

यामललक्षणं यथा—

'सृष्टिश्च ज्योतिषां ध्यानं नित्यकृत्यप्रदीपनम् ।
क्रमसूत्रं वर्णभेदो जातिभेदस्तथैव च ॥
युगधर्मस्य सङ्घातो यामलस्याष्टलक्षणम् ।'

यामलञ्च आदि-ब्रह्म-विष्णु-रुद्रसंज्ञया चतुर्विधम् । शिवोक्तस्तन्त्रविशेषो डामरः स च योग-शिव-दुर्गा-ब्रह्म-सारस्वत-गन्धर्वभेदात् षड्विधः ।

आचारदृष्ट्या तन्त्राणि त्रिविधानि समयाचार-कुल-मिश्रभेदात् । तत्र हि वैदिकमार्गमनुरुध्य श्रीविद्यादिप्रतिपादकानि समयाचारतन्त्राणि । तानि च वशिष्ठ-सनक-सनन्दन-सनत्कुमार-शुकाभिधसंहितारूपाणि पञ्चविधानि । पद्धतिरियं दक्षिणमार्गनाम्ना प्रसिद्धा तत्र सात्त्विकैरेव द्रव्यैर्भगवत्याः पूजाविधानात् ।

कुलतन्त्राणि च महामाया-शम्बराद्यभिधानानि चतुःषष्टिसङ्ख्याकानि शिवप्रोक्तानि । एषु हि तामसद्रव्यैर्देवी समर्च्यते । तेनेदं वाममार्गनाम्नाऽपि प्रसिद्धम् । उभयलक्षणं मिश्रकम् । तत्र कुलमिश्रके द्विजातित्याज्ये । यथोक्तं ज्ञानार्णवतन्त्रे—

'कौलमिश्रकमार्गौ हि हेयौ गौरि ! द्विजातिभिः ।'

उपास्यदेवताभेदेन तन्त्राणि पञ्चविधानि—शाक्त-सौर-शैव-गाणपत-वैष्णवाभियानि । तत्रागस्त्यमुनिप्रणीतं शक्तिसूत्रं शाक्ततन्त्रस्योपजीव्यम् । तत्र हि दश महाविद्याः पूज्यन्ते । ताश्च यथा—

"काली तारा महाविद्या षोडशी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥
बगला सिद्धविद्या च मातङ्गी कमलात्मिका ।
एता दशमहाविद्याः सिद्धविद्याः प्रकीर्तिताः ॥"

इति । आस्वपि काली-तारा-षोडशीस्तत्रापि षोडशी प्राधान्येन गृहीता ।

शाक्ततान्त्रिकाणां द्विविधं मतं कौलमतं समयाचारमतञ्च । तत्र कौलानामेव चतुःषष्टिसङ्ख्याकानि तन्त्राणि । तत्र काल्या भद्रकाली-दक्षिणकालीप्रभृतिभेदाः यासां पीठानि नेपालेषु प्रतिष्ठापितानि दृश्यन्ते । काल्याश्च भैरवो महाकालः ग्रन्थाश्च कालीतन्त्रं, महाकालसंहिता, श्यामारहस्यं परतन्त्रञ्च । तारायाः तारारहस्यं ताराभक्तिसुधार्णवः तारिणीतन्त्रं तोडलतन्त्रं ताराकल्पलतापद्धतिश्चेत्याद्याः ख्याताः ग्रन्थाः ।

षोडशी एव त्रिपुरसुन्दरी, ललिता, श्रीविद्या, त्रिपुरा, कामेश्वरी, चेत्यादिनामभिः कीर्त्यते । तस्या भैरवः कामेश्वरः त्रिपुरभैरवो वा । तत्रापि

श्रीविद्यायाः कादिहादिभेदेन द्वैविध्यम्। त्रिपुरारहस्यं, ललितासहस्रनामानि ब्रह्माण्डपुराणान्तर्गतानि यत्र हि भाष्कराचार्यस्य व्याख्या लभ्यते, ललितात्रिशती, त्रिपुरसुन्दरी महिम्नस्तोत्रञ्चेत्याद्या अस्या ग्रन्थाः। एवमेव गौडपादस्य श्रीविद्यारत्नसूत्रं, सुभगोदयस्तवः, प्रपञ्चसारः, सौन्दर्यलहरी चापि तत्सम्बद्धा एव।

श्रीविद्याया द्वादशसम्प्रदाया उच्यन्ते। कादिविद्याया त्रिपुरोपनिषद्भावनोपनिषच्चेति द्वे प्रस्थाने। हादिविद्यायास्तु त्रिपुरातापिन्युपनिषदिति।

शैवमतस्यापि द्वैताद्वैतभेदेन प्रस्थानद्वयं काश्मीरेषु प्रसिद्धं यस्य शैव-वीरशैव-सिद्धान्तशैव-पाशुपतभेदेन चत्वारः सम्प्रदायाः।

●

# ११. पुराणसाहित्यम्

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वेदानां समुपबृंहकत्वेन पुराणसाहित्यस्यापि वेदोपकारकत्वम्। 'श्रुतानीह पुराणानि सेतिहासानि चानघ' इत्यादिवाक्यादितिहासस्याऽपि पुराणसहचरत्वेन वेदोपकारकत्वं सिद्धमेव। तर्हि क इतिहासः किं वा पुराणमित्यपेक्षायामुच्यते यदितिहासः पुरावृत्तमेव पुराणञ्च सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितादिपञ्चविधलक्षणोपेतमाख्यानमेवान्यथा भविष्यत्पुराणमित्यादौ विरोधापत्तेः। पुराणपदं तु पुरा भवमिति व्युत्पत्त्या 'सायंचिर'....इत्यादिना ट्युप्रत्यये निपातनात् तुडभावे सिद्धयति वा पुरा नीयते अनेनेति पुरा+नी+डः, डित्वसामर्थ्यात्, टिलोपो णत्वञ्च। किन्तु पुराणशब्दः प्रसङ्गेऽस्मिन् योगार्थमतिक्रम्य रूढार्थमावहति।

पुराणलक्षणं यथा—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम्॥"

तथैव श्रीमद्भागवते—

"अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः।
मन्वन्तेरशानुकथा निरोधो मुक्तिराश्रयः।"

भूतमात्रेन्द्रियधियां जन्म सर्गः, पौरुषो ब्राह्मः सर्गो विसर्गः, स्थानं वैकुण्ठप्राप्तिः, भगवदनुग्रहः पोषणम्, ऊतयः कर्मवासना, मन्वन्तराणि अवतारानुचरितम्, आत्मनः शक्तिभिः सह तस्यानुशयनं निरोधः, अन्यथारूपं हित्वा स्वरूपेण व्यवस्थितिर्मुक्तिः, आश्रयः परं ब्रह्म परमात्मेति।

इतिहासस्तु पुरावृत्तमेव। इतिह+आस्ते अस्मिन्निति (अस्+घञ्) इति पूर्ववृत्तान्तो वा प्राचीनकथा। यथोक्तं शुक्रनीतिसारे—

"प्राग्वृत्तकथनञ्चैकराजकृत्यमिषादितः ।
यस्मिन् स इतिहासः स्यात्पुरावृत्तः स एव हि।" (४।५१)

तथैव—

"धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ।
पूर्ववृत्ताकथायुक्तमितिहासं प्रचक्षते ॥"

इति एवं ह किल इति इतिह ज्ञातप्रायघटनाऽज्ञाताऽपि यथार्थसन्निकटा इतिह आस्यतेऽनेनेति इतिहास इति अतीतयथार्थघटनावर्णनं, पुराणं तु नितान्तमेवाज्ञातं श्रुतमात्रं परम्परागतमाख्यानमेव। यत्र कुत्र तु आख्यानपुराणयोरपि भेदो दर्शितः—'आख्यानानीतिहासांश्च पुराणानि खिलानि च' इत्यादौ।

एतत्खलु दृश्यते यद्वैदिकयुगे इतिहासपुराणे प्रायः पृथग्रूपेणैव गृहीते स्तः। महाभारतेऽपि तथैव दृश्यते। यथा—

'जयो नामेतिहासोऽयं भारताख्यानमुत्तमम्'

इति। तत्रैव षोडशराजोपाख्यानं भीष्मजन्मेतिहासः इति। तथैव—

इतिहासोत्तमादस्माज्जायन्ते कविपुङ्गवाः ।
पञ्चभ्य इव भूतेभ्यो लोकसंविद्यवयस्त्रवः ॥
भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम् ।
संस्कारोपगतां ब्राह्मीं.... .... .... ॥

पुराणविषयं विवृण्वद् विष्णुपुराणं निर्दिशति—

स आख्यानैरुपाख्यानैर्गाथाभिः कल्पशुद्धिभिः ।
पुराणसंहिताञ्चक्रे पुराणार्थविशारदः ॥ (३।६।१५)

ब्राह्मणादिग्रन्थेषु इतिहासपुराणे पृथक्त्वेन संयुक्तत्वेन च गृहीते दृश्येते। तत्रापि पुराणापेक्षया इतिहासपदमेव सर्वाभीष्टमासीत्। पश्चाद्वर्तिकाले इतिहासपदं केवलमितिवृत्तावबोधकत्वेन पुराणेऽन्तर्निवेशितं दृश्यते। निरुक्तकारः कथयति—

निदानभूतः इतिह एवमासीदिति य उच्यते स इतिहासः।

तत्रेतिहासमाचक्षते—'देवापिश्चार्ष्टिषेणः शान्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः।' (२।३।१)। तथैव—

तथा तत्रेतिहासमाचक्षते—विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव।

इतिहासस्य द्वे गतिः परिक्रिया पुराकल्पः। तत्र पूर्वैकनायका द्वितीया बहुनायका।

इतिहासपुराणयोरेतावदेवान्तरं यत्प्राचीनाख्यायिकासूचक इतिहासस्तद्विपरीतं सृष्टिप्रक्रियावर्णनं पुराणमिति। तत्रापि काल्पनिककथानिमित्तकं पुराणं वास्तविकघटनाविवेचक इतिहासः। तदत्र पुराणशब्देनेतिहासोऽपि गृह्यते।

पुराणानां प्राचीनता तेषां संहितास्वेवोल्लेखात्सिध्यति। इत्थमाचक्ष्यते यद् वेदव्यासो वेदसंहितां चतुर्धा व्यस्य पैलादिभ्यश्चतुर्भ्यः शिष्येभ्यः प्रोवाच ताम्। तथैव वेदसंहिताया एव पुराणसंहितामुद्धृत्य ताञ्च चतुर्धा विभज्य वैशम्पायनादिभ्यस्ताः प्रोवाच। यथोक्तं श्रीमद्भागवते –

"त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः।
वैशम्पायनहारीतौ षड्वै पौराणिका इमे॥"
.... .... .... .... ....

कश्यपोऽहञ्च सावर्णिः रामशिष्योऽकृतव्रणः।
अधीमहि व्यासशिष्याच्चतस्रो मूलसंहिताः॥ (१२।७।५-७)

वेदसंहितासु पुराणतत्त्वस्यावस्थितिं स्वयं संहिताऽपि समर्थयति। यथोक्तमथर्ववेदे-

'ऋचः सामानि छन्दांसि पुराणं यजुषा सह।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रिताः॥"
(अथर्व० ११।७।२४)

तथैव—

ये त आसीद् भूमिः पूर्वा यामद्धा तप इद्विदुः।
यो वै तां विद्यान्नामया स मन्येत पुराणवित्॥ (११।८।७)।

एवञ्च—

स बृहतीं दिशमनुव्यचलत्।
तमितिहासश्च पुराणञ्च गाथाश्च नाराशसीश्चानुव्यचलन्।
इतिहासस्य च स वै पुराणस्य च गाथानाञ्च
नाराशंसीनाञ्च प्रियं धाम भवति, य एवं वेद। (१५।१।१०-१२)

अत्र केचित्पुराणमिति लौकिकसाहित्यपरकं मन्यन्ते यत्र हि देवताविशेषस्तुतिः श्रुतिर्वा संहिता दानादिपरजनस्तुतिः पुराणमिति। ते हि दानस्तुतिपरकमन्त्रान् प्रमाणत्वेनोपस्थापयन्ति। मतमिदमादरणीयमेव। यतो हि ये हि मन्त्राः प्रत्यक्षमेव देवविशेषं स्तुवन्ति ते हि धार्मिकत्वप्रतिपादकत्वाच्छ्रुतिविषयकाः। ये च तदुपासकान् महनीयचरितानि स्तुवन्ति ते हि पुराणविषयकाः।

एवमेव शतपथब्राह्मणे च वेदानां सहैव पुराणानामप्युत्पत्तिर्वर्णिता। यथा—

'मध्वा हुतयो ह वा एता देवानाम् । यदनुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथां नाराशंस्यः । य एवं विद्वाननुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशंसीरित्यहरहः स्वाध्यायमधीते । मध्वाहुतिभिरेव तद्देवांस्तर्पयति । ( ११।५।६।८ )

अथाष्टमेऽहन् मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति, तानुपदिशतीतिहासो वेद सोऽयमिति किञ्चिदितिहासमाचक्षीत् । अथ नवमेऽहन् तानुपदिशति पुराणं वेदः सोऽयमीति किञ्चित्पुराणमाचक्षीत् । ( १३।४।३।११-१३ ) । एवमेव गोपथब्राह्मणेऽप्युक्तम्—

"एवमिति सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्याताः सपुराणाः ।" ( २।१० )

कथनेनानेन सिद्ध्यति यत्पुराणान्यपि वेदवत्तस्यैव महाभूतस्य निःश्वसितानि, यज्ञावसरे वेदाध्ययनस्य यावन्महत्त्वं तावदेव पुराणपाठस्याऽपि, पुराणनामपि वेदत्वं, तथा पुराणान्यपि संहितारूपेणव प्रचलितान्यासन्निति ।

एवमेवारण्यकेष्वपि पुराणस्य चर्चा दृश्यते यथा तैत्तिरीयारण्यके—

'यद् ब्राह्मणान् इतिहासान् पुराणानि कल्पान् गाथा नाराशंसीः भेदा हुतयो देवानामभवन् । ताभिः क्षुधं पाप्मानमपाघ्नन् ।' अग्हतपाप्मानो देवाः स्वर्गलोकमायन् । ब्रह्मणः सायुज्यमृषयोऽगच्छन् ।' (तैत्ति० आर० २।९)

अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानि । व्याख्यानान्यस्यैतानि सर्वाणि निःश्वसितानि । ( बृह० २।४।११)

तथैव छान्दोग्येऽपि—

'नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः ।" (छान्दोग्य० ७।१।२)

एवमेव सूत्रग्रन्थेषु च विशेषत आश्वलायनगृह्यसूत्रे तदीयधर्मसूत्रे च पुराणस्य चर्चा विद्यते । स्मृतिसाहित्ये पुराणस्य चतुर्दशविद्यासु वाऽष्टादशविद्यासु गणना दृश्यते । यथा याज्ञवल्क्यस्मृतौ—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश । (१।३)

वेदाश्चत्वारो वेदाङ्गानि षट् पुराणं, न्याय. मीमांसा धर्मशास्त्रः, ञ्चेति चतुर्दश विद्यास्थानानि ।

महाभारतेऽपि पुराणानां महिमामुग्धकण्ठत्वेन गीतोऽस्ति। तत्र हि पुराणानां वेदोपबृंहकत्वं श्रुत्यर्थप्रकाशकत्वञ्चोक्तम्। तद्धि वायुपुराणं तु नमत एव गृह्णाति ( ३।१९१।१६ )।

रामायाणमपि पुराणान् स्मरति। (१।९।१)

कौटिल्योऽपि 'इतिवृत्तपुराणाभ्यां बोधयेदर्थंशास्त्रवित्' इत्युक्त्वा पुराणान् स्मरति।

अनेनैतत्सिद्ध्यति यत्पुराणान्यपि वेदवदनादिविद्यैव। अथवा वेदस्यैव यज्ञविद्या पुराणविद्येति द्वे शाखे।

इदमप्युच्यते यद्यथा एको यजुर्वेदो द्वापरादौ चतुर्धा विभक्तस्तथैव तदा पुराणसंहिताऽपि एकैवासीत् ताञ्च व्यासः सत्यवतीसुतः शिष्यं रोमहर्षणमध्यापयामास। सोऽपि कश्यपसूता कृतव्रणसावर्णिसंज्ञकांचतुरः शिष्यानध्यापयामास। तत्तस्याश्चतस्रः संहिता जाताः। ताश्च शिष्यप्रशिष्यपरम्परया सम्प्रदायानुरोधेन च बह्वीषु संहितासु विभक्ताः। सम्प्रति तु पुराणानां सङ्ख्याऽष्टादशेति कथ्यते येषु शैव-वैष्णवब्राह्माग्नेयशाक्तसम्प्रदाया वर्ण्यन्ते। तं च नामतो यथा—

मद्वयं भद्वयञ्चैव ब्रत्रयं वचतुष्टयम्।
अनापलिङ्गकूस्कानि पुराणानि प्रचक्षते॥

मद्वयं म द्ये द्वे मत्स्यमार्कण्डेयाख्ये, भद्वयमिति भकाराद्ये द्वे भविष्यं भागवतञ्च ( अत्र भागवतपदेन केचिद्देवीभागवतं गृह्णन्ति केचित्तु श्रीमद्भागवतम्। वयन्त्वत्र देवीभागवतमेवाददमः सम्प्रदायानुरोधेनापि तथैव सिद्धेः, भाषिकसंरचनादृष्ट्याऽपि श्रीमद्भागवतापेक्षया देवीभागवतस्यैव प्राचीनत्वसिद्धेश्च ) ब्रत्रयमिति बकारादीनि त्रीणि ब्रह्मवैवर्त-ब्रह्म-ब्रह्माण्डाऽऽख्यानि, वचतुष्टयमिति वकारादीनि चत्वारि वामन-वराह-विष्णु-वायु-संज्ञितानि, 'अ' इति अग्निः संज्ञितं, ना इति नारदाख्यं प इति पद्माख्यं, कू इति कूर्माख्यं, 'स्क' इति स्कन्दाख्यं, 'लि' इति लिङ्गाख्यं, 'ग' इति गरुडाख्यञ्चेति। तानि सम्प्रदायानुरोधेन षड्विधानि ब्रह्मपरके ब्रह्मपद्माख्ये, सूर्यपरकं ब्रह्मवैवर्तम्, अग्निपरकमाग्नेयं, शिवपरकाणि स्कन्दलिङ्गकूर्मवामनवाराहभविष्यमत्स्यमार्कण्डेयब्राह्माण्डवाय्वाख्यानि दश, विष्णुपरकाणि नारदविष्णुगरुडाख्यानि, देवीपरकं भागवतञ्चेति। केचिद्वायुपुराणस्थ ने शिवपुराणं गृह्णन्ति।

किन्तु विष्णुपुराणे तु

ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा।
तथाऽन्यन्नारदीयञ्च मार्कण्डेयञ्च सप्तमम्।

आग्नेयमष्टमञ्चैव भविष्यं नवम स्मृतम् ।
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ॥
वाराहं द्वादशञ्चैव स्कान्दं चात्र त्रयोदशम् ।
चतुर्दश वामनञ्च कौर्मं पञ्चदशं स्मृतम् ॥
मात्स्यञ्च गरुडञ्चैव ब्रह्माण्डञ्च ततः परम् ।

यो विष्णुपुराणे ब्रह्माण्डमादाय वायुपुराणत्यागो ब्रह्मवैवर्ते च वायुपुराणमादाय ब्रह्माण्डपुराणत्यागस्तथैव मद्वयमित्यादिपद्ये वायुपुराणमादाय शिवमहापुराणत्यागश्च स कल्पभेदेन चिन्तितव्यः श्रीमद्भागवतेऽपि 'ब्राह्मं पाद्मं वैष्णवञ्च शैवं लैङ्गं सगारुडम्' इति वायुपुराणस्थाने शिवपुराणं गृहीतं दृश्यते । ( १२।७।२३ ) ।

पुराणानां श्लोकविषये महान् मतभेदो दृश्यते । सामान्यत इदमुक्तं यद् मात्स्ये सहस्राणि चतुर्दश, मार्कण्डेये सहस्राणि नव, भागवते देवीभागवतपक्षे चतुर्विंशतिसहस्राणि श्रीमद्भागवतपक्षेऽष्टादशसहस्राणि, भविष्ये पञ्चशतोत्तरचतुर्विंशतिसहस्राणि, एवमेव ब्राह्मे त्रयोदशसहस्राणि, ब्रह्मवैवर्तेऽष्टादशसहस्राणि, ब्रह्माण्डे द्वादशसहस्राणि, वामने सहस्राणि दश, वाराहे सहस्राणि,चतुर्विंशति, वैष्णवे सहस्राणि त्रयोविंशतिः, वायवे चतुर्विंशतिसहस्राणि, आग्नेये सहस्राणि षोडश, नारदीये पञ्चविंशत्सहस्राणि, पाद्मे पञ्चपञ्चाशत्सहस्राणि, लैङ्गे एकादशसहस्राणि, गारुडेऽष्टादशसहस्राणि, कौर्मेऽष्टादशसहस्राणि, स्कान्दे शतोत्तरैकाशीतिसहस्राणीति । इदमत्रावधेयं यच्छ्लोकसङ्ख्यैषा सम्प्रत्युपलभ्यमानेषु पुराणेषु भूम्ना बेभिद्यते तस्य च प्रक्षेपकं वाऽपहार एव हेतुः सम्भवति । यथाऽत्र मात्स्ये श्लोकसङ्ख्या चतुर्दशसहस्राणिं कथिता किन्तु देवीभागवते सा एकोनविंशतिसहस्रमिता मता । उपलभ्यमानग्रन्थे तु त्रयोदशसहस्राण्यभित एव ।

एतदतिरिक्तमष्टादशैव वा तोऽभ्यधिकानि उपपुराणानि च दृश्यन्ते ग्रन्थेषूल्लिखितानि । यथोक्तं कौर्मे—

आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम् ।

ततश्च नान्द-शिवधर्म-दौर्वासस-नारदीय-कापिल-मानव-औशनस-ब्रह्माण्ड-वारुण-कालिका-माहेश्वर-साम्ब-सौर-पाराशर-मारीच-भार्गवाख्यानि । ब्रह्मवैवर्तानुसारेण तु सनत्कुमार-नारदीय-नारसिंह-शैवधर्म-दौर्वास-कापिलेय-मानव-शौक्ता-वारुण-ब्रह्माण्ड-कालिका-वासिष्ठ-माहेश-साम्ब-सार-पाराशर्य-मारीच-भार्गवाख्यान्युपपुराणानि । तथैव नीलमत-मुदुल-कल्कि-विष्णुधर्मोत्तर-परानन्द-पशुपति-हरिवंश-आत्म-बृहद्धर्मप्रभृतीन्यपि उपपुराणानि प्रथ्यन्ते । तदयमस्य

निष्कर्षो यदष्टादशपुराणानि तावन्त्येवोपपुराणानि तावन्त्येवानुपुराणानि च। किन्तु तिसृष्वपि शाखासु भाषा-विषय-सङ्घटना-भावादिसाम्यात् किं पुराणं किं वोपपुराणमिति न शक्यतेऽन्तःसाक्ष्यमाधारीकृत्य भेत्तुमतोऽत्र गतानुगतिकत्वमेव गतिः।

पुराणानामाविर्भावकालमादायैतावदेव वक्तुं शक्यते यद्वेदेष्वेव तेषां समुल्लेखात्तोऽपि वेदा इव अनादयः समकालिका वा। तेषामवरसीमा तु प्रत्येकस्य, भिद्यते यत इदमुपलक्ष्यते यत्पुराणानि नैककालिकानि नैकस्थानवद्धादराणि च। तेन तान्यपि वेदवदनन्तान्येव। एतावदेव वक्तुं पार्यते यन्तेषामष्टादशत्वं विक्रमकालारम्भात्पूर्वमेव निश्चितप्रायमासीत् कामं तेषां तत्कालीनस्वरूपं साम्प्रतिकस्वरूपात्किञ्चिद्भिन्नमपि किं न स्यात्।

पुराणेषु कतमत्प्राचीनं कतमच्चार्वाचीनमित्यपि न विवादबाह्यम्। तेषां क्रमो विष्णुपुराणे निश्चितो यत्र प्रथमं ब्रह्मपुराणं द्वितीयं पाद्मं, वैष्णव तृतीयं वायवं चतुर्थं, ततश्च भागवत-नारद-मार्कण्डेय-आग्नेय-भविष्य-लिङ्ग-वाराह-स्कन्द वामन-कूर्म-मत्स्य-गरुड-ब्रह्मवैवर्तानि क्रमेण। केचित्तु वायुमत्स्ये आद्ये मन्यन्ते भविष्यञ्चान्तिमम्। वयन्तु तेषां समकालिकीमेवाव स्थितिं मन्यामहे। आराध्यदेवातिरिक्तं तत्र तत्र समाना एव विषयाः प्रतिपादिताः दृश्यन्ते सर्गविसर्गादयः।

पुराणानां प्रतिपाद्यविषयस्य तु सुदीर्घा सूचिः सञ्जायते। तानि खलु भारतीयसंस्कृतेः विश्वकोषाः एव। सर्गविसर्गवंशमन्वन्तर-वंशानुचरितादिविषयास्तु पुराणत्वे लक्षणावच्छेदकाः प्रतिपाद्यविषयस्तु आर्यसम्मतजीवनदर्शनमेव। भारतीयजीवपद्धतेः सर्वोऽपि पक्षः पुराणेषु प्रतिपादितोऽस्ति। केवलं भङ्ग्यन्तरमेव तेषां भेदे हेतुः।

पुराणाना न केवलं धार्मिकदृष्ट्यैवापि तु ऐतिहासिक-भौगोलिक-सामाजिक-शास्त्रीयदृष्ट्याऽपि महत्त्वमपरिहार्यं लक्ष्यते। तानि हि वर्णाश्रमादिधर्मव्याख्यातृणि। समग्रः सनातनधर्मस्तत्र व्याख्यातोऽस्ति वेदेषु यदेव सङ्क्षेपतः कथितं तस्यैव विस्तारः पुराणेषु दृश्यते। तेन पुराणान्यनादृत्य नैव सनातनधर्मस्य गतिः। एवमेवैतिहासिकदृष्ट्याऽपि पुराणानि महत्त्वपूर्णानि सन्ति। महानन्दिकालात्पूर्वः ( महानन्दिकालश्च विक्रमपूर्वपञ्चमशतकमभितः पतति ) भारतीयेतिहासः किंवा मानवसभ्यतेतिहासः पुराणेभ्य एव ज्ञायते। तत्र विष्णुपुराणं मागधवंशावल्या सह मौर्यवंशावलीं प्रस्तौति। मात्स्यं त्वान्ध्रवंशवृक्षमातनोति। गुप्तवंशज्ञानाय वायुपुराणमेव परं प्रमाणम्। तथैव भौगोलिकदृष्ट्यापि पुराणानि महत्त्वमाददति। तत्र तत्र पुराणेषु तात्कालिकभूगोलं स्पष्टतयोपस्थापितमस्ति

खगोलमपि च। एवञ्च शास्त्रीयदृष्ट्याऽपि तेषां महत्त्वमपरिहार्यमेव। कानिचित्तु विशेषतोऽग्निविष्णुधर्मोत्तरकालिकागरुडनारदाख्यानि तु लक्षणलक्षितविषयैः सह समग्रमपि भारतीयशास्त्रार्णवमात्मसात्कुर्वन्ति।

तथापि पुराणानि मूलतो नीतिग्रन्था एव। तेषामितरविषयास्तु नीतेरेवोपकारकाः। तानि हि लक्ष्यदृष्ट्या साम्प्रदायिकानि च।

इत्थमपि च कथ्यते यत्पुराणानि स्त्रीशूद्रद्विजबन्धूनां कृते सन्ति यतस्तेषां त्रयी नैव श्रुतिगोचरा। किन्तु मतमिदमेकाङ्ग्येव। भारतीयजीवनपद्धतेर्निश्चायकानि पुराणानि सार्वंगानि सार्वविषयाणि च अतथासम्मते 'इतिहासपुराणाभ्यां वेदं समुपबृह्येत्' इति कथनमेव निरर्थकं स्यात्। इदन्तु कथयितुं शक्यते यदतिरञ्जितसङ्घटनया विषयप्रतिपादकानि पुराणानि वेदापेक्षया सरलानि सुकुमारमतिग्राह्याणि च। अथाऽत्र कानिचिदेव पुराणान्युपस्थाप्यन्ते विषयदिग्दर्शनधिया।

**विष्णुपुराणम्**—विष्णुपुराणमेकमेवेतादृशं पुराणं यत्र सर्वाण्यपि सर्गप्रतिसर्गादीनि दशैव लक्षणानि घटन्ते। अस्य हि न केवलं तावतैवापि तु साहित्यिकदार्शनिकैतिहासिकदृष्ट्याऽपि महत्त्वशालीदम्। इदं हि वैष्णवानां प्रधानं शास्त्रम्। शङ्कराचार्योऽप्यस्मादेवोद्धरणं गृह्णाति नेतरेभ्य इति तस्य प्रामाणिकत्वे प्रमाणम्।

**अग्निपुराणम्**—अग्निपुराणं हि नारदमहापुराणवद्गारुडसदृशं वा सङ्ग्रहग्रन्थः। अत्राहि सर्वाण्यपि शास्त्राणि संङ्क्षेपतश्चर्चितानि। काव्यशास्त्रविवेचनायामिदं प्रथममेकमात्रञ्च।

**पद्मपुराणम्**—पद्मपुराणमेवैतादृशं पुराणं यत्स्पष्टतो राधाकृष्णयोरन्योऽन्यप्रेमविहारवर्णनपूर्वकं राधां कृष्णस्य पत्नीत्वेनोपस्थापयति। स्वयं श्रीमद्भागवतेऽपि राधाया नामापि न श्रूयते। कालिदासोऽप्यस्यैव पुराणस्य शाकुन्तलरघुवंशाद्यर्थं स्पष्टतोऽधमर्णायते।

**स्कन्दपुराणम्**—इदं हि स्वरूपदृष्ट्या विस्तृतं पुराणं मुख्यतः सप्तसु खण्डेषु विभक्तम्। अत्र हि सर्वेषामेव भारतवर्षस्थितानां तीर्थानां सुविपुलं वर्णनमस्ति।

**गरुडपुराणम्**—गरुडपुराणमपि भारतीयशास्त्रसंहतेः सङ्ग्रहग्रन्थ एव। वस्तुतस्त्वत्र पुराणलक्षणलक्षितो नैकोऽपि विषयः। अस्य उत्तरार्द्धः प्रेतकल्पो य और्द्ध्वदैहिककर्माणि सश्रद्धं श्रूयते।

**लिङ्गपुराणम्**—पुराणमिदं शिवस्याष्टाविंशत्यवतारवर्णनपरम्। अत्र हि शिवलिङ्गार्चनं विशेषेण प्रतिपादितमस्ति।

**वाराहपुराणम्**—विष्णोर्वराहावतारवर्णनपुरस्सरमिदं पुराणमुत्तराखण्डस्य प्रामाणिकं भूगोलमुपस्थापयति।

**भविष्यपुराणम्**—भविष्यपुराणमेकमीदृशं पुराणं यत्स्वरूप-विषय-भावादि-दृष्ट्या विप्रतिपत्तिं भजते। प्रथमं तु पुराणशब्दः स्वयमेव प्राचीनताऽवबोधको भविष्यच्छब्दश्चानन्तरवर्तिसमयसूचकः। तौ सम्भाव्य प्रथितं भविष्यपुराणं स्वरूपदृष्ट्यैव सन्देहमुत्पादयति। पुराणशब्दस्य सर्गादिप्रतिपादकरूढार्थग्रहणे तस्य तु परिहारोऽपि भवति किन्तु भविष्यत्समानमादायापरो विवादः उत्तिष्ठते। कदाप्रभृति भविष्यत्कालपुराणानां, कियत्कालपर्यन्तमिति च निर्णेतुं कठिनमेव। सामान्यतः परिक्षित्समयस्तस्य कृते मानकत्वेन गृहीतो दृश्यते। किन्तु परिक्षितोऽथर्ववेदेऽप्युल्लेखो दृश्यते। यथा—

कतरत् आ हराणि दधिमन्थां परिश्रुतम्।
जाया पतिं विपृच्छति राष्ट्रे राज्ञः परिक्षितः॥
अभी वाचः प्रजिहीते यवः पक्वः पथो विलम्।
जनः स भद्रमेधति राष्ट्रे राज्ञः परिक्षितः॥"

(२०।१२७।९,१०)

अपरञ्च आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम्। तावद्वर्षसहस्रं तु शतं पञ्चदशोत्तरमिति परीक्षितः समयस्तु नन्दाभिषेकात् १११५ मितवत्सरपूर्वं एव नन्दाभिषेकस्तु नृपविक्रमार्कात् पञ्चाशदधिकैचतुःशतमितवर्षपूर्वंघटित इति श्रीनृपविक्रमार्काद् १५६५ वत्सरपूर्वं परिक्षितो जन्मेति सङ्ख्यया ज्ञायते। विष्णुपुराणेऽपि तथैव निर्दिष्टोऽस्ति कालक्रमः। जरासन्धस्तु अर्जुनसमकालीनः। तदनन्तरं बार्हद्रथाः वर्षसहस्रमेकं (१००० मितवत्सराः) ततश्च प्रद्योता अष्टत्रिंशदुत्तरमब्दशतं, ततश्च शैशनामाः द्विषष्ट्यधिकानि त्रीणि वर्षशतानि, इति १००० + १३८ × ३६२ = १५००। पञ्चदशशतवत्सरानन्तरं जरासन्धान्नन्दाभिषेकः। अनया पद्धत्या श्रीनृपविक्रमार्कात् १९५० वत्सरपूर्वं जरासन्धकालः। यदा जरासन्धो हतस्तदा श्रीकृष्णः पञ्चाशद्वर्षवयस्क आसीत्। स च ततः एकपञ्चाशद्वर्षानन्तरं भुवं तत्याज यदैव परिक्षितोऽभिषेकः सम्पन्नः इति तथ्यतः श्रीमन्नृपविक्रमार्काद् १८९९ वर्षपूर्वं परिक्षितोऽभिषेकः। यदि तदाप्रभृति भविष्यत्कालो मन्यते तदा तत्पूर्वमेव सर्वेषामेव पुराणानां रचना सम्पन्नाऽसीदिति मन्तव्यं यदनेकैस्तथ्यैर्नैव प्रमाणितं भवति। भविष्यपुराणे तु विक्रमानन्तरविंशतिशतकभवः क्षेमराजः प्रकाशकोऽपि समुल्लिखितोऽस्ति। यदि परिक्षित्काले एव तदुल्लेखो मन्येत तदा सर्वेषामेव पुराणानामाग्रह एव शङ्क्यो भवेत्। यदि भविष्यपुराणमेव नितान्तार्वाचीनं मन्येत तदापि तन्न स्थिरायते विक्रमपूर्व-

चतुर्थशतकप्रणीतत्वेन सम्मते आपस्तम्बधर्मसूत्रेऽपि तस्योल्लेखात्। यदि तावानेवांशः क्षेपको मन्येत तदापि तस्य निरवधिकसम्भवादन्येषामपि पुराणानां क्षेपकत्वमापतेत्। तेन नास्त्येवात्रोपायो भविष्यत्कालनिर्णये। स्याद्यत्किञ्चिदपि तथ्यं भविष्यपुराणं तु क्षेपकांशबहुलमिति मन्तव्यमेव।

इत्थं सुसमृद्धं पुराणसाहित्यं भारतीयजीवनदर्शनस्य दर्पणः शाश्वतकोषश्च।

# १२. धर्मशास्त्रम्

"धर्मो हि तेषामधिको विशेषः"

ध्रियते अनेनेति (डु) धृञ् (धारणपोषणयोः) धातोः मन्प्रत्यये सिद्धो धर्मशब्दो भावनाचारव्यवहारबोधनपरः। तत्र भावना मनःप्रत्ययसम्बद्धा ईश्वरमाहात्म्यावबोधनपरा। आचारोऽपि श्रुतिस्मृत्युक्तकर्मानुष्ठानं; व्यवहारः सामाजिकसम्बन्धनिर्वाहः। धर्मस्य शास्त्रं धर्मशास्त्रम्। यदेव शास्त्रं जनानामाचारव्यवहारप्रायश्चित्तस्वरूपनिर्द्धारकं तदेव धर्मशास्त्रम्। धर्माश्च बहुविधाः सामान्यधर्माः, वर्णधर्माः, आश्रमधर्माः, वर्णाश्रमधर्माः, राजधर्माः, स्त्रीधर्माः, मुनिधर्माः कुलधर्माः, देशधर्माः, युगधर्माश्च। तेषां विषयेऽतिप्राचीनकालादेव बहु विचिन्तितं दृश्यते। ऋग्वेदेऽपि बहवो मन्त्रा धर्मसम्बद्धा लभ्यन्ते—'इन्द्राग्निवायव ईड्याः, ईश्वरश्चैक एव स हि तद्विभूतिमाश्रित्य बहुधा कल्पितः, उत्थानमेव प्रोन्नत्या हेतुः, सत्यं बृहत् ऋतमुग्रं, वयं राष्ट्रे जागृयामः, मा गृधः कस्यस्विद्धनम्, 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः', सखायः ऋतुमिच्छत, महद् देवानामसुरत्वमेकं, सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति, तवेमे पृथिवि पञ्चजनाः, अग्ने व्रतपते व्रतं चरिष्यामि, यद् ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये। यदेनश्चकृमा वयं तदवयजनमसि, इत्यादिः। एवमेव ब्राह्मणग्रन्थेषु आरण्यकसाहित्येषु, उपनिषत्सु च तत्र तत्र धर्मस्वरूप निर्णीतं दृश्यते। सूत्रकाले तानेव संहिताब्राह्मणादिवर्णितान् सङ्गृह्य मुनिभिः धर्मसूत्राणि प्रणीतानि। तेषु तेषु च धर्मस्य विविधं स्वरूपं सप्रपञ्चं निरूपितमस्ति। तेषु च गौतमधर्मसूत्रं, बौधायनधर्मसूत्रम्, आपस्तम्बधर्मसूत्रम्-हिरण्यकेशीयधर्मसूत्रं, वसिष्ठधर्मसूत्रं, विष्णुधर्मसूत्रं, हारीतधर्मसूत्रं च प्राशस्त्येन गृह्यन्ते। तत्र तत्र स्वस्वसम्प्रदायानुरोधेन किञ्चिद्भेदेन सर्वे धर्माः समुपवर्णिता दृश्यन्ते। सूत्रेषु गौतमप्रणीतं धर्मसूत्रं प्राचीनतमं सम्मतम्। अस्य हि सङ्कलनकालो विक्रमपूर्वसप्तमशतकमितः। अत्र हि हरदत्तस्य मिताक्षरा

मस्करीप्रणीतभाष्यञ्च ख्यातम्। 'वेदो धर्ममूलं तद्विदाञ्च स्मृतिशीले, तुल्यबलविरोधे विकल्पः इत्यादीनि सूत्रस्वरूपाणि तत्र। तत्र हि त्रयः प्रश्ना यत्र हि प्रथमे प्रश्ने नवाध्यायाः द्वितीयेऽपि नवैव, तृतीये तु दश इति अष्टाविंशत्यध्यायाः। तेषु तेषु हि धर्मप्रमाणानि, प्रमाणनिर्णयः, उपनयनकालः, उपनीतधर्माः, द्रव्यशुद्धिः, शौचनियमाः आचमनविधिः, गुरूपसदनविधिः, ब्रह्मचारिनियमाः, आश्रमविधानं, गृहस्थधर्माः, पञ्चमहायज्ञाः, संस्काराः, व्रतविधिः, आश्रमधर्माः राजधर्माः, दण्डविधानं, न्यायविधिः, श्राद्धानि, अध्ययनविधिः, स्त्रीधर्माः, प्रायश्चित्तानि, दायनिरूपणं, परिषद्व्यवस्थेति प्रतिपाद्यविषयाः। शेषाणि च धर्मसूत्राणि किञ्चिद्भेदेनैतानेव विषयान्प्रतिपादयन्ति। वस्तुतस्तु धर्मसूत्रमपि स्वस्वशाखासम्बद्धं सम्मतं किन्तु गौतमधर्मसूत्रं तु शाखानिरपेक्ष्यमेव सर्वैर्गृह्यते।

एतादृशानामेव धर्मसूत्राणां व्याख्यायिकाः स्मृतयः। उक्तमेव 'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।' तेन वेदोक्तधर्माचारव्यवहाराख्यायिका एव स्मृतयः। सूत्रस्मृत्योरेकायनं धर्मशास्त्रम्। अपरञ्च स्मृतयो हि धर्मसूत्रव्याख्यात्र्यः। न केवलं ते एवापितु पुराणान्यपि च वांशतो धर्मशास्त्रव्यपदेश्यान्येव।

यथैव प्रतिसंहिता धर्मसूत्राणामवस्थितिस्तथैव स्मृतीनामपि कल्प्यते। तेन स्मृतयोऽप्यनन्ता एव। तथापि प्राधान्येन अष्टादशस्मृतयो यत्र तत्रोल्लिख्यन्ते। किन्तु सम्प्रति अन्येऽपि स्मृतयो नामतः श्रूयन्ते स्वरूपतो दृश्यन्ते च।

ताश्च स्मृतयः पञ्चविधाः दृष्टार्थादृष्टार्था दृष्टादृष्टार्थान्यायमूला शिष्टदृष्टाभेदात्। तासु दृष्टार्थाऽशास्त्रसम्बद्धा शेषाश्च वेदहितकर्मप्रतिपादकाः।

स्मृतिप्रणेतारो यथा याज्ञवल्क्यस्मृतौ—
मन्वत्रविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः॥

पैठीनसिर्यथाऽऽह—

तेषां मन्वङ्गिरोव्यासगौतमात्र्युशनोयमाः।
वसिष्ठदक्षसंवर्तशातातपपराशराः॥
विष्ण्वापस्तम्बहारीताः शङ्खः कात्यायनो भृगुः।
सुमन्तुः कश्यपो बभ्रुः पैठानी व्याघ्र एव च॥
सत्यव्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनिस्तथा।

जावालिर्जमदग्निश्च लौगाक्षिर्ब्रह्मसम्भवः (गर्भः) ॥
इति धर्मप्रणेतारः षट्त्रिंशदृषयस्तथा ।

तथैव भविष्यपुराणे—

अष्टादशपुराणेषु यानि वाक्यानि भारत ।
तान्यालोच्य महाबाहो तथा स्मृत्यन्तरेषु च ॥
मन्वादिस्मृतयो याश्च षट्त्रिंशत्परिकीर्तिताः ।

इत्यादिवचनाच्च स्मृतयोऽष्टादशसङ्ख्यका एकविंशतिसङ्ख्यका वा षट्त्रिंशत्सङ्ख्यका वा । कामं सन्तु ततोऽप्यधिका सङ्ख्या वेदवाह्यस्मृतीनामप्युल्लेखात् किन्तु प्राधान्येन ते अष्टादश तत्रापि मनुयाज्ञवल्क्यपराशरात्रिवसिष्ठविष्णुहारीतकात्यायनादिप्रोक्ताः प्रधानतमा इति ।

स्मृतीनां श्रुतिमूलत्वे एव प्रामाण्यं न तु श्रुतिवत् स्वतः प्रामाण्यम् । श्रुत्या सह विरोधे तु साऽनपेक्ष्या भवति । तुल्यबलविरोधे विकल्पः अर्थात् श्रुतिस्मृत्योर्विरोधे श्रुतिरेव गरीयसी, स्मृतिस्मृत्योर्विरोधे श्रुतिमूलकायाः गरीयस्त्वं श्रुतिमूलकयोर्विरोधे विकल्प इति नियमेनैव धर्मे स्मृतेः प्रामाण्यम् ।

स्मृतीनां रचनाकालस्तु प्रतिस्मृति भिद्यत एव । तत्रापि पण्डितानां नैकमत्यम् । तत्तु वयं यथाप्रकरणं वक्ष्यामः । सामान्यतो विक्रमपूर्वसप्तमशतकादारभ्य विक्रमानन्तरषष्ठशतकपर्यन्तं स्मृतिकाल इति पण्डिताः समामनन्ति ।

अथाऽत्र काश्चित्प्रधानतमत्वेन सम्मताः स्मृतय उपस्थाप्यन्ते ।

**मनुस्मृतिः**—स्मृतिरियं मनुप्रोक्तत्वेन सम्मता श्रुतिसमतां विधत्ते । वस्तुतस्त्वियं भृगुप्रोक्ता स्मृतिः । मनुस्मृतिस्तु लक्ष्यश्लोकात्मिकाऽपरैवासीद्याऽधुना नोपलभ्यते यस्याश्च सारमादाय भृगुणा व्याख्यातेति तदन्तःसाक्ष्यतो ज्ञायते । मनुर्हि मानवानां प्रथमो राजा शास्ता नियन्ता च यतो जना मानवा इति कथ्यन्ते । स हि प्रजानामाधिपत्येऽभिषिक्तः सन् लक्षश्लोकमितं धर्मशास्त्रं प्रणिनाय लोकमर्यादास्थापनाय । कालक्रमेण विलुप्तं तच्छास्त्रं द्वादशभिरध्यायैर्भृगुणा समुद्धृतमिति तस्य मनुस्मृतित्वम् । अस्याश्च मूलरचनाकालस्तु ब्राह्मणसाहित्यसमकालिक एव शतपथब्राह्मणेऽपि तस्योल्लेखात् । तत्रापि मनवः सम्प्रति षड् व्यतीताः सप्तमो मनुः सम्प्रति समधिशास्तीति मानवधर्मशास्त्रं प्रथमस्य मनोः स्वायम्भुवस्य कृतिरिति विचक्षणाः । स्यादप्येतत् । सम्प्रति या मनुस्मृतिरुपलभ्यते तस्यास्तु प्रणयनकालः सूत्रकालानन्तरमेव अर्थात् विक्रमपूर्वचतुर्थशतकमभितः । अत्रेदमवधेयं यन्मनुमेकाग्रमासीनमभिगम्य महर्षयः इति वचनात्प्रारब्धं शास्त्रमवश्यमेव केनचिदपरेण सङ्गृहीतम् ।

तत्रापि 'स्वयम्भुवे नमस्कृत्य ब्रह्मणेऽमिततेजसे । मनुप्रणीतान् विविधान् धर्मान् वक्ष्यामि शाश्वतान् ॥' इति समुल्लिखितो ग्रन्थो निःसन्देहमेव सङ्ग्रहः । तस्यां सङ्ग्रहरूपायां मनुस्मृतौ जगदुत्पत्तिवर्णनादारभ्य जनानामाचारव्यवहार-प्रायश्चित्तसंस्काराः साङ्गोपाङ्गनिरूपिताः सन्ति। तत्रापि प्रथमे जगदुत्पत्तिवर्णनं, द्वितीये धर्मादिस्वरूपावधारणं, वर्णाश्रमधर्मनिर्देशः, संस्कारकथनञ्च. तृतीये ब्रह्मचर्यविधिः, चतुर्थे यज्ञादिविधानं, पञ्चमे भक्ष्याभक्ष्यविवेकः, आशौचादि-विधिश्च, षष्ठे वानप्रस्थादिधर्माः, सप्तमे राजधर्माः, अष्टमे व्यवहारदर्शनविधिः, स्त्रीपुंधर्माः, दायश्च, दशमे वृत्तिनिरूपणं,जातिव्यवस्था च,एकादशे सामान्याचाराः, प्रायश्चित्तादिकञ्च, द्वादशे प्रकीर्णकविषया इति सङ्क्षेपतो विषयनिर्देशः ।

धर्मस्य लक्षणकरणे मनुजैमिनिकथनमनुसरति वा जैमिनिना साम्यमावहति । यथा—

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥

इति 'चोदनालक्षणो धर्मः' इति जैमिनीयवचनेन सह साम्यमधिकरोति । तत्र धर्मस्य द्वौ पक्षौ–स एव धर्मो यो द्वेषरागविनिमुक्तैर्विद्वद्भिः सेवितः इति प्रथमः कल्पस्तथाभूतश्च स हृदयेनाभ्यनुज्ञातो भवेदिति द्वितीयः कल्पः । हृदयेनाभ्यनु-ज्ञात इति तुल्यबलविरोध एवेति केचित् किन्तु आत्मश्रेयस्कर इति वयन्तु । 'धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्' इति भविष्यपुराणवचनात् । श्रेयस्कर-त्वेनैव धर्मस्य चोदनालक्षणत्वं सम्पद्यते । अनन्तरं तत्रैवोक्तं—

"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥"

इति । अस्मिन् हि बह्व्यष्टीका विद्यन्ते यासु कुल्लूकभट्टप्रणीता मन्वर्थमुक्तावली, मेधातिथेर्भाष्यञ्च प्रसिद्धम् । तथैव गोविन्दराजीयभाष्यञ्च ।

इतीत्थं मानवं शास्त्रं सङ्क्षेपात्समुदीरितम् । याज्ञवल्क्यस्मृतिश्चात्र यथा-मति विविच्यते ।

**याज्ञवल्क्यस्मृतिः**—याज्ञवल्क्यस्य स्मृतित्वेन प्रथितेयं स्मृतिविशेषेण वाज-सनेयानां धर्मग्रन्थः । साऽपि 'योगीश्वरं याज्ञवल्क्यं प्रणम्य मुनयोऽब्रुवन्' इति समारब्धाऽत्रश्यमेव केनचिदपरेण सङ्गृहीता दृश्यते । सम्प्रति समुपलब्धा स्मृतिस्तु त्रिष्वध्यायेषु विभक्ता आचाराध्यायव्यवहाराध्यायप्रायश्चित्ताध्याय-भेदात् । आचाराध्याये धर्मलक्षणं, वर्णधर्माः, आश्रमधर्माः, वर्णाश्रमधर्माः, ब्रह्म-चारिप्रकरणं, विवाहप्रकरणं, वर्णजातिविवेकः, गृहस्थधर्माः, स्नातकधर्माः, भक्ष्या-

भक्ष्यविचारः, द्रव्यशुद्धिः, दानानि, श्राद्धानि, गणपतिकल्पः, ग्रहशान्तिः, राजधर्माश्च विवेच्यविषयाः। व्यवहाराध्याये साधारणव्यवहारमातृका, असाधारणव्यवहारमातृका, ऋणादानम्, उपनिधिः साक्षिणः, दिव्यम्, दायः, सीमाविवादः, अन्ये व्यवहारविषयाः, प्रायश्चित्ताध्याये आशौचे, आपद्धर्माः, वानप्रस्थधर्माः, यतिधर्माः, प्रायश्चित्तानि चेति विवेच्यविषयाः।

ग्रन्थेऽस्मिन् अनेकाष्टीकाटिप्पण्यः समुपलभ्यन्ते यत्र विज्ञानेश्वरस्य मिताक्षरा, अपरार्कस्य अपरार्कटीका, बालम्भट्टस्य बालम्भट्टीटीका, शूलपाणेर्दीपकलिका, मित्रमिश्रस्य वीरमित्रोदयटीका च प्रशस्ता। अस्याश्च सर्वाधिकानि संस्करणानि लभ्यन्ते। भारतीयन्यायालयेषु इयमेव बहु समाद्रियते मिताक्षरा विधिनाम्ना।

**पराशरस्मृतिः** – स्मृतिरियं द्वादशाध्यायात्मिका। तत्र हि धर्मलक्षणवर्णनम्, आचारधर्मवर्णनम्, आश्रमधर्मवर्णनम्, अशौचव्यवस्थावर्णनं, प्रायश्चित्तवर्णनं, श्रौताग्निहोत्रसंस्कारवर्णनं, प्रायश्चित्तादिवर्णनं, ब्राह्मणमहत्ववर्णनं, द्रव्यशुद्धिः, स्त्रीशुद्धिवर्णनं, धर्माचरणवर्णनं, निन्द्यब्राह्मणवर्णनं, गोब्राह्मणहेतोरुपदेशः, गोसेवोपवर्णनं, कृष्यादिवर्णनञ्च वर्ण्यविषयाः। इदमुच्यते यत्कलौ स्मृत्यन्तरविरोधे पाराशरस्मृतिरेव मान्या भवतीति।

अन्याऽपि सुव्रतप्रोक्तत्वेन बृहत्पराशरस्मृतिनाम्ना प्रथिता स्मृतिरपि दृश्यते। तत्र हि वर्णाश्रमधर्मवर्णनं, धर्मविषयवर्णनं, सन्ध्याकृत्यवर्णनं, सदाचारकृत्यवर्णनम्, आचारधर्मवर्णनं, श्राद्धकर्तव्यतावर्णनं, कर्तव्यवर्णनं, ब्रह्मचर्यवर्णनं, वर्णाश्रमव्यवस्था, प्रतिग्रहवर्णनं, भक्ष्याभक्ष्यवर्णनं, श्राद्धवर्णनं, व्रतोपवासविधिः, सर्वदाताविधिः, ग्रहशान्तिविधिः, रुद्रपूजाविधिः, लक्षहोमविधिः, प्रणवध्यानविधिश्च वर्णिताः। इयमपि द्वादशाध्यायात्मिका।

**अत्रिस्मृतिः**—अत्रिप्रोक्तत्वेन स्मृता पद्यबद्धेयं स्मृतिर्नवस्वध्यायेषु विभक्ता। स्त्रीविषये उदारदृष्टिरस्या वैशिष्ट्यम्। विधिनिरूपणं, योगप्रशंसा, प्राणायामलक्षणं, जपयज्ञविधानं, चान्द्रायणविधानं, कर्मविपाकाभिधानं, स्त्रीणां ग्राह्याग्राह्यनिर्णयः, द्रव्यशुद्धिः, प्रायश्चित्तानि, जातिनिरूपणञ्चेत्यस्या विशेषप्रतिपाद्यविषयाः। परदूषितस्त्रीणां ग्राह्याग्राह्यविषये तत्र पञ्चमाध्याय उक्तं—

न स्त्री दुष्यति जारेण न विप्रो वेदपारगः।
नाऽऽपो मूत्रपुरीषेण नाग्निर्दहनकर्मणा॥
बलात्कारोपभुक्ता वा चौरहस्तगताऽपि वा।
स्वयं वाऽपि विपन्ना वा यदि वा विप्रवादिता॥
न त्याज्या दूषिता नारी नाऽस्यास्त्यागो विधीयते।
पुष्पकालमुपासीत्वा ऋतुकालेन शुध्यति॥

स्त्रियः पवित्रमतुलं नैता दुष्यन्ति केनचित् ।
मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥
पूर्वं किल सुरैर्भुक्ता सोमगन्धर्ववह्निभिः ।
भुज्यन्ते मानुषैः पश्चान्नैता दुष्यन्ति कर्हिचित् ॥
असवर्णेन यो गर्भः स्त्रीणां योनौ निषिच्यते ।
अशुद्धा तु भवेन्नारी यावच्छल्यं न मुञ्चति ॥
निःसृते नु ततः शल्ये रजसोऽपीह दर्शनात् ।
ततः सा शुध्यते नारी विमला काञ्चनोपमा ॥
सोमः शौचं ददौ तासां गन्धर्वश्च शुभां गिरम् ।
पावकः सर्वमेध्यत्वं तस्मान्निष्कल्मषाः स्त्रियः ॥
व्यञ्जनेषु च जातेषु सोमो भुङ्क्ते च कन्यकाम् ।
पयोधरेषु गन्धर्वाः रजस्याग्निः प्रतिष्ठितः ॥
भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ।
रजसा शुध्यते नारी नदी वेगेन शुध्यति ॥

इति । तथैव —

वत्सः प्रस्नवणे मेध्यः शकुनिः फलपातने ।
स्त्रियश्च रतिसंयोगे श्वा मृगग्रहणे शुचिः ॥
पादुके खञ्जतो मेध्ये ह्युत्तमाङ्गे ह्युपानहौ ।
वस्त्रं कौपीनकं मेध्यं स्त्रियो मेध्यास्तु सर्वतः ॥
अजाश्वौ मुखतो मेध्यौ गावो मेध्यास्तु पृष्ठतः ।
ब्राह्मणाः पादतो मेध्याः स्त्रियो मेध्यास्तु सर्वतः ॥

इत्यपि ।

एवमेव अत्रिसंहिता नामापरा स्मृतिरपि मुद्रिता दृश्यते । तत्र च चतुःशतं श्लोका विद्यन्ते यत्र हि प्रायश्चित्तं प्राधान्येन निर्दिष्टम् ।

एवमेव अङ्गिरःस्मृतिः, आपस्तम्बस्मृतिः, औशनसस्मृतिः, गोभिलस्मृतिः, दक्षस्मृतिः, देवलस्मृतिः, प्रजापतिस्मृतिः, बृहद्धर्मस्मृतिः, यमस्मृतिः, बृहस्पतिस्मृतिः, लघुविष्णुस्मृतिः, लघुशङ्खस्मृतिः, लघुशातातपस्मृतिः, लघुहारीतस्मृतिः, लध्वाश्वलायनस्मृतिः, लिखितस्मृतिः, वसिष्ठस्मृतिः, वृद्धशातातपस्मृतिः, वृद्धहारीतस्मृतिः, वेदव्यासस्मृतिः, शङ्खलिखितस्मृतिः, शङ्खस्मृतिः, शातातपस्मृतिः, संवर्तस्मृतिः, बौधायनस्मृतिश्च कृत्वा सप्तविंशति स्मृतयः सङ्गृह्य प्रकाशिता अपि दृश्यन्ते आनन्दाश्रमसंस्थानतः । तासु च स्मृतिषु नाधिको विशेषः प्रतिपाद्यविषयेषु । एवं तत्र तत्र वृद्धमनुनाम्नाऽपि वृद्धयाज्ञवल्क्यनाम्ना

च श्लोका उद्धृता अपि दृश्यन्ते। एवञ्च गुरुमण्डलग्रन्थमालातः स्मृतिसन्दर्भ-षट्सु भागेषु स्मृतयः प्रकाशिताः सन्ति।

एवं स्मृतिसाहित्यमपि संस्कृतसाहित्ये सुविपुलं सुसमृद्धमस्ति। स्मृति-साहित्येषु तत्रतत्र प्रकीर्णत्वेन समुपन्यस्तं विषयमेकीकृत्य प्रकरणग्रन्था अपि प्रणीताः सन्ति।

ते च यथा—

**कृत्यकल्पतरुः**—लक्ष्मीधरभट्टनाम्ना हृदयधरपुत्रेण महाराजगोविन्दचन्द्राश्रितेन विदुषा सङ्गृहीतेऽस्मिन् ग्रन्थे द्वादश काण्डानि सन्ति यत्र हि तृतीयं नियतकालकाण्डं, चतुर्थं श्राद्धकाण्डं, षष्ठं व्रतकाण्डम्, एकादशं राजधर्मकाण्डं, द्वादशं व्यवहारकाण्डञ्च। लक्ष्मीधरस्य समयो विक्रमानन्तरद्वादशशतक-मध्यवर्तीति तस्य महाराजस्य ग्रहडवारवंशस्य गोविन्दचन्द्रस्य सान्धिविग्रहि-कत्वेन ज्ञायते। स हि तदनुवर्तिभिः ससम्मानं स्मृतो दृश्यते। कर्मोपदेशिनी-कारोऽनिरुद्धः, प्रतिष्ठाऽऽचारदानाऽद्भुतसागरकर्ता बल्लालसेनः दीपकलिकाकारः शूलपाणिः अष्टाविंशतितत्त्वविभक्तस्मृतितत्त्वकर्ता रघुनन्दनः स्मार्तभट्टापरा-भिधेयः, गृहस्थ-विवाद-कृत्य-दान-व्यवहार-शूद्धि-पूजादिसप्तप्रकरणात्मकरत्नाकर-प्रणेता चण्डेश्वरः, स्मृतिसारप्रणेता हरिनाथः, आचारादर्शप्रणेता श्रीदत्तः, हेमान्द्रिः, सरस्वतीविलासप्रणेता च लक्ष्मीधर सादरं स्मरन्ति। यत्र कुत्र तु स भगवच्छब्देनाऽप्यभिधीयते।

**अपरार्की**—अपरार्कस्य धर्मशास्त्रभाष्करस्य याज्ञवल्क्यस्मृतेष्टीका निबन्ध-स्वरूपा। स हि तत्र सर्वाऽपि क्रियाकल्पान् समावेशयति। स च विक्रमा-नन्तरद्वादशशतकमध्यमभित आसीदित्यनुमीयते।

**स्मृत्यर्थसारः**—श्रीधराचार्यसङ्गृहीतोऽयं ग्रन्थः स्मृतिविषयेषु आचार-प्रायश्चित्तप्रकरणं सङ्क्षेपेण व्याख्याति। अत्र हि युगधर्माः, संस्काराः, आह्निकं, श्राद्धविवेकः, आशौचं, द्रव्यशुद्धिः, परेतकृत्यानि, पापानि तेषां प्रायश्चित्त-विधिश्च सम्यग्यित्रेचिताः सन्ति। अस्य च निर्माणकालो विक्रमानन्तरद्वादश-शतकमभितोऽनुमीयते।

**आचारसागरः**—वङ्गीयस्य बल्लालसेनस्य कृतिरियं श्रुतिस्मृत्युक्ताचार-विवेचिका। तस्य हि प्रतिष्ठादानसागरावपि स्वस्वविषयप्रतिपादकौ। अद्भुत-सागरस्तु ज्योतिषविषयकः। अस्य च कालो विक्रमानन्तरत्रयोदशशतक-पूर्वार्द्धमभितोऽनुमीयते।

**स्मृतिचन्द्रिका**—प्रसिद्धविदुषः देवणभट्टस्य स्मृतिसारसमुन्मीलिता कृतिरियं संस्कार-आह्निक-व्यवहार-श्राद्ध-आशौच-प्रायश्चित्तोत षड्विभागविभक्ता स्मृति-

साहित्यस्य विश्वकोष एव। अत्र हि कतिपयानां लुप्तप्रायाणां स्मृतीनामपि समुल्लेखो दृश्यते। इयं हि विक्रमानन्तरद्वादशशतकमभितः प्रणीतेत्यनुमीयते।

**चतुर्वर्गचिन्तामणिः**—वत्सगोत्रीयस्य हेमाद्रेः कृतित्वेन प्रसिद्धोऽयं ग्रन्थः व्रत-दान-काल-श्राद्ध-परिशेषखण्डत्वेन पञ्चसु विभागेषु विभक्तः। केचित्तीर्थ-मोक्षाख्यखण्डयोरव्यवस्थितिं मन्यन्ते। तत्र हि दानखण्डः पञ्चस्वध्यायेषु (प्रकरणेषु) विभक्तः। एवमेव प्रतिखण्डमनेकेष्वध्यायेषु विभक्तत्वादार्यधर्मस्य विश्वकोषभूतोऽयं ग्रन्थः सर्वत्र प्रामाणिकत्वेन गृहीतः। स च विक्रमानन्तर-चतुर्दशशतकपूर्वार्द्धमभितः प्रणीत इति विश्वस्यते।

**स्मृतिरत्नाकरः**—चण्डेश्वरप्रणीतोऽयं ग्रन्थः कृत्य-दान-राजनीति-शुद्धि-पूजा-विवाद-गृहस्थेति सप्तभागेषु विभक्तः। चण्डेश्वरो हि विक्रमानन्तरचतुर्दश-शतकोत्तरार्द्धभवो मिथिलेश्वरस्य राजमन्त्री आसीत्। स हि विजययात्रा-प्रसङ्गे नेपालविषयमपि ययाविति जनश्रुतिः। सम्भवति स हि हरिसिंहदेवस्या-क्रमणे सम्मिलित आसीत्।

**स्मृतिसारः**—हरिनाथप्रणीतत्वेन प्रणीतोऽयं ग्रन्थः संस्काराचारप्राय-श्चित्तादिविभागानात्मसात्करोति। हरिनाथश्च विक्रमानन्तरचतुर्दशशतको-त्तरार्द्धभव इत्यनुमीयते।

**मदनपारिजातः**—विश्वेश्वरभट्टप्रणीतत्वेन ज्ञातोऽयं ग्रन्थः स्वसमकालिकैः सतीर्थ्यैः स्मृतिमहार्णव-तिथिनिर्णयसार-स्मृतिकौमुदीप्रभृतिभिः ग्रन्थैः सह ब्रह्मचर्य-गृहस्थधर्माह्निककृत्यसंस्कारश्राद्धादिविषयान् विस्तृतत्वेन वर्णयति। कर्ता चास्य विक्रमानन्तरचतुर्दशशतकमध्यभव इत्यनुमीयते।

**स्मृतिनिर्णयः**—वाचस्पतिमिश्रप्रणीतोऽयं ग्रन्थः तिथि-द्वैत-दान-शुद्धि-प्रभृत्य-नेकप्रभागविभक्तः समग्रमेव स्मृतिविषयमात्मसात्कर्तुं प्रयतते। वाचस्पतिश्च विक्रमानन्तरपञ्चदशशतकोद्भव इत्यनुमीयते।

**स्मृतिमहार्णवः**—ग्रन्थोऽयमपि वाचस्पतिप्रणीत एव। स च कृत्याचार-व्यवहारविवाददानशुद्धिश्राद्धादिवर्गेषु विभक्तः।

**नृसिंहप्रसादः**—ग्रन्थोऽयं दलपतिराजविरचितत्वेन ज्ञातः संस्कार-आह्निक-श्राद्ध-काल-व्यवहार-प्रायश्चित्त - कर्मविपाक-व्रत - दान-शान्ति-तीर्थ - प्रतिष्ठाभेदेन द्वादशसु सारेषु विभक्तः। कृतिरियं विक्रमानन्तरपञ्चदशशतकमभितः प्रणीतेति विश्वस्यते।

**स्मृतिकौमुदी**—विक्रमानन्तरषोडशशतकभवगोविन्दानन्दप्रणीतेयं दान-शुद्धि-श्राद्ध-वर्षक्रियादिविविधकौमुदीषु विभक्ता।

**स्मृतितत्त्वम्** – विक्रमानन्तरषोडशशतकपूर्वार्द्धभवेन रघुनन्देन प्रणीतोऽयं ग्रन्थोऽष्टाविंशतितत्त्वेषु विभक्तः।

**निर्णयसिन्धुः**—कमलाकरभट्टप्रणीतोऽयं ग्रन्थः सर्वासामेव स्मृतीनां सारभूतः त्रिषु भागेषु विभक्तः। विक्रमानन्तरं १६६७ मितवत्सरे प्रणीतोऽयं ग्रन्थः सनातन-मतावलम्बिनां प्राणभूतः।

**भगवन्तभास्करः**—नीलकण्ठप्रणीतोऽयं ग्रन्थः संस्काराचार-नीतिकाल-श्राद्ध-व्यवहारदानोत्सर्गप्रतिष्ठाप्रायश्चित्तशुद्धिशान्तीति द्वादशमयूखेषु विभक्तः। अयञ्च विक्रमानन्तर १७०० मितवत्सरमभितः प्रणीत आसीत्।

**वीरमीत्रोदयः**—मित्रमिश्रप्रणीतोऽयं वृद्धाकारनिबन्धो द्वाविंशतिप्रकाशेषु विभक्तः। तत्र द्वादशप्रकाशास्तु प्रकाशिताः सन्ति किन्तु शेषा दश सरस्वती-पुस्तकालये मातृकारूपेणैव विद्यन्ते। तेषाञ्च प्रकाशनं संस्कृतसाहित्यस्य कृते वरदानमेव भविष्यति। प्रकाशिताश्च यथा परिभाषाप्रकाशः, संस्कारप्रकाशः, भक्तिप्रकाशः, श्राद्धप्रकाशः, व्यवहारप्रकाशः, तीर्थप्रकाशः, पूजाप्रकाशः, शुद्धि-प्रकाशः, समयप्रकाशः, राजनीतिप्रकाशः, लक्षणप्रकाशः, आह्निकप्रकाशश्चेति। अप्रकाशिताश्च दान-व्रत-ज्योतिः-शान्ति-कर्मविपाक-चिकित्सा-प्रायश्चित्त-प्रकीर्ण-भक्ति-मोक्षप्रकाशाः।

**स्मृतिकौस्तुभः**—अनन्तदेवप्रणीतोऽयं ग्रन्थः संस्काराचारदानोत्सर्ग-राजधर्म-प्रतिष्ठा-तिथि-संवत्सरकौस्तुभेषु विभक्तः। अनन्तदेवो हि विक्रमानन्तराष्टादश-शतकभवः।

**आचारेन्दुशेखरः**—नागेशभट्टेन प्रणीतोऽयं ग्रन्थः। तस्यान्ये च ग्रन्थाः तिथि-तीर्थप्रायश्चित्तेन्दुशेखरसंज्ञकाः। स हि विक्रमानन्तराष्टादशशतकोद्भवः। महा-वैयाकरणोऽसौ व्याकरणविषये दशाधिकानि पुस्तकानि रचितवान्।

**धर्मसिन्धुः** –काशीनाथस्य कृतिरियं सर्वत्र धार्मिकनिर्णये प्रामाणिकी मता। स हि विक्रमानन्तरैकोनविंशशतकभवः।

**स्मृतिमुक्ताफलम्** –वैद्यनाथदीक्षितप्रणीतोऽयं ग्रन्थोऽनेकेषु खण्डेषु विभक्तं यत्र आह्निकखण्डं द्वितीयम्।

**सरस्वतीविलासः**—प्रतापरुद्रप्रणीतोऽयं ग्रन्थश्च व्यवहाराद्यनेकभागेषु विभक्तः।

**स्मृतिसारोद्धारः**—विश्वम्भरसङ्गृहीतोऽयं ग्रन्थो द्वादशसूद्धारेषु विभक्तः। अत्र हि सर्वोऽपि स्मृतिविषयः साररूपेणोद्धृतः।

**स्मृतिरत्नाकरः**—बेङ्कटनाथकृतित्वेन सम्मतोऽयं ग्रन्थोऽपि बहुषु प्रकरणेषु विभक्तः। अस्याह्निकप्रकरणं सर्वातिशायित्वेन वर्तते।

**विधानपारिजातः**—नागेशभट्टात्मज-अनन्तभट्टप्रणीतोऽयं ग्रन्थः पञ्चसु स्तवकेषु विभक्तः। तत्र प्रथमे स्वस्तिवाचनादिकं, द्वितीये शान्तिकर्म, तृतीये व्रतबन्धादयः, चतुर्थे प्रकीर्णविधानानि, पञ्चमे श्राद्धादिकर्मात्र विषयाः।

**नित्याचारप्रदीपः**—नृसिंहाख्यविपश्चित्प्रणीतोऽयं ग्रन्थः प्रातःकृत्यानां दिवसप्रथमद्वितीयतृतीयचतुर्थभागकृत्यानाञ्च विवेचकः।

**पुरुषार्थचिन्तामणिः**—विष्णुभट्टप्रणीतोऽयं ग्रन्थः सनातनधर्मावलम्बिनां नित्यनैमित्तिकाचारविवेकः तिथिव्रतादिनिरूपकश्च।

**आचारभूषणम्**—त्र्यम्बकप्रणीतोऽयं ग्रन्थो हिरण्यकेशीयमतानुयायिनामाचारनिरूपकः।

**धर्मप्रदीपः**—भैरवदत्तप्रणीतोऽयं ग्रन्थस्तिथिव्रतादिनिर्णयपरः।

**निर्णयामृतम्**—अल्लाटनाथप्रणोतोऽयं ग्रन्थस्तिथिव्रतनिर्णयपरः।

**जयसिंहकल्पद्रुमः**—रत्नाकरप्रणोतोऽयं ग्रन्थः तिथिव्रतादिनिर्णयपर एव।

**सत्कर्मरत्नावली**—नेपालेश्वरगीर्वाणविक्रमप्रथिता कृतिरियं द्वयोर्भागयोर्विभक्ता श्रुतिस्मृत्युक्तकर्मविधानप्रतिपादिका च।

**संस्कारदीपकः**—महाप्राज्ञनित्यानन्दपर्वतीयप्रणीतोऽयं ग्रन्थस्त्रिषु भागेषु विभक्तोऽन्वर्थनामा च। अन्त्यकर्मदीपकश्चास्य चतुर्थो भागः।

**संस्कारपद्धतिः**—धनशर्मशर्माख्यस्य कृतिरियं गर्भाधानादिषोडशसंस्कारविवेचनपरा।

**आह्निकसूत्रावलिः**—नारायणस्य कृतिरियं शुक्लयजुर्वेदीयानां नित्यकर्मनिर्देशनपरा।

इत्थं वैदिकसंहितासु समुद्भूतं धर्मसूत्रस्मृतिकानने पुष्पितं पल्लवितं प्रकरणग्रन्थेषु फलितञ्च आचारव्यवहारप्रायश्चित्तेति त्रिस्कन्धं भारतीयजीवनाचरणं तदनुयायिनो धर्मार्थकाममोक्षसिद्धिद्वारा पूर्णान् सफलांश्च करोतीति न द्वैमत्यायेति।

एवमेव क्षेत्रेऽस्मिन् मेधातिथिर्गोविन्दराजकुल्लूकभट्टाः विश्वरूप-विज्ञानेश्वर-अपरार्क-शूलपाणि-बालकृष्ण-मित्रमिश्राः हरदत्त-नन्दपण्डितप्रभृतयो व्याख्यातारश्च प्रशस्याः सन्ति।

श्रुतिस्मृत्यधीनं कर्मकाण्डम्। कर्मकाण्डमधिकृत्यापि बहवो ग्रन्थाः प्रतिपादिताः सन्ति। तेषु वार्षिकव्रतराज-पूजापद्धतिः, उपनयनादिसंस्कारपद्धतिः, विवाहपद्धतिः, अन्त्यपद्धतिः, सत्कर्मरत्नावली, शान्तिसारः, प्रतिष्ठामहोदधिः, ग्रहशान्तिविधिः, श्राद्धपद्धतिः, आह्निकसूत्रावली, नित्यकर्मपद्धतिः, नित्यकर्म-

प्रयोगमाला, सप्ताहविधिः, कर्मठगुरुः, यज्ञपारिजातः, विविधयागपद्धतय इत्यादि-ग्रन्थाश्च प्रकाशिताः सन्ति प्रकाश्यन्ते च दिनानुदिनम् ।

धर्मशास्त्रवदर्थशास्त्रमपि संस्कृतसाहित्ये प्राप्तादरमस्ति । सन्ति तद्विषयेऽपि कौटिल्यादारभ्य लोकमणिदाहालपर्यन्ताः शतशो ग्रन्थाः ये खलु आगामिप्रकरणे विवेचयिष्यन्ते ।

## १३. अर्थशास्त्रम्

"श्रुतिस्मृत्यनुसारेण राजवृत्तानुशासनम् ।
सुयुक्त्याऽर्थार्जनं यत्र ह्यर्थशास्त्रं तदुच्यते ॥"

मनुष्याणां वृत्तिरर्थः, मनुष्यवतो भूमिरित्यर्थस्तस्य शास्त्रमर्थशास्त्रम् । अर्थशास्त्रस्य द्वौ पक्षौ राजवृत्तनिरूपणमर्थार्जनोपायनिर्देशश्च । तेनाधुनिक-भाषायां राजनीतिवार्ताशास्त्रयोः समन्वितं रूपमेव भारतीयप्राचीनपरम्पराया-मर्थशास्त्रं भवति ।

इदं तु पूर्वमेव प्रतिपादित यत्प्रत्येकं शास्त्रं स्वयोन्यन्वेषणाय वेदसंहितामेवानु-धावति । यथैव धर्मशास्त्रविषये वेदमन्त्रेषु बहु प्रतिपादितमस्ति यस्यैव विकसितं रूपं धर्मसूत्र-स्मृति-प्रकरणग्रन्थास्तथैव तेषु तेषु अर्थशास्त्रविषयेऽपि बहूक्तमस्ति । अत्रेदमवधेयं यदर्थशास्त्रस्य राजवृत्तानुशासनमर्थार्जनञ्च द्वौ पक्षौ यौ विद्येते तौ पाठसौकर्यायात्र क्रमशो राजशास्त्रार्थशास्त्रशब्देन व्यवह्रियेते । अर्थात्, अर्थशास्त्रस्य द्वौ पक्षौ राजशास्त्रमर्थशास्त्रञ्च । राजशासनसम्बद्धं राजशास्त्रं, आर्थिकपक्षसम्बद्धमर्थशास्त्रम् । संहितोक्तं राजशास्त्रीयं विषयमादाय तत्र तत्र सामयिकस्वरूपञ्च संयोज्य मुनिभिः राज्यस्याष्टानामेवाङ्गानां स्वरूपं कर्तव्य-मधिकाराश्च निरूपिताः । ते हि ऋषयो राजशास्त्रप्रवक्तारो बभूवुः । ते च यथा महाभारते नामतः सङ्गृहिताः—

'बृहस्पतिश्च भगवान् न्याय्यं धर्मं प्रशंसति ।
( न्याय्यं न्यायसम्बद्धम् )
विशालाक्षश्च भगवान् काव्यश्चैव महातपाः ।
सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः ॥
भरद्वाजश्च भगवान् तथा गौरशिरा मुनिः ।
राजशास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः ॥' ( १२।५८।३ )

अष्टाङ्गानि च यथा राजामात्यसुहृत्कोषदण्डराष्ट्रबलजनपदारूपानि। अत्र काव्य इति शुक्राचार्यः। तेष्वपि प्राधान्येन शुक्र-बृहस्पती राजशास्त्रप्रणेतृत्वेन गृह्येते। कौटिल्योऽपि तावेव प्रणमति स्वीयेऽर्थशास्त्रप्रारम्भवाक्ये 'ॐ नमः शुक्रबृहस्पतिभ्याम्' इति। तत्र शुक्रप्रणीतस्य नीतिशास्त्रस्य सङ्क्षिप्तरूपत्वेन शुक्रनीतिसारो लभ्यते। बृहस्पतिनाम्ना त्रयो ग्रन्था दृश्यन्ते बृहस्पतिस्मृतिः, बार्हस्पत्यमर्थशास्त्रं, बार्हस्पत्यनीतिसूत्राणि च। वस्तुतस्तु बार्हस्पत्यमर्थशास्त्रमपि बृहस्पतिस्मृतेरङ्गमेव व्यवहारकाण्डत्वेन। स्यान्नर्त्किञ्चिदपि।

संहितानन्तरं ब्राह्मणसाहित्ये उपनिषत्साहित्ये च राज्यव्यवस्थायाः प्रासङ्गिकत्वेन समुल्लेखो दृश्यते। यथा प्रश्नोपनिषदि —

'यथा सम्राडेवाधिकृतान्विनियुङ्क्ते एतान् ग्रामान् एतान् ग्रामान् अधितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते' (३।४)।

धर्मसूत्रेषु तु राजधर्मः सर्वातिशायित्वेन वर्णितः। गौतमधर्मसूत्रस्य द्वितीयप्रश्नस्य प्रथमाध्यायादारभ्य चतुर्थाध्यायपर्यन्तं राजशास्त्रमेव प्राधान्येन वर्णितमस्ति। बौधायनधर्मसूत्रस्य प्रथमप्रश्नस्य दशमेऽध्याये दण्डसहिता वर्णिताऽस्ति। आपस्तम्बधर्मसूत्रे द्वितीयप्रश्नस्य पञ्चविंशषड्विंशकण्डिकयोः राजधर्मः प्रतिपादितः अष्टाविंशैकोनत्रिंशकण्डिकयोश्च। विष्णुधर्मसूत्रे तृतीयाध्यायादारभ्य षोडशाध्यायपर्यन्तं राजशास्त्रीयं सप्तदशेऽर्थशास्त्रीयं तत्त्वं वर्णितमस्ति।

सूत्रकालानन्तरं स्मृतिष्वपि उभय एव विषयः साधु निरूपितोऽस्ति। मनुस्मृतौ अष्टम-नवम-दशमाध्यायेषु, याज्ञवल्क्यस्मृतेराचाराध्यायस्यान्तिमे चरणे व्यवहाराध्याये च, बृहत्पराशरस्मृतेर्द्वादशेऽध्याये, विष्णुस्मृतेः तृतीयादिसप्तदशान्ताध्यायेषु, नारदस्मृतौ एकोनविंशाध्यायेष्वेव, बृहस्पतिस्मृतेर्व्यवहारकाण्डे, कात्यायनस्मृतेः व्यवहारकाण्डे, वसिष्ठस्मृतौ एकोनविंशेऽध्याये तदन्यत्र च, संवर्त-शङ्खलिखितस्मृतिषु च राजशास्त्रविषयो न्यूनाधिक्यं निरूपितमस्ति।

एवञ्च पुराणेष्वपि तत्र तत्र राजशास्त्रविषयो बहुधा चर्चितो दृश्यते। विशेषतो मार्कण्डेयपुराणे, विष्णुधर्मोत्तरे, कालिकापुराणे, नारदपुराणे, गारुडे च विषयोऽयं सप्रपञ्चं विस्तारितोऽस्ति। रामायणेऽपि अयोध्याकाण्डेऽस्य निर्देशो लभ्यते प्राकरणिकः। महाभारते तु यत्र यत्र विशेषेण सभापर्वणि उद्योगपर्वणि शान्तिपर्वणि षट्पञ्चाशत्तमाध्यायादारभ्य सप्तत्यधिकशततमाध्यायपर्यन्तम्, अनुशासनपर्वणि तत्र तत्र, आश्रमवासिकपर्वणि च धृतराष्ट्रयुधिष्ठिरसंवादे राजशास्त्रीयमर्थशास्त्रीयञ्च तत्त्वं सप्रपञ्चं विस्तारितमस्ति। विशेषतोऽर्थशास्त्रीयतत्त्वमनुशासनपर्वणि शिवगौरीसंवादप्रकरणे शान्तिपर्वणि तत्र तत्र निरूपितमस्ति।

इत्थं संहिताया आरभ्य पुराणसाहित्यपर्यन्तं तत्र तत्रोपवर्णितविषयमादाय सर्वेषां साररूपेण बृहस्पतिनाऽर्थशास्त्रं कृतमिति श्रूयते। तच्च बार्हस्पत्यनीतिसूत्रनाम्ना प्रकाशितमपि दृश्यते यदारभ्यैवात्र सङ्क्षेपेण ग्रन्थसूचिः प्रस्तूयते—

**बार्हस्पत्यनीतिसूत्राणि**—अत्र हि षडध्यायाः सन्ति। तत्र प्रथमेऽध्याये राजवृत्तविवरणं, द्वितीये राजकर्तव्यानि तृतीये देशकालविवरणं, चतुर्थे दिनचर्या, मन्त्रनिरूपणं, पञ्चमे उपायनिरूपणं, षष्ठेऽर्थनिरूपणञ्च प्रतिपाद्यविषयाः। अस्य च प्रणयनकालः मनुस्मृतेरनन्तरो निर्दिष्टस्तनानेन विक्रमपूर्वचतुर्थशतकमभितः प्रणीतेन भाव्यमित्यूह्यते।

**शुक्रनीतिसारः**—शुक्राचार्यप्रणीतत्वेन सम्मतोऽयं ग्रन्थः सम्प्रति साररूपेणोपतिष्ठते। अस्य च प्रणयनस्य सारग्रहणस्य वा कालो विक्रमपूर्वतृतीयशतकमभितोऽनुमीयते भाषिकदृष्ट्या। अत्र हि पञ्चाध्यायाः तत्र हि चतुर्थाध्याये सप्त प्रकरणानि। तत्र प्रथमेऽध्याये राजकृत्याधिकारनिरूपणं, द्वितीये युवराजादिलक्षणं, तृतीये नृपराष्ट्रसामान्यलक्षणावधारणं, चतुर्थे सुहृदादिलक्षणं, विद्याकलादिनिरूपणं, लोकधर्मनिरूपणं, सेनानिरूपणं, पञ्चमे खिलनीतिनिरूपणञ्च। ग्रन्थेऽस्मिन् बह्वष्टीकाः श्रूयन्ते।

**कौटिलीयार्थशास्त्रम्**—चाणक्य-विष्णुगुप्त-कौटिल्यादिविविधाभिधेन विदुषा प्रणीतमर्थशास्त्रमिदं पञ्चदशस्वधिकरणेषु विभक्तम्। तत्र विनयाधिकारिकम्, अध्यक्षप्रचारः, धर्मस्थीयं, कण्टकशोधनं, योगवृत्त, मण्डलयोनिः, षाड्गुण्यं, व्यसनाधिकरणं, अभियास्यत्कर्म, साङ्ग्रामिक, सङ्घवृत्तम्, आबलीयसं, दुर्गलम्भोपायः, औपनिषदिकं, तन्त्रयुक्तिश्चेति विवेच्यविषयाः। प्रथमे विनयाधिकारिके विद्यासमुद्देशप्रभृत्यष्टादशप्रकरणानि, द्वितीये जनपदविनिवेशाद्यष्टत्रिंशत्प्रकरणानि, तृतीये व्यवहारस्थापनाद्येकोनविंशतिप्रकरणानि, चतुर्थे कण्टकशोधने कण्टकरक्षणादित्रयोदशप्रकरणानि, पञ्चमे दाण्डकर्मिकादिसप्तप्रकरणानि, षष्ठे प्रकृतिसम्पदादिद्विप्रकरणे, सप्तमे षाड्गुण्यसमुद्देशाद्येकोनत्रिंशत्प्रकरणानि, अष्टमे प्रकृतिव्यसनवर्गाद्यष्टौ प्रकरणानि, नवमे शक्तिदेशकालबलाबलज्ञानादिनवमप्रकरणानि, दशमे स्कन्धवारनिवेशादित्रयोदशप्रकरणानि, एकादशे भेदोपादानानि उपांशुदण्डश्चेति द्वे प्रकरणे, द्वादशे दूतकर्मादिनवप्रकरणानि, त्रयोदशे उपजापादिषडधिकरणानि, चतुर्दशे परघातप्रयोगादित्रिप्रकरणानि, पञ्चदशे तन्त्रयुक्तिरिति ग्रन्थेऽस्मिन् विभागाः।

ग्रन्थेऽस्मिन् बह्वष्टीकाः सन्ति यासु गणपतिशास्त्रिणः श्रीमूलाख्या टीका प्रशस्ता मन्यते। श्रूयते हि ग्रन्थोऽयमष्टाभिष्टीकाभिः समलङ्कृतः सन् प्रकाशयिष्यमाणोऽस्तीति। वार्तेयमस्माकं परमसौख्यावहा।

गन्थस्यास्य प्रणयनकालः विक्रमपूर्वचतुर्थशतकमित्यनुमीयते यतः कौटि(ट)ल्यो हि विष्णुगुप्तश्चाणक्यः प्रथममौर्यसम्राजश्चन्द्रगुप्तस्य प्रधानमन्त्री आसीत्। तस्य च राज्यकालो विक्रमपूर्व—३८२-३३० वत्सरमितः सम्मतः। तेनार्थशास्त्रस्य प्रणयनमपि विक्रमपूर्व ३५७ मितवत्सरमभितः सम्पन्नमासीदिति विश्वस्यते।

यथार्थतस्तु बार्हस्पत्यनीतिसूत्राणि शुक्रनीतिसारश्च कौटिल्यानन्तरवर्तित्वेन गृह्येते तथापि प्राथमिकतानुरोधेनाऽत्र तथा प्रकरणं निबद्धमस्ति।

**कामन्दकीयनीतिसारः**—कामन्दकप्रणीतोऽयं ग्रन्थोऽपि राजशास्त्रस्य सर्वाङ्गविवेचकः। अत्र हि विंशति सर्गाः सन्ति। अत्र हि इन्द्रियजयः, विद्यावृद्धसंयोगः, विद्याविभागः, वर्णाश्रमव्यवस्था, दण्डमाहात्म्यम्, आचारव्यवस्थापनं, प्रकृतिसम्पत्, स्वानुजीविवृत्तं, कण्टकशोधनं राजपुत्ररक्षणम्, आत्मरक्षितकं, मण्डलयोनिः, मण्डलचरितं, सन्धिविकल्पः, विग्रहविकल्पः, यानासनद्वैधीभावसंश्रयविकल्पः, मन्त्रविकल्पः, दूतप्रचारः, प्रकृतिव्यसनं, सप्तव्यसनानि, यात्रा, स्कन्धावारनिवेशनम्, उपायविकल्पः, सैन्यविवेकः, युद्धविवेकश्चेति प्रतिपाद्यविषयाः। कौटिलीयार्थशास्त्रानुगामी ग्रन्थोऽयं प्रकरणसिद्धये नितान्तमेव महत्त्वपूर्णः। अस्य प्रणयनकालश्च विक्रमसमकालिकस्तत्पूर्वप्रथमशतकमित इत्यनुमीयते। ग्रन्थेऽस्मिन् जयमङ्गलाउपध्यायनिरपेक्षाख्ये द्वे व्याख्ये प्रसिद्धे।

अत्र हि चत्वारोऽर्थशास्त्रिण उपस्थापिताः वृहस्पतिः, शुक्रः, कौटल्यः कामन्दकश्च। तत्र वृहस्पतिनाम्ना चत्वारः प्रथिता दृश्यन्ते। तत्राद्य ऋचाभाम्नायकः, इन्द्र आसान्नेता वृहस्पतिः—इत्यादावुक्तः, द्वितीयश्च बार्हस्पत्यसंहिताकारत्वेन प्रसिद्धः, तृतीयश्च लोकायतनमतप्रवर्तकः, चतुर्थश्च नीतिसूत्रकारः। सम्भवति कौटल्यनमस्कृतो बृहस्पतिर्बार्हस्पत्यसंहिताकारः स्यात्, बार्हस्पत्यार्थशास्त्रशब्देनापि संहितैव गृहीता स्यात्। अश्वघोषेणाऽपि—

> 'यद्राजशास्त्रं भृगुरङ्गिरा च न चक्रतुर्वंशकरावृषी तौ।
> तयोः सुतौ तौ च ससर्जतुस्तान् कालेन शुक्रश्च बृहस्पतिश्च॥'

इत्युक्तो बृहस्पतिरपि संहिताकार एव सम्भवति।

प्रसङ्गेऽस्मिन् कौटिल्यकृतित्वेन प्रसिद्धानि अष्टास्वध्यायेषु विभक्तानि नीतिसूत्राणि अपि स्मर्तव्यानि। तेषां प्रणयनं तु स्वयं कौटिल्येन कृतं वा तदनुवर्तिना केनाऽपि, सम्भवति विशाखदत्तेन, इति तु निश्चेतुं नैव शक्यते।

**नीतिवाक्यामृतम्**—विक्रमानन्तरदशमशतकवर्तित्वेनानुमितस्य सोमदेवस्य कृतित्वेन प्रसिद्धोऽयं ग्रन्थो द्वात्रिंशत्समुद्देशेषु विभक्तः। समुद्देशाश्च धर्म-अर्थ-काम-अरिषड्वर्ग-विद्यावृद्ध-आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीति-मन्त्रि-पुरोहित-

सेनापति-दूत-चार-विचार-व्यसन-स्वामि-अमात्य-जनपद-दुर्ग-कोश-बल-मित्र-राज-रक्षा दिवसानुष्ठान-सदाचार-व्यवहार-विवाद-षाड्गुण्य-युद्ध-विवाह-प्रकीर्णक-संज्ञिताः। ग्रन्थकर्ताऽयं जैनो यशस्तिलकचम्पूश्चास्यापरा कृतिः। शास्त्रीय-विषयेण सह लोकव्यवहारस्यापि संयोजनमस्य ग्रन्थस्य वैशिष्ट्यम्।

**कृत्यकल्पतरुः**—लक्ष्मीधरभट्टस्य कृतेरस्याः एकादशं राजधर्मकाण्डं द्वादशं व्यवहारकाण्डञ्चं राजशास्त्रस्य विवेचकम्। स च लक्ष्मीधरो विक्रमानन्तर-द्वादशशतकोत्पन्नः। राजधर्मकाण्डे हि एकविंशपर्वाणि सन्ति यत्र हि प्रथमे राजप्रशंसा, द्वितीये राज्ञोऽभिषेकः,तृतीये राजगुणाः, चतुर्थे अमात्याः, अनुजीविनः, पञ्चमे दुर्गाणि, पुरनिर्माणं पुरभूशुद्धिः षष्ठे वास्तुकर्मविधिः, सप्तमे राष्ट्रसङ्ग्रहणम्, अष्टमे कोशः, नवमे दण्डः, दशमे मित्रम्, एकादशे राजपुत्ररक्षा, द्वादशे मन्त्रः, त्रयोदशे षाड्गुण्यं, चतुर्दशे यात्रा, अभिषिक्तकृत्यानि, पञ्चदशे देवयात्राविधिः, षोडशे कौमुदीमहोत्सवः, सप्तदशे इन्द्रध्वजोच्छ्रायविधिः, अष्टादशे महानवमीपूजा, एकोनविंशे, चिह्नविधिः, विंशे गवोत्सर्गः, एकविंशे वसोर्धारा इति। ग्रन्थोऽयं सङ्ग्रहात्मको यत्र सूत्र-स्मृति-पुराणादिभ्यो वस्तु गृहीत-मस्ति। अस्यैव व्यवहारकाण्डमेकाशीतिप्रकरणेषु विभक्तम्।

**व्यवहारमातृका**—विक्रमानन्तरद्वादशशतकीयस्य जीमूतवाहनस्य कृतिरियं व्यवहारदर्शनविधिनिर्द्धारिका।

**दायभागः**—अयमपि जीमूतवाहनस्यैव। अत्र हि चतुर्दशाध्यायाः।

**स्मृतिचन्द्रिका**—देवणभट्टस्य कृतेरस्याः व्यवहारकाण्डो व्यवहारदर्शनविधि-निरूपकः। तत्र हि द्वौ परिच्छेदौ। प्रथमे सप्तचत्वारिंशद्विभागा यत्र व्यवहार-दर्शनविधिर्निरूपितः। द्वितीये हि अष्टादशविवादपदानि निरूपितानि।

**राजनीतिरत्नाकरः**—विक्रमानन्तरचतुर्दशशतकोद्भवस्य चण्डेश्वरस्य कृतिरियं षोडशतरङ्गेषु विभक्ता यत्र हि राज्यानां सप्ताङ्ग्येवाङ्गानि सप्रपञ्चं निरूपितानि।

**विवादरत्नाकरः**—चण्डेश्वरस्यैव कृतिरियं व्यवहारपदानां विवेचिका।

**व्यवहारत्नाकरः**—चण्डेश्वरस्यैव कृतिरियं व्यवहारदर्शनविधिनिर्द्धारिका।

**व्यवहारविवेकोद्द्योतः**—विश्वेश्वरभट्टस्य कृतिरियं मदनपारिजातस्यान्यतमो भागः।

**विवादचिन्तामणिः**—वाचस्पतिमिश्रस्य कृतिरियं व्यवहारपदानां निरूपिका।

**व्यवहारसारः**—नृसिंहविदुषः कृतिरियं व्यवहारदर्शनपदादिविवेचिका।

**व्यवहारतत्त्वम्**—रघुनन्दनस्य कृतिरियमन्वर्थसंज्ञका।

**नीतिमयूखः**—नीलकण्ठस्य कृतिरियं राज्याङ्गानां विवेचिका।

**व्यवहारमयूखः**—तस्यैव कृतिरियं व्यवहारदर्शनविधेस्तत्पदानाञ्च विवेचिका।

**राजनीतिप्रकाशः**—मित्रमिश्रस्य कृतिरियं राजशास्त्रस्य सर्वाङ्ग विवेचन-परा।

**व्यवहारप्रकाशः**—मित्रमिश्रस्य कृतिरियं व्यवहारदर्शनस्य व्यवहारपदानाञ्च विवेचिका।

**लक्षणप्रकाशः**—तस्यैव ग्रन्थोऽयं विविधलक्षणनिरूपकः त्रय एवैते ग्रन्थाः वीमित्रोदयनाम्ना ज्ञाताः।

**राजधर्मकौस्तुभः**—अनन्तदेवप्रणीतोऽयं ग्रन्थो राजशास्त्रस्य विवेचकः। अत्र हि अष्टाशीतिप्रकरणानि सन्ति यत्र व्यवहारपदान्यपि व्याख्यातानि।

**सरस्वतीविलासः**—प्रतापरुद्रप्रणीतस्यास्य व्यवहारकाण्डो व्यवहार-विधेस्तत्पदानाञ्च विवेचकः।

**व्यवहारनिर्णयः**—वरदराजस्य कृताविह त्रयोदशकाण्डानि सन्ति यत्र हि व्यवहारदर्शनविधिर्व्यवहारपदानि च निरूपितानि सन्ति।

**मानसोल्लासः**—सोमेश्वरस्य कृतिरियं राजशास्त्रविषयनिर्वाहिका।

**स्मृतिसारोद्धारः**—श्रीविश्वम्भरकृताविह एकादशे उद्धारे व्यवहारपदानि निरूपितानि सन्ति।

**भारतीयविचारदर्शनम्**—एतच्छतकीयस्य हरिहरनाथत्रिपाठीमहोदयस्य कृतिरियमेकोनविंशतितमेषु विभागेषु विभक्ता। तत्र नवमविभागपर्यन्तं राज-शास्त्रं ततश्च सप्तदशविभागपर्यन्तमर्थशास्त्रं शेषयोः परिशिष्टात्मकविवरणञ्च। प्राचीनविषयस्याधुनिकदृष्टिसम्मतत्वेनोपन्यासो ग्रन्थकारस्य प्रशस्यं वैशि-ष्ट्यम्। स्वयं ग्रन्थकारेणैवोक्तम्—

"वाक्यविन्यासे ममेच्छा प्रयोजिका शब्दप्रयोगं च भावाभिव्यक्तिमूलिका-हेतुः।" इति।

**प्राचीनराजशास्त्रार्थशास्त्रदर्शनम्**—एतच्छतकीयस्य लोकमणिदाहालस्य कृतिरियं सर्वथा नवीनसङ्घटनामाधत्ते। ग्रन्थोऽयं मूलतो राजशास्त्रमर्थशास्त्र-ञ्चेति द्वयोर्भागयोर्विभक्तः। तत्र हि प्रथमे भागे एकोनत्रिंशद्विभागाः। ते च विषयप्रवेशः, पुरुषार्थचतुष्टयसिद्धिः, राज्यं, राष्ट्रं, राष्ट्रराज्यसभे, राजा,

सामान्यराजनैतिकसिद्धान्ताः, राजाधीनजनतन्त्रे, राज्ञः सहायाः, पुरोहितः, मन्त्रिणः, प्रणिधिर्दूतश्च, मित्रं, शत्रुः, राजमण्डलं, कोशः, दुर्गं, बलं, व्यसनं, षड्वर्गः, अभिव्यक्तकर्तव्यं, कार्याध्यक्षाः, कण्टकशोधनं, व्यवहारदर्शनमिति। उत्तरभागे आर्थिकजीवनमिति।

इत्थं हि संहिताविर्भावकालतो वर्तमानकालपर्यन्तं सततप्रवाहयुक्तमर्थशास्त्रमार्याणां सशक्तजीवनस्य सक्रियता सिद्धान्तस्य च जीवत्प्रमाणमिति।

## १४. कामशास्त्रम्

'धर्मार्थकामाः सममेव सेव्याः'

यथा बुद्धेः प्रसन्नतायै धर्मस्य महत्त्वं यथा वा शरीरस्य सक्रियतायै अर्थस्य प्रयोजनं तथैव मनसो विशदतायै कामस्यावश्यकता। निष्कामं मनोऽकिञ्चित्करमनर्थयोनि च। कस्मिंश्चिदपि कर्मणि प्रवृत्तये काम एव प्रेरकस्तेन हि स मनसो धर्मः। यदा स द्वितीयमैच्छत् तदैव सृष्टिः प्रवृत्ता।

काम्यत इति कामो विषयेन्द्रियसम्पर्कजन्यमानसिकप्रीतिः। यथोक्तम्—

'इन्द्रियाणाञ्च पञ्चानां मनसो हृदयस्य च।
विषये वर्तमानानां या प्रीतिरुपजायते।
स कामः इति मे बुद्धिः कर्मणां फलमुत्तमम्॥'

कामश्च पुरुषार्थेष्वन्यतमः। जीवनस्य पूर्णतायै कामोऽपि नितान्तमेवापेक्षितः। यथा धर्मत्यागे बुद्धिः क्षीयते वा धनत्यागे शरीरं तथैव कामत्यागे मनः विषीदति येन सर्वमपि कार्यजातमवरुद्धं भवति।

कामविषयेऽपि वेदेषु बहुत्र बहूक्तं दृश्यते। यथा ऋग्वेदे—

'कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।' (१०।१२९।४)

तथैव यजुर्वेदे—

'कोऽदात् कस्मा अदात् कामोऽदात् कामायादात्।
कामो दाता कामः प्रतिग्रहीता कामैतत्ते॥ (७।४८)
.... .... .... .... ....ते वाजिनां कामाय पिकः। (२४।३९)

तथा चाथर्ववेदे—

'कामो जज्ञे प्रथमो नैनं देवा आपुः' (९।२।१९)

एवमेव ब्राह्मणसाहित्येऽपि कामविषये प्रतिपादितमस्ति यत्काम एव अनन्त-प्रेरक इति । यथा तैत्तिरीयब्राह्मणे—

'समुद्र इव हि कामः । नैव हि कामस्यान्तोऽस्ति न समुद्रस्य ।' (२।२।५।६) न इति इवार्थे ।

'श्रद्धां कामस्य मातरं हविषा वर्धयामसि' (२।८।८।८)

उपनिषत्स्वपि कामविषये यत्रतत्रोक्तमेव । यथा छान्दोग्ये—

'आययतो वै.... .... .... ....अन्योन्यस्य सर्वान् कामान् ।'

एवमेव स्मृतिसाहित्येऽप्युक्तम्—

'अकामस्य क्रिया काचिद् दृश्यते नैव कर्हिचित् ।
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥' (मनु० २।४)

एवमेव महाभारतेऽपि—

'धर्मार्थकामाः सममेव सेव्या यो ह्येकभक्तः स नरो जघन्यः ।'
नाकामः कामयत्यर्थं नाकामो धर्ममृच्छति ।
नाकामः कामयानोऽस्ति तस्मात्कामो विशिष्यते ॥ (१२।१६७।२९)
वणिजः कर्षका गोपाः कारवः शिल्पिनस्तथा ।
देवकर्मकृतश्चैव युक्ताः कामेन कर्मसु ॥ (तत्रैव ३२)
कामो हि विविधाकारः सर्वं कामेन सन्ततम् । ( ,, )

तदित्थं श्रुतिस्मृतिपुराणादिषु समुपवर्णितं कामविषयमादाय महादेवानुचरो नन्दी कामशास्त्रं प्रणीतवान् सहस्रेणाध्यायानां यदुद्दालकपुत्रः श्वेतकेतुः पञ्चभिरध्यायशतैः सञ्चिक्षेप । तच्च बाभ्रव्येऽध्यर्धेनाध्यायशतेन सप्तभिरधिकरणैः सञ्चिक्षेप । कालान्तरे तत्र दत्तको वैशिकं चारायणः साधारणं, सुवर्णनामः साम्प्रयोगिकं, घोटकमुखः कन्यासम्प्रयुक्तकं, गोनर्दीयो भार्याधिकारिकं, गोणिकापुत्रः पारदारिकं, कुचुमार औपनिषदिकञ्च पृथक् चक्रुः । ते च सर्वे कालेन विनष्टाः । तेषाञ्च सर्वेषां सारमादाय वात्स्यायनेन कामशास्त्रं प्रणीतं यदधुनाऽपि लभ्यते । तेन वात्स्यायनस्य कामसूत्रमेव कामविषये समुपलभ्यमानः प्रथम आर्षग्रन्थः ।

**कामसूत्रम्**—वात्स्यायनप्रणीतोऽयं ग्रन्थः सप्ताधिकरणात्मकः तत्र हि षट्-त्रिंशदध्यायाः चतुःषष्टिः प्रकरणानि च । ग्रन्थेऽस्मिन् यशोधरस्य जयमङ्गलाख्या टीका सर्वातिशायित्वेन विलसति ।

वात्स्यायनविषये पण्डिता नैकमत्यं भजन्ते । तत्र हि त्रयो वात्स्यायना दृश्यन्ते न्यायसूत्रभाष्यकृद् वात्स्यायनः, कौटल्यश्च वात्स्यायनः, कामसूत्र-

कृद्वात्स्यायनश्च । केचित्त्रीनेवैकमेव मन्यन्ते । केचित्तान् पृथक्पृथगेव मन्यन्ते । यद्यपि प्रश्नेऽस्मिन् निर्णायकं प्रमाणं तु नैवोपलभ्यते किन्तु परम्परया वा स्वविवेकेन वयमपि तान् पृथक्पृथगेव मन्यामहे । कामसूत्रकारो वात्स्यायनो मल्लनागाख्यो यथाऽऽह यशोधरो जयमङ्गलायाम्—

'तमुपायमाचिख्यासुराचार्यमल्लनागः पूर्वाचार्यमतानुसारेण शास्त्रमिदं प्रणीतवान्' इति ।

अयञ्च वात्स्यायनः आर्षपरम्पराक्रमीयस्तेनानेन कदापि विक्रमानन्तरवर्तिना नैव भाव्यम् । अस्य भाषिकसङ्घटनाऽपि निर्दिशति यदयं कौटिल्यसमकालीनो वा तदनन्तरनिकटकालवर्ती सम्भवति । सामान्यतः कालिदासाश्वघोषादयो वात्स्यायनीयं कामसूत्रमनुवदतः । अपरश्च विष्णुगुप्ताभिधो वात्स्यायनोऽर्थशास्त्रकर्ता मल्लनागपूर्ववर्ती चन्द्रगुप्तप्रधानमन्त्री । तृतीयस्तु वात्स्यायनो गौतमसूत्रभाष्यकृद्विक्रमानन्तरनिकटवर्तिकालभवो यतः स पतञ्जलिमनुसरति इति ।

एतदतिरिक्तं दामोदरगुप्तस्य ( वि० ८३६–८७० ) कुट्टनीमतं, क्षेमेन्द्रस्य ( वि० १०७२–११३७ ) कलाविलासः, ज्योतिरीश्वरस्य पञ्चसायकः, लोकस्य रतिरहस्यं, जयदेवस्य रतिमञ्जरी, कल्याणमल्लस्य अनङ्गरङ्गः, नागार्जुनस्य रतिशास्त्रं तथैव कामरत्नं, मन्मथसंहिता, रसिकसर्वस्वं, मनसिजसूत्रं, कामप्रकाशः, नागरबल्लभः, स्मरदीपिका चेतिप्रभृतिग्रन्थाः कामशास्त्रीयाः यैः सम्भूय कामशास्त्रसाहित्यं समृद्धं कृतम् ।

●

## १५. मोक्षशास्त्रम्

"मोक्षो निर्विषयं मनः"

मोक्ष एव एतादृशो विषयो यमधिकृत्य समग्रं संस्कृतसाहित्यमुद्वेलितं भवति । समस्तमपि वेदसाहित्यं वैदिकसाहित्यञ्च मोक्षमार्गोपदेशेन नैव विश्राम्यति । समग्रमेवोपनिषत्साहित्यं मोक्षमार्गप्रसाधकम् ।

येन तत्त्वं दृश्यते तद्दर्शनम् । तच्चाध्यात्मायत्तम् । भारतीयदर्शनं सर्वेभ्योऽपि दर्शनेभ्यः प्राचीनतमम् । भारतीयदर्शनस्य बीजं तु वेदसंहितास्वेव दृश्यते । तथैव ब्राह्मणसाहित्ये आरण्यकसाहित्ये च यत्किञ्चिद्बीजं दर्शनस्य लक्ष्यते । उपनिषत्साहित्यं तु दर्शनस्य योनिरेव ।

भारतीयपरम्परायां नव दर्शनानि प्रचलितानि सन्ति येषु षडास्तिकसंज्ञितानि त्रीणि नास्तिकसम्मतानि च। आस्तिकनास्तिकयोरयमेव भेदो यत्प्रथमं वेदप्रामाण्यमधिभजतेऽपरं तद्विपरीतकम्। प्रथमे विभागे साङ्ख्ययोगन्यायवैशेषिकमीमांसावेदान्तानि द्वितीये तु चार्वाकबौद्धजैनानि परिगणितानि सन्ति। अथैषां क्रमेण सङ्क्षिप्तपरिचयः प्रस्तूयते।

## १. साङ्ख्यदर्शनम्

सङ्ख्यायते सम्यग्ज्ञायते तत्त्वं येनेति साङ्ख्यम्। अत्र हि सङ्ख्याशब्दो गणना प्रसिद्धिरित्युभयवचनः। तत्र हि प्रथमे पञ्चविंशतितत्त्वानि एका मूलप्रकृतिः, तस्या विकृतयः सप्त, केवला विकृतयः षोडशः, तदुभयभिन्नः पुरुषश्चैक इति सम्भूय, सङ्ख्यायन्ते गण्यन्ते इति, द्वितीये प्रकृतिपुरुषान्यताख्यातिरूपोऽत्र बोध सङ्ख्यायत इति च। यथोक्तं भारतादौ—

'सङ्ख्या प्रकुर्वते चैव प्रकृतिञ्च प्रचक्षते।
तत्त्वानि च चतुर्विंशत् तेन साङ्ख्ये प्रकीर्तितम्॥'

मतमिदं कपिलाख्यमुनिप्रणीतत्वात्कापिलमपि प्रोक्तम्। स हि भगवान् विन्दुसरोनिकटवर्त्याश्रमे कर्दमाद्देवहूत्याञ्जात इति श्रूयते। इदमुच्यते श्रीमद्भागवतादौ यत्स्वयम्भूरात्मानं द्विधा व्यभजद्यत्र दक्षिणभागो हि मनुरभवद्वामभागश्च शतरूपा। तयोर्मैथुनधर्मात्पञ्चापत्यानि समजायन्त येषु प्रियव्रतोत्तानपादाविति द्वौ सुतौ आकूतिदेवहूतिप्रसूत्याख्यास्तिस्रः कन्याः। मनुस्तु शतरूपासम्मत्या आकूतिं रुचये प्रादात्कर्दमाय च मध्यमाम्। तदस्यां कर्दमान्नव कन्यकाः पुत्रश्चैकः कपिलाख्यो भगवदंशः समभवत्। पुनश्च तपोनिरते च पितरि कपिलश्च मातृसमाश्वासनाय कापिलाऽऽख्यमिदं दर्शनं प्रोवाच। तेन दर्शनमिदं सर्वेष्वपि दर्शनेषु प्राचीनतमम्। विरक्तायाञ्च मातरि स च मुनिः पश्चात्स्वनाम्नैव प्रसिद्धं कपिलवस्तुतीर्थं समासाद्य तत्र हि स्वसम्मतं प्रकृतिपुरुषान्यताख्यातिरूपं दर्शनं शिष्येभ्यः प्रोच्य चरमे वयसि गङ्गासागरसङ्गमं गत्वा तत्रैव तपसि रतस्तिष्ठतीति पुराणानां मतम्।

साङ्ख्यस्य राद्धान्तो यथा कालः पञ्चविंशकः स च पञ्चभिः पञ्चभिः चतुर्भिः दशभिरेकेन च सिध्यति। तत्र महाभूतानि पञ्च पृथिव्यप्तेजोवाय्वाकाशानि पञ्चतन्मात्रा गन्धरसरूपस्पर्शशब्दाः, इन्द्रियाणि बाह्यानि दश श्रोत्रत्वग्दृग्रसननासिकाख्यानि पञ्च ज्ञानसाधनानि वाक्करचरणमेढ्रपायुरूपाणि पञ्च कर्मसम्बद्धानीति........, ......... चतुर्विधं मनोबुद्ध्यहङ्कारचित्तभेदैः तद्भिन्न-

स्वभावः पुरुष इति पञ्चविंशतिस्तत्त्वानि। मूलप्रकृतिरव्यक्तमव्यक्तान्महत्तत्त्वं तस्मात्पञ्चतन्मात्राणि ततश्च पञ्चमहाभूतानि ततश्च शरीरमिति सृष्टिक्रमः। सगुणा प्रकृतिरेव सृष्टेर्बीजम्। गुणानां साम्यावस्था प्रकृतिर्वैषम्यावस्था च तेषां सृष्टिहेतुः। तत्र सत्त्वबहुलरजस्तमोभ्यां महत्तत्त्वं, रजोबहुलसत्त्वतमोभ्यां महत्तत्त्वं, तमोबहुलसत्त्वरजोभ्यां पञ्चतन्मात्राः, यदुद्भूतानि पञ्चमहाभूतानि, दशेन्द्रियाणि मनश्चेति सृष्टिक्रमः। तत्राहङ्कारो वैकारिकतैजसतामसभेदात् त्रिविधः। वैकारिकान्मनस्तत्त्वं तैजसाद्बुद्धितत्त्वमिन्द्रियाणि च तामसात्पञ्चतन्मात्राः इति। प्रकृतिः प्रधानं प्रधानपुरुषयोरन्यताख्यातिग्रहःस्त्रिविधदुःखात्यन्तनिवृत्तिरूपोः मोक्षः। तत्र प्रत्यक्षानुमानागमाः प्रमाणानि। जीवेश्वरयोर्भेदेन तयोर्द्वैतत्वमेव। वेदाश्चापौरुषेया अतस्तेषां स्वतःप्रामाण्यम्। प्रकृतौ पुरुषाकारापत्त्या बन्धस्तयोरन्यताबुद्धिर्मोक्ष इति सङ्क्षेपतः साङ्ख्यमतम्।

अतिप्राचीनत्वेन साङ्ख्यमतस्य साहित्यमपि सुविपुलम्। तस्यात्र सङ्क्षेपेण परिचयः प्रस्तूयते।

**तत्त्वसमासः**—तत्त्वसमासः कपिलस्य कृतित्वेन गृह्यते। अस्य प्रणयनकालश्च विक्रमपूर्वषष्ठशताब्दी इति मन्यते। वस्तुतस्तु ग्रन्थोऽयं कपिलप्रोक्तविचारमादाय केनापि तदनुयायिना सम्भवत आसुरिणा प्रणीतं सम्भवति। अत्र हि द्वाविंशतिः सूत्राणि सन्ति। तानि च यथा—

"अष्टौ प्रकृतयः।१। षोडश विकाराः।२। पुरुषः।३। त्रैगुण्यम्।४। सञ्चरः।५। प्रतिसञ्चरः।६। अध्यात्ममधिभूतमधिदैवतञ्च।७। पञ्चाभिबुद्धयः।८। पञ्च कर्मयोनयः।९। पञ्च वायवः।१०। पञ्च कर्मात्मानः।११। पञ्चपूर्वा अविद्या।१२। अष्टाविंशतिधाऽशक्तिः।१३। नवधा तुष्टिः।१४। अष्टधा सिद्धिः।१५। दश मूलिकार्थाः।१६। अनुग्रहसर्गः।१७। चतुर्दशविधो भूतसर्गः।१८। त्रिविधो बन्धः।१९। त्रिविधो मोक्षः।२०। त्रिविधं प्रमाणम्।२१। त्रिविधं दुःखम्॥२२॥ एतान्येव मौलिकानि कपिलप्रोक्तानि. कामं पश्चाद्ग्रन्थरूपेण निबद्धानि। यदि कपिलं विक्रमपूर्वषष्ठशतकीनं मन्यते तदा महाननर्थः उत्पद्यते। 'सिद्धानां कपिलो मुनिः' इति महाभारते गीताप्रसङ्गे उक्तमस्ति। तेन तेन महाभारतपूर्ववर्तिना भाव्यमेव। श्वेताश्वतरोपनिषदि 'तत्कारणं साङ्ख्ययोगाधिगम्यं' (षष्ठाध्याये) 'ऋषिं प्रसूतं कपिलं यस्तमग्रे' (पञ्चमाध्याये) इत्याद्युक्तत्वात्तेन तत्पूर्ववर्तिनाऽपि भाव्यमेव। ततश्च साङ्ख्याचार्यपरम्परेत्थं निःसृता दृश्यते—कपिलः। आसुरिः। बोढुः। पञ्चशिखः। (एते हि नित्यतर्पणे सर्वैरपि सम्प्रदायानुवर्तिभिस्तर्प्यन्ते) पतञ्जलिः। जैगीषव्यः। वार्षगण्यः।

विन्ध्यवासी । जनकः । पराशरः । व्यासः । ईश्वरकृष्णः । भार्गवः । उलूकः । हारीतः । देवलः । विज्ञानभिक्षुः । षिमानन्दः । भावागणेशः । कविराजयतिः । कृष्णमित्रः । तत्त्वसमासोपरि बहुविधाष्टीकाग्रन्थाः प्रणीता यासु षिमानन्दस्य साङ्ख्यविवेचनं, भावागणेशस्य साङ्ख्यतत्त्वयाथार्थ्यदीपनं, सर्वोपकारिणी टीका, साङ्ख्यसूत्रविवरणम्, अनिरुद्धवृत्तिः, तत्त्वसमाससूत्रवृत्तिः, चेतिप्रभृतयः प्रसिद्धाः ।

**सूत्रषडध्यायी**—षडध्यायी षडध्यायात्मिका ५२६ सङ्ख्याकसूत्रगुम्फिता । अस्या हि प्रणेतुर्विषये पण्डिता वेभिद्यन्ते । केचिदिमामासुरिकृतां परे तु पञ्चशिखप्रणीतामितरे तु विज्ञानभिक्षुकृताञ्चापि मन्यन्ते । एकादशशतकोद्भवेन भोजदेवेन व्याख्याता षडध्यायी सप्तदशशतकोद्भवेन विज्ञानभिक्षुणा प्रणीतेति तु नितान्तमनर्गलप्रलाप एव । कामं—

'समाससूत्रमालम्ब्य व्याख्यां पञ्चशिखस्य च ।
भावागणेशः कुरुते तत्त्वयाथार्थ्यदीपनम् ॥'

इति वचनेन पञ्चशिखकृतिः सम्भवेत् । एवञ्च—

'कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये ।
पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः ॥'

इति साङ्ख्यतत्त्वकौमुद्यां वाचस्पतिवचनात् कपिलेन परमकारुणिकेन प्रोक्तं शास्त्रम् आसुरिणा द्वाविंशतिसूत्रेषु निबद्धं यदेव तत्त्वसमासनाम्ना व्यवहृतं, तदेव च तच्छिष्येण पञ्चशिखेन षडध्यायेषु व्याख्यातं येषाञ्च सारमादायेश्वरकृष्णेन द्विसप्ततिकारिकासु निबद्धमिति प्रतीयते । इत्थमपि विश्वस्यते यत् स्वायम्भुवे मन्वन्तरे सर्गादौ भगवदंशेनावतीर्णः कपिलो मुनिः साङ्ख्यमतं ज्ञानपरकं यत्प्रोक्तवान् तदेव वैवस्वते मन्वन्तरे वह्न्यंशभूतः कपिलाख्यो मुनिः विक्रमपूर्वषष्ठशताब्द्यां षडध्यायीं प्रणिनायेति । स्पष्टप्रमाणाभावे मतमिदं नैव सम्पुष्टमेतावत्तु स्पष्टमेव यत्कापिलं मतं कालेन विस्मारितं षडध्याय्या पुनरुद्धारितमिति । तच्च न्यायवैशेषिकदर्शनादर्वाक् प्रणीतं तत्रैव 'न वयं षट्पदार्थवादिनो वैषिशेकादिवत्' (१।२५) इत्युक्तेः । तेनैव ग्रन्थमेवामुमादाय मनुस्मृतौ याज्ञवल्क्यस्मृतौ विष्णुपुराणादौ च विद्याऽऽगणनावसरे साङ्ख्यं न्यायविस्तरे वा न्याये एवान्तर्भावितम् । सम्भवति तस्यैव शुभाश्रमः कपिलवस्तुतीर्थे आसीत् ।

**आसुरिः**—आसुरिस्तु कपिलस्य साक्ष्याच्छिष्य इत्युच्यते । न केवलं स्याद्वादमञ्जर्यां तस्योल्लखादपितु सनकादिसप्तमनुष्येषु तस्योलेखाच्च प्राचीनत्वं सिध्यति । प्रत्यक्षतस्तत्कृतग्रन्थनिर्देशस्तु नैवोपलभ्यते तथापि तस्य साङ्ख्या-

चार्यत्वं तत्र तत्र ग्रन्थेषूल्लेखात्सिध्यति। वयं तु तत्त्वसमासस्य सङ्ग्रहीतृत्वेन तमेव मन्यामहे, तथा चिन्तनेऽस्माकमन्तरात्मैव प्रमाणम्।

**षष्टितन्त्रम्**—साङ्ख्यपरम्परायां षष्टितन्त्रस्याऽप्युल्लेखो दृश्यते। अस्य कर्तृत्वेन यत्र यत्र पञ्चशिखो नाम साङ्ख्याचार्यो निर्दिश्यते। अयं हि कपिलस्य आसुरेर्मुख्यशिष्यः। अयमपि सनकादिसप्तमनुष्येष्वन्यतमः पश्चिमश्च। यद्यपि ग्रन्थोऽयं सम्प्रति नैवोपलभ्यस्तथाप्यस्यास्तित्वं तत्र तत्र ग्रन्तेषु तद्विषयकोद्धरणेभ्यो ज्ञायते। व्यासभाष्येऽस्यैव कतिपयानि सूत्राणि गृहीतानि सन्ति। अयं हि साङ्ख्यमतप्रतिपादकेषु प्रथम आचार्यो मन्यते।

**साङ्ख्यकारिका**—इयञ्च सर्वतन्त्रस्वतन्त्रस्य ईश्वरकृष्णाभिधविदुषः कृतिः साङ्ख्यसाहित्ये मूर्धन्या। अत्र हि द्विसप्ततिकारिकाः सन्ति किन्तु उपसंहारनिमित्तकपद्यद्वयसन्धाने तु सप्ततिरेव मूलकारिकाः अवशिष्यन्ते। अत एव 'हिरण्यसप्ततिः' 'कनकसप्ततिः' 'स्वर्णसप्ततिः' चेति नाम्नाऽपि प्रसिद्धा। यथा तत्रैवोक्तमुपसंहारपद्ये—

"एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम्॥
शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः।
सङ्क्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम्॥
सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य।
आख्यायिका विरहिताः परवादविवर्जिताश्चापि॥ ७०–७२॥"

अस्य च प्रणयनकालमादाय विचक्षणा बेभिद्यन्ते। केचित्तं विक्रमानन्तरचतुर्थशतकीनं मन्यन्ते किन्तु विक्रमानन्तरप्रथमशतकगुम्फिते जैनीये अनुयोगद्वारसूत्रे 'काविलं' 'सट्ठितन्त्रं' 'माठरं' 'कणगसत्तरी' इत्येतेषां समुल्लेखादस्य तस्मादपि प्राचीनत्वं सिध्यति। अपरञ्च अयमेव समुपलभ्यग्रन्थेषु प्राचीनतमः प्रामाणिकश्च। तेनाऽस्य प्रणयनकालो विक्रमपूर्ववर्त्येवेति सिध्यति।

ग्रन्थेऽस्मिन् कनिष्कसमकालीनस्य मठराचार्यस्य माठरी वृत्तिः सर्वप्राचीना प्रामाणिकी च। कनिष्कस्य स्थितिकालस्तु विक्रमानन्तरपञ्चत्रिंशदुत्तरैकशतवत्सरमभितः पततीति कथ्यते। तथैव वाचस्पतिमिश्रस्य साङ्ख्यतत्त्वकौमुदी, विज्ञानभिक्षोः (वस्तुतस्त्वसौ गृहस्थः) साङ्ख्यप्रवचनभाष्यञ्चास्य प्रसिद्धा विवृतयः। गौडपादभाष्यञ्चास्य विवृतिषु प्रधाना। तथैवानिरुद्धस्य (वि० १५०७) साङ्ख्यसूत्रवृत्तिः, महादेवस्य (वि० १६५७) साङ्ख्यसूत्रवृत्तिसारः, नागेशस्य (वि० १८००) लघुसाङ्ख्यसूत्रवृत्तिः, चेत्यादिविवृतयश्चास्य प्रसिद्धाः। सर्वासु च निर्णीतप्रणेत्री युक्तिदीपिका परमा।

युक्तिदीपिका—ग्रन्थोऽयमीश्वरकृष्णस्य साङ्ख्याकारिकाया विवृतिरेव। इमाञ्च केचिद्वाचस्पतिमिश्रकृतिं मन्यन्ते केचित्तु गौडपादाचार्यस्य ( वि० ५६० )। वस्तुतस्तु वाचस्पतेः। वि० ९०० साङ्ख्यतत्त्वकौमुदीनाम्नाऽपरैव वृत्तिर्लभ्यते गौडपादस्यापि गौडपादभाष्याख्या। तुलनात्मकाध्ययनाय त्रयाणामेवादिमश्लोका अत्रोपस्थाप्यन्ते—

गौडपादभाष्यस्य यथा—

'कपिलाय नमस्तस्मै येनाविद्योदधौ जगति मग्ने'

साङ्ख्यतत्त्वकौमुद्या यथा—

'अजामेकां लोहितशुक्लकृष्णाम्'

युक्तिदीपिकाया यथा—

'वीतावीतविषाणस्य पक्षतावनसेविनः।'

इति। तेनाऽस्याः प्रणेता नैवाधुनाऽपि निर्णीतः।

एवमेव विज्ञानभिक्षोः साङ्ख्यसारः, भावागणेशस्य साङ्ख्यतत्त्वयाथार्थ्यदीपनं, नारायणतीर्थस्य ( वि० १७५७ ) साङ्ख्यचन्द्रिका चास्य कविराजयतेः साङ्ख्यतत्त्वप्रदीपः, कृष्णमित्रस्य तत्त्वमीमांसा, साङ्ख्यपरिभाषा चेतिप्रभृतयः साङ्ख्यस्य प्रकरणग्रन्थाः।

सङ्क्षेपतः पर्यालोचने साङ्ख्यमतं सेश्वरं निरीश्वरञ्चेति द्विविधरूपेण विकसितं दृश्यते। मतस्यास्य सारः सङ्क्षेपेणात्र प्रस्तूयते।

प्रमाणं त्रिविधं दृष्टानुमानागमभेदात्।

पञ्चविंशति तत्त्वानि सृष्टिसाधनानि। तानि चाष्टौ प्रकृतयः—

अव्यक्तबुद्ध्यहङ्कारास्तन्मात्राणाञ्च पञ्चकम्।
अष्टौ प्रकृतयस्त्वेताः सप्त च व्यक्ततामियात्॥

षोडश विकृतयः—

एकादशैवेन्द्रियाणि महाभूतानि पञ्च च।
विकाराः षोडशैवेते न तु प्रकृतिताजुषः॥
पुरुषश्चैकः, स च सर्वगतश्चेतनो निर्गुणोऽपरः।

प्रकरोति या सा प्रकृतिः सैव कर्त्री अव्यक्ता चाचेतना च। पुरुषस्त्वसङ्गश्चेतनश्च। सत्त्वरजस्तमांसि प्रकृतेर्गुणा न तु पुरुषस्य। प्रकृतिपुरुषयोः संयोगेनैवैतद् दृश्यं जगदुत्पद्यते। प्रकृतेर्महत्तत्त्वं ततोऽहङ्कारः, ततः पञ्चतन्मात्राणि, ततः पञ्चमहाभूतानि, पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चेत्येकादशेन्द्रियाणि, तान्यचेतनानि, पुरुषश्चैकश्चेतनः।

जगदिदं स्वरूपतः सदपि चैतनेऽध्यस्तञ्च पुनरसदिति ज्ञानं सदसत्-ख्यातिवादः।

दृश्यं जगद्भोग्यं, भोक्ता च पुरुषः।

सदेव व्यक्तीभवत्कार्यरूपेण परिणमति, न चासतः सदुत्पद्यते, सतश्चासदपि। तेन सत एव सज्जायते।

सुखदुःखादिभोगो बुद्धेरेव न तु पुरुषस्य तस्यासङ्गत्वात्।

प्रकृतिपुरुषौ हि कार्यहेतुभूतौ स्वतन्त्रसत्ताकौ यतस्तयोर्नित्यं द्वैतता।

त्रिविधदुःखनिवृत्तिर्मोक्षः। स च प्रकृतिपुरुषान्यताख्यातिमन्तरा न सम्भवति। अज्ञानादेव बन्धः ज्ञानान्मुक्तिः।

आध्यात्मिकाधिभौतिकाधिदैवतभेदाद् दुःखं त्रिविध यत्राध्यात्मिकं द्विविधं शारीरं मानसञ्च। व्याधिजनितं शारीरं, कामक्रोधादिभवं मानसम्। हिंस्रकादीनधिकृत्य प्रवृत्तमाधिभौतिकम्, अदृश्यमधिकृत्य प्रवृत्तमाधिदैवतमिति।

स एव जीवन्नपि मुक्तो भवति यो न प्रमाद्यति स्वशरीरेऽपि।

प्रमाणैरीश्वरो नैव सिध्यति। न हि तत्रानुमानं सम्बन्धाभावात्।

कार्यनियतपूर्ववर्तित्वं कारणत्वम्। तद्भावभावितदभावाभावि च कार्यम्। यथा बीजमङ्कुरश्च। न तु कार्याभावे कारणाभावः। कारणस्य व्यापकत्वात्कार्यस्य व्याप्यत्वाच्च। कारणाभावे तु कार्याभाव एव। तेन हि कारणादभिन्नमेव कार्यम्। यथोक्तं—

असदकारणादुपादानग्रहणात्सर्वसम्भवाभावात्।
शक्यस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्॥ इति।

इत्थं हि साङ्ख्यं कापिलं मतं सङ्क्षेपेण।

## २. योगदर्शनम्

सेश्वरसाङ्ख्यदर्शनमेव योगदर्शनस्य प्रथमकल्पः। तद्धि हिरण्यगर्भप्रोक्तम्। युज्यते मनोऽनेनेति योगश्चित्तवृत्तिनिरोधः। अस्य हि आस्तिकदर्शनक्रमे द्वितीयं स्थानम्।

हिरण्यगर्भस्त्वनादिपुरुष एव। तेन तस्य स्थितिकाल ऐतिह्यञ्च नैव ज्ञायते। तद्विषय एतावदेव वक्तुं शक्यते यत्सः संहिताकालमभित एवाऽऽसीदिति। कालेन प्रणष्टं योगं भगवान् पतञ्जलिरुज्जहारेति योगदर्शनस्य पातञ्जलदर्शनाभिधेयत्वम्। विषयेऽस्मिन् प्राचीनग्रन्थरूपेण पातञ्जलयोगदर्शनमेव लभ्यते

यद्यपि तत्र तत्र वेदसाहित्ये वैदिकसाहित्ये च योगविषये बहूक्तमस्ति। यथा ऋग्वेदे—

'युञ्जते मन उत युञ्जते धियः' (५।८१।१)।

यथा यजुषि—

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः। (११।१)।
युक्तेन मनसा वयं देवस्य सवितुः सवे। स्वर्ग्याय शक्त्या (११।२)।
युजे वा ब्रह्म पूर्वं.......................(११।५)।

महाभारते गीतायामुक्तं यद्—

'इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्।' इति।

पातञ्जलयोगसूत्रे योगश्चतुर्षु पादेषु विभक्तः समाधि-साधन-विभूति-कैवल्य-भेदेषु। यथैव चिकित्साशास्त्रे रोग-रोगहेतु-आरोग्य-भैषज्यभेदाच्चत्वारः पादा मन्यन्ते तथैवात्रापि बोध्यम्।

तत्र हि समाधिपादे योगलक्षणं चेतसोऽवस्थाननिरूपणं, वृत्तिनिरूपणं, चेतोनिरोधोपायकथनप्रसङ्गेऽभ्यासवैराग्ययोः स्वरूपावधारणं, जपादितदन्तरायनिरासोपायकथनञ्च।

द्वितीये हि साधनपादे क्लेशतन्निरासोपायकथनं, हेयादिव्यूहचतुष्टयनिरूपणञ्च।

तृतीये हि ध्यान-धारणा-समाधीनां निरूपणं, सत्त्वपुरुषयोर्बुद्धिसाम्यावस्थानिरूपणञ्च।

तुरीये हि कैवल्यपादे सिद्धिपञ्चकनिरूपणं कैवल्यस्वरूपावधारणञ्च।

एवं प्रथमे एकपञ्चाशत्, द्वितीये पञ्चपञ्चाशत्, तृतीये पञ्चपञ्चाशत्, चतुर्थे चतुस्त्रिंशत्सूत्राणि प्रथितानि सन्ति।

योगदर्शनस्य प्रणयनकालविषये विदुषां नैकमत्यम्। केचित्तद्वैयाकरणमूर्धन्यस्य पतञ्जलेः कृतिं मत्वा विक्रमपूर्वद्वितीयशतकप्रथितमामनन्ति। केचित्तु योगसूत्रकारं पतञ्जलिं पाणिनिपूर्ववर्तिनं मन्यन्ते। वस्तुतस्तु संस्कृतसाहित्ये षट् पतञ्जलय उपस्थिता दृश्यन्ते—योगसूत्रप्रणेता, चरकसंहितायाः प्रतिसंस्कर्ता, व्याकरणमहाभाष्यप्रणेता, निदानसूत्रनिर्माता, परमार्थसूत्रप्रवक्ता, कोषकारश्च। इतरग्रन्थानां प्रणेता वा प्रवक्ता पतञ्जलिरेक एवापि सम्भवति किन्तु योगसूत्रकारस्तु तद्भिन्न एव प्रतिभाति तस्योपरि व्यासभाष्योपलब्धेः। यदि योगसूत्रप्रणेताऽपि महाभाष्यकार एव मन्येत तदा व्यासस्यावस्थितिर्विक्रम-

समकालीनाः सम्पद्येत येन महाननर्थं उत्पद्येत। अथवा तत्पक्षे योगशास्त्रभाष्यकृद् व्यासः पौराणिकव्यासादर्वाचीनोऽपर एव कल्प्येत तदा तत्सङ्गतिः स्यात्। स्याद्यत्किञ्चित्। वयन्तु स्वविवेकेनैतावदेव मन्यामहे यद्योगसूत्रप्रणेता पतञ्जलिः कपिलसमकालीनो वा तन्निकटवर्त्युत्तरकालिको वा सम्भवति। एतदपि मन्तुं शक्यते यद्व्यासस्मृतिकारो योगसूत्रभाष्यकृच्चैक एव व्यासाभिधः कश्चिद्विचक्षण इति। पतञ्जलिविषये प्रचालितमेकं पद्यमित्थमस्ति—

शब्दानामनुशासनं विदधता पातञ्जलं कुर्वता
भाष्यं राजमृगाङ्कसंज्ञकमिति व्यातन्वता वैद्यके।
वाक्चेतोवपुषां मलाः फणिभृता भर्त्रेव येनोद्धृता-
स्तस्य श्रीरणरङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वलाः॥

योगसूत्रोपरि बह्व्यो विवृतयः सन्ति यासु व्यासकृतभाष्यातिरिक्तं भोजस्य राजमार्तण्डाख्या विवृतिः, भावगणेशस्य योगवृत्तिः, रामानन्दस्य मणिप्रभा, अनन्तपण्डितस्य योगचन्द्रिका, सदाशिवेन्द्रस्य योगसुधाकरः, नागेशस्य लघुवृत्तिः बृहद्वृत्तिश्च, राघवानन्दस्य पातञ्जलरहस्यं, वाचस्पतिमिश्रस्य तत्त्ववैशारदी, विज्ञानभिक्षोर्योगवार्त्तिकम्, हरिहरानन्दस्य भास्वती, चेति विवृतयो लभ्यन्ते। अस्योपरि कृष्णवल्लभाचार्यभाष्यमपि लभ्यते।

योगसूत्रातिरिक्तं स्पष्टरूपेणोल्लेखनीयं साहित्यं योगसाहित्ये नैव ज्ञातम्।

योगदर्शनस्येदमेव सारं यद्योगश्चित्तवृत्तेर्निरोधेन चेतसः समाहितत्वम्। अस्य हि संसारहेतुः मोक्षः मोक्षहेतुश्चेति चत्वारो व्यूहा भवन्ति। तत्र हि दुःखबाहुल्यात्संसारो हेयः, द्रष्टृदृश्ययोः पुरुषप्रधानयोः संयोगो हेयहेतुः, उक्त-संयोगस्यात्यन्तिकनिवृत्तिर्हानं, सम्यग्दर्शनञ्च हानोपाय इति तत्सिद्धिः। तत्रापि अतीतव्यतिक्रान्तमेव वर्तमानं भोगारूढं क्षणान्तरे एवातीतभावि इति अनागतदुःखमेव त्याज्यं भवति। तदेव क्लेशास्पदं तस्यात्यन्तनिवृत्त्यर्थमेव योगः। तेनैवोक्तं—'हेयं दुःखमनागतम्' इति समनुष्ठितो योगो मलादिपरि-हारकः। उक्तमेव—

लघुत्वमाहार्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवञ्च।
गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति॥

योगस्याष्टौ अङ्गानि—यम–नियम–आसन–प्राणायाम–प्रत्याहार–धारणा–ध्यान-समाधिभेदात्। तत्र अहिंसा–सत्य–अस्तेय–ब्रह्मचर्य–अपरिग्रहाः यमा। तत्र हिंसा वाक्कायमनोभिः प्राणिनामपीडनम्। अस्यामेव हि सर्वाणि व्रतान्यधिष्ठि-तानि। अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः। सत्यं हि ऋता वाक्।

सत्यप्रतिष्ठायाममोघा वाक्। अस्तेयं परकीयद्रव्येष्वस्पृहा। अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्। ब्रह्मचर्यं विषयास्मरणम्। अपरिग्रहोऽनावश्यकवस्त्वसङ्ग्रहः। यम्यन्ते इन्द्रियाणि विषयेभ्यो नियन्त्रणविषयीक्रियन्ते इति यमाः।

पञ्चैव नियमाः शौच-सन्तोष-तपः-स्वाध्याय-प्रणिधानानि। तत्र शौचं बाह्याभ्यन्तरशुद्धिः। बाह्यशौचं स्नानादिनाऽऽहारशुद्धेश्च। आभ्यन्तरञ्च मदमात्सर्यलोभादित्यागेन। सन्तोषः आवश्यकताधिकवस्तुनोऽनुपादित्सा। तपः शीतोष्णादिद्वन्द्वाप्रभावित्वेन व्रताचरणम्। स्वाध्यायो वेदादीनामध्ययनम्। ईश्वरप्रणिधानं भगवति कर्मार्पणं तत्कर्तृत्वसमर्पणञ्च।

स्थिरसुखमासनम्। तच्च पद्म-भद्र-स्वस्तिकादिभेदेन बहुविधम्। तच्च नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्।

श्वासप्रश्वासनिरोधः प्राणायामः। स च पूरककुम्भकरेचकात्मकः। तपो न परमं प्राणायामात्। यथोक्तं—

निरोधाज्जायते वायुर्वायोरग्निर्हि जायते।
तापेनापो हि जायन्ते ततोऽन्तः शुध्यते त्रिभिः॥
तथा चर्म तथाऽनङ्गा दोषा अभ्यन्ति घर्मतः।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात्॥

ध्यानं हि वृत्त्यन्तराव्यवहितत्वेनैकस्मिन्नेव लक्ष्ये मनसोऽवधारणम्। तत्रैव लक्ष्यस्यापि त्यागः समाधिः। चित्तैकाग्रताः धारणा।

अभ्यासवैराग्ययोः योगसिद्धिः। ईश्वरजीवप्रकृतीनां त्रैतत्वम्। तत्र प्रकृतिः कर्त्री जीवो भोक्ता ईश्वरो द्रष्टा च। तत्रेश्वरः क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः। तेन पुरुषो जीवः पुरुषविशेषश्चेश्वरः। आद्यः क्षरोऽपरोऽक्षरः।

हिरण्यगर्भोऽस्य मतस्य प्रथमः प्रवक्ता महर्षिः पतञ्जलिश्चास्य सूत्रप्रणेता। महर्षिर्व्यासश्चास्य भाष्यकृत्, वाचस्पतिमिश्रो व्याख्यातेति तस्य परमोत्कर्षहेतवः।

## ३. वैशेषिकदर्शनम्

वैशेषिकदर्शनं सर्वेषामेव न्यायपूर्वोत्तरमीमांसादिदर्शनानां पाणिनीयतन्त्रमिव सकलशास्त्रोपकारकं परमपुरुषार्थोपयोगि च। तत्रभवान् कणादः स्वतपसा परितुष्टेन परमेश्वरेण उलूकरूपं धृत्वा समुपदिष्टपरमार्थसत्त्वो दशलक्षणात्मकं वैशेषिकशास्त्रं प्रणिनाय। यथोक्तं—

"योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणमुने नमः ॥"

उलूकरूपधारिणा महेश्वरेणोपदिष्टत्वाद् दर्शनमिदमौलूक्यनाम्नापि प्रसिद्धम् । केषाञ्चिन्मते तु कणादस्यैवोलूक इति नामान्तरमित्यपि मन्यन्ते । विशेषसंज्ञकस्य पदार्थस्यापूर्वतया स्वीकारादेवास्य वैशेषिकमिति नाम । इदमेव आन्वीक्षिकी तर्कशास्त्रमिति च कथ्यते । प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणं तथा प्रवर्तत इति आन्वीक्षिकी । तर्क्यन्ते प्रतिपाद्यन्ते पदार्था इति तर्कास्तेषां शास्त्रं तर्कशास्त्रम् ।

न्यायवैशेषिकयोः कतरः प्राचीन इति विषये पण्डितास्त्रिविधं मतमनुवर्तयन्ति–न्यायो वैशेषिकात्प्राचीनतरः, वैशेषिको न्यायात्प्राचीनतरः, उभयोः समानकालिकत्वञ्च ।

मनुस्मृतौ 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणञ्च विद्या एताश्चतुर्दश ॥' इत्युक्तौ वैशेषिकस्य न्यायविस्तरे एवान्तर्भावनात् न्यायो वैशेषिकात्प्राचीनतर इति केचित् । यत्र तत्र 'कणादन्यायमतयोः' इत्युल्लेखात् वैशेषिके पदार्थानां यत् षड्विधत्वमुक्तं तस्यैव षोडशपदार्थरूपेण न्याये विस्तरात् वैशेषिकस्य न्यायापेक्षया प्राचीनत्वमित्यपरे ।

शिवस्य सप्तविंशतितमावतारस्य सोमशर्मणः अक्षपादः कणाद इति द्वौ शिष्यौ अभूताम् । तौ च न्यायवैशेषिकाऽऽख्यं शास्त्रद्वयं व्यरचयाताम् । इदञ्च शास्त्रद्वयं माहेश्वरमिति वायुपुराणीयकथामनुसृत्येतरे उभयोः समकालीनत्वं मन्यन्ते ।

वस्तुतस्तु प्रकरणदृष्ट्या वैशेषिक एव न्यायात्प्राचीनतरः । कणादोऽस्याद्यः प्रवक्ता । तस्य च वैशेषिकसूत्रमिति ग्रन्थः सम्प्रति समुपलभ्यते । कालविमर्शकास्तं विक्रमपूर्वद्वितीयशतकभवं मन्यन्ते । किन्तु रामायणकाले एव ख्यातलब्धेर्गौतमान्मेधातिथेः शतानीकपितुरपि पूर्ववर्ती कणादः कथं पाणिन्यनन्तरमायातीति नेदं मतं विश्वासभूमिः । अपरञ्च न वयं षट्पदार्थवादिनो वैशेषिकादिवत् ( १।२५ ) न षट्पदार्थनियमस्तद्बोधान्मुक्तिः ( ५।८५ ) षोडशादिष्वप्येवम् ( ५।८६ ) इति षडध्याय्यामुल्लेखात् तस्या अपि प्राचीनतरत्वमस्य सिध्यति । तेन कणादस्य समयः कपिलहिरण्यगर्भादिसमकालिक एव दृश्यते अर्थात् विक्रमपूर्वसहस्राब्दीमभितो वा ततोऽपि प्राचीनतर इति ।

वैशेषिकसूत्राणां बह्व्यष्टीकाः समुपलभ्यन्ते । प्रशस्तपादभाष्यं व्योमशिवाचार्यस्य व्योमवती टीका, श्रीधराचार्यस्य न्यायकन्दली, उदयनाचार्यस्य न्याय-

किरणावली, वल्लभाचार्यस्य लीलावती चास्य प्रसिद्धा वृत्तयः। तथैव शङ्कर-मिश्रस्योपस्करः, जयनारायणस्य कणादसूत्रवृत्तिः, चन्द्रकान्तस्य वैशेषिकभाष्यं च।

अत्र हि दश अध्यायाः सप्तत्युत्तरत्रिशतसूत्राणि च। प्रत्यध्यायं द्वे आह्निके इति विंशत्याह्निकानि।

निःश्रेयसमस्य मुख्यत्वेन प्रतिपाद्यविषयम्। तच्च द्रव्यगुणकर्मसमवाय-सामान्यविशेषानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानादेव। जीवात्मा ज्ञानस्वरूप एव न तु ज्ञानगुणकः। परमात्मा तु तद्विलक्षण ईश्वरः। जीवात्मा सुखदुःखादि-विषयी, परमात्मा तु शुद्धः। तत्त्वज्ञानेन मिथ्यावासना निवर्तते ततश्च प्रवृत्ते-रेवाभावात्कर्मणामपि नितान्तमभावः सम्पद्यते। ततश्च यः सुखदुःखापगमः स एव मोक्ष इति शास्त्रस्यास्य रहस्यमिति।

अत्र द्रव्यगुणकर्मसामान्यविशेषसमवायाः षट् पदार्थाः। तत्र पृथिव्यादीनि नवैव द्रव्याणि। रूपादयश्चतुर्विंशतिगुणाः। गमनादि पञ्चैव कर्माणि। नित्यत्वे सत्यनेकसमवेतत्वं सामान्यम्। सामान्यप्रतिकूलो विशेषः। प्रत्ययहेतुः सम्बन्धः समवायः। चत्वारि प्रमाणानि प्रत्यक्षानुमानोपमानशब्दभेदात्। इति सङ्क्षेपतो वैशेषिकदर्शनम्।

## ४. न्यायदर्शनम्

इदमुच्यते यन्न्यायदर्शनं विचारशीलस्य मानवस्य नितान्तमेवोत्कृष्टतमं चिन्तनम्। स्वसम्मतसिद्धान्तान् दृढीकर्तुं विरोदधृभ्य आत्मानं ज्ञातुमपि न्यायः सर्वौषधिरेव। तेनैवेदं—

"प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता॥"

इति। प्रमाणैरर्थपरीक्षणं न्यायः नीयन्ते विवक्षितार्था येनेति वा नियन्त्यनेनेति प्रापणार्थकान् नीधातोः 'अध्यायन्यायोद्यावसंहाराधारावायाश्च' (पा० ३।३।१२२) इति घञन्तनिपातनाद्। वा न्यायः पन्था नियमेन ईयते इति नि+इधातोः 'परि-न्योर्नीणोर्द्यूताभ्रेषयोः' (३।३।३७) इति अचोऽपवादत्वेन घञि। एतद्विदुषां मतम्। वयन्तु नियमेन आप्यते अनेन इति नि+इ+णिच्+पुंसि 'संज्ञायां घः प्रायेण' इति घप्रत्ययं मन्यामहे। अस्याशयश्च 'प्रतिज्ञाहेतूदाहरणोपनय-निगमनात्मकपञ्चावयववाक्यमिति।

अस्य च प्रयोजनं वेदविरोधितर्कनिरसनोपयिकं वैदिकसिद्धान्तरक्षणोप-योगिप्रमाणादिप्रतिपादनमेव। तेनेदं शास्त्रं प्रमाणशास्त्रं तर्कशास्त्रञ्चोच्यते

आन्वीक्षिकी च। तत्र प्रमीयते विश्वमनेनेति प्रमाणं तस्य शास्त्रं, तर्क्यन्ते प्रमाविषयीक्रियन्तेऽर्था इति तर्कास्तेषां शास्त्रं, अनु पश्चात् ईक्षा पर्यालोचना प्रयोजनमस्या इति अनु+ईक्षा+ठञ्+ङीष्। अस्या अर्थस्तु—

आत्मवेदनशीलत्वादन्वीक्षणपराऽथवा ।
अन्वीक्षां कुरुते यस्मात्तस्मादान्वीक्षिकी मता ॥

प्रत्यक्षपरोक्षाभ्यामीक्षितस्यार्थस्य अनु पश्चादीक्षणमन्वीक्षा साप्रयोजनं यस्याः सा आन्वीक्षिकीति।

अक्षपादः सोमशर्मशिष्योऽस्याद्यः प्रवक्ता। मेधातिथिर्गौतमः शतानीकतातोऽहल्यापतिरस्य प्रथमः सूत्रकारः। वात्स्यायनमते तु अक्षपाद एव न्यायसूत्रकारो गौतमः। यत उक्तम्—

"योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम्।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ॥"

इति। तस्य च कृतिर्न्यायसूत्रमिति प्रसिद्धा। वात्स्यायनोऽस्य प्रथमो भाष्यकारः पक्षिलस्वामीत्यपरपर्यायः। इयं धारा प्रमाणद्वारा प्रमेयसाधनपरा प्राचीनन्यायशब्देन व्यपदेश्या। अत्रैवापरा प्रमाणविवेचनपरा गङ्गेशाचार्य( वि० १२५० ) प्रतिपादिता नव्यन्यायपदेन व्यपदेश्या अवच्छेदकावच्छेद्यसंज्ञिता च। गौतममनु वात्स्यायन ( न्यायसूत्रभाष्यकर्ता ) उद्द्योतकर( न्यायवार्तिककर्ता )--वाचस्पति न्यायसूचीप्रणेता)जयन्तभट्ट(न्याय-मञ्जरीकारः)उदयनाचार्य( लक्षणावलीप्रणेता प्रभृतयोऽस्य प्राचीनधाराया आचार्याः। तथैव गङ्गेशाचार्य( तत्त्वचिन्तामणिकर्ता) पक्षधर(आलोककर्ता)वासुदेव-रघुनाथ ( विलक्षणदीधितिकर्ता )मथुरानाथ( गूढार्थप्रकाशिनीकर्ता )जगदीश( जागदीशी शब्दशक्तिप्रकाशिकाप्रणेता )गदाधर( गादाधरीकर्ता ) विश्वनाथ( भाषापरिच्छेद-न्यायसिद्धान्तमुक्तावलीकर्ता )प्रभृत्याचार्या नव्यन्यायसम्बद्धाः। षोडशपदार्थानां सप्तस्वेवान्तर्भावनं, प्रमाणानां मूलङ्कषं विवेचनं, सन्दर्भग्रन्थप्रणयनम्, अवच्छेदकावच्छिन्नादिप्रयोगश्च नव्यन्यायस्य वैशिष्ट्यानि। प्रमेयनिमित्तकप्रमाणानां प्रमेयनिरपेक्ष्यविवेचनमेवास्य कृशः पक्षः। अतेथैषां सङ्क्षेपेण विवरणी प्रस्तूयते।

**न्यायसूत्रम्** – मेधातिथिगौतमप्रणीतत्वेन ख्यातोऽयं ग्रन्थो न्यायशास्त्रस्य प्रथम आलोकः। अस्य प्रणयनकालमधिकृत्य पण्डिता विवदन्ते। केचिन्मेधातिथिं विक्रमपूर्वद्वितीयशतकभवं मन्यन्ते मनुस्मृतेर्वर्तमानोपलब्धरूपे तस्य भाष्योपलब्धेः। केचित्तु मनुस्मृतिभाष्यकारं मेधातिथिं न्यायसूत्रकारान्मेधातिथेः पृथगेव मन्यन्ते। केचित्तं न्यायसूत्रकारं गौतमधर्मसूत्रकारेण सह संयोजयन्ति।

तत्र प्रथमं मतं तु नैवोपादेयं यतो मनुस्मृतेर्बहुकालपूर्वमेव न्यायसूत्रं न केवलं प्रणीतमासीदपितु तस्य तावान्प्रचारोऽप्यासीद्येन न्यायविस्तरे साङ्ख्यवैशेषिकादिमतान्यपि समन्तर्भावितान्यासन्। तेन स्पष्टमेवैतद्यन्मनुस्मृतिभाष्यकारो मेधातिथिर्न्यायसूत्रकारादन्य एव। धर्मसूत्रकारेण सह तस्य संयोजनं तु निषेद्धुं न तथा सामान्यं तयोः शैलीसामान्ययोपपत्तोः। तथामते सति न्यायसूत्रप्रणयनकालश्च वैशेषिकसूत्रेण सह सकालत्व भजते। स्यादेतदपि। द्विजेन्द्रनाथो यथार्थवक्ता प्रतीयते यदा स कथयति यन्न्यायदर्शनस्य प्रादुर्भावः प्रायशो वर्षाणां सहस्रद्वयीमत्येति। विक्रमपूर्वपञ्चमशतकादारभ्याद्यपर्यन्तं न्यायदर्शनस्य विमला धाराऽनवच्छिन्नप्रवाहेण प्रवहन्ती आस्ते। इति।

गौतमन्यायसूत्रे पञ्चाध्यायाः दशाह्निकानि, प्रकरणानि ८४, सूत्राणि ५२८, पदानि १९६, अक्षराणि ८३८५ च। अभिधेयप्रयोजनसम्बन्धः प्रमाणलक्षणं, प्रमेयलक्षणं, न्यायपूर्वाङ्गलक्षणं, न्यायप्रकरणमिति प्रथमाध्याये, प्रथमाह्निके, कथालक्षणं हेत्वाभासलक्षणं, छललक्षणं, पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणमिति द्वितीयाध्याये, द्वितीयाह्निके, संशयपरीक्षा, प्रमाणसामान्यपरीक्षा, प्रत्यक्षपरीक्षा, अनुमानपरीक्षा, वर्तमानपरीक्षा, उपमानपरीक्षा, शब्दसामान्यपरीक्षा, इति द्वितीयाध्यायस्य प्रथमाह्निके, चतुष्टुपरीक्षा, शब्दानित्यत्वं, शब्दपरिणामः पदार्थनिरूपणञ्चेति द्वितीयाध्यायस्य द्वितीयाह्निके, इन्द्रियव्यतिरिक्तात्मविवेकः, शरीरव्यतिरिक्तात्मविवेकः, प्रासङ्गिकं चक्षुरद्वैतं, मनोव्यतिरेकप्रकरणं, नित्यताप्रकरणं, शरीरपरीक्षा, इन्द्रियपरीक्षा, अर्थपरीक्षा, इति तृतीयाध्यायस्य प्रथमाह्निके, बुध्यनित्यता, क्षणभङ्गः, बुद्धेरात्मगुणत्वं, बुद्धेरुत्पन्नापवर्गित्वं, शरीरगुणव्यतिरेकः, मनःपरीक्षा इति तृतीयाध्याये द्वितीयाह्निके, प्रवृत्तिदोषसामान्यपरीक्षा, दोषत्रैराश्यं, प्रेत्यभावपरीक्षा, शून्यतोपादानम्, ईश्वरोपादानता, आकस्मिकत्वप्रकरणं, सर्वानित्यत्वनिराकरणं, सर्वनित्यत्वनिराकरणं, सर्वपृथक्त्वनिराकरणं, सर्वशून्यतानिराकरणं, सङ्ख्यैकान्तवादः, फलदुःखापवर्गपरीक्षा चेति चतुर्थाध्यायस्य प्रथमाह्निके, तत्त्वज्ञानोत्पत्तिः, अवयवावयविविवेकः निरवयवप्रकरणम्, अङ्गनिराकरणं, तत्त्वज्ञानविवृद्धिरिति चतुर्थाध्यायस्य द्वितीयाह्निके, प्रतिपक्षदेशनाभासः, साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसभादिजातिषट्कविवेचनं, प्राप्त्यप्राप्तियुगनद्धवाहि विकल्पोपक्रमजातिद्वयनिरूपणम्, अनुपत्तिसमप्रकरणं, संशयसमप्रकरणं, प्रकरणसमप्रकरणं, हेतुसमप्रकरणम्, अर्थापत्ति-विशेष-उपपत्ति-उपलब्धि-अनुपलब्धि-अनित्य-कार्य-समप्रकरणानि, षट्पक्षीरूपकथाभासः, इति पञ्चमाध्यायस्याद्ये आह्निके, प्रतिज्ञाहेत्वन्यन्तराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणं, निग्रहस्थानचतुष्कप्रकरणं, स्वसिद्धान्तानुरूप

प्रयोगाभासनिग्रहस्थानत्रिकप्रकरणं, पुनरुक्तनिग्रहस्थानप्रकरणम्, उत्तरविरोधिनि ग्रहस्थानचतुष्कप्रकरणं, दोषनिरूप्यमतानुग्रहादिनिग्रहस्थानत्रिकप्रकरणं, कथकान्योक्तिनिरूप्य निग्रहस्थानद्वयप्रकरणम्, इति पञ्चमाध्यायस्य द्वितीयाह्निके वर्ण्यविषयाः।

**न्यायभाष्यम्**—पक्षिलस्वाम्यपराभिधवात्स्यायनप्रणीतम्। अस्य च कालो विक्रमानन्तरप्रथमशतकमितः। अत्र हि गौतम-सूत्राणि विवेचितानि सन्ति।

**न्यायवार्तिकम्**—विक्रमानन्तरसप्तमशतकभवत्वेनानुमितस्य उद्द्योतकरस्य पाशुपताचार्यापराभिधस्य कृतिरियं दिङ्नागाचार्येण बौद्धेन कृतस्य न्यायभाष्यस्य खण्डनस्य खण्डनपरा भाष्यमण्डनपरा च। अस्य च धर्मकीर्तिना बौद्धेन खण्डनं कृतम्।

**न्यायवार्तिकतात्पर्यटीका**—विक्रमानन्तरनवमशनकभवेन वाचस्पतिमिश्रेण प्रणीतेयं टीका धर्मकीर्तिखण्डनन्यायवार्तिकमण्डनपरा।

**तात्पर्यपरिशुद्धिः**—विक्रमानन्तरदशमशतकभवस्योदयनाचार्यप्रणीतोऽयं ग्रन्थोऽपि बौद्धमतखण्डनपूर्वकं तात्पर्यटीकामण्डनपरः।

अस्यैव हि **आत्मतत्त्वविवेकः, किरणावली, न्यायपरिशिष्टं, न्यायकुसुमाञ्जलिः** च प्रसिद्धा न्यायग्रन्थाः।

**न्यायमञ्जरी**—विक्रमानन्तरैकादशशतकपूर्वार्द्धभवस्य जयन्तभट्टस्य कृतिरियं न्यायसूत्रस्य टीका।

एतेन प्राचीनन्यायो व्याख्यातः।

**तत्त्वचिन्तामणिः**—विक्रमानन्तरत्रयोदशशतकभवस्य गङ्गेशोपाध्यायस्य कृतिरियं नव्यन्यायप्रवर्तिका। सिद्धान्तलक्षणमस्यापरा कृतिः।

**तत्त्वचिन्तामण्यालोकः**—विक्रमानन्तरचतुर्दशशतकभवस्य पक्षधरमिश्रस्य कृतिरियम्।

**सार्वभौमनिरुक्तिः**—विक्रमानन्तरषोडशशतकभवस्य वासुदेवसार्वभौमस्य कृतिरियं तत्त्वचिन्तामणिटीका। एतदतिरिक्तं किरणावलीप्रकाशः, न्यायलीलावतीप्रकाशः, खण्डनखाद्याद्यष्टदीधितयः, आख्यातवादः, नञ्वादः, अवच्छेदकनिरुक्तिः, पदार्थतत्त्वनिरूपणं, बौद्धधिक्कारशिरोमणिः च प्रसिद्धा कृतयोऽस्य।

**माथुरी पञ्चलक्षणी**—विक्रमानन्तरषोडशशतकभवस्य कृतिरियं मथुरानाथस्य। अस्य हि तत्त्वचिन्तामणिरहस्यं, तत्त्वचिन्तामण्यालोकरहस्यं, दीधितिरहस्यं, सिद्धान्तरहस्यं, किरणावलीप्रकाशरहस्यं, न्यायलीलावतीप्रकाशरहस्यं, न्यायलीलावतीप्रकाशदीधितिरहस्यं, बौद्धधिक्काररहस्यञ्च नितान्तप्रसिद्धग्रन्थाः।

**जागदीशी**—विक्रमानन्तरसप्तदशशतकभवस्य जगदीशस्य टीका कृतिरियम्। एतदतिरिक्तं शब्दशक्तिप्रकाशिका, न्यायादर्शः, तर्कामृतम्, पदार्थतत्त्वनिर्णयश्चास्य प्रसिद्धा ग्रन्थाः।

**गादाधरी**—विक्रमानन्तरसप्तशततशतकभवस्य गदाधराचार्यस्य टीकाग्रन्थोऽयम्। अस्यैव हि शक्तिवादः, व्युत्पत्तिवादः, विषयतावादः इत्याद्या दश वादान्ता ग्रन्थाः प्रसिद्धाः सन्ति। अस्य हि ६४ मितग्रन्थाः सन्तीति कथ्यते।

**तर्कसङ्ग्रहः**—विक्रमानन्तरसप्तदशशतकोद्भवस्य अन्नम्भट्टस्य कृतिरियम्। तस्यैव तर्कसङ्ग्रहदीपिकादयोऽपि ग्रन्थाः।

**भाषापरिच्छेदः**—विक्रमानन्तरसप्तदशशतकभवस्य विश्वनाथस्य कृतिरियम्। अस्यां हि तस्यैव सिद्धान्तमुक्तावली टीकाऽपि वर्तते। अस्य लक्षणावलीप्रकाशोऽपि विद्वत्सु प्राप्तादरः।

एतदतिरिक्तमपि बहवो ग्रन्थाः सूत्रव्याख्यानपरा निबन्धात्मकाश्च दृष्टा वा अदृष्टाः सन्ति येषामत्र सङ्ख्यानं नैव सम्भवि। सामान्यतः श्रीनिवासस्य न्यायसिद्धान्ततत्त्वामृतं, जानकीनाथस्य न्यायसिद्धान्तमञ्जरी, महादेवस्य न्यायकौस्तुभः, सिद्धसेनदिवाकरस्य न्यायावतारः, शङ्करमिश्रस्य वादिविनोदः, आनन्दघोषाचार्यस्य प्रमाणमाला, रामशास्त्रिणः पञ्चलक्षणीसर्वस्वं, गङ्गासहायस्य न्यायप्रदीपः, भासर्वज्ञस्य न्यायसारः, योगीन्द्रानन्दस्य न्यायभूषणम्, चित्रधरस्य प्रमाणविनोदः, शशधराचार्यस्य न्यायसिद्धान्तप्रदीपः, वरदराजस्य तार्किकरक्षा, केशवमिश्रस्य तर्कभाषा, शिवादित्यस्य सप्तपदार्थी, जगदीशस्य तर्कामृतं, सुन्दराचार्यस्य तर्कपद्यरत्नावली, वेणीदत्तस्य पदार्थमण्डनं, लौगाक्षिभास्करस्य तर्ककौमुदी, एते चान्ये च बहवो मौलिका निबन्धाष्टीका ग्रन्थाश्च दृष्टिपथमागताः सन्ति।

टीकाकृत्सु रामरुद्रः, दिनकराख्यो महादेवश्च नितान्तमेव प्रख्यातौ स्तः। तयोर्भाषापरिच्छेदस्य तर्कसङ्ग्रहस्य च तत्तदाख्या टीका पाठकानां प्रिया।

प्रमाणादिज्ञानादेव निःश्रेयसप्राप्तिः, परमाणुकारणतावादः, सुखदुःखात्मकमनोवृत्योर्नाशे मनसः साम्यावस्था, न यत्र सुखं न दुःखं सैव मुक्तिः, ईश्वरोऽनुमानगम्यः इति न्यायस्य प्रधानः सन्देशः।

## ४. मीमांसादर्शनम्

भारतीयास्तिकदर्शनेषु मीमांसादर्शनस्य प्रमुखं स्थानम्। मीमांसायाः लक्ष्यं धर्मविषयप्रतिपादनमेव। अतो हि मीमांसकाः कर्मवादिनः। ते हि

खलु कर्म एव कर्मफलप्रदातृ मन्यन्ते। अत्र हि वेदेषु तद्व्याख्याभूतब्राह्मणग्रन्थेषु, तदङ्गभूतसूत्रग्रन्थेषु च यान्येव वचनानि याज्ञिकप्रक्रियादृष्ट्या अस्पष्टानि सन्दिग्धानि च तेषां शङ्कासमाधानपूर्वकं स्पष्टीकरणं कृतमस्ति। तथैवात्र या खलु कर्मकाण्डेऽनुचितरूढयः प्रचलिता आसन्, तेषां न्याय्यस्वरूपस्य च प्रतिपादनं कृतमस्ति। यश्च यत्र कुत्र वेदविरुद्धप्रतिपादकांशः समाविष्टस्तस्य च युक्त्या निराकरणमपि कृतमस्ति। एतद्धि वैदिककर्मकाण्डसमर्थकमतिप्राचीनं दर्शनम्। एतदनुसारेण कर्मणैव हि अभ्युदयनिःश्रेयसप्राप्तिः। कर्मजनितमपूर्वमेव कर्मफलप्रदम्। उक्तमेव—

धर्मे प्रमीयमाणे तु वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥

जिज्ञासार्थे मानधातोः 'मानवधदानशान्भ्यो दीर्घश्चाभ्यासस्य' इति सनि सिद्धान्मीमांसशब्दात् 'अ प्रत्ययात्' इति अप्रत्यये टापि च सिद्धो मीमांसाशब्दो विचारार्थे प्रयुक्तः। शब्दोऽयमस्मिन्नेवार्थे संहिताब्राह्मणादावपि प्रयुक्तः। तेनैवैतत्परीक्षाशास्त्रं न त्वनुशासनम्। शास्त्रं हि प्रवृत्तिनिवृत्त्यन्यतरपरम्। मीमांसा तु प्रवृत्तिपरकशास्त्रम्। एतद्धि—

कर्तव्यं श्रुतितो विदन्ति मनुजाः कृत्वा लभन्ते सुखं
निर्दुष्टा श्रुतिरेव मानमपरं तत्सम्मतं मन्यते।
मुक्तौ साधनमिष्टकामरहितं कर्माग्निहोत्रादिकं
नो ईशो न च चित्तवृत्तिरमला ज्ञानं न मीमांसकः॥

तदिदं वेदोक्तकर्मविवेचनापरं मीमांसाशास्त्रमपि संहितावदनादिकालादेव प्रवृत्तम्। तत्र तत्र संहितासु ब्राह्मणग्रन्थेषु च मीमांसाशब्दस्यासकृत्प्रयोगो दृश्यते। यथा तैत्तीरीयायाम् 'उत्सृज्यां नोत्सृज्यामिति मीमांसन्ते ब्रह्मवादिनः' इति। तथैव ताण्ड्ये ब्राह्मणं पात्रे न मीमांसन्ते इति (६।५।९) तथैव कौषीतकीब्राह्मणे उदिते होतव्यमनुदिते होतव्यमिति मीमांसन्ते (२।९), तथा च शतपथे..............सोऽएषा मीमांसैवेतरं त्वेव क्रियते (४।१।१।१६) इत्यादि।

तदेतद् यत्र तत्र व्यस्तत्वेन स्थितं मीमांसाशास्त्रं प्रथमं भगवता जैमिनिना द्वादशभिरध्यायैर्गुम्फितं द्वादशलक्षणीत्यपि प्रसिद्धम्। तत्र प्रत्यध्यायञ्चत्वारः पादास्तृतीयषष्ठदशमाध्यायेषु तु अष्टौ पादा इति सर्वे सम्भूय षष्टिसङ्ख्याकाः पादाः। तत्रापि प्रतिपादं कतिपयान्यधिकरणानि इति जैमिनीयशास्त्रमशीत्यधिकनवशताधिकरणेषु विभक्तमस्ति। अधिकरणञ्च विषय-विशय-पूर्वपक्ष-उत्तर-पक्ष-निर्णयेतिपञ्चाङ्गपूर्णम्। यथा अवेष्टयधिकरणम्। मीमांसायाः भागोऽयं पूर्वमीमांसा वा कर्ममीमांसेत्यपि शब्द्यते। वेदान्तापरनामधेयाया उत्तरमीमांसाया

पूर्वंभवत्वाद्वा संहितायां पूर्वपूर्वंभागसम्बद्धत्वादपि पूर्वमीमांसा, कर्मकाण्ड-विषयविशेषप्रतिपादनात्कर्ममीमांसेत्यपि।

पूर्वमीमांसा द्वादशाध्यायात्मिका अन्तरा चत्वारोऽध्याया सङ्कर्षसंज्ञका वा सङ्कर्षणाभिधाः प्राय उपेक्षिताः अन्तिमाश्चत्वारोऽध्यायाः ब्रह्ममीमांसा वा वेदान्त इति संज्ञिताः। ब्रह्ममीमांसासम्बद्धाध्याया व्यासप्रणीता इत्युच्यन्ते। यजुर्वेदेऽयमेव क्रमो दृश्यते यथा प्रथममेकोनचत्वारिंशदध्यायेषु कर्मविधि-र्गुम्फितोऽन्तिमेऽध्याये ब्रह्मज्ञानम्। यथोक्तं प्रपञ्चहृदयाऽऽख्येऽज्ञातकर्तृके ग्रन्थे उपाङ्गप्रकरणे —

'अथेदानीमुपाङ्गानि मीमांसान्यायपुराणधर्मशास्त्राणीह प्रदर्श्यन्ते। तत्र मीमांसाशास्त्रमशेषवेदार्थनिर्णयपरं वाक्यार्थविचारमुखेन पुरुषार्थशेषतया। तत्र शिक्षाव्याकरणनिरुक्तैर्वेदिते वेदार्थे किमिदानीमशेषवेदार्थनिर्णयपरं मीमांसा-शास्त्रमिति प्रदर्शितम्। नायं दोषः, वेदार्थस्य द्वैविध्यात् पदार्थवाक्यभेदेन। तत्र पदार्थपरिज्ञानमेवात्र प्रदर्शितम्। इदानीं पुरुषार्थशेषतया मीमांसाशास्त्रमन्तरेण वाक्यार्थनिर्णयाभावात् तदर्थमिदमारभ्यते। तत्र साङ्गोपाङ्गस्य वेदस्य पूर्वोत्तर-काण्डसम्भिन्नस्याशेषवाक्यार्थविचारणपरं मीमांसाशास्त्रम्।

तदिदं विंशत्यध्यायनिबद्धम्। तत्र षोडशाध्यायनिबद्धं पूर्वमीमांसाशास्त्रं पूर्वकाण्डस्य धर्मविचारपरायणं जैमिनिकृतम्। तदन्यदध्यायचतुष्कमुत्तर-मीमांसाशास्त्रमुत्तरकाण्डस्य ब्रह्मविचारपरायणं व्यासकृतम्। इति।

तदिदं मीमांसाशास्त्रं ब्रह्मा प्रजापतये प्रोवाच सोऽपीन्द्राय सोऽप्यादित्याय स च वसिष्ठाय सोऽपि पराशराय पराशरः कृष्णद्वैपायनाय सोऽपि जैमिनये। केचित्तु मीमांसां महेश्वरप्रोक्तामपि कथयन्ति।

जैमिनीयसूत्राणि कदा प्रथितानीत्यपि नैव स्पष्टं निर्णीतमधुनाऽपि। केचिज्जैमिनिं विक्रमपूर्वपञ्चमशताब्दीभवं मन्यन्ते केचित्तु तत्पूर्वमष्टमशतक-भवमपि। पुराणेषु तु 'साम्नां जैमिनये प्राह' इत्याद्युक्त्वा जैमिनिं व्यासशिष्य-त्वेन परिगणितं दृश्यते। सामवेदसम्बद्धो जैमिनिर्मीमांसासूत्रकृज्जैमिनिश्चैक एव वा भिन्न इति न शक्यते तत्त्वतो निर्णेतुम्। यद्येक एव मन्यते तदा तस्य स्थितिकालः कृष्णद्वैपायनेन सहैव सम्भवति। स च विक्रमपूर्वत्रिसहस्रवर्षमभितः पतति यतो द्वापरकलिसन्धिकाले तस्य स्थितिर्निश्चिता। सम्प्रति कलेः अशीत्यधिकपञ्चसहस्रमिता अब्दा व्यतीताः। विक्रमादपि पञ्चचत्वारिंशदधिक-द्विसहस्रमिता हायना व्यतीता इति ५०८० मितेषु २०४५ मितानां सन्धानात् ३०३५ अवशिष्यते। तेन कलिगतपञ्चत्रिंशदधिकत्रिसहस्रवर्षेषु विक्रमो भुव-मलञ्चकारेति स्पष्टमेव। यदा कदापि जातः स्यात्सः, जैमिनिस्तु आर्षयुग-

स्यान्तिम आचार्यो मीमांसायाश्चान्तिमः प्रवक्ता। युधिष्ठिरमीमांसकेन यो भारतीयकालविभागः कृतः सः सर्वेषामपि मननीयो दृश्यते। तदनुसारेण कलिपूर्वंषट्सहस्रपूर्वं देवयुगं, तदनन्तरं चतुःसहस्रवर्षमृषियुगं यत्र हि दैवयुगोपार्जिता महती परम्परा व्याख्याता शिष्यप्रशिष्येभ्यः। ततश्च चतुःसहस्रवर्षं मुनियुगं यत्र हि प्राचीनग्रन्थानां भाष्याणि प्रणीतानि। ततश्च सहस्रवर्षमितमाचार्ययुगं यत्र हि ग्रन्थानां व्याख्या प्रारब्धा। ततश्च पण्डितयुगं यत्र हि प्राचीनशास्त्राणामुपेक्षा स्वपाण्डित्यप्रदर्शनमनर्गलमतविमतप्रस्थापनञ्च वैशिष्ट्यानि। 'पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्' इत्यस्य युगस्य घोष इति।

तत्र विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिसंज्ञितं भाष्यं बोधायनेन कृतम्। बोधायनस्तु धर्मसूत्रकार एव वा तदितर इति तु नैव निर्णेतुं शक्यते तथापि एक एवेति पक्षस्य तुला गुर्वी कल्पते। तस्य बाहुल्यमवेक्ष्य किञ्चिदुपेक्ष्योपवर्षाचार्येण सङ्क्षिप्तं तद्भाष्यम्। उपवर्षाचार्यस्तु महानन्दकाले पाटलीपुत्रेऽवात्सीदिति कथासरित्सागरतो ज्ञायते। तदपि देवस्वामिना पुनरतिसङ्क्षिप्तं कृतम्। देवस्वामिन ऐतिह्यं नाद्यापि ज्ञातम्। एवमेव भवदासाख्येन विदुषाऽपि जैमिनीयसूत्रोपरि भाष्यं कृतम्। सम्प्रति तु दैवतकाण्डात्मकभागे एव देवस्वामिनो भवदासस्य च भाष्यं समुपलभ्यते किन्तु उपवर्षाचार्यस्य भाष्यस्य तु यत्रतत्रोल्लेख एव। एवमेव व्यासभर्तृमित्रभर्तृहरिप्रभृतीनामपि मीमांसासूत्रोपरि भाष्यमासीदिति श्रूयते किन्तु न नयनपथं गतमद्यापि।

तदित्थं विंशत्यध्यायनिबद्धं मीमांसाशास्त्रं त्रिषु काण्डेषु विभक्तं कर्मकाण्डं प्रथमाध्यायादारभ्य द्वादशाध्यायपर्यन्तं, दैवतकाण्डं त्रयोदशाध्यायादारभ्य षोडशाध्यायपर्यन्तम्, अध्यात्मकाण्डं सप्तदशाध्यायादारभ्य विंशाध्यायपर्यन्तम्। इत्थं परस्परविरुद्धयोरपि ज्ञानकर्मकाण्डयोर्मुनिद्वयेन समहान् सामञ्जस्यः स्थापितोऽत्र।

भाष्यकारेषु विक्रमानन्तरतृतीयशतकभवः शवरस्वामी अन्तिमः। तेन हि द्वादशलक्षण्यामेव भाष्यं कृतम्। शवरस्वामी हि स्वभाष्ये स्वपूर्ववर्तिन उपवर्षदेवस्वामिभवदासप्रभृतीन् बहुवारमुद्धरति। देवताकाण्डस्य च सङ्कर्षेण भाष्यं कृतम्। ब्रह्मकाण्डस्य तु भगवत्पाद-ब्रह्मदत्त-भास्करादिभिर्भाष्यं प्रणीतमस्ति स्वस्वमतानुगम्। अत्रैव रामानुजाचार्यस्य श्रीभाष्यमपि दृश्यते। शावरभाष्यञ्च कुमारिलभट्टपादैः प्रभाकरगुरुणा च द्विधा व्याख्यातं भट्टपादैर्भावनापरत्वेन प्रभाकरगुरुणा च नियोगपरतया।

मीमांसाशास्त्रमपि प्रमाणप्रमेयविचारपरं यत्र वेदाः प्रमाणं पुरुषार्थश्च प्रमेयः। तदेतावलम्ब्य द्वादशलक्षणी प्रवृत्ताऽस्ति यत्र प्रथमेऽध्याये विध्यर्थवाद-मन्त्रस्मृतिनामधेयार्थकस्य शब्दराशेः प्रामाण्यं, द्वितीये कर्मभेदोपोद्घात-प्रमाणापवादप्रयोगभेदरूपोऽर्थः, तृतीये श्रुतिलिङ्गवाक्यादिविरोधप्रतिपत्तिकर्मा-नारभ्याधीतबहुप्रधानोपकारकप्रयाजादियाजमानचिन्तनं, चतुर्थे प्रधानप्रयोजकत्वा-प्रधानप्रयोजकत्वजुहूपर्णतादिफलराजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्ता, पञ्चमे श्रुत्यादिक्रमतद्विशेषवृद्ध्यवर्द्धनप्राबल्यदौर्बल्यचिन्ता, षष्ठे अधिकारितद्धर्मद्रव्यप्रति-निध्यर्थलोपनप्रायश्चित्तसत्रदेयवह्निविचारः, सप्तमे प्रत्यक्षवचनातिदेशेषु नाम-लिङ्गातिदेशविचारः, अष्टमे स्पष्टास्पष्टप्रबललिङ्गातिदेशापवादविचारः, नवमे ऊहविचारारम्भसामोहमन्त्रोहतत्तत्प्रसङ्गागतविचारः, दशमे बाधहेतुद्वारलोप-विस्तारबाधकारणकार्यैकत्वग्रहादिसामप्रकीर्णनञर्थविचारः, एकादशे तन्त्रो-पोद्घाततन्त्रावापतन्त्रप्रपञ्चनावापप्रपञ्चनचिन्तनानि, द्वादशे प्रसङ्गतन्त्रनिर्णय-समुच्चयविकल्पविचारश्चेति वर्ण्यविषयाः।

जैमिनितः समारभ्य वाचस्पतिपर्यन्तं मीमांसाग्रन्थानां प्रवक्तृव्याख्यातृ-प्रणेतृविचक्षणानामेका सुदीर्घा महती परम्परा विद्यते। जैमिनितः पूर्वमपि एतादृश्येव सुदीर्घा परम्पराऽसीदिति सूत्रोद्धृतप्रवक्तृनामतो ज्ञायते। तत्र हि ब्रह्म-महेश्वर-प्रजापति-इन्द्र-आदित्य-पराशर-व्यासा जैमिनिपूर्ववर्तित्वेन गृह्यन्ते। एवमेव आत्रेय–आलेखन–आश्मरथ्य–ऐतिशायन–औडुलोमि–कामुकायन–काशकृत्स्नादयो मीमांसासूत्रेष्वेवोल्लिखिताः सन्ति। तथैव कार्ष्णाजिनि-वादरि-लावुकायन-पराशर-वादरायणाश्च तत्र तत्र स्मृताः। जैमिनिपूर्ववर्तित्वेन स्मृतास्तु शास्त्रप्रवक्तृत्वेन सम्मता एव, तेषां कृतिस्तु नैवोपलभ्यते किन्तु तदुत्तरवर्तिनां कृतयोऽपि नयन-पथमायान्ति। बोधायन–उपवर्ष-देवस्वामि–भवदास–शबरस्वामिसङ्कर्षणाः पूर्वमीमांसाभागस्य भगवत्पाद-ब्रह्मदत्त-भास्कराचार्य-वाचस्पतिप्रभृतय उत्तर-भागस्य भाष्यकाराः। एवमेव कुमारिलभट्ट-प्रभाकर-मुरारिमिश्रास्त्रयो भाष्यव्याख्यातारः पार्थसारथि-माधवाचार्य-विश्वेश्वरभट्ट-खण्डदेव-अप्पयदीक्षित-आपदेव-नारायणतीर्थाश्च भाट्टमतसमर्थका व्याख्यातारः प्रबन्धकर्तारश्च। शालिकनाथ-नन्दीश्वराद्याः प्रभाकरमतानुगाः। मुरारिस्त्वेक एव। गागाभट्ट-रामकृष्णभट्ट-वाचस्पतिप्रभृतयश्च मीमांसाशास्त्रानुवर्तिनः।

अथ च केषाञ्चिदेव प्रधानत्वेन मतानां प्रकरणग्रन्थानामत्र सङ्क्षेपेण परिचयो दीयते।

**शावरभाष्यम्**—विक्रमपूर्वद्वितीयशतकभवस्य शबरस्वामिनः कृतित्वेन प्रसिद्धमिदं भाष्यं द्वादशलक्षणीव्यापकम्। समुपलब्धभाष्येषु प्राचीनतममिदं भाष्यम्। भाष्यमेवेदमनुवृत्य पश्चाद्वर्तिमीमांसासाहित्यं प्रचलति।

**श्लोकवार्तिकम्**—विक्रमसमकालीनस्य तत्प्राग्वर्तिनः कुमारिलभट्टस्य कृतिरियं शावरभाष्यव्याख्या। इयञ्च प्रथमाध्यायस्य प्रथमपादेन सम्बद्धा।

**तन्त्रवार्तिकम्**—तस्यैव कृतिरियं गद्यपद्यात्मिका भाष्यस्य प्रथमाध्यायस्य द्वितीयपादादारभ्य तृतीयाध्यायव्यापिनी व्याख्या।

**टुप्टीका**—इयञ्च तस्यैव कृतिर्भाष्यस्य शेषभागव्याख्या गद्यात्मिका सङ्क्षिप्ता च।

श्लोकवार्तिकोपरि **उम्बेकस्य** तात्पर्यटीका, **जयमिश्रस्य शर्करिका, सुचरितस्य काशिका** च प्रसिद्धाष्टीकाः। तथैव पार्थसारथेर्न्यायरत्नाकरश्च।

तथैव तन्त्रवार्तिकोपरि सोमेश्वरभट्टस्य ( वि० १५५० ) न्यायसुधा टीका लभ्यते।

एवमेव टुप्टीकोपरि पार्थसारथेः तन्त्ररत्नं नाम टीका पञ्चस्वध्यायेषु विभक्ता दृश्यते। ग्रन्थोऽयं द्वयोर्भागयोर्विभक्तः।

**लघ्वी-बृहतीटीका**—कुमारिलसमकालीनेन प्रभाकरमिश्रेण प्रणीतेयं शावरभाष्यस्य टीका।

लघ्वीटीकाया शालिकनाथस्य ऋजुविमलाव्याख्या, बृहत्तीटीकोपरि तस्यैव दीपशिखा टीका च लभ्येते।

मुरारेस्तु मतानुसारिग्रन्थोऽद्यापि नैव दृष्टः श्रुतो वा।

एवमेव मीमांसाशास्त्रे शावरभाष्यातिरिक्तमप्यनेका वृत्तयश्च प्रणीता श्रूयन्ते तत्र मीमांसापादुका-मीमांसाकौस्तुभ-कुतुहलवृत्ति-सुबोधिनी-प्रभृतयो-वृत्तयः प्रसिद्धाः। ताश्च यथा--

**मीमांसापादुका**--इयं वेङ्कटनाथस्य कृतिः जैमिनिसूत्रेषु वृत्तिः।

**मीमांसाकौस्तुभः**—ग्रन्थोऽयं जैमिनिसूत्राणां प्रथमाध्यायस्य द्वितीयपादादारभ्य तृतीयाध्यायस्य तृतीयपादपर्यन्तं विस्तृता व्याख्या। अयं विक्रमानन्तरं १६३१-१७२२ मितहायनवर्तिनः खण्डदेवस्य कृतिः।

**कुतुहलवृत्तिः**—अयं वासुदेवदीक्षितस्य कृतिः!

**सुबोधिनी**—अयं शितिकण्ठपण्डितप्रणीतो जैमिनिसूत्राणां वृत्तिग्रन्थः, एतदतिरिक्तं मीमांसामधिकृत्य बहवोऽधिकरणप्रधानव्याख्याग्रन्थाश्च प्रणीता दृश्यन्ते। ते च यथा —

**शास्त्रदीपिका**—पार्थसारथिप्रणीतोऽयं ग्रन्थो मीमांसादर्शने प्रामाणिकग्रन्थेष्वन्यतमः। अयं भाट्टमतावलम्बकः। अत्र हि रामचन्द्रस्य सिद्धान्तचन्द्रिका,

सोमेश्वरस्य कर्पूरवार्तिकम्, सोमनाथस्य मयूखमालिका च टीकाग्रन्थाः। एवञ्च सुदर्शनाचार्यस्य सुबोधटीका च।

**जैमिनीयन्यायमाला**—माधवाचार्य (वि० १३५४-१४४३) प्रणीतोऽयं ग्रन्थो जैमिनीयसूत्राणां सारविवेचकः। अयमपि तावत्स्वेवाध्यायेषु विभक्तः। अत्र हि ग्रन्थकारस्यैव न्यायमालाविस्तराख्या टीका लभ्यते।

**मीमांसाकौस्तुभः**—खण्डदेवस्य कृतिरियं तथैव।

**भाट्टदीपिका**—तस्यैवायमपि ग्रन्थस्तथैव। अत्र हि शम्भुभट्टस्य **प्रभावली**, भास्करस्य **भाट्टकल्पतरुः**, कुट्टिशास्त्रिणो **भाट्टचिन्तामणिः**, रामशास्त्रिणः **प्रभावली**, नारायणभट्टस्य **नयोद्द्योतश्च** टीकाग्रन्थाः।

एवमेव मीमांसामधिकृत्य बहवः प्रकरणग्रन्थाश्च प्रणीता दृश्यन्ते। तेषु—शालिकनाथस्य (८४७) **प्रकरणपञ्चिका**, मण्डनमिश्रस्य (८२) **मीमांसानुक्रमणिका, भावनाविवेकः विधिविवेकश्च** तदुपरि वाचस्पतिमिश्रस्य **न्यायकणिका** व्याख्या, भवनाथस्य **नयविवेकः**, भवदेवस्य **तौतातितमततिलकम्**, नन्दीश्वरस्य **प्रभाकरविजयः**, गागाभट्टस्य (१६०७) **भाट्टचिन्तामणिः**, राघवानन्दस्य (१६५७) **भाट्टसङ्ग्रहः**, अप्पयदीक्षितस्य (१६००) **विधिरसायनम्**, आपदेवस्य (१६८७) **मीमांसान्यायप्रकाशः**, अस्योपरि अनन्तदेवस्य **मीमांसान्यायप्रकाशवृत्तिः**, लौगाक्षिभास्करस्य (१६९७) **अर्थसङ्ग्रहः** तदुपरि अर्जुनमिश्रस्य, शिवयोगिनश्च तट्टीकाः, रामेश्वरभिक्षोः **अर्थसङ्ग्रहकौमुदी** च, शङ्करभट्टस्य (१७५७) मीमांसाबालप्रकाशः, कृष्णयज्वनः **मीमांसापरिभाषा**, नारायणभट्टस्य भाट्टभाषाप्रकाशिका, वाचस्पतेः **मीमांसादर्शनविमर्शः**, मीमांसान्यायप्रकाशोपरि अनन्तदेवस्य **भट्टालङ्कारटीका**, वासुदेवस्य **प्रभा**, चिन्नस्वामिनः **सारविवेचिनी**, कृष्णनाथस्य **अर्थदर्शिनी** टीका च समुल्लेखनीयाः। एतादृशा ज्ञाता इतरेऽज्ञाताश्च मीमांसासम्बद्धा भाष्यग्रन्थाः सूत्रवृत्तिग्रन्थाः अधिकरणप्रधानव्याख्याग्रन्थाः प्रकीर्णग्रन्थाश्च शतशो विलसन्ति यैर्मीमांसाशास्त्रस्य प्राशस्त्यं प्रामाणितमस्ति।

मीमांसायाः प्राधान्येन प्रतिपाद्यो विषयो वेदविहितकर्मानुष्ठानमेव। वेदस्यापौरुषेयत्वं मीमांसायाः पूर्वाधारः। मीमांसका ईश्वरविषये तादृश्यमेवानुसरन्ति। तन्मते देवता मन्त्रमयी भवति न तु विग्रहवती, सर्वोऽपि वेदः क्रियापरः, सुखाप्तिरेव स्वर्गः सुखञ्च वेदोक्तकर्मानुष्ठानादेव, क्रियान्वितत्वे एव शब्दशक्तिः, कर्म वा मोक्षः, सर्वमपि ज्ञानमेव प्रमा, आत्मा तु स्थूलशरीराद्भिन्नः परमार्थनित्यः, ब्रह्मात्मैक्यज्ञानेन मुक्तिः, अपूर्वः कर्मफलयोजकः।

तत्र प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धयः इति भाट्टमते षडेव प्रमाणानि। प्रभाकरमतेऽनुपलब्धिर्नैव प्रमाणम्। जगदिदं वास्तविकं न खल्वाभासमात्रम्। संयुक्तं संयुक्ततादात्म्यरूपञ्चेति सन्निकर्षद्वयम्। भाट्टमते जातिगुणकर्मणां द्रव्यैः सह तादात्म्यसम्बन्धः। तन्मते प्रतिज्ञा, हेतुर्दृष्टान्त इत्यवयवत्रयमेव। सादृश्यज्ञानमेवोपमानम्। शाब्दप्रमाणं सर्वातिशायि। तच्च पौरुषेयापौरुषेयभेदेन द्विविधम्। शब्दश्च नित्यस्तस्य चार्थेन सहौत्पत्तिकः सम्बन्धः। कञ्चिन्नदेवार्थमवलम्ब्यैव शब्दः प्रवर्तते। अर्थादापद्यते या साऽर्थापत्तिः। अनुपलब्धिरभावः। स्वतः प्रमाणत्वमेव मीमांसकानां प्रामाण्यवादः। भोगायतनं भोगसाधनानि भोगविषयाश्चेति त्रयः पदार्थाः। तत्र दृश्यं हि जगन्नित्यम् प्रपञ्चसम्बन्धविलय एव मोक्षः। तदित्थं मीमांसकाः प्रायः सर्वेष्वेव विषयेषु स्वानुकूलं दृष्टिकोणमवलम्बन्ते। तेषां हि मुख्यं प्रयोजनं धर्मप्रतिपादनमेव। तेनैव हि 'अथातो धर्मजिज्ञासा' इति प्रथमं सूत्रमस्य।

## ५. वेदान्तदर्शनम्

"यत्सत्तया जगत्सर्वं भाति यद्ज्ञानतोऽखिलम्।
तदेकं शाश्वतं ब्रह्म सच्चिदानन्दमाश्रये॥"

वेदान्तो नाम वेदानामवसानभागोऽर्थात् वेदप्रतिपाद्यज्ञानमेव। अस्यापि योनिर्वेदसंहिते। अस्य द्वितीयविकासो ब्राह्मणेषु पूर्णविकासश्चोपनिषत्सु दृश्यते। मन्त्रब्राह्मणारण्यकोपनिषत्सु तत्र तत्र व्यस्तान् ब्रह्मज्ञानसम्बद्धविषयानादाय तत्र स्वानुभवञ्च संयोज्य भगवता वादरायणेन 'अथातो ब्रह्मजिज्ञासा' इत्यारभ्य 'अनावृत्तिशब्दादनावृत्तिः शब्दात्' इत्यन्तैः सूत्रैः ब्रह्मसूत्राभिधो ग्रन्थः प्राणायि। वेदान्त एवोत्तरमीमांसाशब्देनापि व्यवह्रियते। यथाऽधीतयज्ञादीनां निष्कामानां मुमुक्षूणां मोक्षोपायत्वेन ब्रह्मजिज्ञासां विधापयत्युत्तरमीमांसा।

ब्रह्मसूत्रप्रणेता बादरायणः पाराशर एवेति केचिन्मयेन्त अपरे तु तं बादरिवंश्यं पराशरपुत्राभिन्नमेवामनन्ति। बादरिशब्दादगोत्रापत्येऽर्थे एव फक् भवति इञन्तत्वात् 'यञिञोश्च' इत्यादिना। बादरिश्च बदरस्यापत्यमिति अदन्तत्वादिञ्प्रत्ययेन सिध्यति। तेन बदर ( बादर ) बादरि-बादरायणशब्दाश्च क्रमशोऽनन्तरापत्यगोत्रापत्यबोधकाः। वस्तुतस्तु जैमिनिर्व्यासशिष्यः स च पूर्वमीमांसाकारो व्यासश्च तदुत्तराङ्गभूतब्रह्मसूत्रकार इति मनने न तथाऽस्माकमपि चेतः प्रसीदति। केचित्तु 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' इति पाणिनिसूत्रमादृत्य ब्रह्मसूत्रं भिक्षुसूत्रादभिन्नं मत्वा बादरायणं पाराशर्यादभिन्नं मन्यन्ते। किन्तु स्वयं पाराशर्यशब्दोऽपि गोत्रापत्ये एव सिध्यति 'अनृष्यानन्तर्ये'

इत्यनुवृत्तेः। व्यासस्तु पराशरस्यानन्तरापत्यं तेन पाराशर्यशब्दो न व्यासावबोधकः। अनन्तरापत्यविवक्षायां तु ऋष्यणैव भवितव्यमिति जयादित्योऽपि। यदि गोत्ररूपाध्यारोपेण तत्साध्यतेऽपि तथाविधस्य द्रविडप्राणायामस्य कोऽर्थः सूत्रे पाराशरशब्दस्यापि प्रयोगोऽपि न कदापि दूष्यति। रामो जामदग्न्य इति तु नितान्तमपाणिनीय एव। न च ब्रह्मसूत्राणां भिक्षुमात्रपरकत्वं सिध्यति तानि तु 'ब्रह्मविदाप्नोति परं' 'तरति शोकमात्मविद्' इत्यादिवचनानुसिक्तानि ब्रह्मज्ञानपरायणपराणि। नाऽत्र काचिद्राजाज्ञा यद्भिक्षुरेव ब्रह्मपरायणो भवति। गृहस्थोऽपि जनको ब्रह्मविदामुत्तम आसीत्। सर्वेऽपि महर्षयः सपत्नीका एवासन् वसिष्ठाद्याः। ब्रह्मविदां मूर्द्धन्यो याज्ञवल्क्यो द्विपत्नीक आसीत्। अपरञ्च श्रीमद्भगवद्गीतायामपि सूत्राण्येतानि ब्रह्मसूत्रपदेनैव स्मृतानि। एतेन पाराशर्यकृतभिक्षुसूत्राणां ब्रह्मसूत्रेभ्यः पृथगेवास्तित्वं व्यज्यते।

ब्रह्मसूत्राणां कर्ता बादरायण इति तु सर्वैः स्वीक्रियते कामं सः कृष्णद्वैपायन एव स्यादथवा तद्भिन्नः कश्चिदपरः। तत्प्रणयनकालमादायाऽपि विचक्षणा बेभिद्यन्ते। केचित्तत्प्रणयनं विक्रमपूर्वषष्ठशतकमभितः सम्भवतीति मन्यन्ते। इदन्तु परमं विस्मयस्थानमत्र यत्र एव ब्रह्मसूत्रं वेदव्यासकृतमपि मन्यन्ते तत्प्रणयनकालञ्च विक्रमपूर्वषट्शतकपर्यन्तमित एवापि आमनन्ति। सम्भवति तैस्तथा व्यासं चिरञ्जीविनं मत्वा चिन्तितं स्यात्। एतावत्तु स्पष्टमेव यद्ब्रह्मसूत्राणां प्रणयनं जैमिनिसूत्राण्यनु सञ्जातमिति। ब्रह्मसूत्रेष्वेव 'परं जैमिनिर्मुख्यत्वात्' इत्युल्लेखात्। केचित्तु तमपि बादरायणस्य प्रधानं शिष्यं मन्यन्ते किन्तु जैमिनिर्व्यासशिष्यो न तु बादरायणस्य तस्य हि जैमिनेरवरकालिकत्वात्। जैमिन्यतिरिक्तमन्येऽपि आत्रेय-आश्मरथ्य-औडुलोमि-कार्ष्णाजिनि-काशकृत्स्नाश्च बादरायणेन स्वपूर्ववर्त्याचार्यत्वेन स्मृताः सन्तिः किन्तु तेषामवस्थितिकालविषये नाद्यापि किञ्चिज्ज्ञायते। तेषु हि बहुचर्चितः काशकृत्स्नः। स हि वैयाकरणरूपेण मीमांसकरूपेण च ख्यातः। तं हि वैयाकरणमृक्प्रातिशाख्ये शौनकः स्मरतीति तस्य प्राचीनत्वे प्रमाणम्। निष्कर्षरूपेणैतावदेव मन्तुं शक्यते यत्ब्रह्मप्रतिपादकसूत्राणि तु परम्परारूपेण प्रचलितान्यासन् यानि च सङ्गृह्य बादरायणाख्येन विपश्चिता सङ्घटितानि इति।

ब्रह्मसूत्रं हि चतुर्षु अध्यायेषु विभक्तम्। प्रत्यध्यायं चत्वारः पादाः। सूत्रसङ्ख्या तु निश्चयेन सङ्ख्यातुं नैव शक्येत भाष्यकारैः पृथक्पृथक् सङ्ख्यया निर्दिष्टत्वात्।

अस्य च ब्रह्मसूत्रस्यानेके भाष्यकाराः सन्ति यैः खलु स्वस्वाभिप्रायानुसारेण स्वस्वसम्प्रदायानुकूला व्याख्या तस्य कृताऽस्ति। तेषाञ्च सङ्क्षिप्तं विवरणमत्र प्रस्तूयते—

| भाष्यकारः | तत्स्थितिकालः अनुमानितः | भाष्यनाम | सम्प्रदायः | व्याख्यात-सूत्राणि | प्रवर्तितमतम् |
|---|---|---|---|---|---|
| शङ्कराचार्यः | केषाञ्चिन्मते विक्रम-पूर्वः, केषाञ्चिन्मते तदनन्तरषष्ठशती वा नवमशती | शारीरकभाष्यम् | अद्वैतः | ५५५ | |
| भाष्कराचार्यः | वि० ११०० | भाष्करभाष्यम् | भेदाभेदमतम् | ५४७ | |
| रामानुजाचार्यः | वि० १२०७ | श्रीभाष्यम् | विशिष्टाद्वैतमतम् | ५४५ | श्रीवैष्णवम् |
| मध्वाचार्यः | वि० १२९५ | पूर्वप्रज्ञभाष्यम् | द्वैतमतम् | ५६२ | वैष्णवम् |
| निम्बार्काचार्यः | वि० १३०७ | वेदान्तपारिजात-भाष्यम् | द्वैताद्वैतमतम् | ५४९ | वैष्णवम् |
| श्रीकण्ठाचार्यः | वि० १३२७ | शैवभाष्यम् | शैवविशिष्टाद्वैत-मतम् | ५४५ | शैवमतम् |
| श्रीपतिः | वि० १४५७ | श्रीकरभाष्यम् | वीरशैवविशिष्टा-द्वैतमतम् | | शैवमतम् |
| बल्लभाचार्यः | वि० १५५७ | अणुभाष्यम् | शुद्धाद्वैतमतम् | ५५५ | वैष्णवम् |
| विज्ञानभिक्षुः | वि० १६५७ | विज्ञानामृतभाष्यम् | अविभागाद्वैतमतम् | ५५६ | साङ्ख्यमतम् |
| बलदेवाचार्यः | वि० १७८२ | गोविन्दभाष्यम् | अचित्यभेदाभेद-मतम् | ५५६ | वैष्णवम् |
| ब्रह्मानन्दसरस्वती | | वेदान्तसूत्र-मुक्तावली | | | |
| मुक्तानन्दस्वामी | | ब्रह्मसूत्रभाष्यम् | | | |

**( क ) अद्वैतमतम्—**

आत्मब्रह्मणोरैक्यसमर्थकत्वेनाद्वैताभिधेन ख्यातमिदं मतं प्रथमं तु गौडपादाचार्येण माडूक्यकारिकायां संस्थापितं ततश्च शङ्कराचार्येण शाङ्करशारीरकभाष्ये

तस्योन्नयनं कृतम्। तदनु शङ्करानुयायिभिः सुरेश्वराचार्य-पद्मपादाचार्य-वाचस्पतिमिश्र-नित्यबोधाचार्य-श्रीहर्ष-चित्सुखाचार्य-विमुक्तात्मा-विद्यारण्य-अप्पयदीक्षित-मधुसूदनसरस्वतीप्रभृतिविचक्षणैर्मतमिदं व्याख्यातं प्रचारितञ्च। मतस्यास्य मुख्यो विषयो जीवात्मनोरैक्यस्थापनमेव। मतमिदं 'सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन' 'ब्रह्मसत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः' 'इन्द्रो मायाभिः पुरुरूप ईयते' इतिप्रभृतिश्रुतिमाश्रित्य एकमपि कूटस्थं नित्यं ब्रह्म माययाऽनेकधा विभाव्यत इति प्रतिपादयति। अविद्योपहते ब्रह्मणि नामरूपे संसारस्वरूपे सम्भवतः। तेन ब्रह्मणो द्वैरूप्यं सगुणं निर्गुणञ्च पराऽपरसंज्ञकम्। सगुणं नामरूपविकारभेदोपाधिविशिष्टं निर्गुणं तु सर्वोपाधिविवर्जितम्। ब्रह्म एव चैतन्यमयस्तदितरस्तु जडप्रपञ्चः। स च चैतन्यरूपब्रह्मसन्निधानेन जडोऽपि चेष्टते किन्तु प्रपञ्चस्यास्य ब्रह्मविवर्तत्वादस्य चेतनत्वं नित्यत्वं नैव भजते। ब्रह्मण एव स्वचैतन्यप्रधानतया निमित्तत्वं स्वोपाधिप्रधानतयोपादानत्वमिति। सामान्यदृष्टौ तु सर्वोऽपि विषयो ज्ञातृज्ञेयभेदेन द्विनिबन्धनस्तयोश्च सत्तापार्थक्यमपि। किन्तु अद्वैतवादिनां मते तु तयोरभेदो यतः ज्ञेयभूतस्य प्रपञ्चस्य पारमार्थिकसत्ताभावात्। प्रपञ्चस्य तु केवलं व्यावहारिक्यंव सत्ता। न हि कार्यरूपो घटः कारणरूपां मृत्तिकामन्तरेण क्षणमपि सत्तामवलम्बते। यथा हि भूतभवद्भविष्यदाद्युपाध्यवच्छिन्नस्यापि कालस्यैक्यं वा प्राचीप्रतीच्याद्युपाध्यवच्छिन्नाया दिशश्चैक्यं तथैव जीवात्मपरमात्मनोरपि। दृश्यं जगदिदं तस्यैवादृश्यस्य प्रतिभानमेव न तु पृथक्सत्ताकमिति आत्मनोऽद्वैतत्वम्। तेन निरुपाधिरात्मैव ब्रह्म सोपाधिकं ब्रह्मैवात्मेति तयोरद्वैतत्वम्। माया हि अविद्यैव। सा चेतरविलक्षणा काऽपि ब्रह्मणः शक्तिः। सा हि—

"सदप्यसत्यप्युभयात्मिका नो
भिन्नाऽप्यभिन्नाप्युभयात्मिका नो।
साङ्गाऽप्यनङ्गाऽप्युभयात्मिका नो
मायाऽद्भुताऽनिर्वचनीयरूपा ॥"

इति निरूपिता ब्रह्मशक्तिरेव चराचरं जगत्प्रसूते। निर्विशेषं ब्रह्मैवेश्वरः। स चैको जगतो निमित्तकारणमुपादानकारणञ्च। चैतन्यपक्षाश्रयणे स जगतो निमित्तकारणं मायोपाधिकपक्षावलम्बने तु उपादानकारणमेव। जगदिदं तस्यैव लीलाविलासमात्रम्। यथोर्णनाभिः जालं सृजते गृह्णाति च तथैव सोऽपि जगतः प्रभवस्थितिलयहेतुः। तत एव विश्वं प्रवर्तते तत्रैवैकनीडमपि भवति।

अन्तःकरणावच्छिन्नं चैतन्यं हि जीवः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसम्बन्धी। तत्त्वतो ब्रह्मैवोपाधिसम्पर्काज्जुषते जीवभावम्। तेन जीवो ब्रह्मणः

प्रतिबिम्बमेव नान्यः। तदिदं जगद् ब्रह्मणो मायया प्रभूतं ब्रह्मणश्च विवर्त-स्वरूपम्। कारणसलक्षणोऽन्यथाभावः परिणामस्तद्विलक्षणो विवर्त इति। इदमित्थं ज्ञेयं--कस्यचिदपि स्वरूपेणावस्थितस्य वस्तुनोऽन्यथाभावो द्विप्रकारकः परिणामभावो विवर्तभावश्च। तत्र यथार्थस्वरूपं परित्यज्य स्वरूपान्तरप्राप्तिः परिणामभावो यथा दुग्धस्य दधिभावः। तद्विपरीतं स्वस्वरूपमपरित्यज्यैव स्वरूपान्तरेण मिथ्याप्रतीतिर्विवर्तभावो यथा रज्जौ सर्पस्य मिथ्याभ्रमः। उक्तमेव सतत्त्वतोऽन्यथाप्रथा विकारोऽतत्त्वतोऽन्यथाप्रथा विवर्त इति। तदित्थं जगन्निमित्तं ब्रह्मणो विवर्तभावः सम्भवति न तु परिणामभावः।

स हि गुणातीतं शुद्धं चैतन्यस्वरूपं ब्रह्म अविद्याविजृम्भिताऽध्यासवशात् प्रपञ्चाय प्रवर्तते। अतस्मिंस्तद्बुद्धिरेवाऽध्यासः, अर्थात्तत्पदार्थेऽतत्पदार्थस्यारोपः। वस्तुनि अवस्त्वारोपोऽध्यारोपः; स एवाध्यासः। स चानादिरनन्तश्च। अध्यास-श्चाध्यात्मविद्यया निराकर्तुं सुशकः।

तत्रापि नव्यवेदान्तिनः प्राचीनवेदान्तिभिः शङ्कराचार्यप्रभृतिभिः सह स्वल्पमपि बेभिद्यन्ते खलु। जीवेश्वरयोः स्वरूपं हि प्राधान्येन तेषां वैमत्यस्य कारणम्। शङ्कराचार्येण सगुणब्रह्मण एव जगत उपादानकारणत्वं प्रत्यपादि सर्वज्ञात्ममुनिस्तु सङ्क्षेपशारीरककारो विशुद्धब्रह्मण एवोपादानकारणत्वं मन्यते। तथैव प्राचीना मायामविद्यापरपर्यायां मन्यन्ते नव्यास्तु 'माया शुद्धशक्तिमयी अविद्या तु रजस्तमोमयी' इति मन्यन्ते। नव्याः प्रायेण प्रति-बिम्बवादापेक्षया अवच्छेदवादमेव स्वीकुर्वन्ति। तदनुसारेण एकमेव चैतन्यम-ज्ञानाश्रयेण विषयभेदेन च द्विविधम्, तत्र अज्ञानविषयीभूतश्चैतन्यमय ईश्वरः अज्ञानाश्रयभूतश्चैतन्यमयश्च जीवः। तेनान्तःकरणावच्छिन्नो जीवः अविद्या-वच्छिन्नश्चैतन्यमय ईश्वर इति वाचस्पतिप्रभृतयः। शङ्करादर्वाचीना वेदान्तिनो नव्यविशेषणालङ्क्रियन्ते। तेषु हि—

वेदान्ते हि यदि बादरायणो भगवान् मूर्धन्यः शास्त्रकारः। अद्वैतमतस्य तु गौडपाद-शङ्कराचार्य-वाचस्पतिमिश्रास्त्रिरत्नम्। अथैषां सङ्क्षेपेण परिचयः प्रस्तूयते।

**गौडपादाचार्यः**—गौडपादाचार्यः शङ्करपूर्ववर्ती मतः। तस्य च स्थितिकाल-विषये आचार्या वैमत्यं भजन्ते। केचित्तं विक्रमपूर्वद्वितीयशतकभवं मन्यन्तेऽपरे तु विक्रमानन्तरसप्तमशतकपूर्वार्द्धभवमिति। प्राचीना हि आचार्या स्वावस्थिति-कालविषये किञ्चिदपि सङ्केतनं पापमेव मन्यन्ते स्म स्वप्रख्यापनदोषभिया। द्विजेन्द्रनाथस्तं वैक्रमपूर्वं ६५७ मितसमयभवं निर्दिशति तद्विपरीतं विश्वनाथस्तु तं विक्रमानन्तरसप्तमशतकभवं मन्यते। वयन्तु तस्य माण्डूक्यकारिकामाधारी-

कृत्य तं शङ्कराचार्यस्य निकटपूर्ववर्तिनं मन्यामहे। शङ्कराचार्यविषये तु सर्वाधिक्येन मतभेदो दृश्यते। तं हि द्विजेन्द्रनाथः विक्रमानन्तर ८४५ मितवर्षं-जातं तथैव ८७७ मितवर्षे मुक्तञ्च विभावयति। विश्वनाथस्तमेवानुसरति। किन्तु केचित्तु तं विक्रमसमकालीनमपि मन्यन्ते। वयन्तु तं विक्रमपूर्ववर्तिकाले एवं सञ्जातं मन्यामहे। तथाकथनेऽस्माकमात्मानुभव एव प्रमाणम्। स हि कुमारिलसमकालिक इति किंवदन्त्यपि चात्रास्मांस्तथा प्रवर्तयति। शङ्कर-दिग्विजयेऽप्येवमेव निर्दिष्टं प्रकारान्तरेण। नेपालेषु इयमपि जनश्रुतिः यत्स यदा पाशुपतं क्षेत्रमभ्यगात्तदा तत्र किराताः शास्तार आसन्। तेन हि तत्र बौद्धान् पराजित्य पशुपतेर्मन्दिरस्य पुनरुद्धारः कारित इत्याद्या। तथाविध-कालस्तु विक्रमपूर्वपूर्वमेव समापतति।

**शङ्कराचार्यः**—शिवगुरुनाम्नः पुत्रो गौडपादाचार्यशिष्यस्य गोविन्दभग-वत्पादस्य शिष्योऽयं महामेधावी कदा समुत्पन्न इति तु कल्पनाधीन एव। एता-वदेव ज्ञायते यद्धि तेन उपनिषद्-गीता-ब्रह्मसूत्राख्यप्रस्थानत्रय्या भाष्याणि कृतानि। अयं हि दाक्षिणात्यस्तैत्तिरीयशाखाध्यायी ब्राह्मणः। भाष्यत्रयाति-रिक्तमपि तत्प्रणीतत्वेन बहवो ग्रन्था निर्दिष्टाः सन्ति अनेकानि स्तोत्राणि च। अद्वैतमतमार्तण्डोऽयं माण्डूक्यकारिकाभाष्यं, विष्णुसहस्रनामभाष्यं, सनत्सुजातीय-भाष्यं, सौन्दर्यलहरी चेति प्रभृतिग्रन्थानाञ्च प्रणेतृत्वेन निर्दिष्टः। महामेधा-विनोऽस्य कृते न किञ्चिदपि दुष्करम्। यद्यपि बहुग्रन्थकर्तृत्वमपरेषामपि प्रसिद्धं तथाप्यस्य कर्तृता विलक्षणैव।

**सुरेश्वराचार्यः**—शङ्करानुयायिषु मुख्यतमोऽयं विचक्षणो विक्रमानन्तर ८५७ मितवत्सरमभित आसीदिति विश्वस्यते। तस्य हि नैष्कर्म्यसिद्धिः, मानसोल्लासश्च प्रसिद्धौ ग्रन्थौ यत्र नैष्कर्म्यसिद्धेरनेकाष्टीकाः सन्ति।

**मण्डनमिश्रः**—सुरेश्वराचार्यसमकालिकत्वेन मतोऽसावाचार्यः पाटलीपुत्र-वास्तव्य इति विश्वस्यते। कथ्यते हि महाविचक्षणस्यास्य गृहे कीराङ्गना अपि संस्कृतामेव वाचं वदन्ति स्म। बहुसम्मतस्यास्याचार्यस्य ब्रह्मसिद्धि-भावना-विवेक-विधिविवेक-विभ्रमविवेकादिवेदान्तग्रन्थाः मीमांसानुक्रमणिका च प्रसिद्धाः सन्ति। कथ्यते यन्मीमांसकोऽसावुत्तरकाले शाङ्करमतमवलम्बितवानिति। अन्वर्थनामाऽसौ देववाण्यामण्डनमेव।

**पद्मपादाचार्यः**—मण्डनमिश्रसमकालिकोऽसौ शाङ्करमतावलम्बी सनन्दना-परनामधेयश्चोलदेशीय इति विश्वस्यते। अस्य हि पञ्चपादिका नाम वेदान्तग्रन्थः सुतरां प्रसिद्धः।

**वाचस्पतिमिश्रः**—वाचस्पत्यभिधोऽयमपरवाचस्पतिर्विक्रमानन्तर ८९८ मितवर्षमभित आसीदिति विश्वस्यते। तस्य हि शाङ्करभाष्यस्य भामतीटीका ब्रह्मसिद्धेस्तत्त्वसमीक्षाटीका च सर्वसम्मतौ ग्रन्थौ। एतद्व्यतिरिक्तं तस्य साङ्ख्यकारिकोपरि तत्त्वकौमुदीव्याख्या, योगदर्शनोपरि तत्त्ववैशारदी, न्यायवार्तिकस्य तात्पर्यटीका, मीमांसामधिकृत्य 'न्यायसूचिनिबन्धः', भाट्टनयमधिकृत्य 'तत्त्वविन्दुः', विधिविवेकस्य न्यायकर्णिका' टीका च प्रसिद्धाः। मैथिलो हि सः त्रिरत्नेष्वन्यतमः।

**सर्वज्ञात्ममुनिः**—विक्रमानन्तर ९५७ मितवर्षमभितः समुत्पन्न इति मतस्यास्य सङ्क्षेपशारीरकं प्रसिद्धो ग्रन्थः। अस्योपरि बहवष्टीकाः सन्ति।

**श्रीहर्षः**—विक्रमानन्तरद्वादशशतकान्तिमभागमभितो लब्धजन्मेति सम्मतोऽसौ महाविचक्षणः सर्वास्वपि विद्यासु पारङ्गतः। वेदान्तमधिकृत्य प्रणीतोऽस्य खण्डनखण्डखाद्यनामा ग्रन्थः सर्वातिशायित्वेन प्रसिद्धो यस्योपरि चित्सुखाचार्यस्य तत्त्वप्रदीपिका ( चित्सुखी ) टीका लभ्यते।

**विमुक्तात्मा**—विक्रमानन्तरत्रयोदशशतकोत्तरार्द्धवर्त्यसौ पण्डितोऽपि वेदान्ते बहुकृतपरिश्रमः। अस्य च इष्टसिद्धिः, प्रमाणवृत्तिनिर्णयः च प्रसिद्धौ ग्रन्थौ।

**विद्यारण्यः**—माधवाचार्यापरनामाऽसौ विचक्षणोऽनेकग्रन्थानां प्रणेता। अस्य हि स्थितिकालश्च विक्रमानन्तर १४०७ मितवर्षमभितः सम्मतः। अस्य विवरणप्रमेयसङ्ग्रहः, पञ्चदशी, जीवन्मुक्तिविवेकः सर्वदर्शनसङ्ग्रहश्च प्रसिद्धा ग्रन्थाः।

**अप्पयदीक्षितः**—विक्रमानन्तर १६०७ मितवर्षमभितो लब्धजन्मेति सम्मतस्यास्य महालब्धवर्णस्य द्विसप्तत्यधिका मौलिकाष्टीकाग्रन्थाश्च लभ्यन्ते येषु सिद्धान्तलेशसङ्ग्रहो वेदान्तसम्बद्धः।

**मधुसूदनः**—विक्रमानन्तर १६५७ मितवर्षमभितः स्थितियुतेन विचक्षणेनानेन प्रणीता अद्वैतसिद्धिः परां ख्यातिमुन्नयति। अस्यैव सिद्धान्ततत्त्वविन्दुः, वेदान्तकल्पलतिका च प्रसिद्धौ ग्रन्थौ।

**धर्मराजाध्वरी**—विक्रमानन्तरषोडशशतकोत्तरार्द्धभवस्य धर्मराजध्वरिणो वेदान्तपरिभाषाऽद्वैतवेदान्ते लब्धास्पदा।

**सदानन्दः**—वेदान्तसारस्य कर्ताऽसौ विक्रमानन्तरषोडशशतकीन एव सम्मतः।

एते चान्ये च ग्रन्था मौलिकाष्टीकारूपाश्च सूत्रव्याख्याऽपराः प्रबन्धरूपाश्चाद्वैतोद्याने पुष्पायिताः सन्ति।

**(ख) भेदाभेदमतम्**

मतस्यास्योन्नायको भास्कराचार्यः। मतेऽस्मिन् ब्रह्मणः सदा सगुणत्वमेव न तु निर्गुणत्वमपि। जीवात्मपरमात्मनोः स्वभावतस्त्वभेदत्वम्, तयोः केवलमुपाधिकारणेनैव भेदः। समुच्चिताभ्यां ज्ञानकर्मभ्यामेवाविद्यानिवृत्तिर्यतोऽपवर्गसिद्धिर्नान्यितरेण। तेनासौ भेदाभेदविचाराः ज्ञानकर्मसमुच्चयवाद एव।

भास्कराचार्यस्तु विक्रमानन्तर ८७७ मितवत्सरमभितः स्थितिवानित्यैतिहासिका वदन्ति।

**(ग) विशिष्टाद्वैतमतम्**

ईश्वरस्य चिदचिद्विशिष्टत्वे विश्वस्तमिदं मतं भोक्तृभोग्यनियामकभेदेन व्यवस्थितांस्त्रिविधान् पदार्थान् मन्यते। तत्र चितो जीवाः अचित्तु दृश्यं जगदिति। चित्संज्ञका जीवाः परमात्मनः सकाशाद्भिन्नाः नित्या अणुपरिणामाश्च। अचिच्छब्दवाच्यं दृश्यं जडं जगत् त्रिविधं भोग्य-भोगोपकरण-भोगायतनभेदात्। तस्य कर्तोपादानञ्चेश्वरः पुरुषोत्तमो वासुदेवादिपदवेदनीयः। स च परमकारुणिको भक्तवत्सलः स्वोपासकानुगुणतत्तत्फलप्रदानाय स्वलीलावशात् अर्चाविभवव्यूहसूक्ष्मान्तर्यामिभेदेन पञ्चधाऽवतिष्ठते। तत्र पूर्वपूर्वमूर्त्युपासनया पुरुषार्थप्रतिपन्थिदुरितनिचयक्षये सति उत्तरोत्तरमूर्त्युपासनायामधिकारः सम्पद्यते। तत्र हि—

प्रतिमादिकमर्चा स्यादवतारास्तु वैभवाः।
सङ्कर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः॥
व्यूहश्चतुर्विधो ज्ञेयः सूक्ष्मं सम्पूर्णषड्गुणम्।
तदेव वासुदेवाऽऽख्यं परं ब्रह्म निगद्यते॥
अन्तर्यामी जीवसंस्थो जीवप्रेरक ईरितः।
अर्चोपासनया क्षिप्ते कल्मषेऽधिकृतो भवेत्॥
विभवोपासने पश्चाद् व्यूहोपास्तौ ततः परम्।
सूक्ष्मे तदनु शक्तः स्यादन्तर्यामिणमीक्षितुम्॥ इति।

उपासनञ्च पञ्चविधम्—अभिगमनमुपादानमिज्या स्वाध्यायो योग इति यत्राभिगमनं देवतास्थानमार्गादेः सम्मार्जनोपलेपनादि, उपादानं गन्धपुष्पादिपूजासाहित्यसम्पादनम्, इच्छेति देवतापूजनं, स्वाध्यायो नाम सङ्कीर्तनतत्त्वप्रतिपादकशास्त्रजपः, देवताऽनुसन्धानं योग इति। एवमुपासनाकर्मसमुच्चितेन विज्ञानेन द्रष्टृदर्शने नष्टे उपासकस्य स्वयाथात्म्यानुगुण्यं वासुदेवः स्वपदं प्रयच्छति। उक्तमेव यथा—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
स्वभक्तं वासुदेवोऽपि सम्प्राप्यानन्दमक्षयम् ।
पुनरावृत्तिरहितं स्वीयं धाम प्रयच्छति ॥
नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैव आत्मा वृणुते तनुं स्वाम् ॥ इति ।

निरातिशयानन्दप्रियानन्यप्रयोजनकसकलेतरवैतृष्ण्यवान् ज्ञानविशेष एव भक्तिः । तत्सिद्धिश्च विवेकादिभ्यः । आहारशुद्धेः सत्त्वशुद्धिः सत्त्वशुद्धेर्विमुक्तिरिति ।

ईश्वरो वासुदेवापरपर्याय एव यस्यांशभूतो माथुरो वासुदेव एव जगतः कारणं न तु तदितरपरमाण्वादयस्तत्र हि प्रमाणाभावाच्छ्रुतिविरोधाच्च । प्रमाणं हि त्रिविधं प्रत्यक्षमनुमानं शब्दश्च । केनाऽपि प्रमाणेन परमाण्वादीनां जगत्कारणत्वं न सिध्यति । यच्च कापिलाः प्रधानं जगतः कारणमाहुस्तदपि न युक्तं तत्र चेतनाऽभावादीश्वराधिष्ठाने परिणामासम्भवात् सृष्ट्यादिव्यवस्थानुपपत्तेः । चेतनोऽपि न कारणं तस्य कर्मपरतन्त्रत्वाद् दुःखित्वाच्च । ईश्वरोऽपि स्वेच्छयैव जगतः कारणं न तु मायाऽविद्यादिकर्मपरनियोगात् । तस्य च सङ्कल्पमात्रेण जगदुत्पद्यते न तत्र करणादीनामावश्यकता न चायासः । केवललीलैवास्य प्रवर्तने प्रयोजनम् । संहारोऽपि लीलैव तेनास्य तत्रापि न विरामः । स हि स्वयमेव जगद्रूपेण परिणमति इति उपादानकारणञ्च जगतः । सत्यपि उपादानकारणे स्वरूपस्य विकाराभावात् निर्विकार एव सः । परिणामस्तु विशेषादेवोत्पद्यते । अचेतनस्य परिणामकरणं चेतनस्य शरीरेन्द्रियप्रदानज्ञानविकासकरणञ्च सृष्टिः । सर्वरक्षणकरणं स्थितिः विषयान्तरेषु सक्तानीन्द्रियाणि संहृत्यावस्थापनमेव संहारः । स एव तत्र हेतुः । तत्र अप्राकृतविग्रहाः सङ्कर्षणप्रद्युम्नानिरुद्धवासुदेवा एव मुमुक्षूणां सेव्याः ब्रह्मशिवबुद्धव्यासादयो गौणप्रादुर्भावादहङ्कारयुक्तजीवाधिष्ठातृत्वात्तैरनुपास्याः । इच्छैवावताराणां हेतुः । फलञ्च तस्य साधुरक्षणदुष्टनाशनधर्मसंस्थापनानि । जीवब्रह्मणः विशेषणविशेष्यभावरूपः सम्बन्धः । तयोरंशांशिभावः ।

अचित्खलु ज्ञानशून्यं विकारास्पदं तत्त्वम् । एतच्च नित्यम् । अपितु त्रिविधं शुद्धसत्त्वं मिश्रसत्त्वं सत्त्वशून्यञ्चेति । जीवस्य दुःखत्रयपीडितत्वादीश्वरस्य तथाभावात्तयोर्भेद एव विशिष्टदशायामेव तयोरभेद इति विशिष्टाद्वैतसर्वस्वम् ।

विशिष्टाद्वैतस्य प्रथमो व्याख्याता **रामानुजाचार्यः** रामानुजीवाख्यः। स हि विक्रमानन्तर १०९४ तमवर्षे जात इति केचिदपरे तु तं तत्पूर्ववर्तिनमपि मन्यन्ते। द्रविडमण्डले भूतपुरीवास्तव्यस्य केशवभट्टस्य भार्यायां मत्याख्यायां जातोऽसौ मातुलाद्यादवप्रकाशाल्लब्धविद्योऽद्वैतमतविमुखमतिः स्वयमेव विशिष्टाद्वैतमतं प्रावर्तयत्। तेन च बोधायनकृतब्रह्मसूत्रभाष्यं सङ्क्षिप्य स्वमतानुसारि श्रीभाष्यं ११५७ तमवर्षे पूरितम्। तस्य च वेदान्तसार-वेदान्तदीप-वेदार्थसार-गद्यत्रय-गीताभाष्यादिग्रन्थाश्च प्रसिद्धाः।

तमनु विक्रमानन्तरचतुर्दशशतकीनः सुदर्शनाचार्यः श्रीभाष्योपरि श्रुतप्रकाशिकानाम्नी टीकां प्राणैषीत्। पश्चाच्च वेदान्तदेशिकेन तदुपरि तत्त्वटीका प्रणीता। सम्प्रदायस्यान्ये व्याख्यातारो वेदान्तदेशिकः श्रीनिवासाचार्यः रङ्गरामानुजाचार्य इत्याद्याः।

वेदान्तदेशिको विशिष्टाद्वैते 'वडगलई' इतिप्रसिद्धमतसंस्थापकः। वडगलईमतं हि वादिमतखण्डनपुरस्सरं स्वसिद्धान्तस्थापनायां विश्वसिति। तद्विपरीतं तेङ्गलईमतं लोकाचार्येण प्रवर्तितं रहस्यज्ञानं श्रद्दधाति। वेदान्तदेशिकस्य न्यायसिद्धाञ्जन-तत्त्वमुक्ताकलाप-शतदूषणी-सेश्वरमीमांसा-प्रभृतिग्रन्थाश्च लोकप्रियाः। तेन हि रामानुजगीताभाष्योपरि तात्पर्यचन्द्रिका टीका च प्रणीताऽस्ति। स हि विक्रमानन्तरचतुर्दशशतकीन इति विश्वस्यते।

यतीन्द्रमतदीपिकाकर्ता श्रीनिवासाचार्यः विक्रमानन्तरसप्तदशशतकोत्तरार्द्धंभवः सम्प्रदायस्यास्य बहुमान्य आचार्यः। अमुमेवादाय केचिद् विशिष्टाद्वैतवादिनः स्वनाम्ना सह 'श्रीनिवास' इति पदं संयोजयन्ति। यथा "कमलनयनः श्रीनिवासः"। एवमेव विक्रमानन्तरसप्तदशशतकोत्तरार्द्धंभवो रङ्गरामानुजाचार्यः सम्प्रदायेऽस्मिन् समुल्लेखनीयः। तेन हि रामानुजसम्प्रदायमनुसृत्य उपनिषदां टीका प्रणीताऽस्ति। तस्य च मूलभावप्रकाशिकाऽपि तथा।

मेघनादारिकृता नवप्रकाशिका भाष्यभावबोधनञ्च, वरदनारायणभट्टारककृतं न्यायसुदर्शनं, सुदर्शनस्य श्रुतप्रकाशिका, श्रुतप्रदीपिका च, वेदान्तदेशिकस्य तत्त्वटीका, रङ्गरामानुजस्य मूलभावप्रकाशिका च श्रीभाष्योपरि प्रणीताः काश्चन टीकाटिप्पण्यः। एवमेव पराशरभट्टस्य तत्त्वरत्नाकरः, मेघनादारेः नयद्युमणिः, वरदनारायणस्य प्रजापरित्राणं, वरदाचार्यस्य प्रमेयमाला, प्रपन्नपारिजातः, तत्त्वनिर्णयः, तत्त्वसारश्च, आत्रेयरामानुजस्य न्यायकुलिशं, वेदान्तदेशिकस्य शतदूषणी, अप्पयदीक्षितस्य नवमयूखमालिका, लोकाचार्यस्य तत्त्वत्रयं चेतिप्रभृतिग्रन्था विशिष्टाद्वैतमतप्रचारकाः। द्विविधा हि विशिष्टाद्वैतवादिनः सतिलकचक्राङ्कास्तद्रहिताश्च वस्तुतस्तु विशिष्टाद्वैतमतं वेदान्तदर्शने ध्वज-

वद्विभाति यद्यस्माद्धर्मान्वितोपेक्षिता भवेत्। गौणविभवस्यानुपास्यत्वमेवास्य-विस्तारे प्रतिबन्धकम्। यथार्थंवस्तु मुख्यविभवस्य प्राधान्येनोपास्यत्व-मेवाचार्याणां मतं न तु गौणविभववर्जनपरकत्वमिति। गौणविभवानामपि मुख्यविभवस्यैवांशत्वसिद्धेस्तेषां हेयता न कदापि सम्भवति।

## ( घ ) द्वैतमतम्

द्वैतमतं हि जींवपरमेश्वरयोः सेवकसेव्यभावेन द्वैततां स्वीकरोति नत्व-द्वैतताम्। मतमिदं श्रुतिष्वपि गीतं दृश्यते। यथा 'स कारणं करणाधिपश्च' ( श्वेता० ६।९ ). 'आत्मानमन्तरो यमयति स त आत्मा अन्तर्याम्यमृतः' ( बृह० ३।६।३ ) 'न तं विदाथ य इमा जजान ( माध्य० ) इत्यादि। श्रुत्यादिप्रतिपादितं मतमेवामुं सङ्गृह्य पञ्जकक्षेत्राभिजनेन विक्रमानन्तरत्रयोदशशतकोत्तरार्द्धभवेन पूर्णप्रज्ञ-आनन्दतीर्थापराभिधेन श्रीमता मध्वाचार्येणप्रतिपादितम्। तस्य हि पूर्णप्रज्ञसंज्ञकं ब्रह्मसूत्रभाष्यं प्रसिद्धं यस्योपरि त्रिविक्रमस्य तत्त्वप्रदीप-नाम्नी टीका लभ्यते।

मतेऽस्मिन् जीवः परमेश्वराद्भिन्नः। तयोः कदापि नैकत्वम्। तयोश्च सेवकसेव्यभावसम्बन्धः। अत्र हि प्रत्यक्षं शब्दश्चेति प्रमाणद्वयमेव मतम्। ब्रह्मणोऽपि प्रमाणविषयता सिध्यति। तस्यास्तित्वे शब्दः प्रमाणम्। माध्व-मतस्य सारांशश्चेत्थम्।

तत्र द्रव्य-गुण-कर्म-सामान्य-विशेष-विशिष्ट-अंशि-शक्ति-सादृश्य-अभावा दश पदार्थाः। तत्र द्रव्यं विंशतिधा परमात्म-लक्ष्मी-जीव-अव्याकृताकाश-प्रकृति-गुणत्रय-महत्तत्त्व-अहङ्कारतत्त्व-बुद्धि-मनःसिन्द्रिय-मात्रा-भूत-ब्रह्माण्ड-अविद्या-वर्ण-अन्धकार-वासना-काल-प्रतिबिम्बाः इति। गुणाश्च चतुर्विंशतिव्यतिरिक्ताः शम-दम-कृपा-तितिक्षा-सौन्दर्यादयोऽपि। कर्म च विहित-निषिद्धो-दासीनभेदात् त्रिविधम्। तत्रोदासीनस्य उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनादिभेदाः। सामान्यं द्विविधं जात्युपाधिभेदेन नित्यानित्यभेदेन च। विशेषास्त्वनन्ताः यतो भेदाभावेऽपि भेदव्यवहारनिर्वाहका विशेषा अनन्ता एव। विशेषसद्भावस्तु परमात्मन्यपि। सादृश्याभावौ वैशेषिकवदेव। शक्तिश्चतुर्विधाऽचिन्त्याधेय-सहज-पदभेदात्। तत्राचिन्त्यशक्तेराश्रयः केवलो विष्णुरेव। अन्याहितशक्तिराधेय-शक्तिः। कार्यानुकूल्येन स्वभावजा शक्तिरेव सहजशक्तिः। आसां पदार्थनिष्ठत्वा-न्नित्यानित्यत्वं तदनुसारेणैव। पदपदार्थयोः सम्बन्धः पदशक्तिः। सा च मुख्या परममुख्याभेदेन द्विविधा। यथेन्द्रशब्दो मुख्यया शक्त्या देवराजं परममुख्यया तु परमात्मानं सङ्केतयति 'इन्द्र समानस्त्वम्' इत्यादौ।

विष्णुरेवेश्वरः। स हि सर्वस्य प्रभुः। जीवाज्जडप्रकृतेश्च स सर्वथा भिन्नो विलक्षणश्च। स मुख्यया वृत्त्या समस्तपदवाच्यः। अतः सशरीरत्वेऽपि तस्य नित्यता स्वतन्त्रता च न विहन्यते। एकोऽपि स नानारूपधरः समस्तरूपेण च परिपूर्णः। अवतारादिनाऽपि तस्य पूर्णत्वं नैव हीयते। लक्ष्मीश्च परमात्मशक्तिः। सा च परमात्मनोऽभिन्नापि सर्वथा भिन्ना। परमात्मिका तन्मात्राधीना हि सा। तेन शक्तिशक्तिमतोर्नाभेदः। यथोक्तं—

द्वाविमौ नित्यमुक्तौ स्तः परमः प्रकृतिस्तथा।
देशतः कालतश्चैव समव्याप्तावुभावजौ॥ इति।

जीवः संसारी कर्मानुसारसुखदुःखभोक्ता जन्ममरणधर्मा च। स च त्रिविधः मुक्तियोग्यः नित्यसंसारी तमोयोग्यश्च। तत्र हि मुक्तियोग्यजीवा देवर्षिपितृसम्राडुत्तमाः पञ्च, सदैव संसरणयोग्या मध्यमा नित्यसंसारिणः। जीवश्च परमात्मनः सदा भिन्न एव मुक्तावस्थायामपि।

व्याकृताकाशो नित्यो भूताकाशाद्भिन्नः। परमात्मा हि जगतो नित्यकारणमुपादानकारणन्तु प्रकृतिरेव। तत्र हि ईश्वरस्य जीवाद्भेदः, ईश्वरस्य जडाद्भेदः, जीवस्य जडाद्भेदः, जीवस्य जीवान्तराद्भेदः, जडस्य जडान्तराद्भेदः। एतादृशपञ्चविधभेदज्ञानमेव मुक्तिसाधकम्। उपासना च शास्त्राभ्यासाद् ध्यानाच्च भवति। तत्र विषयान्तरतिरस्कारपूर्वकभगवद्विषयिकाऽखण्डस्मृतिरेव ध्यानम्। भगवदनुग्रहमन्तरा जीवो न किञ्चिदपि कर्तुं प्रभवति। मुक्तिस्त्वनुग्रहविशेषमात्रलभ्या। ज्ञानेन भक्तिर्भक्त्याऽनुग्रहोऽनुग्रहान्मुक्तिः। सा च चतुर्विधा कर्मक्षयोत्क्रान्त्यचिरादिमार्गभोगभेदात्। चरमोऽपि सालोक्य-सामीप्य-सारूप्य सायुज्यभेदाच्चतुर्विधः। तदित्थं माध्वमतं—

श्रीमन्मध्वमते हरिः परतमः सत्यं जगत् तत्त्वतो
भेदो जीवगणा हरेरनुचरा नीचोच्चभावं गताः।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं
प्रत्यक्षादित्रयं प्रमाणमखिलाम्नायैकवेद्यो हरिः॥

इति दर्शनोदये।

सम्प्रदायस्यास्याचार्याणां परिचयोऽत्र सङ्क्षेपतः प्रस्तूयते।

**मध्वाचार्यः**—मध्व-पूर्णबोध-पूर्णप्रज्ञ-आनन्दतीर्थादिपदैरप्यभिहितः आचार्योऽयं १२५६ वैक्रमाब्दे गृहीतजनुः १३६० वैक्रमाब्दे मुक्तश्च। अनेन हि ब्रह्मसूत्रस्य पूर्णप्रज्ञभाष्यं प्रणीय द्वैतमतं प्रवर्तितम्। अस्य हि सप्तत्रिंशन्मितप्रबन्धाः येषु उपनिषद्भाष्यं, गीताभाष्यं, भागवततिर्णयश्चेतिप्रभृतयः प्रसिद्धाः।

**जयतीर्थः**— पूर्णप्रज्ञभाष्यस्य व्याख्याताऽसौ प्रमाणपद्धतिवादावलिप्रभृतिग्रन्थानाञ्च प्रणेता ।

**नारायणपण्डितः**—विक्रमानन्तर १५०० मितवर्षमभितः समुत्पन्नोऽसावाचार्यः माध्वविजयस्य रचयिता ।

**व्यासतीर्थः**—विक्रमानन्तर १५५७ वर्षमभितः स्थितिमतोऽस्य महाप्राज्ञस्य न्यायामृताख्यो ग्रन्थः सर्वातिशायी सम्मतः । एनमुद्दिश्य दशाधिकाष्टीकाग्रन्थाः सन्ति येषु रामाचार्यस्य तरङ्गिणी, विजयीन्द्रतीर्थस्य कण्टकोद्धारश्च प्रसिद्धौ । तर्कताण्डवः, तात्पर्यचन्द्रिका, मन्दारमञ्जरीभेदः, जीवनमायावादखण्डनञ्चास्यान्ये प्रसिद्धा ग्रन्थाः । मधुसूदनेन अद्वैतसिद्धौ न्यायामृतस्य खण्डनं कृतमस्ति ।

**वनमाली**—विक्रमानन्तर १७५७ मितवर्षमभितः समुत्पन्नोऽसावाचार्यः न्यायामृततरङ्गिणीकारः । तत्र हि स न्यायामृतस्य अद्वैतसिद्धिकृतखण्डनं सन्दूष्य तस्य मण्डनं कृतवान् ।

**रघूत्तमतीर्थः**—विक्रमानन्तर १६१४–१६५३ मितवर्षमभितः स्थितिमानसावाचार्यः विष्णुतत्त्वनिर्णयस्य कर्ता जयतीर्थस्य तत्त्वप्रकाशिकोपरि भावबोधाख्यव्याख्याकृच्च । अस्य च बृहदारण्यकभाष्योपरि ब्रह्मप्रकाशिकोपरि व्याख्या नितान्तं प्रसिद्धा । अस्य तत्त्वोद्बोधपञ्चिका च सुप्रसिद्धा ।

**विजयीन्द्रः**—अस्य गूढार्थदीपिका युक्तिमल्लिका च प्रसिद्धौ ग्रन्थौ एवमेव सव्यनाथः, वेणीदत्तः, पूर्णानन्दश्च सम्प्रदायस्यास्य ग्रन्थकारा व्याख्यातारश्च सम्मताः ।

## (ङ) द्वैताद्वैतमतम्

व्यवहारकाले जीवेश्वरयोर्द्रष्टृभोक्तृरूपेण द्वैविध्यं तच्च वास्तविकं पारमार्थिकदशायां तयोरैक्यं तच्चौपचारिकमिति विचारकं मतं द्वैताद्वैतत्वेन प्रसिद्धम् । मतस्यास्य बीजं तु श्रुतिष्वप्युपलभ्यते । तत्र तत्र जीवेश्वरयोर्द्वैतत्त्वाद्वैतत्वे उभे एव सम्मते । तदेव सङ्गृह्य निम्बार्काचार्येण द्वैताद्वैतमतं प्रवर्तितम् । मतेऽस्मिन् कृष्ण एव परमेश्वरः । स एव ब्रह्म । एतन्मतानुसारेण जीव-ब्रह्मणोरवस्थाविशेषेण भिन्नत्वाभिन्नत्वे । संसारदशायां नानात्मकस्य जीवस्य एकात्मब्रह्मणश्च नितान्तभेदेऽपि मुक्तदशायां चैतन्यात्मकतया जीवब्रह्मणोरभेद एव । तेन हि कारणात्मना जीवब्रह्मणोरैक्यं कार्यात्मना तयोर्भेदः । ईश्वरश्चिदचिद्विशिष्टः, जीवस्तु चिल्लक्षणः इन्द्रियनिरपेक्षमेव तत्तज्ज्ञानाधिगमसमर्थः । तेनैवासौ प्रज्ञानघनः स्वयंज्योतिश्च । यथैव सूर्यः प्रकाशमयः प्रकाशाश्रयश्च तथैव जीवो ज्ञानमयो ज्ञानाश्रयश्च ।

जीवः कर्तृत्वे स्वतन्त्रो भोगे चेश्वराधीनः। अतो जीवब्रह्मणोश्चेतनत्वेन ज्ञानाश्रयत्वेन वा साम्येऽपि तस्य नियम्यत्वाद् ब्रह्मणश्च नियामकत्वात्स ब्रह्मणो भिद्यते। मुक्त्यवस्थायामपि जीव ईश्वराश्रित एव न तु तल्लीन इति। जीवश्चाणुर्नानाभेदभिन्नश्च। यद्यपि ब्रह्मण एवांशस्तथापि सोंऽशः शक्तिरूपो न तु विभागपरः। भगवत्कृपयैव जीवस्य सत्यरूपावभासः। प्रकृतिस्त्वचिज्जडात्मिका च। सा हि प्रकृताप्रकृतकालभेदेन त्रिधा भिद्यते। तत्र प्राकृतिकं महत्तत्त्वादारभ्य महाभूतपर्यन्तम्। अप्राकृतञ्च निखिलचैतन्यात्मकं जगत्। कालश्च जगतः सकलपरिणामजनकः। जगन्नियामकोऽपि स ब्रह्मणस्तु नियम्य एव।

जगति यदपि दृश्यमदृश्यं वा तत्सर्वमेव ब्रह्मव्याप्यम्। भगवत्कृपा सम्प्रतिपत्तिद्वारैव लभ्यते नान्यथा। प्रतिपत्त्या भगवत्साक्षात्कारस्ततश्च मुक्तिरिति द्वैताद्वैतवादिनां मतम्। अथ मतस्यास्य समर्थका आचार्यास्तत्कृतयश्चात्र सङ्क्षेपेणोपस्थाप्यन्ते। श्रुतौ दृष्टमपि द्वैताद्वैतबीजं कतिपयैराचार्यैरुन्नीतम्। तेषु निम्बार्काचार्यः, श्रीनिवासः, केशवाचार्यः, पुरुषोत्तमाचार्यश्च सुप्रसिद्धाः।

**निम्बार्काचार्यः**—विक्रमानन्तर १३०७ मितवर्षमभितः स्थितिमतो निम्बार्काचार्यस्य ब्रह्मसूत्रोपरि वेदान्तपरिजाताभिधभाष्यं सर्वत्र प्रसिद्धम्। स हि द्वैताद्वैतमतस्य प्रथम उन्नायको व्यवस्थितरूपेण। अस्यैव रहस्यषोडशी, वेदान्तकामधेनुश्च प्रसिद्धौ ग्रन्थौ। भाष्योपरि श्रीनिवासाचार्यस्य वेदान्तकौस्तुभाख्या व्याख्या प्रसिद्धा।

**श्रीनिवासाचार्यः**—विक्रमानन्तरचतुर्दशशतकोद्भवोऽयं निम्बार्कभाष्यस्य व्याख्याता। अस्य हि वेदान्तकौस्तुभाख्यो ग्रन्थः प्रसिद्धः।

**केशवाचार्यः**—विक्रमानन्तरपञ्चदशशतकोत्तरार्द्धभवस्यास्य वेदान्तकौस्तुभस्य कौस्तुभप्रभाऽऽख्या टीका प्रसिद्धाऽस्ति।

एवमेव पुरुषोत्तमाचार्यस्य श्रुत्यन्तसुरद्रुमः देवाचार्यस्य सिद्धान्तजाह्नवी च मतस्यास्य प्रचारकाः।

एतद्व्यतिरिक्तमपि औडुलोमिः, आश्मरथ्यः, भर्तृप्रपञ्चः, भास्कराचार्यः, यादवाचार्यश्च मतस्यास्य भेदाभेदवादिनः समर्थकाः।

## (च) शुद्धाद्वैतमतम्

शुद्धाद्वैतमतं हि मायावादविरहितमद्वैतमतमेव। मायावादरहितत्वमेवास्य शुद्धत्वे हेतुः। शुद्धाद्वैतस्याऽपि बीजं श्रुतिष्वेव लभ्यते 'यो देवानां नामधा एक एव', 'एकं सत् विप्रा बहुधा कल्पयन्ति' इत्यादिवाक्येषु किन्तु मतमिदं सिद्धान्त-

त्वेन प्रथमं श्रीमता विष्णुस्वामिना प्रपञ्चितं विलुप्तञ्च यद् वल्लभाचार्येण पुनरुन्नीतम् । पुष्टिमार्गसमर्थकं मतमिदं भक्तिरेव मोक्षसाधनं कृष्ण एव पमेश्वर इति वैशिष्ट्यं भजते । जीवानामणुत्वं सेवकत्वं प्रपञ्चभेदसत्यत्वञ्च साधारणमेवास्य मतस्य माध्वैः सह । तयोरेतावानेव विशेषो यन्माध्वा मोक्षार्थं वैकुण्ठाधीश्वरं विष्णुं भजन्ते बल्लभीयास्तु गोलोकवासिनं कृष्णमेव । बल्लभमते फलरूपा साधनरूपा च द्विविधा सेवा यत्र श्रीकृष्णैकप्रवणतारूपा मानसी सेवा फलरूपा शरीरेण धनादिना वा निर्वर्त्यमाना साधनरूपा । वह्निविस्फुलिङ्गयोरिव शुद्धयोरेव जीवात्मपरमात्मनोरैक्यम् । सर्वधर्मविशिष्टं हि ब्रह्मात एव तस्य विरुद्धधर्माश्रयत्वम् । सर्वं हि जगद् ब्रह्ममयम् । कार्यस्य ब्रह्मरूपस्य ब्रह्मैव कारणं नेतरत् । ब्रह्म हि साकारं सर्वशक्त्यैकं सर्वज्ञं सर्वकर्तृ सच्चिदानन्दरूपं च । तस्मादेवेदं जगत् प्रवर्तते । ततश्च वह्नेर्विस्फुलिङ्गा इव जीवानामुद्भवः । जीवस्तु विसर्पिगुणवान् चैतन्यमयोऽणुश्च स च ब्रह्मणोंऽशो न तु विभागरूपः । तस्याविर्भावतिरोभावौ । तत्रानुभवयोग्यत्वमाविर्भावस्तदन्यथा तिरोभावः । यच्च ब्रह्म मायायोगात्क्रियापरमित्युक्तं तद्वृथैव यतो ब्रह्मणः पूर्वं यदा न कोऽप्यासीत्तदा माया केन सृष्टा भवति । श्रुतावपि आत्मैवेदमग्रे आसीदिति प्रतिपादितम् । तेनान्याभावात् स्वत एव सविशेषं ब्रह्म न तु मायादियोगात् । मायासम्बन्धरहितं शुद्धं ब्रह्म तेन कार्यकारणरूपं शुद्धमेव ब्रह्म न तु मायिकम् । जीवब्रह्मणोः कार्यरूपेणैव भेदो न तु कारणात्मना । तथा च—

स्त्रियो वा पुरुषा वाऽपि भक्तिभावेन केशवम् ।
हृदि कृत्वा गतिं यान्ति श्रुतीनां नात्र संशयः ॥

पोषणं तदनुग्रह इति कृष्णानुग्रहरूपा हि पुष्टिः कालादिबाधिका, सा च त्रिलक्षणा लौकिकालौकिकफलसाधिका । पुष्टिरेवेयं चतुर्विधप्रमर्थसाधिका । पुष्टिरेव भगवत्स्वरूपफलिकां भक्तिं साधयति । अनुग्रहः पुष्टिमार्गे नियामक इति स्थितिः । सा च पुष्टिभक्तिश्चतुर्धा प्रवाह-मर्यादा-पुष्टि-शुद्धभेदात् । यथोक्तिम्—

पुष्ट्या विमिश्राः सर्वज्ञाः प्रवाहेण क्रियारताः ।
मर्यादया गुणज्ञास्ते शुद्धाः प्रेम्णाऽतिदुर्लभाः ॥ इति ।

तत्र संसारप्रवाहनिमग्नाः किन्तु पुष्टिभक्तत्वाद्भगवदुपयोगिक्रियायां प्रवर्तन्त इति ते प्रवाहपुष्टिभक्ताः । ये खलु रागादिप्रवृत्तिं त्यक्त्वा निवृत्तिमार्गमनुसरन्ति पुष्टिभक्तत्वात्ते हि खलु मर्यादापुष्टिभक्ताः । ये हि पुष्ट्यर्थं पुष्टिभक्तत्वाद्भगवन्तमाश्रयन्ते ते पुष्टिपुष्टिभक्ताः ये च भगवदनुरागेणैव तं सेवन्ते

ते हि धन्याः शुद्धपुष्टिभक्ताः। जीवैः पुष्टिपुष्टिभक्त्यर्थं यतनीयम्। शुद्धपुष्टिभक्तास्तु दुर्लभा एव भगवदनुगृहीताः। उक्तञ्च—

सर्वसाधनराहित्यं फलाप्तौ यत्र साधनम्।
फलं वा साधनं यत्र पुष्टिमार्गः स कथ्यते॥ इति।
अनुग्रहेणैव सिद्धिर्लौकिकी यत्र वैदिकी।
न यत्नादन्यथा विघ्नः पुष्टिमार्गः स कथ्यते॥
यत्राङ्गीकरणे नैव योग्यतादिविचारणम्।
अविलम्बः प्रभुकृतः पुष्टिमार्गः स कथ्यते॥
विषयत्वेक तत्त्यागः स्वस्मिन् विषयता स्मृतेः।
यत्र वै सर्वभावेन पुष्टिमार्गः स कथ्यते॥ इत्यपि।

'यमेवैष वृणुते तेन लभ्यः' इतिश्रुतिवाक्याद् यस्मिन् हि भगवत्कृपा स एवास्य विलक्षणपुष्टिमार्गस्याधिकारी। तत्र कृपाया अप्रत्यक्षत्वात्तत्कार्यरूपपुष्टिमार्गरुच्या साऽनुमीयते। विषयनिवृत्तिरेवास्य फलम्।

एवमेव बल्लभमते ब्रह्मणि विरुद्धधर्माणामस्ति न मायौपाधिकमपितु नैसर्गिकमेव। जीवश्च तिरोहितानन्दादिगुणः स्वयमीश्वर एव। तस्मिन् हि ऐश्वर्यतिरोधानेन दैन्यं यशस्तिरोधानेन हीनता श्रीपतिरोधानेन सनद्धीनत्वं, ज्ञानतिरोधानेन नश्वरे देहे आत्मबुद्धिः। यस्मिन् हि भगवदनुग्रहस्तस्य सर्वं सम्भवति। जगद्विषये बल्लभीया हि अविकृतपरिणामवादमभ्युपगच्छन्ति न तु विवर्तवादम्।

मतस्यास्याचार्याः बल्लभाचार्य-विट्ठलनाथ-कृष्णचन्द्र-गिरिधराचार्य-हरिदासाचार्य-व्रजनाथ-विज्ञानभिक्षुप्रभृतयः। उल्लेखनीयग्रन्थाश्च बल्लभाचार्यस्य ब्रह्मसूत्रोपरि अणुभाष्यं, विट्ठलनाथस्य विद्वन्मण्डनं, कृष्णचन्द्रस्य भावप्रकाशिका, पुरुषोत्तमस्य अमृततरङ्गिणी, गिरिधरस्य शुद्धाद्वैतमार्तण्डः, बालकृष्णस्य प्रमेयरत्नार्णवश्च।

**बल्लभाचार्यः**—वैक्रमे १५३६ वर्षे जात इति सम्मतस्यास्य शुद्धाद्वैतमतप्रवर्तकस्य युगपुरुषस्य ब्रह्मसूत्रोपरि अणुभाष्यं, तत्त्वप्रदोपनिबन्धः, पूर्वमीमांसाभाष्यं, सिद्धान्तमुक्तावली चेत्यादिग्रन्थाः प्रसिद्धाः।

**विट्ठलनाथः**—बल्लभाचार्यस्य द्वितोयपुत्रोऽसौ पुष्टिमार्गस्य प्रतिष्ठापकः। अस्य हि निबन्धप्रकाशः, विद्वन्मण्डनं, शृङ्गाररसमण्डनं, सुबोधिनीटिप्पणो च प्रसिद्धा ग्रन्थाः।

**कृष्णचन्द्रः**—अस्य अणुभाष्योपरि भावप्रकाशिका टीका लभ्यते। तदतिरिक्तं सुबोधिनीप्रकाशः, उपनिषद्दोपिका, आवरणभङ्गः, प्रस्थानरत्नाकरः, सुवर्णसूत्रं, गीतोपरि अमृतवर्षिणी टीका, षोडशग्रन्थविवृतिश्चेत्यादिग्रन्थाश्च प्रथिताः।

गिरिधराचार्यः—विट्ठलनाथात्मजोऽसौ शुद्धाद्वैतमार्तण्डस्य प्रणेता ।

हरिदासाचार्यः—अस्य हि ब्रह्मवादः, भक्तिरसवादश्च प्रसिद्धौ ग्रन्थौ ।

बालकृष्णभट्टः—अस्य हि प्रमेयरत्नार्णवः शुद्धाद्वैतमतस्य प्रसिद्धो ग्रन्थो यत्र हि प्रपञ्चविवेकः, जीवस्वरूपनिरूपणं, मूलस्वरूपनिरूपणं, पुष्टिविवेकः, अधिकारनिर्णयः, सर्वात्मभावनिरूपणं, फलविवेकश्चेति प्रकरणानि ।

## (छ) अविभागाद्वैतवादः

ब्रह्मसूत्रोपरि विज्ञानामृतभाष्यस्य प्रणेता विज्ञानभिक्षुरविभागाद्वैतवादं समर्थयति । तत्र हि किञ्चिद्भेदेन सह शङ्कराद्वैतमतमेव समर्थितमस्ति । ब्रह्मैव सत्यं तद्व्यतिरिक्तमसदित्यस्य सारवचनम् ।

## (ज) अचिन्त्यभेदाभेदवादः

विक्रमानन्तरपञ्चदशशतकोत्तरार्द्धभवेन वासुदेवसार्वभौमशिष्येण चैतन्य-महाप्रभुणा प्रवर्तितं मतमिदं जीवेश्वरयोर्भेदस्याभेदस्य चाचिन्त्यत्वं मन्यते । एतन्मतानुसारेण जागतिकप्रपञ्चोऽलौकिकशक्तियुक्तस्य परमात्मनोऽचिन्तनीया लीलैव । राधिकासहितः कृष्ण एव परमेश्वरः । भक्तिरेव मुक्तिप्रदा । शेषं माध्वमतानुकूलमेव ।

चैतन्यमहाप्रभुः, श्रीरूपगोस्वामी, सनातनगोस्वामी, कृष्णदासकविराजाश्चा-स्याचार्याः, श्रीरूपगोस्वामिनो भागवतामृतं, भक्तिरसामृतसिन्धुः, वैष्णवतोषिणी, बृहद्भागवतामृतं, हरिभक्तिविलासः, कृष्णदासकविराजस्य चैतन्यचरितामृतं, च प्रसिद्धा ग्रन्थाः ।

एतद्व्यतिरिक्तं स्वामिनारायणसम्प्रदायः, कृष्णप्रणामिसम्प्रदायः, सखी-सम्प्रदायश्च तत्र तत्र प्रचलिता दृश्यन्ते । तेषु केषाञ्चित्तु साहित्यमप्युपलभ्यते । विक्रमानन्तर १८३० मितवत्सरमभितो जातेन सदानन्दयतिना प्रवर्तितः स्वामिनारायणसम्प्रदायः सम्प्रति उद्धवसम्प्रदायनाम्नाऽपि ख्यातः । एवमेव रामानन्दसम्प्रदायश्च बहुत्र प्रचलितो दृश्यते ।

इत्येतानि वैष्णवमतानि यथामति व्याख्यातानि । वैष्णवमतानीव माहेश्वर-मतान्यपि तत्र तत्र प्रचलितानि सन्ति । तेषु हि शिवाद्वैतमतं, वीरशैवाद्वैतमतं पाशुपतमतं, शैवमतं, प्रत्यभिज्ञामतं, शाक्तमतञ्च प्रसिद्धानि ।

## (झ) शिवाद्वैतमतम्

मतमिदं विक्रमानन्तर १३२७ मितवर्षमभितो ब्रह्मसूत्रोपरि भाष्यं प्रणीत-वता श्रीकण्ठाचार्येण प्रवर्तितम् । अत्र शिव एवोपास्यो देवः । शेषञ्च सर्वं

विशिष्टाद्वैतमतसमानमेव। मतमिदमप्पयदीक्षितेन साधु व्याख्यातमस्ति। तस्य हि शिवार्कमणिदोपिका नाम श्रीकण्ठभाष्यविवृत्तिः रत्नत्रयपरीक्षा, शिखरिणीमाला शिवाद्वैतनिर्णयश्च मतस्यास्य स्तम्भाः।

तत्र हि त्रयः सिद्धान्ताः पतिः पशुः पाशश्च। तत्र पतिः एकः परमेश्वर एव समस्तसृष्टिसंहारानुग्रहकारी। पशुस्तु द्विविधः साञ्जनो निरञ्जनश्च। तत्र शरीरेन्द्रियसम्बन्धवानाद्यः, तद्रहितो द्वितीयः। पाशस्तु भवबन्धनमेव।

तत्र हि वैष्णवमतं दासत्वादिपदवेदनीयं पारतन्त्र्यदुःखावहत्वान्नेप्सितास्पदमित्यरोचयमानाः पारमैश्वर्यं कामयमानाः पाशुपता मन्यन्ते 'पराभिभूता मुक्ता न भवन्ति परतन्त्रत्वात्। मुक्तात्मानश्च परमेश्वरगुणसम्बन्धिनः पुरुषत्वे सति समस्तदुःखबीजविधुरत्वात् परमेश्वरवदित्यनुमानं प्रमाणं प्रतिपद्यमानाः परमपुरुषार्थसाधनं पञ्चार्थप्रपञ्चनपरं पाशुपतशास्त्रमाश्रयन्ते' इति आर्यविद्यासुधाकरे ( २०९ पृष्ठेषु ) स्पष्टम्।

## (ञ) वीरशैवविशिष्टाद्वैतमतम्

श्रीपतिव्याख्यातमिदं मतं वीरशिवस्य परमाराध्यत्वेन सम्बद्धम्। श्रीपतिर्हि विक्रमानन्तरचतुर्दशशतकोत्तरार्द्धभवो ब्रह्मसूत्राणां वीरशैवविशिष्टाद्वैतमतप्रवर्तकं भाष्यं कृतवान्।

## (ट) पाशुपताद्वैतदर्शनम्

विक्रमपूर्वभवेन नकुलीशाख्येन विपश्चिता व्याख्यातमिदं मतं पशुपतेः परमाराध्यत्वेन सम्बद्धम्। 'अथातः पशुपतेः पाशुपतयोगविधिं व्याख्यास्यामः' इत्यस्य प्रथमं सूत्रम्। तत्र अथशब्दः पूर्वप्रकृतापेक्षः। पूर्वप्रकृतश्च गुरुं प्रति शिष्यस्य प्रश्नः। गुरुस्वरूपञ्च यथा गणकारिकायां भासर्वज्ञप्रणीतायाम्——

'पञ्चकास्त्वष्ट विज्ञेया गुणश्चैकस्त्रिकात्मकः।
वेत्ता नवगणस्यास्य संस्कर्ता गुरुरुच्यते॥' इति।

तत्र लाभ-यत्न-उपाय-देश-अवस्था-शुद्धि-दीक्षाकारि-बलपञ्चकभेदेन अष्टौ पञ्चकानि। तत्र लाभो विधीयमानमुपायफलम्। तच्च ज्ञान-तपो-नित्यत्व-स्थितिशुद्धिभेदात्पञ्चविधम्। आत्माश्रितो दुष्टभावो मलः सोऽपि मिथ्याज्ञान-अधर्म-सक्तिहेतु-च्युति-पशुत्वमूलर्मितिभेदात् पञ्चविध एव। सिद्धिहेतुरुपायः। सोऽपि वासचर्या-जप-ध्यान-रुद्रस्मृति-लाभप्रतिपत्तिभेदात्पञ्चविध एव। येनार्थानुसन्धानपूर्वकं ज्ञानतपश्चर्यादिकं वृद्धिं प्राप्नोति स देशः सोऽपि गुरु-जन-गुहा-श्मशान-रुद्रभेदात्पञ्चविध एव। वासचर्याजपादीनां पञ्चानामुपायानामेकैक-

स्मिन् आलाभप्राप्तेर्यदवस्थानं साऽवस्था। साऽपि वासचर्यादिविषयभेदात्पञ्चधा। मिथ्याज्ञानादीनां पञ्चानां मलानामत्यन्तव्यपोहो विशुद्धिः। साऽपि व्यपोहनीयमलानां भेदात्पञ्चधा। दीक्षाकादिपञ्चकं द्रव्य-काल-क्रिया-मूर्ति-गुरु-भेदात्पञ्चात्मकमेव। एवमेव गुरुभक्ति-प्रसाद-मतिद्वन्द्वजय-धर्म-अप्रमादभेदात्पञ्चविधं बलमपि।

सूत्रे पशुशब्दः कार्यवर्गबोधकः, पतिशब्दस्तु कारणस्य 'ईश्वरः पतिरीशिता' इति वचनात्। अथशब्देन दुःखान्तसूचनं, स च द्विविधः सात्मकोऽनात्मकश्च। तत्रानात्मकः सर्वदुःखानामत्यन्तच्छेदः। सात्मकस्तु दृक्क्रियाशक्तिलक्षणमैश्वर्यम्। कार्यजातं त्रिविधं विद्याकलापशुभेदात्। विद्या द्विविधा बोधस्वभावा अबोधस्वभावा च। चेतनपरतन्त्रत्वे सत्यबोधचेतना कला सापि कार्याख्या कारणाख्या चेति द्विविधा। तत्त्वानि पञ्च पृथिव्यप्तेजोवाय्वाकाशभेदात्। गुणा रूपरसगन्धस्पर्शशब्दभेदात्पञ्च इति दशधा कार्याख्या। कारणाऽऽख्या तु ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकम् अध्यवसायः अभिमानः सङ्कल्पश्चेति वृत्तित्रयमिति त्रयोदश। पशुर्द्विविधः साञ्जनो निरञ्जनश्च। तत्र साञ्जनः शरीरेन्द्रियसम्बन्धवान्, तद्रहितो द्वितीयः। समस्तसृष्टिसंहारानुग्रहकारि कारणम्। स चैकः परमेश्वर एव पतिप्रतिशब्दवेदनीयः। चित्रद्वारेण आत्मेश्वरसम्बन्धो योगः। स द्विविधः क्रियालक्षणः क्रियोपरमलक्षणश्च। तत्रापि जपध्यानादिरूप आद्यः, संविद्गत्यादिरूपस्तु द्वितीयः। धर्मार्थसाधको व्यापारो विधिः। इत्थं तत्रहि कार्य-कारण-योग-विधि-दुःखान्तेति पञ्च सिद्धान्ताः। शिवो नैरपेक्ष्येण जगत्सृजति तेन न हि स कर्माण्यपेक्षते। चिन्तनात्मसमर्पणादीनि मोक्षसाधनानि। सांसारिकप्रपञ्चमतिक्रम्य सर्वश्रेष्ठशक्तिलाभो मोक्षः। नकुलीशस्य शिवसूत्राणि, हरिदत्ताचार्यस्य ग्रन्थाः, भासर्वज्ञस्य गणकारिका विषयेऽस्मिन् प्रामाणिका ग्रन्थाः। तथैव भोजस्य (१०६२-११११ वै०) तत्त्वप्रकाशः, रामकण्ठस्य (१२०७ वै०) अघोरशिवस्य (१२०७ वै०) ग्रन्थाश्चास्य मतस्य प्रकाशकाः।

## (ठ) प्रत्यभिज्ञादर्शनम्

दर्शनमिदं शैवाद्वैतं समर्थयति। एतदनुसारेण शिव एव जगतः कर्ता तत्र न हि स उपादानकारणं न च स तदपेक्षते। जगत्सत्यमेव न तु मिथ्या। स हि जगतोऽप्रभावित एव तिष्ठति। यद्यपि जीवाः परस्परं पृथग्मूलास्तथापि ते शिवान्नैव पार्थक्यं भजन्ते। 'शिवोऽहं' अहं न तद्भिन्नः' इति ज्ञानेन तस्यानुभूतिर्भवति। अनेनैव मोक्षोऽपि सिध्यतीत्यस्य प्रत्यभिज्ञात्वम्। माययावृत्ता जीवास्तत्त्वमिदं नैव प्रत्यभिजानन्ति। प्रत्यभिज्ञावादिनस्तु परमेश्वरेच्छामात्रेण जगतो निर्माणं मन्यन्ते।

यथोक्तं—

'निरुपादानसम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥' इति।

श्रुतिप्रतिपादितमपि मतमिदं सोमानन्देन विक्रमानन्तर ९०७ मितवर्षभवेन पुनः प्रकाशितम्। तस्य हि शिवदृष्टिर्नाम ग्रन्थोऽस्य प्रथमः सङ्ग्रहः। ततश्च उत्पलदेवस्य (१०५७ वै०) प्रत्यभिज्ञाकारिका ईश्वरासिद्धिश्च, अभिनवगुप्तस्य महामाहेश्वरस्य बोधपञ्चदशिका, मालिनीविजयवार्तिकं, परात्रिंशतिकाविवरणं, तन्त्रालोकः, तन्त्रसारः, भगवद्गीतार्थसङ्ग्रहः, परमार्थसारः, ईश्वरप्रत्यभिज्ञाविमर्शिनी, ईश्वरप्रत्यभिज्ञाकारिकावृत्तिः, अनुत्तराष्टिका, परमार्थद्वादशिका, परमार्थचर्चा, महोपदेशविंशतिका, शिवदृष्ट्यालोचनम्, प्रकीर्णकविवरणञ्चेत्याद्या ग्रन्था मतस्यास्योन्नायकाः। भोजस्य तत्त्वप्रकाशश्च मतस्यास्यैव विवेचकः—

'एष प्रमाता मायान्धः संसारी कर्मबन्धनः।
विद्यादिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते ॥
सदा शिवात्मना वेत्ति सदा वेत्ति मदात्मना।'

## (ड) स्पन्दमतम्

श्रुतिसम्मतं हि स्पन्दमतं 'शक्तिस्पन्दः सृजति भुवनं लीलया यस्य नेतुः भासा यस्य त्रिभुवनमिदं भासते भासकस्य' इति सम्मतं विक्रमानन्तरनवमशतकोत्तरार्द्धभवेन वसुगुप्तेन पुनः प्रकाशितम्। स चैतन्मतं कल्लटमध्यापयत्। वसुगुप्तस्य स्पन्दकारिका, कल्लटस्य स्पन्दसर्वस्वम्, उत्पलदेवस्य स्पन्दप्रदीपिका (१०६० वै०) क्षेमराजस्य (१०५७ वै०) स्पन्दनिर्णयश्च मतस्यास्य प्रसिद्धा ग्रन्थाः। एतन्मतानुसारेण शिव एव जगतः कर्ता निरुपादान एव। तस्य शक्तेः किञ्चित्स्पन्द एव जगत्सृष्टौ प्रभुः। स च लीलयैव तत्करोति न तु परवशात्। शाम्भव-आणवादीनि मुक्तिसाधनानि। जावो यद्यपि परस्परं भिद्यते किन्तु शिवान्नैव पृथक्। स्पन्दज्ञानेन सर्वार्थसिद्धिरिति स्पन्दमतालोचनम्।

## (ढ) परमशैवमतम्

सिद्धगुरुमृगेन्द्रादिव्याख्यातमिदं मतं कर्मादिसापेक्षं परमेश्वरं शिवं जगतः कारणं मन्यते। अत्रहि पति-पशु-पाशरूपास्त्रयः पदार्थाः, विद्याक्रियायोगचर्याभेदाच्चत्वारः पादाः जीवस्याज्ञत्वमनीशत्वं च सुखदुःखयोः ईश्वरप्रेरणावशादेव तद्गतिः। कर्मसापेक्षोऽपि परमेश्वरो न परतन्त्रः करणादिसापेक्षस्यापि कर्तुः स्वातन्त्र्यहानेरनुपलम्भात्। यथोक्तं—

'स्वतन्त्रस्याप्रयोज्यत्वं करणादिप्रयोक्तृता ।
कर्तुः स्वातन्त्र्यमेतद्धि न कर्माद्यनपेक्षता ॥'

तस्य च न सुखदुःखात्मकत्वं प्राकृतशरीराभावात् शाक्तशरीरवत्त्वाच्च । यथाऽऽह मृगेन्द्रः—

'मलाद्यसम्भवाच्छाक्तं वपुर्नैतादृशं प्रभोः ।' इति ।

तच्च ईश-तत्पुरुषा-घोर-वामदेवे-शानादि मन्त्रपञ्चकात्मकं सृष्टिस्थितिसंहार-तिरोभावा-नुग्रहकरणादि कृत्यपञ्चकात्मकञ्च । स हि शाक्तशरीरवानपि साकारः कल्प्यते यतः—

'आकारवांस्त्वं नियमादुपास्यो न वस्त्वनाकारमुपैति बुद्धिः' इति ।

पशुस्त्रिविधः विज्ञानाकल-प्रलयाकल-सकलभेदात् । कला नाम माया तस्या अभावोऽकलः विज्ञानेन अकलः प्रलयेन अकलः सकलश्चेति पशुः । मलकर्ममाया-रोधशक्तिभेदात्पाशश्चतुर्विधः । तत्र स्वाभाविकी अशुचिता मलः, यत्फलार्थिभिः क्रियते तत्कर्म, तच्च धर्माधर्मात्मकं द्विविधमप्यनादि । मात्यस्यां प्रलये शक्तिरूपेण सर्वं जगत् सृष्टौ तु व्यक्तिं यातीति माया । तत्र हि पशुर्जीवः पतिः शिवः शब्दादि-विषयपञ्चकं पाश इति ।

## (ण) रसेश्वरदर्शनम्

जीवन्मुक्तिवादिनः केचन माहेश्वराः परमेश्वरतादात्म्यमिच्छन्तोऽपि पिण्ड-स्थैर्यमेव समर्थयन्ति । 'रसैश्चैव रसायनैः पिण्डं रक्षेदि'ति तेषां मतम् । षाट्-कौशिकस्य शरीरस्यानित्यत्वेऽपि रसाभ्रकपदाभिलप्यमान-हरगौरीसृष्टिजातस्य तस्य नित्यत्वोपपत्तिः । तेन मुमुक्षुणा प्रथमं दिव्यतनुर्विधेया । तच्च अभ्रकपारद-(गौरीतत्त्वहरतत्त्व) मेलनेन भवति ।

'एकोऽसौ रसराजः शरीरमजरामरं कुरुते' इति ।

इति समग्रहीद्यज्ञेश्वर आर्यविद्यासुधाकरस्य चतुर्थप्रकाशे ।

## (त) शाक्ताद्वैतदर्शनम्

शाक्तदर्शनं हि पूजामेव प्राधान्येन गृह्णाति । शक्तिसूत्रं शाक्तागमश्चास्य प्रामाणिकौ ग्रन्थौ । अत्र हि पञ्च शुभागमाः चतुषष्टिः कौलागमाः अष्टौ मिश्रा-गमाश्च सम्मताः । सुविस्तृतमपि मतमिदं सङ्क्षेपतः सङ्ग्रहमुपक्रममाणैरस्माभिः सखेदमुपेक्ष्यते । विवरणिका चास्य तन्त्रप्रकरणे द्रष्टव्या ।

## ७. नास्तिकदर्शनप्रकरणम्

नास्ति वेदोदितो लोक इति येषां मतिस्ते नास्तिकाः। ते च प्राधान्येन त्रयश्चार्वाका जैना बौद्धाश्च। यथैतेषां दर्शनं सङ्क्षेपेणाऽत्र प्रस्तूयते।

### (क) चार्वाकदर्शनम्

तदिदं चार्वाकनाम्ना प्रसिद्धं प्रथमं नास्तिकदर्शनम्। चार्वाकस्तु क आसीदिति विषया पण्डिता बेभिद्यन्ते। केचित्तं बृहस्पतेः शिष्यं मन्यन्ते। केचित्तु चार्वाकनाम्नो मतं बृहस्पतिना प्रचारितमिति। अपरे तु 'चर्व भक्षणे' धातोर्निष्पन्नश्चार्वाकशब्दखादतपिबतमोदतमतं सङ्केतयतीत्यपि सम्भावयन्ति केचित्। 'नयते चार्वी। लोकायते चार्वी बुद्धिः। तत्सम्बन्ध्यत्वादाचार्योऽपि चार्वाकः स लोकायते शास्त्रे पदार्थान् नयते' इति काशिकावृत्तौ (१।३।३६ सूत्रस्य) अन्ये चारु वाचो यस्येति चार्वाक इत्यपि मन्यन्ते। स्याद्यत्किञ्चिद्वा भवतु नाम यद्वा तद्वा। वयन्तु चार्वाकशब्दं चारु वाक्' इत्येतस्यैवापभ्रंशं मन्यामहे। यतोऽत्र यदेव कथितमस्ति तदिहलोकसम्बद्धं लोकायतमेव। कथ्यते हि मतमिदं वृहस्पतिनाऽसुरान्व्यामोहयितुं प्रवर्तितमिति। तेनेदं वृहस्पतिमतमिति मन्यते च। कौटिल्यस्य 'वार्ता दण्डनीतिश्चेति बार्हस्पत्याः' इति कथनेनापि एतत्सिध्यति यद्राजनीतिप्रवक्ता बृहस्पतिर्नास्तिक आसीदिति। मतमिदं पुरातनयुगे लोकायतनाम्नाऽपि प्रसिद्धमासीत्। इदं 'शुद्धबुद्धिवादः' 'भूतचैतन्यवादः' 'भौतिकवादः' 'सुखवादः' इत्यपि शब्द्यते। चार्वाका खलु शुद्धवादिनो यतस्ते बुद्धिगम्यमात्रमेव विषयं स्वीकुर्वन्ति। ते हि खलु भूतचैतन्यवादिनो यतस्ते जडमयभूतसंयोगेन चैतन्यस्योत्पत्तिं मन्यन्ते। यथा कोद्रवे मादकशक्तिर्नैव विद्यते किन्तु तस्मिन्नेव मदिरात्वंगते मादकशक्तिरुत्पद्यते यथा वा ताम्बूलखदिरसुधानां व्यष्टिदशायां नैवैकस्यापि रक्तत्वं किन्तु समष्टौ तदुत्पद्यते यथा वा हाइड्रोजनाक्सिजनसंज्ञकौ पदार्थौ व्यष्टिदशायां वायुतत्त्वे स्तः समष्टिदशायां तु जलतत्त्वं भवतः यथा वा व्यष्टिदशायां वायुतत्त्वानि समष्टिदशायामग्निं जनयन्ति तथैव भूतचतुष्टयमपि स्वकीयपार्थक्यावस्थायां जडमपि परिणामविशिष्टसमष्टौ तु तस्मादेव चैतन्यं समुत्पद्यते इति ते चैतन्यविशिष्टकायमेव पुरुषं मन्यन्ते। ते हि खलु शरीरमेव सर्वातिशायिनं मन्यन्ते तथैव चैतन्यमपि भौतिकपरिणामं मन्यन्ते इति ते भौतिकवादिनः। ते हि खलु काममेव मुख्यं पुमर्थं मन्यन्तेऽर्थञ्च तत्साधनमात्रमिति धर्ममोक्षोपेक्षकत्वात्सुखवादिनः।

चार्वाकदर्शनं यद्यपि सर्वेभ्यो दर्शनेभ्यः प्राचीनतमं तथापि तस्य कश्चिदपि प्रामाणिको ग्रन्थो न लभ्यते इदानीम्। सम्भवति नास्तिकमतप्रवर्तक इति

आस्तिकवादिभिरुपेक्षितत्वात्स प्रणष्टो भवेत्। तथापि चार्वाकमतप्रवर्तकानि कानिचित् सूत्राणि तत्खण्डनाय यत्र कुत्र आस्तिकदर्शनेषु समुद्धृतानि दृश्यन्ते। तानि च यथा भास्करभाष्ये—

"अथ लोकायतम्। पृथिव्यप्तेजो वायुरिति तत्त्वानि। तत्समुदाये शरीरेन्द्रिय-विषयसंज्ञा। तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवद् विज्ञानम्।" इति।

एवमेवान्यत्र—

"चैतन्यविशिष्टः कायः पुरुषः। काम एवैकः पुरुषार्थः। मरणमेवापवर्गः। प्रत्यक्षमेव प्रमाणम्। तच्च इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम्। इति। पातञ्जल-भाष्ये 'वर्णिकाभागुरी लोकायतस्य' इत्युल्लेखात् तत्र 'वर्णिका' व्याख्यात्री भागुरी टीकाविशेष इति कैयटवचनात् पातञ्जलकाले चार्वाकसूत्रग्रन्थस्य तदुपरि टीका-विशेषस्य चोपलभ्यता सिध्यति।

चार्वाकमते चत्वार्येव तत्त्वानि पृथिव्यप्तेजोवायुरूपाणि। नत्वाकाशः। प्रत्यक्षमेव केवलं प्रमाणं नास्त्यदृष्टं तच्च इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमेव। सुखदुःखौ स्वभावेनैव भवतो न तत्र धर्माधर्मौ कारणम्। स्वभावेनैव मयूराश्चित्रिताः कोकिलाश्च कूजन्ति। 'स्थूलोऽहं', 'बालकोऽहं', 'युवाऽहं', 'वृद्धोऽहं', 'कृशोऽहम्' इत्यादिविशेषणविशिष्टो देह एवात्मा न ततो विलक्षणः कश्चिदन्यः। जडभूतविकारेषु यच्चैतन्यं तत्ताम्बूलपूगचूर्णानां योगाद्राग इवोत्थितमेव न तु बहितः केनापि सन्निवेशितम्। इहलोकान्नास्तिपरः कश्चिदपि लोकः। मिष्टान्न-भोजनमनुकूलनिषेवणमेव स्वर्गः व्याध्याद्युपद्रव एव नरकस्तेन इहैव नरकः स्वर्गश्च। मरणमेव मोक्षः। अतस्तदर्थमायासो व्यर्थ एव। व्रतादिकं दरिद्राणां पातिव्रत्यादिकं दुर्बलानामग्निहोत्रादिकं पौरुषहीनानां जीविकामात्रम्। विद्वांस्तु कृषिगोरक्षवाणिज्यकुसीददण्डनोत्यादिभिः दृष्टैरेवोपायैरनुकूलान् भोगान् भुङ्क्ते।

चार्वाकाः खलु प्रत्यक्षमेव प्रमाणं मन्यन्ते। तेषां मते हि इन्द्रियजनितज्ञानमेव यथार्थज्ञानं भवति तच्च चाक्षुषं रासनिकं श्रावणं घ्राणिकं त्वाचञ्च तत्तदिन्द्रिय-ग्राह्यत्वात्। तदतिरिक्तमदृष्टमनास्वादितमश्रुतमघ्रातमस्पृष्टञ्च न किमपि प्रमाणम्। अनुमानं हि लिङ्गलिङ्गिपूर्वकमेव भवति तच्च व्याप्तिमाश्रयते। व्याप्तिर्हि साहचर्यनियमः। न च स सार्वत्रिकः। नैव स सार्वभौमिकत्वेन प्रत्यक्ष-विषयी भवति। यत्र यत्र धूमस्तत्र तत्र वह्निरित्यपि वर्तमानकालिकमेव न सार्व-कालिकम्। शब्दोऽपि न प्रमाणं यदि स तर्केण नाभिसन्धत्ते। यद्यदुक्तं तत्तदविचार्यैव करणं कापुरुषाणामेव धर्मः।

चार्वाका हि सृष्टिं स्वभावसम्पन्नां मन्यन्ते। न कोऽपि मयूरांश्चित्रयति न वा कोकिलान् कूजयति। ते हि स्वभाववादमङ्गीकुर्वन्ति। यदपि जगति घटते तत्सर्वं स्वभावत एव भवति। नास्ति कश्चित्कर्ता वा कारयिता। चार्वाका हि ईश्वरस्यास्तित्वं नैव मन्यन्ते। तस्य प्रत्यक्षविषयाभावात्तेषां शब्दानुमानादीनां प्रामाण्याभावात्। वेदान्तिनो हि शब्दप्रमाणेनेश्वरसत्तां मन्यन्ते नैयायिकास्त्वनुमानप्रमाणेन। चार्वाकानां तूभे एव प्रमाणेऽसम्मते। तेषां नये तु स्वभावादेव जनः कर्मणि प्रवर्तते। मतमिदं न केवलं चार्वाकेषु अपितु अन्यत्रापि दृश्यते। यथोक्तं श्रीमद्भागवते—

"अपिचेदीश्वरः कश्चित्फलरूप्यन्यकर्मणाम्।
कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः॥" इति।

तथैव गीतायामपि—

"यदहङ्कारमाश्रित्य न योत्स्ये इति मन्यसे।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति॥"

तथैव—

प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति।

चार्वाकानां मते जीवो न देहाद्भिन्नः। तत्र केचिन्मनः केचिदिन्द्रियाणि, केचित्प्राणानात्मानं मन्यन्ते। चैतन्यादयो हि शरीरधर्माः, सति शरीरे तेषां सद्भावोऽसति असद्भाव एव। पृथिव्यादिषु व्यष्टिदशायां चैतन्याभावेऽपि तेषां सङ्घाते तेभ्य एव चैतन्योत्पत्तिः, तेषां विघटने च तद्विरहः। तस्माच्छरीराश्रयस्य चैतन्यस्य न तद्भिन्नं किञ्चिदन्याश्रयत्वम्। अत आत्मा नैव शरीरव्यतिरिक्ताश्रयः।

चार्वाका हि सुखवादिनः। तेषां मते नियमितजीवनमेव सुखस्य हेतुः। सर्वैः स्वभावसिद्धं कर्म कर्तव्यमिति तेषामुपदेशः। "सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्। सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥' इति गीतायामपि प्रतिपादितं दृश्यते। चार्वाका नास्तिका एव किन्तु नानर्गलाः। ते हि समाजव्यवस्थार्थं राज्यव्यवस्थां राजपरम्पराञ्च समर्थयन्ति। ते हि नितान्तमदृष्टफलदातृत्वेन कल्पिते कर्मणि प्रवृत्तिं निषेधयन्ति। तादृशे कर्मणि प्रवृत्तिमादाय शरीरशोषणं तेषां नये व्यर्थमेव। मरणमेव मोक्षस्तन्निमित्तमायासो वृथैव। धर्मश्च सुखायैव न तु दुःखाय। जीवनसुखहेतवे सिद्धो धर्मस्तेषामपि सम्मतः। ते हि खलु अर्थं भोगायैव वाञ्छन्ति। काम एवैकः पुरुषार्थस्तेषां मते किन्तु कामोऽत्र न केवलं व्यवायमात्रमपितु इष्टभोग एव। येन भोगेनान्तरात्मा प्रसीदति परश्च न प्रपीड्यते स एवेष्टभोगः।

चार्वाकमते लोकव्यवहारः सम्भावनया सञ्चालितो भवति न निश्चयेन न चानुमानेन। स्वस्थसम्भावनैव सर्वं साधयति। तेषां मते यस्य पार्श्वे यदस्ति पराऽसम्मतत्वेन तदेव तस्य धनम्। ममेदं शरीरमिति व्यवहारस्तु राहोः शिर इतिवदौपचारिक एव।

चार्वाकाः खलु नास्तिका यतस्ते वेदवाक्येषु, पुनर्जन्मनि, स्वर्गादिप्राप्तौ च नैव विश्वसन्ति। तेषां कृते इहलोकादन्यो न कश्चिल्लोकः। प्रत्यक्षवस्त्वेव तेषां प्रमेयम्। आकाशस्यावरणाभावात्तस्य शून्यत्वमेव। तेन पृथिव्यादिभूतचतुष्टयमेव स्वाणुदशायां जगतो मूलम्।

नास्तिका एवेति चार्वाकाणां नैव नितान्तं हेयता। तेषां मतेऽपि वास्तविकचिन्तनं पुष्पित दृश्यते। तत्सम्मतः स्वभाववादः सुखवादः भूतचैतन्यवादश्च कः खलु त्याज्य इति प्रमाणयितुं पारयति। सर्वेऽपि सुखं वाञ्छन्ति। एतावदेवान्तरं यच्चार्वाकाः प्रत्यक्षविचारकत्वादैहिकमेव सुखं सुखत्वेन गृह्णन्ति, आस्तिकास्तद्विपरीतं पारलौकिकसुखाय कष्टायन्ते। तेऽपि सुखायैव भोगायैव कर्म कुर्वन्ति कामं तदैहिकं वा पारलौकिकं स्यात्। यावज्जीवेद्दुःखं जीवेदिति को मन्यते। सर्वो लोकः सुखार्थ्येव। श्रीमद्भागवतेऽथवा मनुस्मृत्यादावपि व्यवायामिषमद्यानेवाया नित्यत्वं सम्मतम्। तेन सुखं भूतानां प्रवृत्तिरेव। सुखायैव वा सुखसम्भावनयैव लोकः प्रवर्तते कर्मणि। तुलस्यपि रघुनाथगाथां स्वान्तःसुखायातनोति। कालिदासोऽपि कवियशःप्राप्तिसम्भावनाप्रचोदितः काव्यं करोति। तर्हि चार्वाकैः किमपराद्धं सुखवादपक्षग्रहणेन। यदि कश्चिच्छरीरशोषणे एव सुखमनुभवति तदा चार्वाकाणां न काऽपि हानिः। तेषां सुखवादस्यायमेवाशयो यददृष्टफलहेतोः शरीरं नैव पीडनीयमिति। तेषां स्वभाववादस्तु न केनाऽपि प्रत्याख्यातः। विजित्य हि गुणान् सर्वान् स्वभावो मूर्ध्नि वर्तते। ते हि स्वभावादेव सृष्टेः प्रवर्तनं मन्यन्ते। साङ्ख्या अपि प्रधानस्य स्वभावादेव कर्मणि प्रवर्तनं मन्यन्ते। नैयायिका अपि पदार्थानां स्वस्वभावं मन्यन्ते एव। अयसोऽयं स्वभाव एव यच्चुम्बकेनाकृष्टो भवति। पाषाणस्य न तादृशः स्वभावस्तेन तच्चुम्बकादप्रभावितमेव तिष्ठति। अग्नेरुष्णत्वं जलस्य शैत्यं वायोः शीतस्पर्शत्वं स्वभावादेव भवति। तथैव स्वभावादेव पदार्थसङ्घटनायां चैतन्यमुत्पद्यते स्वभावादेव समानात्समानायां समानमेवोत्पद्यत इति किमत्युक्तं तैः। तथैव चैतन्यस्य शरीरसम्बद्धता न केवलं तैरपितु नैयायिकैरायुर्ज्ञैरन्यैश्च निःशङ्कं समर्थ्यते। अन्नं वै प्राणाः इति कस्य न सम्मतम्। अन्नपानादिना यदि चैतन्यता प्रभाविता न भवेत्तदाऽऽहारशुद्धौ सत्त्वशुद्धिरिति किमर्थमुक्तं भवति। किं तैः चैतन्यस्य शरीरसम्बद्धता नैवोररीकृता। शरीरावसाने चैतन्यावसानं

सर्वैर्दृष्टमेव। तेन चैतन्यस्य शरीरेण सहान्वयव्यतिरेकसम्बन्धः स्पष्ट एव। यदि तथा न स्यात्तदा ब्राह्मीघृतसेवनेन प्रज्ञा वर्धत इति कथनमपि वृथैव स्यात्। तेन चैतन्यस्य शरीराश्रयत्वं यथार्थं निर्विवादञ्च। तथा सति आश्रयभूतशरीरे दग्धे सति आश्रयि चैतन्यं पुनर्जायत इति यदि तैर्न स्वीकृतं चेदपि नाश्चर्यम्। चार्वाकाः पुनर्जन्म नामनन्ति किन्तु न केवलं त एवापितु बृहदारण्यकादावपि तदनुमतमेव। यथा—

'न प्रेत्य संज्ञाऽस्ति।' (बृह० ४।५।१३)।
'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके''
(कठ० १।१।२०)

इति। पारलौकिकं सर्वमेव कार्यजातं शब्दप्रमाणवेद्यमेव। यदा ते शब्दप्रमाणमेव नामनन्ति तदा तेषां पारलौकिककृत्यास्वीकारः स्वाभाविक एव। शब्दप्रमाणासहमतानां श्रुतिष्वविश्वासो नाश्चर्यावहः। चार्वाकाणां सम्मतं सुखमपि न तथा शारीरिकमात्रमपितु मानसिकबाहुल्यमेव। ते हि उत्कृष्टतरं सुखमधिब्रुवन्ति। परापीडनेन यत्सुखं तदेव सुखं तेषामभिमतमन्यथा तैः राजशासनं नैवाप्युक्तं भवेत्। निग्रहानुग्रहकर्ता राजा एवेश्वर इति तेषां मतमिदमेव सूचयति यत्ते हि परापीडनेनैव जीवितुं वाञ्छन्तीति।

तदित्थं चार्वाकमतं सङ्क्षेपेण निरूपितम्।

## (ख) आर्हतमतम्

आर्हतमतञ्च नास्तिकाभिधदर्शनेष्वेकम्। इदं हि जैनदर्शनमित्यप्युच्यते। अर्हता-सम्बद्धत्वादार्हतं जिनसम्बद्धत्वाज्जैनमित्यस्य नाम। यद्यपि जिनशब्दो बुद्धपर्यायवाचिशब्देषु पठितस्तथाऽप्यत्र स महावीरसम्बद्धः। वर्धमानमहावीरेण सर्वेऽपि षडेव रिपवो जिता इति स जिनसंज्ञामवाप, तेन व्याख्यात दर्शनमिदं जैनदर्शनम्। रत्नत्रयस्याधिवाचकमिदं दर्शनं सम्भवतश्चार्वाकादपि प्राचीनतममथवा तत्समकालिकमेव। यद्यपि दर्शनमिदं वेदानां प्रामाण्यं नैव स्वीकरोति तथापि दर्शनस्यास्य बीजं वेदेष्वेव लभ्यते। अयं हि रत्नत्रयसाधनेनात्मोन्नतिः समर्थ्यते। तच्च सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चरित्रञ्च। तथैव ऋषभदेव-पार्श्वनाथ-वर्धमानाश्चास्य त्रय आचार्यास्त्रिरत्नव्यपदेश्या येषामुपदेशानुसरणं सम्यग्ज्ञानं तत्र विश्वासो हि सम्यग्दर्शनं तदनुसाराचरणमेव सम्यक्चरित्रमिति यत आत्मा बन्धनान्मुक्तो भवति। तेषाञ्च अहिंसा-सुनृत-अस्तेय-ब्रह्मचर्य-अपरिग्रह-आत्मसंयम-वैराग्यादीनि व्रतानि, यत आत्मा आनन्दमयस्वरूपं प्राप्नोति। आनन्दमयावस्थाप्राप्तो जीव एव अर्हदभिधः। स हि सर्वज्ञो भवति। यथोक्तं—

'गुरूपदिष्टमार्गेण ज्ञानकर्मसमुच्चयात् ।
मोक्षो बन्धाद्विरक्तस्य जायते भुवि कस्यचित् ॥'

तथैव--कर्मार्जितकलेवरैरावृतिर्बन्धनमात्मनो निरावरणता मुक्तिः। जैनानां प्रत्यक्षानुमानागामाः प्रमाणानि यत्रागमस्तीर्थङ्करशासनमेव। आगमाददृष्टमपि सिध्यतीति तेषां विश्वासः।

कथ्यते हि प्रियव्रतस्य परप्रपौत्रः आग्नीध्रस्य पौत्रो नाभेः पुत्रो भरतस्य पिता ऋषभदेवोऽस्य जैनदर्शनस्य प्रथमः प्रवक्ता। स हि भगवतश्चतुर्विंशत्यवतारेष्वन्यतमत्वेन स्मर्यते। यथोक्तं श्रीमद्भागवतेऽपि।

तदित्थमृषभदेवप्रवर्तितं मतमिदं जीवप्रकृत्योः पार्थक्यसमर्थकम्। ऋषभप्रवर्तितं मतमिदं तीर्थङ्करैरन्यैः काले काले समुद्धृतम्। तेषु पार्श्वनाथः श्वेताम्बरसम्प्रदायप्रवर्तकः। स हि पौराणिकस्य अश्वसेनाभिधस्य काशीराजस्य सुतो वामादेव्यां जातः। स त्रिंशद्वर्षपर्यन्तं गार्हस्थ्यजीवनं व्यतीत्य जातवैराग्यो भगवत्प्रेरणया गृहीतभिक्षुजीवनः जैनधर्मं प्रचारयन् सप्ततितमे वर्षे समेतशिखरे निर्वाणमाप। स हि अहिंसासत्यास्तेयापरिग्रहब्रह्मचर्याख्येषु पञ्चसु व्रतेषु पूर्वेषु चतुर्ष्वेव बलमदधात्। स हि भिक्षून् श्वेताम्बरपरिधानायादिदेश। अस्य स्थितिकालो विक्रमपूर्वनवमशतकमित्यनुमीयते। वस्तुतस्त्वश्वसेनः सुदर्शनादपि प्राचीनतम इति महाभारतादावुक्तत्वाद् द्वापरयुगे एवाऽस्य स्थितिः। स हि धृतराष्ट्रसमकालीनः।

पार्श्वनाथो हि त्रयोविंशतितमस्तीर्थङ्करः। तत्पूर्वं षोडशतमस्तीर्थङ्करः शान्तिनाथो द्वितीयश्चारिष्टनेमिः। असौ हि अरिष्टनेमिः ऋग्वेदेऽपि गीयते। जैनतीर्थङ्कराणां गणना एतादृशी श्रूयते—ऋषभदेवः, अजितनाथः स एवारिष्टनेमिः, सम्भवनाथः, अभिनन्दनः, सुमतिनाथः, पद्मप्रभुः, सुपार्श्वनाथः, चन्द्रप्रभः, सुविधिनाथः, शीतलनाथः, श्रेयांसनाथः, वासुपूज्यः, विमलनाथः, अनन्तनाथः, धर्मनाथः, शान्तिनाथः, कुन्थुनाथः, अरनाथः, मल्लिनाथ, नेमिनाथः, पार्श्वनाथः, वर्धमानश्च। एषु हि अजितः षष्ठे मन्वन्तरे भगवत्कलयाऽवतीर्णो यो हि समुद्रं मन्थयामासेति पौराणिकी कथा। अन्तिमस्तीर्थङ्करो वर्धमानमहावीरः। स हि विष्णुपुराणादावुपवर्णितस्य नन्दीवर्धनस्य भ्राता कथ्यते। तस्य हि पिता सिद्धार्थो माता त्रिशला पत्नी च यशोदा। तस्य जन्म केचिद्वैशालीग्रामे केचित्क्षत्रियकुण्डग्रामे वदन्ति। तस्य हि स्थितिकालस्तु विक्रमपूर्वषष्ठशतकमामन्यते।

प्रवर्तनकालानन्तरं जैनदर्शनस्य प्रणयनकालः प्रारभते विक्रमावस्थितेरारभ्य तदनन्तरषष्ठशतकपर्यन्तम्। कालेऽस्मिन् उमास्वाति-कुन्दकुन्दाचार्य-समन्त-

भद्राख्यं रत्नत्रयमजायत । व्याख्याकालश्चास्य विक्रमानन्तरषष्ठशताब्दीत आरभ्य नवमशतकपर्यन्तं प्रचलति । अयमेवास्य स्वर्णकालो मन्यते । कालेऽस्मिन् सिद्धसेन-दिवाकरहरिभद्र-अकलङ्कभट्ट-विद्यानन्दप्रभृतयो ग्रन्थकारा भाष्यकाराश्चाभूवन् । तदनन्तरमस्य प्रचारकाल उदेति । कालेऽस्मिन्नपि वादिराजसूरिः, देवसूरिः, हेमचन्द्रः, मल्लिषेणः, गुरुरत्नः, यशोविजयः, पुरुषोत्तमश्च प्रसिद्धा विद्वांसो रामचन्द्रगुणचन्द्रौ च ।

जैनास्तु द्विविधाः श्वेताम्बरा दिगम्बराश्च । कथ्यते यद् दिगम्बरमतं वैक्रमे १३९ तमे वर्षे शिवभूतिना दत्तबलं, श्वेताम्बरमतञ्च वैक्रमे १३६ तमवर्षे भद्रबाहुना निर्धारितस्वरूपमिति । श्वेताम्बराः प्राय उत्तरभारते सन्ति दिगम्बराश्च दक्षिणभारते इति कर्णपरम्परा । दिगम्बरमते ब्रह्मचर्यं विवसनं कठिनतपश्चर्या च मोक्षसाधनानि, स्त्रीणां नैव मोक्षेऽधिकारः । श्वेताम्बरास्तन्न तथा पालयन्ति । ते हि अहिंसा-सत्या-स्तेया-परिग्रहेषु बलं दधति ।

जैनदर्शनानुसारं जीवो हि प्रकृतेर्भिन्न एव । स हि चैतन्यवान् स्वभावत एवानन्तज्ञानविशिष्टश्च । प्राक्तनकर्मावरणविहितो हि स समादृतशुद्धरूपो भवति । सम्यग्दर्शन-ज्ञान-चरित्रावलम्बनेन स पुनः स्वशुद्धज्ञानस्वरूपतां प्राप्नोति यतः कैवल्यं सर्वज्ञत्वञ्च भूयो लभते ।

ज्ञानं द्विविधं प्रत्यक्षं परोक्षञ्च । तत्रात्मसापेक्षं प्रत्यक्षं तदितरेन्द्रियसापेक्षं परोक्षम् । अर्थात् इन्द्रियनिरपेक्षकेवल आत्मा यदनुभवति तदेव प्रत्यक्षं इन्द्रियसापेक्षो हि स यदनुभवति तत्परोक्षम् । परोक्ष हि ज्ञानं द्विविधं मतिः श्रुतिश्च । आत्ममनःसम्पर्कादुद्भूतं मतिः । सैव संज्ञा, स्मृतिः, चिन्ता, अभिनिबोध इत्यपि । तच्च विद्यमाने वस्तुनि प्रवर्तते । श्रुतिज्ञानन्तु त्रैकालिके वस्तुनि भवति । परोक्षं हि त्रिप्रकारकं पुनः अवधिः मनःपर्यायः केवलञ्चेति । तत्र व्यवहितपदार्थानां ज्ञानमवधिज्ञानं, जीवस्य आवरणरूपकर्मक्षयेण समुद्भूतं ज्ञानमवधिसंज्ञकं भवति । जीवस्य ईर्ष्याद्वेषादिक्षयेण या परमनोगतज्ञानयोग्यता भवति तन्मनःपर्यायज्ञानं, समस्तकर्मबन्धनक्षयानन्तरं जीवस्य शुद्धज्ञानं केवलज्ञानम् । तदा जीवः सर्वज्ञत्वं भजते । प्रत्यक्षं द्विविधं सांव्यावहारिकं पारमार्थिकञ्च । तत्र सांव्यावहारिकमंशत इन्द्रियमनःसाचिव्यापेक्षि, जीवस्य स्वरूपाविर्भावत्वेन केवलं ज्ञानं पारमार्थिकम् । इत्थं परोक्षज्ञानं स्मृति-प्रत्यभिज्ञान-तर्क-अनुमान-आगमभेदात्पञ्चविधम् ।

जैनानां मते प्रत्यक्षानुमानागमाः प्रमाणानि ।

जैनानां स्याद्वादः प्रधानो वादः । अनेकधर्माणां पदार्थानां परिपूर्णं ज्ञानं तु सर्वज्ञस्यैव भवति । साधारणस्तु तेषामांशिकमेव ज्ञानं लब्धुं पारयति ।

तच्चांशिकं ज्ञानं 'नयः' इत्युच्यते। उक्तमेव न्यायावतारे 'एकदेशविशिष्टो यो नयस्य विषयो मतः' इति। ज्ञानसामान्यं त्रिविधं दुर्णय-नय-प्रमाणभेदात्। यत्र सद्वस्तु सत्स्वरूपेणैव सर्वकालावच्छेदेन ज्ञायते तदाऽन्येषां निषिध्यमान-दोषभावात् तद् दुर्णयज्ञानं भवति। धर्मान्तरनिषेधमन्तरा सद्वस्तुमात्रांशिकज्ञान-सद्भावाद् यज्ज्ञानं तन्नयज्ञानं, स्यात्कोटिज्ञानं प्रमाणज्ञानम्, सद्वस्तुविषये स्यात्सदिति, असद्वस्तुविषये स्यादसदिति। यथोक्तं स्याद्वादमञ्जर्याम्—

'सदेव सत्स्यात्सदिति त्रिधार्थो मीयेत दुर्नीतिनयप्रमाणैः।
यथार्थदर्शी तु नयप्रमाणपथेन दुर्नीतिपथं त्वमास्याः॥ (२८)

स्यात्पदमत्र संशयितार्थसचिवसम्भवार्थकम्।

स्याद्वादवन्नयवादोऽपि जैनानां विशिष्ट एव। अनन्तधर्माणामपि पदार्थाना-मानन्त्येऽपि तेषां वस्तुगत्या द्वौ भेदौ द्रव्यार्थिकनयपर्यायार्थिकनयभेदात्। तत्राद्यस्त्रिविधोऽपरश्चतुर्विध इति सम्भूय सप्तप्रकारा भवन्ति नैगम-सङ्ग्रह-व्यवहार-ऋजु-शब्द-समाधिरूढ-एवम्भूतनयभेदात्।

जैनानां परामर्शश्च सप्तप्रकारकः सप्तभङ्गीनयपदव्यपदेश्यः। स च पदार्थ-याथार्थ्यविबोधाय कल्पते। स च यथा—

'स्यादस्ति नास्त्युभयवक्तव्यं पुनश्च तत्त्रितयम्।
द्रव्यं खलु सप्तभङ्गमादेशवशेन सम्भवति॥' इति।

अर्थात्, स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यं, स्यादस्ति चावक्तव्यञ्च, स्यान्नास्ति चावक्तव्यञ्च, स्यादस्ति च नास्ति चावक्तव्यञ्चेति।

जैनदृष्टौ तत्त्वं ह्यनन्तधर्मात्मकम्। कस्यापि स्वरूपज्ञानाय सत्तात्मकधर्मैः सह निषेधात्मकधर्माणामपि ज्ञानमावश्यकं भवति। तत्र देश-काल-वर्ण-जाति-रूपादयः सत्तात्मकधर्माः स्वपर्यायास्तन्निषेधात्मकाः परपर्यायवाच्याः। यथा कमलनयनं ज्ञातुं कमलनयनः कश्चिद्ब्राह्मणः गौरः नेपालाभिजनः पाड्वास्तव्यः श्मश्रुल इत्याद्या धर्मा एव न पर्याप्ता अपितु तन्निषेधात्मकधर्माः यथा स न क्षत्रियः न कृष्णः इत्याद्याः परपर्यायाश्चापेक्ष्याः कमलनयनं सम्यग् ज्ञातुम्। तेन तत्त्वज्ञानं स्वपर्यायपरपर्यायेत्युभयसमुच्चयेनैव भवितुं शक्नोति नान्यथेति।

सतः किं स्वरूपमिति विषयेऽपि जैना विशिष्टतां भजन्ते। बौद्धनये सन्निरन्वयं क्षणिकमुत्पादविनाशशालि च। कापिलनये सत् चैतन्यमयं नित्यं कूटस्थं पुरुषाभिधम्। अचेतनाया अपि सत्स्वरूपायाः प्रकृतेश्च परिणामिनित्यत्वम्। जैननये तु पदार्थाः शाश्वताशाश्वतरूपेण द्वेधा भवन्ति। तत्र शाश्वतमालम्ब्य तेषां नित्यत्वमशाश्वतमुपजीव्यं चानित्यत्वम्। तदित्थं प्रत्येकस्योभयात्मकता

पदार्थस्य। तेन उत्पादव्ययध्रौव्ययुक्तं सत्। प्रपञ्चस्य नानात्वेऽपि तदन्तर्गतैकत्वं जैनाः समर्थयन्ति। यथा कटककुण्डलादिषु सुवर्णम्। परिणामिनित्यतासिद्धान्तोऽयं वेदान्तिनां कूटस्थनित्यतावादेन बौद्धानां परिणामवादेन सहापि संवदति। तेन एकस्मिन्नेव पदार्थे नित्यत्वानित्यत्वसत्ता नैव विरुध्यते।

जैननये गुणविशिष्टं पर्यायविशिष्टञ्च वस्त्वेव द्रव्यम्। गुणपर्यायवद् द्रव्यमित्युक्तेः। तत्र नित्यविद्यमानत्वे सति वस्तुनो नितान्तावश्यको यो धर्मः स गुणः। देशकालजन्यः परिणामशाली धर्मः पर्यायः, तदुभयविशिष्टतत्त्वस्यैव द्रव्यत्वं सिध्यति। द्रव्यञ्च द्विविधं एकदेशव्यापि बहुदेशव्यापि च। तत्रापि कालस्यैव एकदेशव्यापिद्रव्यत्वं, पदार्थान्तराणान्तु बहुदेशव्यापिद्रव्यत्वमेव। तदेवास्तिकायमाख्यायते। तस्य हि सद्भाववत्त्वादस्तित्वं कायवद्विस्तारसमन्वितत्वात्कायत्वञ्चेति अस्तिकायत्वम्। अस्तिकायद्रव्यञ्च जीवास्तिकायपुद्गलास्तिकाय-आकाशास्तिकाय-धर्मास्तिकाय-अधर्मास्तिकायभेदात्पञ्चविधम्। तत्रापि जीवास्तिकायस्य द्वौ भेदौ जीवोऽजीवश्च। जीवश्च बद्धमुक्तभेदाद् द्विविधः। बद्धश्च तारक-मनुष्य-तिर्यक्-देवभेदाच्चतुर्विधः। पुनश्च स स्थावरजङ्गमभेदाद्द्विविधः। स्थावरा एकेन्द्रिया निकृष्टा जङ्गमास्तु द्विरिन्द्रियत्रिरिन्द्रियचतुरिन्द्रियपञ्चेन्द्रियभेदयुताः। तेषु पञ्चेन्द्रियो मनुष्यः श्रेष्ठः। अजीवास्तु पुद्गलाकाशधर्माधर्मभेदाच्चतुर्विधाः। जीवश्चैतन्यलक्षणः। सर्वप्रकारकेषु जीवेषु चैतन्यं विद्यते। चैतन्यविशिष्टो जीवः इत्युक्तेः। इदमेव तथ्यं भृगुगीतायामप्युक्तं यथा--

सुखदुःखयोश्च ग्रहणात् छिन्नस्य च प्ररोहणात्।
चैतन्यमस्ति वृक्षाणामचैतन्यं न विद्यते॥ इति।

जीवो हि अनन्तज्ञानशक्तिगुणसम्पन्नः। जीवश्चात्रात्मवचनः। स हि मध्यमपरिणामविशिष्टः। शरीरावच्छिन्नो जीवः स्वप्रकाशेन तद् द्योतयति। स च शरीरानुसारं विकाससङ्कोचशालित्वमपि भजते यथा हस्तिनि कीटे च। स च स्वयममूर्तः। तेन स नेन्द्रियगोचरः। तथापि स्वसंवेदनप्रत्यक्षद्वाराऽनुमानबलेन वा तत्प्रत्ययगोचरत्वम्। पुद्गलो भूतसामान्यवचनः। स एव प्रकृति-प्रधान-परमाणुप्रभृतिशब्दबोध्यः। अर्थात् यद् साङ्ख्याः प्रधानशब्देन नैयायिका परमाणुशब्देन मीमांसकाः प्रकृतिशब्देन जिजनयिषन्ति तज्जैनाः पुद्गलशब्देन जनयन्ति। पूरयन्ति गलन्ति चेति पुद्गलाः। स च अणु-सङ्घातरूपेण द्विविधश्चतुर्गुणवांश्च। यथोक्तम्--

'स्पर्श-रस-गन्ध-वर्णवन्तः पुद्गलाः' इति।

जैननये शब्दो न भूतगुणविशेषः प्रत्युतान्धकारच्छायादिवदुत्पन्नोऽवान्तरपरिणाम-भेदरूप एव। यथोक्तम्--

'शब्दबन्धाः सौक्ष्म्यस्थौल्यसंस्थानभेदात्तमश्छायातापोद्द्योतवन्तश्च।'

अवकाशप्रदो द्रव्यविशेष आकाशः। तस्य सत्ता त्वनुमानगम्यैव। जीवादीनां विस्तारसिद्धये तस्यावश्यकता। स च लोकाऽलोकभेदाद् द्विविधः। यत्र लोक-स्थितिः सलोकाकाशो लोकोपरितनश्चालोकाभिधः।

जैननये कालोऽप्यनुमानगम्यः। जगतः परिणामशीलत्वे तस्यैव हेतुता। प्रवर्तना-परिणाम-क्रिया-परत्वापरत्वेऽपि कालादेव सम्भवन्ति। स च व्याव-हारिकः पारमार्थिकश्चेति द्विविधः। तत्रानुमितघटिकादिघटितो व्यावहारिको भूतभविष्यद्वर्तमानलक्षणः सादिः सान्तश्च। पारमार्थिकस्तु नित्यः सातत्येन विद्यमानः।

एवमेव जैननये जीवपुद्गलयोः सहकारिकारणलक्षणो द्रव्यविशेषो धर्मः। स एव जीवगतिप्रेरकः। यथा मत्स्यसन्तरणं प्रति जलं सहकारिकारणतां धत्ते तथैव धर्मो जीवपुद्गलयोर्गतिं प्रति।

धर्मविरुद्धस्त्वधर्मः। स च जीवपुद्गलयोः स्थितिं प्रतिहेतुत्वं भजते।

मोक्षस्तु जीवस्य आवरणरहितत्वम्। स च सम्यग्दर्शन-ज्ञान-चारित्र्येति-रत्नत्रयात्सम्भवति। यथोक्तम्--

'सम्यग्दर्शनज्ञानचारित्र्याणि मोक्षमार्गः' इति।

तत्र दर्शनं श्रद्धा, ज्ञानमवबोधश्चारित्र्यं व्यवहृतिरिति। स्वभावतो मुक्तोऽपि जीवोऽविद्यावासनाजन्यकर्मावरणेन बद्धो भवति, सम्यग्दर्शनादिना तस्यच्छेदस्ततो मुक्तिरिति।

कर्मापि पृथिव्यादिवद्भौतिकमेव जैननये। तच्चाष्टविधं ज्ञानावरणीय-दर्शनावरणीय-मोहनीय-वेदनीय-आयुष्यनाम-गोत्र-अन्तरायभेदेन। एषाञ्चानेके भेदाः इति सङ्गृह्य कर्मणां चतुश्चत्वारिंशदधिकशतमितभेदाः।

एवञ्च जैननये आश्रय-बन्ध-संवर-निर्जरा-मोक्ष-जीवाजीवभेदात्पदार्थाः सप्त। तत्र मनोवाक्कायानां जीवम्प्रति क्रियायोग आस्रवः, स च भावद्रव्यभेदाद् द्विविधः। जीवस्य पुद्गलादानं बन्धः। यथोक्तं—कषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते स बन्धः। करिष्यमाणानां कर्मणामवरोधः संवरः। स च भावद्रव्यभेदाद् द्विविधः। तत्र कर्ममार्गनिरोधकमानसिकप्रयत्नप्रयोगविशेषो भावसंवरः, अभिनवपुद्गलकर्मणां वास्तविको निरोधो द्रव्यसंवरः। निर्जरा हि कृतकर्मणां जीर्णीकरणं फलप्रसवाय निर्वीर्यीकरणम्। एतेषां फलमेव मोक्षः।

तेन कर्मणामात्यन्तिकक्षय एव मोक्षः। बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मक्षयो मोक्षः। मुक्तश्च जीवो नैसर्गिकशुद्धस्वरूपतां याति। जीवाऽजीवौ व्याख्यातौ।

आध्यात्मिकविकासक्रमो गुणस्थानम्। तच्चतुर्दशविधं—मिथ्यात्वग्रन्थिभेद-मिश्रविरति-देशविरति-प्रमत्तापूर्वकरणानिवृत्तिकरण-सूक्ष्म-सम्पराय-उपशान्तमोह-संयोग-केवलायोग-केवलेतिभेदात्। एभिरुपर्युपरि गच्छन् साधकः सिद्धि-माप्नोति। सैव सिद्धशिला। सिद्धशिलाप्राप्तो हि जीवः परमशान्तिमनुभवन् मुक्तः सञ्जायते।

अहिंसा-सत्या-स्तेया-परिग्रह-ब्रह्मचर्याणां साधनैव सम्यक् चारित्र्यम्। इदमेव मुक्तेर्योनिः। तत्र ब्रह्मचर्यं यतीनां परमावश्यकं गृहमेधिनां स्वयोषिति रतिरनुमता सप्रतिबन्धा।

दर्शनमिदं बहुत्ववादप्रतिपादकम्। तेनाऽस्य परमार्थो वास्तववाद एव। इदं हि बाह्यान्तरेन्द्रियैरनुभूयमानं जगद् वास्तविकत्वेन गृह्णाति। इदं हि कणे कणे जीवसत्तामङ्गीकरोति। एवमेव अनैकान्तवादोऽपि जैनानां परमसम्मतः। पदार्थानां मिथः सम्बन्धज्ञानादृते तत्त्वज्ञानमसम्भवि। भावस्यैकस्य ज्ञानं शेषभाव-ज्ञानस्याधारः। सर्वभावानाञ्च ज्ञानं भावैकज्ञानस्याधार इति।

जैनदर्शनस्य हि सुविपुलं साहित्यमस्ति। तत्र च आचारग्रन्थापेक्षया प्रमाण-ग्रन्थानां बाहुल्यमस्ति। तेषां हि सिद्धान्तग्रन्थाः पञ्चचत्वारिंशत्सङ्ख्याकाः येषु एकादश अङ्गानि, द्वादश उपाङ्गानि, दश प्रकीर्णकानि, षट् छेदसूत्राणि, चत्वारि मूलसूत्राणि, एकमनुयोगद्वारसूत्रम्, एकं नन्दीसूत्रञ्च। तत्र—

(१) अङ्गानि—१. आचार, २. सूत्रकृत, ३. स्थान, ४. समवाय, ५. भगवती, ६. ज्ञातृधर्मकथा, ७. उपासकदशा, ८. अन्तकृद्दशा, ९. अनुत्तरो-पपातिकदशा, १०. प्रश्नव्याकरण, ११. विपाक।

(२) उपाङ्गानि—१. औपपातिक, २. राजप्रश्नीय, ३. जीवाभिगम, ४. प्रज्ञापना, ५. जम्बुद्वीपप्रज्ञप्ति, ६. चन्द्रप्रज्ञप्ति, ७. सूर्यप्रज्ञप्ति, ८. निरया-वलि, ९. कल्पावतंसिका, १०. पुष्पिका, ११. पुष्पचूलिका, १२. वह्निदशा।

(३) प्रकीर्णानि—१. चतुःशरण, २. संस्तरक, ३. आतुरप्रत्याख्यान, ४. भक्तापरिज्ञा, ५. तण्डुलवैयासीय, ६. चन्द्रवेध्यक, ७. देवेन्द्रस्तव, ८. गणिवीज्जा, ९. महाप्रत्याख्यान, १०. वीरस्तव।

(४) छेदसूत्राणि—१. निशीथ, २. महानिशीथ, ३. व्यवहार, ४. दशाश्रुत-स्कन्ध ५. बृहत्कल्प, ६. पञ्चकल्प।

(५) मूलसूत्राणि—१. उत्तराध्ययन, २. दशवैकालिका, ३. आवश्यक, ४. पिण्डनिर्युक्तिः।

सुविपुलं जैनसाहित्यं संस्कृतेऽर्धमागध्याञ्च सुगुम्फितमस्ति। तत्र श्वेताम्बर-सम्प्रदायाचार्याः भद्रबाहु-सिद्धसेनदिवाकर-सिद्धसेनगणी-मल्लवादि-हरिभद्र-देवसूरि-हेमचन्द्र-प्रभृतयः। दिगम्बरसम्प्रदायाचार्यास्तु उमास्वाति-समन्तभद्र-कुन्दकुन्दाचार्य-विद्यानन्द-प्रभाचन्द्र-अमितचन्द्र-अनन्तवीर्यप्रभृतयः। अथैषां सङ्क्षेपेण परिचयः प्रस्तूयते—

**उमास्वातिः**—उमास्वाम्यपराभिधानोऽसावाचार्य-मगधाभिजनो विक्रम-समकालीनः। अस्य तत्त्वार्थाधिगमापरनामधेयं 'तत्त्वार्थसूत्रं' प्रामाणिको ग्रन्थो जैनदर्शनस्य। अस्योपरि बहुविधानि भाष्याणि विविधाष्टीकाश्च सन्ति। तेषु हि पूज्यपाद-देवनन्दिनः सर्वार्थसिद्धिः, समन्तभद्र-सिद्धसेनदिवाकरयोः गन्ध-हस्तिभाष्यम्, अकलङ्कस्य राजवार्तिकं, विद्यानन्दिनः श्लोकवार्तिकञ्च प्रसिद्धा भाष्यटिप्पण्यः। तत्त्वार्थसूत्रं हि जैनदर्शनस्य ब्रह्मसूत्रमेव।

**कुन्दकुन्दाचार्यः**—उमास्वातिसमकालिकोऽसौ दिगम्बरजैनाचार्यो द्राविडः। अस्य हि प्राकृतमालम्ब्य प्रणीताश्चतुरशीतिः ग्रन्थाः प्रसिद्धाः। अस्यैव नियम-सारः, पञ्चास्तिकायसारः, समयसारः, प्रवचनसारश्च येषु पश्चिमास्त्रयो नाटक-त्रयो नाम्ना प्रसिद्धा, जैनागमस्य सर्वस्वभूता ग्रन्थाः। एते हि जैनदर्शनस्य प्रस्थानत्रय्येव।

**समन्तभद्रः**—विक्रमानन्तरतृतीयशतकभवोऽयं दिगम्बराचार्यः। अस्य हि 'आप्तमीमांसा' प्रसिद्धो ग्रन्थो यत्र चतुर्दशोत्तरशतकारिकाः सन्ति यस्योपरि अकलङ्कस्य 'अष्टशती', विद्यानन्दस्य 'अष्टसाहस्री' च सुप्रसिद्धे टीके। तदतिरिक्तं युक्त्यनुशासनं, स्वयम्भूस्तोत्रं, जिनस्तुतिशतकं, रत्नकरण्डश्रावकाचारः, जीव-सिद्धिः, तत्त्वानुसन्धानं, गन्धहस्तिभाष्यञ्च तस्य प्रसिद्धा ग्रन्थाः।

**सिद्धसेनदिवाकरः**—विक्रमानन्तर ५३७–६०७ मितकालस्थितिमानय-माचार्यः न्यायावतारः सन्मतितर्कः तत्त्वार्थटीका, कल्याणमन्दिरस्तोत्रञ्चेत्यादि-ग्रन्थानां प्रणेता। अस्य हि न्यायावतारः जैनन्यायस्य जन्मदाता ग्रन्थः।

**सिद्धसेनगणी**—विक्रमानन्तरसप्तमशतकभवोऽयं तत्त्वार्थटीकायाः प्रणेता।

**मल्लवादी**—वैक्रमनवमशतकीनोऽयं नयचक्रवालस्य धर्मोत्तरटिप्पणकस्य च प्रणेता।

**हरिभद्रः**—वैक्रमनवमशतकोद्भवोऽयमाचार्यः षड्दर्शनसमुच्चयः अनेकान्त-जयपताका इत्येवमादीनामनेकेषां ग्रन्थानां प्रणेता।

अकलङ्कभट्टः—वैक्रमनवमशतकपूर्वार्द्धभवोऽयं विचक्षणः तत्त्वार्थसूत्रोपरि राजवार्तिकस्य आप्तमीमांसोपरि अष्टशतीसंज्ञकस्य भाष्यस्य प्रणेता। अस्यैव हि लघीयस्त्रय-न्यायविनिश्चय-प्रमाणसङ्ग्रहाभिधाः ग्रन्था जैनन्याय-विषयकाः।

विद्यानन्दः—वैक्रमनवमशतकीनोऽयं विद्वान् अष्टसाहस्री-तत्त्वार्थ-श्लोक-वार्तिक-आप्तपरीक्षाप्रभृतिग्रन्थानां प्रणेता पाटलीपुत्राभिजनः।

प्रभाचन्द्रः—प्रमेयकमलमार्तण्ड-न्यायकुमुदचन्द्रोदयप्रभृतिग्रन्थानां प्रणेताऽसौ विपश्चिद्विक्रमानन्तर ८८२ मितवर्षमभित आसीत्।

अमितचन्द्र—वैक्रमदशमशतकोद्भवोऽसौ तत्त्वार्थसार-पुरुषार्थसिद्ध्युपाय-आत्मख्यातिप्रभृत्यनेकग्रन्थानां प्रणेता।

अनन्तवीर्यः—वैक्रमैकादशशतकीनोऽसौ परीक्षामुखपञ्जिका न्यायविनिश्चय-वृत्तिप्रभृतिग्रन्थानां प्रणेता।

देवसूरिः—विक्रमानन्तरद्वादशशतकपूर्वार्द्धभवोऽयं विद्वान् प्रमाणनयतत्त्वा-लोकालङ्कारस्य च स्याद्वादरत्नाकराख्यतट्टीकायाश्च प्रणेता।

हेमचन्द्रः—विक्रमानन्तरद्वादशशतकभवोऽयं महापण्डितः प्रमाणमीमांसादि-ग्रन्थानां प्रणेता।

तदित्थं देहातिरिक्तदेहात्मवादिनां जैनानां दर्शनं सङ्क्षेपेण समुपस्थापितम्। अत्र सङ्ग्रहश्लोकाः—

'चिदचिद् द्वे परे तत्त्वे विवेकस्तद्विवेचनम्।
उपादेयमुपादेयं हेयं हेयञ्च सर्वतः॥
हेयं तु कर्तृरागादितत्कार्यमविवेकिनः।
उपादेयं परं ज्योतिरुपयोगैकलक्षणम्॥'
(पद्मनन्दी)

"आस्रवो बन्धहेतुः स्यात्संवरो मोक्षकारणम्।
इतीयमार्हती मुष्टिरन्यदस्याः प्रपञ्चनम्॥" इति।

## (ग) बौद्धदर्शनम्

"मुख्यो माध्यमिको विवर्तमखिलं शून्यस्य मेने जगद्
योगाचारमते तु सन्ति मतयस्तासां विवर्तोऽखिलः।
अर्थोऽस्ति क्षणिकस्त्वसावनुमितो बुद्ध्येति सौत्रान्तिकः
प्रत्यक्षं क्षणभङ्गुरञ्च सकलं वैभाषिको भाषते॥"

यदैव बुद्धदर्शनस्य बौद्धानां वा चर्चोदेति तदैव जनाः कपिलवस्त्वभिजनं शुद्धोदनपुत्रं मायादेवीगर्भजं यशोधरापतिं राहुलजनकं सिद्धार्थमेव स्मरन्ति। तेनैव रामायणगते बुद्ध-तथागतपदेऽपि मायादेवीसुतेन सह संयोज्य केचिद्रामायणमेव गौतमानन्तरकालप्रणीतं मन्यन्ते, तदसहमाना अपरे तु तं श्लोकमेव क्षेपकमवाल्मीकीयं मन्यन्ते, किन्तु ते तथ्यमेतद्भृशं विस्मरन्ति यन्मायादेवीसुतस्तु अन्तिमो बुद्धो बौद्धपरम्परायाम्। तत्पूर्वमन्ये बहवो बुद्धा अवतरिता निर्वाणं प्राप्ताश्च। तेनैव अमरकोशकारः प्रथमं 'सर्वज्ञः सुगतो बुद्धो.....' इत्यादिबुद्धसामान्यनामानि पठित्वा 'शाक्यमुनिस्तु यः स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः। गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः' इति गौतमबुद्धस्य नामानि पठति। यथा हि वैदिकपरम्परायां कृष्णद्वैपायनेऽष्टाविंशतितमो व्यासो यथा वा जैनपरम्परायां वर्धमानश्चतुर्विंशतितमस्तीर्थङ्करस्तथैव गौतमोऽपि बौद्धानामन्तिमो बुद्धः। तेन रामायणगता बुद्धतथागतादिशब्दा न तु मायादेवीसुतं सङ्केतयन्ति नैव च सः श्लोकः क्षेपकमेव। बौद्धपरम्परा तावती एव प्राचीना यावती जैनी। यथा व्यासेषु इन्द्रः, तीर्थङ्करेषु ऋषभदेवः चार्वाकेषु बृहस्पतिः, तथैव बुद्धेषु स्वयम्भूरादिमः। नेपालेषु प्रथमबुद्धस्य स्वयम्भुवोऽधुनाऽपि मन्दिरं विद्यते। क्रकुच्छन्द-शान्तिश्री-पद्मश्रीप्रभृतयस्तदनन्तरबुद्धा गौतमपूर्ववर्तिनः। गौतमपूर्ववर्तिनो बुद्धाः किं किमुपदिष्टवन्त इति न शक्यते इदमित्थन्तया वक्तुं किन्तु तेषां समुपदेशे दयायाः सन्देशः सर्वातिशायी आसीदिति भृशमनुमीयते। सर्वेषु दया कर्तव्या, दयावन्तो हि दुःखं तरन्ति, सर्वमप्यप्रमत्तेन ग्रहीतव्यम्, अहिंसा मनसा गिरा कर्मणा च, परापीडनेन जीवनमित्याद्याः शाश्वतबुद्धसन्देशाः सम्भवन्ति येषां गौतमबुद्धेन सामयिकपरिवर्तनेन सह पुनरुद्धारः कृतः। नेपालदेशस्येतिहासेऽनेकेषां बुद्धानामुल्लेखो दृश्यते। तेषां हि सत्याहिंसादयादमाः प्राधान्येन जीवनराद्धान्ता आसन्नित्यपि ततो ज्ञायते।

गौतमश्च बुद्धो विक्रमपूर्वे ५०५ तमे वर्षे वैशाखशुक्लपूर्णिमायां शतभिषानक्षत्रे कपिलवस्तुमण्डले शाक्यगणतन्त्रस्य प्रधानस्य शुद्धोधनस्य प्रासादे तन्महिष्या मायादेव्या जन्मावापेति ऐतिहासिका वदन्ति। किन्तु विष्णुपुराणोपवर्णितवंशावल्यनुसारेण तु तस्य स्थितिकालो विक्रमपूर्वपञ्चदशशतकमभितः आपतति कलिवर्षगणनाधारेण। उत्तरकोशलराजवंशोऽयं वैवस्वतादुद्भूतः क्षेमधन्वपर्यन्तं चलतीति तत्रोक्तम्। ते हि काशीराजभयेनायोध्यां त्यक्त्वा कपिलवस्तुमण्डले स्वां राजधानीमनैषुः। तस्मिन्नेव वंशे शाक्यो नाम कश्चिन्नृपतिर्बभूव येन गणतन्त्रपद्धतिरवलम्बिता। ततश्च तद्वंशजाः शाक्यसंज्ञयाऽपि प्रख्याता अभूवन्। कौटिल्यश्च तेषां गणतन्त्रं स्मरति। तस्मिन्नेव शाक्यवंशे

शुद्धोदनो बभूव यस्मात्सिद्धार्थः समजनि। स च बाल्यात्प्रभृतिः विरक्तः सन् एकोनविंशतितमे वर्षे राजप्रासादात्पत्नीपुत्रादिकं त्यक्त्वा महाभिनिष्क्रमणञ्चकार शाश्वतसुखान्वेषणाय। स च प्रथमं आराट्कालामनाम्नः साङ्ख्याचार्याल्लब्धज्ञानोऽपि न तथा सन्तुष्टः स्वयमेव तत्त्वान्वेषणं कुर्वंश्चतुर्णामार्यसत्यानामाविष्कारञ्चकार। प्राप च बुद्धत्वमपि स्वानुभवेन। तानि च दुःखं दुःखसमुदयः दुःखनिरोधः दुःखनिरोधगामिनी प्रतिपच्चेति। ततश्च स सारनाथ गत्वा तत्र कौडिन्यान्यादिपञ्चवर्गीयपञ्चभिक्षुभ्यस्तेषामुपदेशं विधाय धर्मचक्रं प्रवर्तयामास। सिद्धार्थस्य जन्म बुद्धत्वप्राप्तिर्निवाणावाप्तिश्च वैशाखशुक्लपूर्णिमायामेव सम्भूतेति बौद्धेषु वैशाखपूर्णिमायाः समधिकं महत्त्वम्। स चाशीतितमे वर्षे मल्लगणराज्यवर्तिकुशीनगरे निर्वाणमाप। तस्य हि जन्मभूमित्वात्कपिलवस्तुमण्डलस्य, ज्ञानाप्तिस्थलत्वाद्बोधगयायाः, निर्वाणाप्तिस्थलत्वात्कुशीनगरस्य च बौद्धसमुदाये महर्घ्यं महत्त्वम्। निर्वाणात्पूर्वं तेन हि गणराज्यप्रणालिमवलम्ब्य भिक्षुसङ्घोऽपि स्थापितः। अतो बौद्धेषु बुद्धधर्मसङ्घास्त्रिरत्नम्।

बुद्धस्य हि सदुपदेशा मौखिका एवासन्नतस्तेषां सङ्ग्रहार्थं तन्महानिर्वाणानन्तरं राजगृहे महाकाश्यपस्याध्यक्षत्वे बौद्धानां प्रथमं महासम्मेलनं सञ्जातम्। तत्र हि बुद्धपट्टशिष्येणानन्दाख्येन सुत्तपिटकं (सूत्रपिटकं) उपालिना विनयपिटकञ्च सङ्गृहीतम्। एवञ्च अभिधम्मपिटकमपि सङ्ग्रहीतमिति त्रिपिटकं बौद्धदर्शनस्य सर्वस्वभूतो ग्रन्थः। तत्र सुत्तपिटके महात्मनो बुद्धस्योपदेशाः सङ्गृहीताः, विनयपिटके आचारविशेषाः अभिधम्मपिटके च दार्शनिक सिद्धान्ता। सुत्तपिटके पञ्च निकायाः सन्ति दीग्घमज्झिम-संयुत्त-अङ्गुत्तर-खुद्दकनिकायभेदात्। तत्र हि बुद्धस्य द्वाविंशदुत्तरचतुःशतकगाथानां सङ्ग्रहो विद्यते। सोऽयं धम्मपदाख्यो ग्रन्थः। एवं बुद्धस्य पूर्वजन्मभिः सह सम्बद्धानां ५५० मितगाथानां सङ्ग्रहश्च जातकाख्यः। एतदतिरिक्ताश्च खुद्दकपाठः, उदानम्, इतिवित्तकं सुत्तनिपातः, विमानवत्थु, पेतवत्थु, थेरगाथा, थेरीगाथा, निद्देशः पटिसम्मिदाभग्गा, उपादानं, बुद्धवंशं, चरियापिटकम् इत्येवमादयश्च ग्रन्थाः।

विनयपिटकस्य सुत्तविभंगः पात्तिमोक्खो वा, भिक्खुपात्तिमोक्खो, भिक्खुनीपातियोक्खश्चेति त्रीण्यङ्गानि।

अभिधम्मपिटकस्य पुग्गलपञ्ञति-धातुकथा-धम्मसंगवि-विभंग-पट्ठानप्रकरण-कथावत्थयमकश्चेति सप्त ग्रन्थाः।

तथैव नागसेनप्रणीतो मिलिन्दपञ्जाऽपि महत्त्वपूर्णो ग्रन्थः।

क्लिष्टतराध्यात्ममार्गापेक्षया आचारेणैव क्लेशमुक्तिः सर्वसुलभेति कर्तव्यमार्गोपदेश एव बुद्धदर्शनस्य प्रयोजनम्।

दुःखं दुःखसमुदयः दुःखनिरोधः दुःखनिरोधगामिनी प्रतिपच्चेति चत्वारि सत्यानि। आर्या एवं सत्यचतुष्टयं प्रतिपत्तुं पारयन्ति इति तानि आर्यसत्यान्यपि कथितानि। तत्र दुःखं सार्वत्रिकः क्लेशः, तस्य नैकं कारणमपितु कारणशृङ्खलैव। सैव द्वादशनिदानानि इति कथ्यते। तानि च जरामरण-जाति-भव-उपादान-तृष्णा-वेदना-स्पर्श-षडायतन-नामरूप-विज्ञान-संस्कार-अविद्याऽऽख्यानि। तत्र हि पूर्वं प्रति परस्य कारणता। तेन निखिलस्य दुःखपुञ्जस्य कारणमविद्यैव। अविद्यावशङ्गतो हि जीवः संसारचक्रेऽहर्निशं बाभ्रमीति। एतान्येव द्वादशनिदानानि प्रतीत्यसमुत्पादसंज्ञयाऽप्यभिधीयन्ते। अयमेव सापेक्षकारणतावादोऽपि कथ्यते। अयं बौद्धानां मौलिको राद्धान्तः। हेतुप्रत्ययसापेक्षो भावानामुत्पादः प्रतीत्यसमुत्पादः। स च द्वादशाङ्गस्त्रिकाण्डश्च। तत्र अतीतसम्बद्धे द्वे अविद्यासंस्कारे भविष्यत्सम्बद्धे द्वे जातिजरामरणाऽऽख्ये, वर्तमानसम्बद्धान्यष्टौ विज्ञाननामरूपषडायतनस्पर्शवेदनातृष्णोपादानभवाख्यानि। यथोक्तम्—

'पूर्वापरान्तयोर्द्वे द्वे मध्येष्टौ परिपूर्णाः।'

तेन हि अविद्यानिरोधे एव दुःखसमुच्छेदः सम्भवति नान्यथा।

तन्निरोधश्च तत्प्रतिपत्यैव भवति प्रतिपत्तिश्च कर्तव्यमार्गानुगमनेन सम्भवतीति कर्तव्यमार्गोपदेशोऽत्र क्रियते।

बौद्धानां मते रूप-वेदना-संज्ञा-संस्कार-विज्ञानेतिपञ्चस्कन्धानां पुञ्ज एवात्मा न तद्भिन्नः कश्चित्स्वतन्त्रसत्तावान् पदार्थः। अतो मानसप्रवृत्तिसङ्घात एवात्मा बौद्धनये। यथा अवयवसङ्घात एव रथपदवाच्यो न तु कश्चिदेकोऽवयवस्तथैव पञ्चस्कन्ध एवात्मपदव्यपदेश्यः। तेन बौद्धा नैरात्म्यवादिनः सङ्घातवादिनो वा।

बौद्धनये जीवो जगच्चेत्युभयमेवानित्यं प्रतिक्षणपरिणामशालि च। यथा दीपशिखाऽनुक्षणं परिणमन्त्यपि दीप्तिसन्तानवितानेन एकत्वावच्छिन्नेवोद्भासते तथैव जगज्जीवयोरपि गतिर्ज्ञेया। यथा वा विकृतिमापन्नं दुग्धं दधिप्रभृतिषु विपरिणम्यमानमपि वस्त्वेकत्वन्न जहाति परिपालयति चाभिन्नतां, तत्पयसः पयस्त्वं तु नैवालपितुं पार्यते। तथैव प्रतिक्षणं परिणामवतोः जगज्जीवयोरपि अनित्ययोरपि सतो नित्यता आपाततः समुद्भासते न तु वस्तुगत्या। बौद्धानामेष दृष्टिकोणः सन्तानवादनाम्ना प्रसिद्धः सन्ततपरिणामशालितावादश्च। ते हि परिणाम एव विश्वप्रपञ्चेऽस्मिन् सत्यतां बिभर्तीति विश्वसन्ति, वस्तुतः प्रतिक्षणं जीवकोशानां मरणमुत्पादनञ्च, उत्पादनक्षमताह्रासे वार्द्धक्यं वा निरोधे मरणमिति जैववैज्ञानिका अपि आमनन्ति।

बौद्धा हि चतुर्धा विभक्ताः वैभाषिक-सौत्रान्तिक-योगाचार-माध्यमिकभेदात्। तेष्वपि वैभाषिकानां माध्यमिकयोगाचाराणाञ्च नितान्तमेव भिन्नः पन्था सौत्रान्तिकास्तु मध्यगाः यतस्तेंऽशतः सर्वास्तिवादमनुमोदन्ते सिद्धान्तान्तरेषु योगाचारमपि। तत्रापि वैभाषिका हीनयानसम्प्रदायिनोऽपरे महायानानुयायिनः।

तत्रापि वैभाषिकाणां बाह्यार्थप्रत्यक्षवादः सौत्रान्तिकानां बाह्यार्थानुमेयवादः योगाचाराणां विज्ञानवादः माध्यमिकानां शून्यवादश्च सम्मतः। वैभाषिकाः खलु बाह्यार्थं प्रत्यक्षरूपेण सत्यं मन्यन्ते। सौत्रान्तिकास्तु बाह्यप्रत्यक्षसिद्धं नैवाङ्गीकुर्वन्ति। योगाचारास्तु बाह्यजगतो मिथ्यात्वमङ्गीकृत्य चित्तमेव सत्यपदार्थत्वेन स्वीकुर्वन्ति विज्ञानवादिनः। चित्तस्यापि मिथ्यात्वं मत्वा केवलं शून्यमेवोपलालयन्ति शून्यवादिनो माध्यमिकाः। एषां नये तु समस्तस्य जगतः सत्ता प्रातिभासिकी, केवलं शून्यमेव सत्यसत्ताकम्। निर्वाणविषयेऽपि ते बेभिद्यन्ते। संसारस्य निर्वाणस्य चोभयोरेव सत्यतामङ्गीकुर्वन्ति वैभाषिकाः। तयोरुभयोरेवासत्यतामामनन्ति माध्यमिकाः। संसारस्य सत्यतां निर्वाणस्यासत्यतां मन्यन्ते सौत्रान्तिकाः। संसारस्यासत्यतां निर्वाणस्य सत्यताञ्च समर्थयन्ति योगाचाराः।

तेषाञ्च साहित्यमपि पृथगेव किन्तु प्रत्येकं सुविपुलं विद्यते। तत्र वैभाषिकानामभिधर्मज्ञानप्रस्थानशास्त्रं कात्यायनीयपुत्रेण बुद्धमहानिर्वाणाच्छतत्रयवर्षानन्तरं प्रणीतम्। अस्य केवलं हुएनशाङ्गकृतचीनभाषान्तरितरूपमेव लभ्यते। अस्योपरि अभिधर्मविभाषाशास्त्राख्यं विस्तृतं भाष्यमुपलभ्यते यच्चीनतिब्बतभाषायामेव दृश्यते। एवञ्च वसुबन्धुमहाभागस्य 'अभिधर्मकोशसंज्ञको ग्रन्थः काश्मीरेषु प्रसिद्धः। अस्य प्रणयनकालो वैक्रमचतुर्थशतकदेशीयः। अस्योपरि अनेकाष्टीकाः सन्ति यासु स्थिरमतेस्तत्त्वार्थाख्या, दिङ्नागस्य मर्मप्रदीपाख्या यशोमित्रस्य स्फुटार्था प्रसिद्धाः। सङ्घभद्रस्य कोशकरकाख्यो ग्रन्थोऽभिधर्मकोशसम्मतमतखण्डनाय प्रवर्तितः। 'समयप्रदीपिका' वैभाषिकमतस्यापरः सारभूतो ग्रन्थः।

वैभाषिकाः खलु नानात्मकं जगदिदं वास्तविकं सत्यञ्च मन्यन्ते। सत्ता चास्य प्रत्यक्षज्ञानगम्या। द्विविधं हि भौतिकं मानसिकञ्चेति बाह्यमाभ्यन्तरञ्च-जगत् मिथो निरपेक्ष्यं स्वतन्त्रसत्ताकञ्च। वस्तुविभागो द्विविधा विषयविषयिगतभेदात्। विषयिगतत्वेन पदार्थास्त्रिविधाः पंचस्कन्ध-द्वादशायतन-अष्टादशधातुभेदात्। तत्र रूपवेदना-संस्कार-संज्ञा-विज्ञानानीति पंचस्कन्धाः। षडिन्द्रियाणि षड्विषयाश्चेति द्वादशायतनानि। आयतनं हि ज्ञानसाधनम्। सन्तान-

वितानं दधति इति धातवस्ते च द्वादशायतनानि षडिन्द्रियविज्ञानानि चेत्यष्टादश। विषयगतत्वेन जगदिदं द्विविधधर्मस्य समुच्चयमात्रम्। धर्मो हि सत्तात्मकपदार्थः। स च सास्रवानास्रवभेदेन द्विविधः। तत्र रागद्वेषमलदूषिताः सास्रवास्तद्रहिताश्चानास्रवाः। एतादृशा धर्मा पंचसप्ततिः। अनास्रवा द्विसप्ततिः सास्रवास्तु त्रय एव। भूतानि चत्वार्येव पृथिव्यप्तेजोवायवः। आकाशस्यानावृतत्वान्न भूतत्वम्। एतेषामन्तिमोपादानानि स्वस्वपरमाणुरूपाणि। परमाणुश्च षट्कोणात्मकः, षट्केन युगपद्योगात्तस्य षडंशता। ग्रहणमध्यवसायश्च द्विविधं ज्ञानसाधनम्। ग्रहणेन सामान्यज्ञानोपलब्धिः। वस्तुनो नामजातिभ्यां संयोजनमध्यवसायः। सोपधिशेषनिरुपधिशेषभेदान्निर्वाणो द्विविधः। तत्र क्षीणेष्वप्यास्रवेषु जीवितावस्थायामर्हत अवशेषानेकपञ्चस्कन्ध आद्यः निरवशेषसमस्तोपधिकश्च द्वितीयः। प्रथमा जीवन्मुक्तिरपरा विदेहमुक्तिश्च।

सौत्रान्तिकाः हीनयानपथानुगा अपि वैभाषिकेभ्योऽप्येतदर्थमेव भिद्यन्ते यत्ते वसुबन्धोरभिधर्मकोशस्य प्रामाणिकतां नैवामनन्ति तस्य तथागतप्रणीतत्वाभावात्। ते हि सूत्रपिटकमेव प्रामाणिकं मन्यन्ते सूत्रान्ते प्रवृत्ता इति सौत्रान्तिका।

कुमारलात-श्रीलात-धर्मत्रात-बुद्धदेवाख्या अस्याचार्याः। मतस्यास्य प्रवर्तकः कुमारलातो नागार्जुनसमसामयिको वैक्रमतृतीयशतकभवः। कल्पनामण्डितकाख्यास्य रचना। श्रीलातस्तस्यान्तेवासी। तस्य ग्रन्थश्च विभाषाशास्त्रम्।

सौत्रान्तिका वर्तमानमेव सत्यं मन्यन्ते भूतं भविष्यच्चावास्तविकम्। तद्विपरीतं वैभाषिकास्त्रयाणामेव कालानामस्तित्वं स्वीकुर्वन्ति, यतस्ते सर्वास्तिवादिनः। सौत्रान्तिकनये ज्ञानस्य स्वतःप्रामाण्यम्। तेषां मते प्रदीपवज्ज्ञानस्य स्वयम्प्रकाशत्वम्। ज्ञानस्य स्वयंसंवित्तिसिद्धान्तोऽयं विज्ञानवादिनामपि सम्मतः। इमे हि वैभाषिकानामसदृशतया जगतः सत्ताया अनुमेयगम्यतां स्वीकुर्वन्ति न तु प्रत्यक्षगम्यानां पदार्थानां क्षणिकत्वात्तेषां प्रत्यक्षतयोपलब्धेरसम्भवात् केवलं तज्जन्यज्ञानस्यैवावशेषात्। ते हि बाह्यवस्तुनः सत्यत्वं मन्यन्ते किन्तु तदाकारविशेषमादाय ते बेभिद्यन्ते मिथः। केचित्तदाकारं वस्त्वाश्रितं मन्यन्तेऽपेरे तु चित्तवृत्तिविनिर्मितम्, इतेर उभयात्मकञ्च। ते हि परमाणूनां निरवयवत्त्वं मिथस्तेषां स्पर्शाभावञ्च मन्यन्ते। तन्नये परमाणुसङ्घातस्य तत्परिणामं प्रति करणता भवति। पदार्थाः स्वभावादेव विनाशशीला न त्वनित्या। तादृशो विनाशश्चाभूत्त्वाभावः परिवृत्तिलक्षण उत्पादविनाशरूपः क्षणिकश्च। तन्मते आत्माकाशौ अस्तित्वहीनौ। यत असत उत्पन्नं वस्तु क्षणं स्थित्वा विलयं याति। तन्नये क्लेशानुदयस्य एव दुःखानुत्पादं प्रति हेतुता। अतः क्लेशानुदय एव निर्वाण इति।

**योगाचार**स्तृतीयः पन्था बौद्धानाम्। मैत्रेयनाथ-असङ्ग-स्थिरमति-दिङ्नाग-धर्मकीर्ति-धर्मपालाश्चास्याचार्याः। तत्र मैत्रेयनाथो मतस्यास्य प्रवर्तकः। अयञ्च कुमारलाल-समसामयिको वा तत्कालपश्चाद्वर्ती। अस्य हि महापण्डितस्य मध्यान्त-विभाग-अभिसमयालङ्कार-( प्रज्ञापारमितोपदेशशास्त्रं )–सूत्रालङ्कार–महायानो-त्तरतन्त्र-धर्मधर्मताविभागाश्च प्रसिद्धा ग्रन्थाः। तत्र मध्यान्तविभागस्य गद्यभागस्तु असङ्गगुम्फितः। तदुपरि वसुबन्धोर्भाष्यं भाष्यस्य स्थिरमतिटीका च। असङ्गाचार्यस्तु वैक्रमचतुर्थशतकभवो वसुबन्धोर्भ्राता राज्ञः समुद्रगुप्तस्या-भिमतः। अस्य हि महायानसम्परिग्रहः, महायानाभिधर्मसङ्गीतशास्त्रं, योगाचारभूमिशास्त्रम्, अभिसमयालङ्कारटीका च प्रसिद्धा। असङ्गानुजस्य वसुबन्धोः 'विज्ञप्तिमात्रतासिद्धिः' विज्ञानवादस्य सर्वप्रामाणिको ग्रन्थः। वसुबन्धोः शिष्यस्य स्थिरमतेः त्रिंशिकाभाष्यं, माध्यान्तविभङ्ग-सूत्रभाष्यटीका, अभिधर्म-कोशभाष्यवृत्तिः, सूत्रालङ्कारवृत्तिभाष्यं, मूलमाध्यमिककारिकावृत्तिश्च प्रसिद्धा ग्रन्थाः। वसुबन्धोरेव शिष्येष्वन्यतमो दिङ्नागो बौद्धन्यायशास्त्रप्रवक्तृत्वेन प्रसिद्धः। अस्य हि प्रमाणसमुच्चय-प्रमाणसमुच्चय-वृत्ति-न्यायप्रवेश-हेतुचक्रडमरु-प्रमाण-शास्त्र-आलम्बनपरीक्षा-तद्वृत्तिश्चेति ग्रन्थाः प्रसिद्धाः।

एवमेव वैक्रमाष्टमशतकपूर्वार्द्धभवस्य धर्मकीर्तेः प्रमाणवार्तिक-न्यायविन्दु-हेतुबिन्दु-प्रमाणनिश्चय-वादन्याय-सम्बन्धपरीक्षा-सन्तानान्तरसिद्धि-प्रभृतयः प्रसिद्धा ग्रन्थाः। एवञ्च धर्मपालस्य वैक्रमसप्तमशतकोत्तरार्द्धभवस्य विज्ञप्तिमात्रतासिद्धि-व्याख्याया शतशास्त्रवैपुल्यभाष्यं प्रसिद्धम्।

योगाचारमते ज्ञानमात्रं सत्यं न तु बाह्यजगदपि। ज्ञानं हि आलयविज्ञानरूप-प्रवृत्तिविज्ञानरूपभेदेन द्विविधम्। प्रथमं सुषुप्तिकालेऽपि तिष्ठति द्वितीयस्य तत्राभावः। निरुपप्लवज्ञानसाध्यो हि मोक्षः। विषयोपप्लवनिरुपप्लवज्ञान-योरुच्छेदादेव तत्प्राप्तिः। यत्किञ्चित्प्रकारकमपि ज्ञानं मोक्षवारकम्। मतमेवेदं विज्ञानवादसंज्ञयाऽभिहितम्। तेषां हि मतम्—

'नान्योऽनुभाव्यो बुद्ध्याऽस्ति तस्या नानुभवोऽपरः।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते॥' इति।

योगाचाराणां मते स्वयंवेदनस्य नितान्तमेवावश्यकताऽन्यथा जगदान्ध्यं प्रसज्येतेति। शेषं सौत्रान्तिकतुल्यमेवेति।

**माध्यमिका** हि शून्यवादिनः। मतस्यास्य प्रवर्तको नागार्जुनः। स हि दाक्षिणात्यो ब्राह्मणो गृहीतबौद्धदीक्षः। विक्रमानन्तरचतुर्थशतकीनोऽयं महा-विचक्षणो नालन्दाविश्वविद्यालयस्य संस्थापकः। अस्य हि अष्टसाहस्रिका, प्रज्ञापारमिता, उपायकौशल्यं, विग्रहव्यावर्तिनी, माध्यमिकशास्त्रञ्च प्रसिद्धा

ग्रन्थाः। माध्यमिकशास्त्रं हि सप्तविंशतिप्रकरणेषु विभक्तम्। अस्योपरि अनेका वृत्तयः प्रणीताः सन्ति यासु श्रीभव्यप्रणीता प्रज्ञाप्रदीपा, चन्द्रकीर्तेः प्रसन्नपदा च मुख्या। प्रज्ञापारमिताशास्त्रं हि महायानस्य विश्वकोष एव। तथैव आर्यदेव-स्थविरबुद्धिपालित-भावविवेक-चन्द्रकीर्ति-शान्तरक्षितप्रभृतयो विद्वांसो मतस्यास्य प्रचारका आसन्। तेषामनेके ग्रन्था मतमिदं पल्लवयन्ति।

शून्यवादोऽस्य प्रधानो राद्धान्तः। सामान्यतः शून्यशब्दः सर्वसत्ताऽसद्भावबोधकः किन्तु माध्यमिकनयेऽसौ अनिर्वचनीयतावचनः। पदार्थस्वरूपनिर्णये तु चतस्रो वृत्तयो भवन्ति अस्ति नास्ति तदुभयं तत्रोभयञ्च। परमतत्त्वं तु तदितरमेव भवति। तत्तु न सत् नासत्, न सदसत्, न चानुभयात्मकमेव। तेन शून्यशब्दोऽपि मध्यमप्रतिपद्वचनपरः। किञ्च वस्तु नैकान्तिकं सत् न चैकान्तिकमसत्। किन्तु तयोर्मध्यविन्दावेव तन्निर्णयः। अतः शून्यमस्तेर्नास्तेश्च मध्यबिन्दुः। न च शून्यमभावार्थकं यतः स सापेक्षत्वाद्भावं निर्दिशति। एतादृशमध्यमार्गोन्नायकत्वादेव प्रस्थानमिदं माध्यमिकसंज्ञितम्। सत्यं हि द्विविधं पारामर्थिकं सांवृतिकञ्च। तत्राद्यं वास्तविकमपरमवास्तविकम्। प्रथमं हि शून्यपदवाच्यमनिर्वचनीयमपरं हि ज्ञानसंवलितमविद्यालक्षणम् 'अतो भावाभावान्तद्वयरहितत्वात्तत्स्वभावानुत्पत्तिलक्षणा शून्यता मध्यमा प्रतिपद् मध्यमो मार्ग इत्युच्यते' इति प्रसन्नपदायां चन्द्रकीर्तिः।

मतमिदमित्थं शून्याद्वैतसमर्थकम्। तदनुसारेणैतद्धि नानारूपं जगच्छून्यस्यैव विवर्तात्मकं रूपम्। ते हि तदनिर्वचनीयं मन्यन्ते तस्य इदमित्थन्तया वक्तुमशक्यत्वात्। शून्यताया एव केवलं सत्यत्वं वास्तविकत्वञ्च। उक्तमेव—

"न स्वतो नाऽपि परतो न द्वाभ्यां नाप्यहेतुतः।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन॥" इति।

तदित्थं सङ्क्षेपेण निरूपितो बौद्धनयः। दुःखं दुःखसमुदयः दुःखनिरोधस्तन्निरोधप्रतिपदिति चतुरार्यसत्याधिष्ठितो बौद्धनयः दुःखनिरोधे एव समधिकं बलं दधाति। दुःखनिरोधोपायश्चाष्टाङ्गमार्गानुसरणमेव। स च दृष्टि-सङ्कल्प-वचन-कर्मान्त-आजीव-व्यायाम-स्मृति-समाधिषु सम्यक्त्वमेव। बौद्धनयो व्यवहारपक्षपाती। स हि सिद्धान्तापेक्षयाऽऽचरणेऽधिकं बलं निदधाति। सम्यक्

कर्मणा हि जन्तुर्मुक्तो भवति इति तस्य विस्रम्भः। प्रज्ञा, शीलं, समाधिश्चेति अष्टाङ्गमार्गस्य त्रीण्यङ्गानि। प्रतीत्यसमुत्पादः कर्म, क्षणिकवादः, आत्मनोऽनस्तित्वञ्चास्य दार्शनिकपक्षः। एकस्मात्कारणादुत्पन्नं कार्यमन्यस्य कार्यस्य कारणं भवति। एवञ्चोत्तरोत्तरमेकैकं कार्यं कार्यान्तरम्प्रति कारणत्वं गच्छति, नाकस्मात्किमपि प्रादुर्भवतीति प्रतीत्यसमुत्पादस्य सारम्। भूतस्य परिणाम एव वर्तमानमिति कर्मवादसारम्। सर्वेषामेव वस्तूनामनित्यमेव। सर्वेऽपि संयोगा विप्रयोगान्ता एव। सर्वमेव परिणामि वस्तु किन्तु तथाविधपरिणामस्यापि सन्ततप्रवृत्तित्वाच्छृङ्खलितमिव सर्वं दृश्यते। सन्तानवाद एव क्षणिकवादस्यावरणमिति क्षणिकवादसारः। विभिन्नक्रमशीलाव्यवहितावस्थानां प्रवाह एव जीवनम्। कस्याप्यवस्थाया उद्भवस्तत्प्राग्वर्त्यवस्थाया एव भवति। प्राक्तनावस्थाद्यतनावस्थां वर्तमानावस्था च भाविनीमवस्थां प्रसूते। तेन नास्ति किञ्चिदपि अवस्थानिर्धारकतत्त्वम्। देहचित्तविज्ञानानां सङ्घातो हि मनुष्यः। यावत्तत्समष्टेः सद्भावस्तावदेव मनुष्योऽपि सत्तावान्। अतः सङ्घातं व्यतिरिच्य नास्ति किञ्चिदात्माख्यं वस्तु। रूपवेदनासंज्ञासंस्कारविज्ञानानां संयोग एव जीवनमित्यात्मानस्तित्ववादसारम्। सर्वासामेव शाखानां बुद्धधर्मसङ्घाः सेव्याः। तत्र हीनयानोऽस्य सम्प्रदायः प्राचीनं स्वरूपं स्मरति। बुद्धोपदेशानुसारी मार्गोऽयं स्वावलम्बने धर्मे च बलं निदधाति। महायानसम्प्रदायस्तु बोधिसत्त्वबुद्धोपास्यत्वात्मसद्भावनिष्ठविचारेषु विचरति।

प्रत्यक्षानुमानशब्दमाणसम्बद्धा हि बौद्धाः श्रुतिमार्गतोऽपि स्वल्पमेव भिद्यन्ते तदपि भावनामात्रेण न तु तत्त्वतः।

## प्रकीर्णदर्शनानि—

आस्तिकनास्तिकसम्मतदर्शनव्यतिरिक्तमपि अन्यान्यपि दर्शनानि सन्ति येषामस्तित्वमितरविशिष्टमेवावभासते। तानि च श्रौतदर्शनं स्मार्तदर्शनं सौत्रदर्शनं पौराणिकदर्शनं मिश्रदर्शनं चेत्यादीनि। एतद्व्यतिरिक्तमपि सिक्खदर्शनं, खशदर्शनम्, आर्यसमाजदर्शनं, स्वामिदर्शनञ्चेत्यादि दर्शनान्यपि स्वीयं स्वीयं वैशिष्ट्यं विलक्षणत्वञ्च समावहन्ति। एतेषां परिचयस्तु ग्रन्थगौरवभिया नाऽत्र प्रस्तूयते। जिज्ञासुभिस्तत्तत्साहित्यमवलोकनीयम्।

# १६. क्रियाकल्पसाहित्यम्

वा

# अलङ्कारशास्त्रसाहित्यम्

वा

# काव्यलक्षणसाहित्यम्

वा

# काव्यशास्त्रसाहित्यम्

वा

# साहित्यशास्त्रसाहित्यम्

वा

# सौन्दर्यशास्त्रसाहित्यम्

'उपकारकत्वादलङ्कारः सप्तममङ्गमिति'
'पञ्चमी साहित्यविद्या' इति यायावरीयाः।

इदमुच्यते यच्छिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषां वेदोपस्कारकत्वात्तदङ्गत्वं यथा सिध्यति तथैवालङ्कारशास्त्रस्यापि वेदोपकारकत्वात्सप्तमं वेदाङ्गत्वं सिध्यतीति। एवमेव आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति चतस्रो विद्याः प्रसिद्धाः साहित्यविद्या च पञ्चमी। तेन वेदस्य सप्तमाङ्गत्वाद्विद्यासु पञ्चमावयवत्वाच्च अलङ्कारशास्त्रस्योपादेयत्वसिद्धेस्तदपि शास्त्रान्तरवद्विवेचनीयं भवति। ननु भाषिकशुद्धतोच्चारणादिसंरक्षणेन शिक्षासाहित्यं, वेदोक्तकर्मादिव्याख्यानेन कल्पसाहित्यं, शब्दसाधुत्वविवेकेन व्याकरणं, शब्दार्थबोधनेन निरुक्तसाहित्यं, मन्त्राणां छन्दोविधानेन छन्दःसाहित्यं, यज्ञसम्पादननिमित्तकविशिष्टकालादिबोधनेन ज्यौतिषञ्च वेदस्योपकारि इति तेषां वेदाङ्गत्वं किन्तु प्रकृतमलङ्कारशास्त्रं तु केनाऽप्युपायेन वेदानुपस्कारकत्वात्कथं तस्य वेदाङ्गत्वमिति चेदित्थम्। सत्यमेवैतद्यदलङ्कारशास्त्रं काव्यस्वरूपविवेचकत्वाल्लौकिकसाहित्यसम्बद्धं किन्तु तत्प्रयोजनीभूतस्य काव्यसाहित्यस्य तु प्रियासम्मततया प्रवृत्तिनिवृत्त्युपदेशद्वारेण भावशोधनपूर्वकं सुकुमारमतीनामपि प्रतिभाविशदीकरणेन वेदशास्त्रादौ सम्मुखीकरणाद्वेदाङ्गत्वं सिध्यत्येव।

अत्रेत्थमुक्तं भवति वेदशास्त्रं हि प्रभुसम्मिताज्ञादेशपरम्। तस्य 'अहरहः सन्ध्यामुपासीत' इतिप्रभृत्याज्ञादेशकत्वान्न तत्र सुकुमारमतीनां प्रवेशः सरलः। काव्यन्तु कान्तासम्मिततया रामादिवत्प्रवर्तितव्यं न तु रावणादिवदित्युदाहरणमुखेन प्रवृत्तिनिवृत्त्युपदेशकत्वाद्धृद्यं सुकुमारमतीनामपि सरलतया प्रवेश्यम्। तथा प्रवेशेन काव्यादौ तेषां प्रवृत्तिमार्गान्तरीकरणेन भावशोधनद्वारा बुद्धिवैशद्यपुरःसरं वेदादावपि प्रवेशः सम्भवः। तर्हि काव्यं नाम सुकुमारमतीनामेव विषय इत्यपि न चिन्तनीय यत इदं प्रौढमतीनामपि ग्राह्यमेव। कटुकौषधिशमनीयरोगस्य शर्कराशमनीयत्वं सर्वेषामेव कृते साधीयो भवति। काव्यादपि तदेव सिध्यति यद्वेदशास्त्राद्भवति अर्थात् सुखादल्पधियामपि चतुर्वर्गफलप्राप्तिः काव्याद्भवति। तर्हि दुष्करसम्मतवेदशास्त्रादौ किमर्थं प्रवेशः सर्वं काव्यादेव सिध्येदिति तु नैवाकलनीयम्। वेदशास्त्रं हि सर्वशास्त्रमूलं काव्यन्तु तस्यैकस्याङ्गस्यानुवादमात्रम्। तेन समग्रज्ञानसिद्धये वेदशास्त्रमध्येतव्यमेव। काव्यं तु तत्र प्रवेशमार्गं सरलीकरोति लक्ष्यन्तु वेदशास्त्रमेवेति। मनुष्यः स्वभावादेव स्वार्थप्रकृतिकः। दुष्प्रवृत्तिस्तस्य सहजाता। इदन्तु काव्यमेव यत् तथाविधदुष्प्रवृत्तीः संशोध्य सद्भावानामुदयं कारयति। एतादृशप्रवृत्तिमार्गान्तरीकरणेन सति प्रवृत्तिरसतो निवृत्तिश्च सर्वेषामेव काव्यात्सुखादेव भवतीति काव्यस्योपादेयत्वं तस्य वेदोपस्कारकत्वञ्च।

एवं च काव्यविद्याया विद्यायाः पञ्चमाङ्गत्वमपि। आन्वीक्षिकी हि सर्वविद्यानां प्रदीपस्तर्कशक्तिविकासेन सदसद्विवेचनशक्तिप्रदायिनी। अतस्तस्या विद्यात्वम्। त्रयो हि आर्यमर्यादाव्यवस्थापिका। तेन तस्या अपि विद्यात्वम्। वार्ता हि वृत्तिशिक्षिका। तेन तस्या अपि विद्यात्वम्। दण्डनीतिश्च सर्वेषां प्रतिपालिका। तेन तस्या अपि विद्यात्वं सिध्यति। साहित्यविद्या अपि तदनुकूलप्रवृत्तिविधायिका तत्प्रतिकूलाचरणनिवृत्त्युपदेशेन तदनुकूलाचरणोपदेशेन सरसतया। अतस्तस्या विद्यात्वम्।

अतो सप्तवेदाङ्गानि शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दो-ज्यौतिष-अलङ्कारशास्त्राणि। पञ्च विद्याः आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीति-साहित्यविद्याभेदादिति पर्यवसितम्। ननु दुष्प्रवृत्तिनिरोधस्तु दण्डनीत्यैव भवति तस्या हि निग्रहानुग्रहपरत्वात्तेन समानप्रयोजनत्वात्साहित्यविद्याया दण्डनीतावेवान्तर्भावः कथं नैवेति चेदुच्यते। दण्डनीतिर्हि दुष्प्रवृत्तिनिरोधेन सत्प्रवृत्तिप्रवर्तिकेति सत्यमेव। एवञ्च साहित्यविद्याऽपि। किन्तु तयोरेतावदेवान्तरं यत्पूर्वा दण्डद्वारैव सर्वं साधयति द्वितीया तु तल्लाभालाभनिदर्शनमुखेन सरसतया। अपरञ्च

प्रथमा दुष्प्रवृत्तिर्बाध्यत एव निरोद्धुं प्रभवति द्वितीया तु तन्मार्गान्तरीकरणेन भावशोधनद्वारा मूलत एव निरुणद्धि। इति तयोर्महदन्तरम्।

सिद्धमलङ्कारशास्त्रस्य वेदस्य सप्तमाङ्गत्वं पञ्चमविद्यात्वञ्च। तर्हि किंनाम तथाविधमपरिहार्यरूपेण विवेचनीयमलङ्कारशास्त्रमित्यपेक्षायामुच्यते-अलङ्कृतिरलङ्कारः, सौन्दर्यमलङ्कारः। स च गुणादानदोषहानात्सम्पद्यते। तेनैतत्पर्यवस्यति यद्वाचां सौन्दर्याधायकतत्त्वग्रहणं तन्निरोधकतत्त्वापासनमेवालङ्कारस्तस्य शास्त्रं विवेचकविद्येति अलङ्कारशास्त्रम्। इदमेव साहित्यशास्त्रं–सौन्दर्यशास्त्रम्, काव्यलक्षणसाहित्यं काव्यशास्त्रमपि व्यपदिश्यते। काव्यसाहित्यस्य स्वरूपावधारकत्वादिदं काव्यलक्षणसाहित्यं वा काव्यशास्त्रं, साहित्यविशेषस्य स्वरूपनिर्द्धारकत्वादिदं साहित्यशास्त्रमपि। तथैव काव्यगतसौन्दर्याधायितत्त्वव्याख्यातृत्वात्सौन्दर्यशास्त्रमपि चैतत्कथ्यते। अभिधानन्तु स्याद्यथा वा तथा, शास्त्रमिदं काव्यस्वरूपावधारकम्। तत्रापि काव्यसौन्दर्यनिमित्तं किं किमावश्यकं किञ्चानावश्यकं किं काव्यसौन्दर्योत्कर्षाधायकं किंच तद्घातकमित्यादिरस्य विषयसमूहस्तेनेदं वस्तुतोऽलङ्कारशास्त्रं वा काव्यशास्त्रम्।

अलङ्कारशास्त्रमिदं कदाप्रभृति प्रवर्तितमिति तु न शक्यते इदमित्थन्तया वक्तुम् तथाप्येतत्तु निश्चितमेव यद्यदैव काव्यं प्रवर्तितं तदाप्रभृत्येवालङ्कारशास्त्रमपि प्रवर्तितं कामं तस्याभिलिखितरूपं पश्चादुदैत् विकासश्च पश्चात्काले समजायत। कामसूत्रेष्विदं क्रियाकल्पनाम्ना व्यवहृतं चतुःषष्टिकलास्वन्यतमत्वेन परिगणितमपि दृश्यते। ललितविस्तरेऽप्ययं क्रियाकल्पनाम्नैव व्यवहृतम्। तत्र क्रियाकल्प इति काव्यकरणविधिः काव्यालङ्कार इत्यर्थ इति कामसूत्रस्य जयमङ्गलाटीकायामुक्तम्। दण्ड्याचार्योऽपीदं तेनैव नाम्ना स्मरति। यथा—

'वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम्' इति। वाल्मीकीयं रामायणमपि—

'क्रियाकल्पविदश्चैव तथा काव्यविदो जनान्' (७।९४।७) इत्युक्त्वा तदानीमपि काव्यशास्त्रीयपरम्परा प्रचलिताऽसीदिति सूचयति। अत्र हि काव्यविच्छब्दः काव्यकारवचनः क्रियाकल्पशब्दश्चालङ्कारशास्त्रवचनः। काव्यसमीक्षकान् कवींश्चेत्यस्याशयः।

तदस्य क्रियाकल्पशास्त्रस्य प्रारम्भविषये काव्यमीमांसायां राजशेखर उल्लिखति यत्प्रजापतिर्हि सारस्वतेयं काव्यपुरुषं काव्यविद्याप्रवर्तनाय प्रैरयत्। सोऽपि विद्यामिमामष्टादशाधिकरणेषु विभज्य एकैकमधिकरणं प्रत्येकमष्टादशशिष्यानध्यापयामास। तेऽपि हि स्वस्वविषये पुथक्पृथगेव ग्रन्थान् प्राणैषुः। तत्र सहस्राक्षः कविरहस्यं, औक्तिममुक्तिगर्भः, रीतिनिर्णयं सुवर्णनाभः, आनु-

प्रासिकं प्रचेताः, यमकं यमः, चित्रं चित्राङ्गदः, शब्दश्लेषं श्लेषः, वास्तवं पुलस्त्यः, औपम्यमौपकायनः, अतिशयं पराशरः, अर्थश्लेषमुतथ्यः, उभयालङ्कारिकं कुबेरः, वैनोदिकं कामदेवः, रूपकनिरूपणीयं भरतः, रसाधिकारिकं नन्दिकेश्वरः, दोषाधिकरणं धिषणः, गुणोपादानिकमुपमन्युः, औपनिषदिकं कुचमार इति। कथनस्यास्य का योनिरिति राजशेखर एव जानातु वयन्तु शब्दप्रमाणवादित्वाद्राजशेखरवचनमेवाप्तवाक्यत्वेन गृह्णीमः। तेषु ग्रन्थेष्वद्य नैकोऽपि दृष्टिविषय आचार्याश्च नन्दिकेश्वर-सुवर्णनाभ-कुचमारवर्जं नितान्तमेवाज्ञाताः। सम्भवति सहस्राक्षस्तु इन्द्र एव। इन्द्रो हि अष्टाविंशतिव्यासेषु प्रथमः सर्वविधशास्त्राणां प्रवक्तृत्वेन च सम्मतः। नन्दिकेश्वरश्च कलाचार्यरूपेण प्रसिद्धः। तस्य हि अभिनयविषयकोऽभिनयदर्पणाख्यो ग्रन्थः समुपलभ्यते च। सुवणनाभकुचमारौ तु कामशास्त्रस्योपजीव्याचार्यौं। कथनस्यास्य सत्यत्वेऽनिश्चितेऽपि एतत्तु सुनिश्चितमेव यत्क्रियाकल्पश्चतुःषष्टिकलास्वन्यतमत्वेनातिप्राचीनकालादेव प्रवृत्तो दृश्यते। स्वयम्भूरेव कविपदेनाभिधीयते वेदेषु 'कविर्मनीषी परिभूः स्वम्यभूः' इत्यादिवाक्येषु। तत्र हि अग्निरपि कविशब्देन व्यपदिष्टः 'कविं सम्राजमतिथिञ्जनाना—इत्यादिवाक्येषु। इन्द्रस्तु कवितम उक्तः। एतदनुमातुं शक्यते यत्प्राचीनकालेऽपि कवि-काव्य-क्रियाकल्पादिशब्दानां भूयानेव प्रयोग आसीत्। भृगुपुत्रः शुक्राचार्यस्तु भूम्ना कविशब्देन काव्यशब्देन च व्यवह्रियते। सम्भवति स एव प्रथमः क्रियाकल्पस्य प्रवक्ता। यास्काचार्यस्तु क्रियाकल्पाचार्यत्वेन गार्ग्यं स्मरति। यथा—

'अथात उपमा यदतत्तत्सदृशमिति गार्ग्यः।' ( निरु० ३।१३ )

एवमेव लोचनकारो भागुरिं काव्याचार्यत्वेन स्मरति सोमेश्वरश्च। भावप्रकाशनकर्ता शारदातनय आद्यकाव्याचार्यत्वेन भगवन्तं शङ्करं स्मरति। स हि कुम्भयोनिनारदावपि काव्याचार्यत्वेन स्मरति। सत्यपि प्राचीनाचार्यविषयकसंस्मरणे वयन्तु रूपकमधिकृत्य भरतस्य नाट्यशास्त्रं कविरहस्यमधिकृत्य भामहस्य काव्यालङ्कारमेव प्राचीनतमे मन्यामहे तत्पूर्वप्रणीतग्रन्थान्तरादर्शनात्। स्वयमेव भरताचार्योऽपि सुवर्णनाभ-कुचुमार-प्रभृत्याचार्यान् स्मरति। स च स्वपूर्वाचार्यपठिता आर्याश्च सङ्गृह्णाति। यथाऽऽहाभिनवगुप्तः अभिनवभारत्यां—

'ता एता ह्यार्या एकप्रघट्टकतया पूर्वाचार्यैर्लक्षणत्वेन पठिताः।
मुनिना तु सुखसङ्ग्रहाय यथास्थानं निवेशिताः॥' इति।

एवमेव भामहश्च मेधाविनं स्वपूर्ववर्तित्वेन स्मरति।

तथैव स—

"अवलोक्य मतानि सत्कवीनामवगम्य स्वधिया च काव्यलक्ष्म ।
सुजनावगमाय भामहेन ग्रथितं रक्रिलगोमिसूनुनेदम् ॥"

इत्युक्त्वा स्वपूर्ववर्तिनो बहूनाचार्यान् स्मरति ।

एवमेव—

रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।

इत्यादिकथनेन तत्पूर्वमेव व्यवस्थितं काव्यशास्त्रमासीदित्यपि स सूचयति। दण्डी च काश्यप-वररुचि-ब्रह्मदत्त-नन्दिकेश्वरप्रभृत्याचार्यान् स्मरति। भामहदण्डिनौ परस्परं नैवोल्लिखतः किन्तु तत्परवर्तिन आचार्या भामहमेव पूर्ववर्तित्वेन गृह्णन्ति। 'पूर्वेभ्यो भामहादिभ्यः सादरं विहिताञ्जलिः' इति कथयन् विद्यानाथः, 'भामहोद्भटप्रभृतयश्चिरन्तनालङ्कारा' इति वदन् रूय्यकश्च भामहमेव प्रथमाचार्यत्वेन प्रणमति। केचित्तु दण्डयेव भामहात्पूर्ववर्ती। तस्य दाक्षिणात्यत्वेन काश्मीरैर्नं स्मृत इति शुष्कं तर्कमपि समुपस्थापयन्ति किन्तु काश्मीरेणैव वामनेन स सादरमनुसृत इति ते विस्मरन्ति।

तदित्थं सहस्राक्ष-नन्दिकेश्वर-भरत-मेधावि-रुद्र-भामह-दण्डि-उद्भट-रुद्रट-भट्टनायक-वामन-मुकुल-प्रतिहारेन्दुराज-आनन्दवर्धन-महिमभट्ट-कुन्तक-अभिनवगुप्त-शौद्धोदनि-वाग्भट-रूय्यक-भोज-धनिक-मम्मट-हेमचन्द्र-केशवमिश्र-जयदेव-विद्यानाथ-विश्वनाथ-गोविन्दठक्कुर-विद्यानाथ-अप्पयदीक्षित-जगन्नाथ-विद्याभूषण-विश्वेश्वर-शोभाकर-अच्युतरायप्रभृतयः केचन प्रसिद्धाः अलङ्कारशास्त्रिणः। तथैव शङ्कर-नन्दिकेश्वर-भरताचार्य-धनञ्जय-धनिक-शारदातनय-विद्यानाथ-रामचन्द्र-गुणचन्द्र-विश्वनाथ-भानुदत्त-रूपगोस्वामिप्रभृतयः कतिचन प्रसिद्धा नाट्यशास्त्रिणः। तत्रापि भरतभामहाभ्यामारभ्य विश्वेश्वरपर्यन्तमलङ्कारशास्त्रस्याक्षुण्णा परम्पराऽस्माकं पुरतोऽस्ति।

एवञ्च भामहस्य काव्यालङ्कारः दण्डिनोऽपि काव्यादर्शः, उद्भटस्य काव्यालङ्कारसारसङ्ग्रहः, रुद्रटस्य काव्यालङ्कारः, वामनस्य काव्यालङ्कारसूत्राणि, आनन्दवर्धनस्य ध्वन्यालोकः, कुन्तकाचार्यस्य वक्रोक्तिजीवितं, महिमभट्टस्य व्यक्तिविवेकः, भोजस्य सरस्वतीकण्ठाभरणं शृङ्गारप्रकाशश्च, मम्मटस्य काव्यप्रकाशः, क्षेमेन्द्रस्य औचित्यविचारचर्चा, रूय्यकस्य अलङ्कारसर्वस्वम्, जयदेवस्य चन्द्रालोकः, हेमचन्द्रस्य काव्यानुशासनम्, विश्वनाथस्य साहित्यदर्पणः, अप्पयदीक्षितस्य चित्रमीमांसा, कुवलयानन्दः, जगन्नाथस्य रसगङ्गाधरः, विश्वेश्वरस्य अलङ्कारकौस्तुभम्, च अलङ्कारशास्त्रे मननीयग्रन्थाः। एतदतिरिक्तं गोविन्दठक्कुरस्य काव्यप्रदीपः, केशवमिश्रस्य काव्यशेखरः, वाग्भटस्य वाग्भटालङ्कारः,

विद्याभूषणस्य साहित्यकौमुदी, राजशेखरस्य काव्यमीमांसा, मुकुलस्य अभिधावृत्तिमातृका, अप्पयस्य वृत्तिवार्तिकं, शोभाकरमित्रस्य अलङ्काररत्नाकरः, अमरचन्द्रस्य काव्यकल्पलता, विद्याधरस्य एकावली, विद्यानाथस्य प्रतापरुद्रयशोभूषणं च विषयेऽस्मिन् मननीयग्रन्थाः ।

एवञ्च शङ्करस्य योगमायासंहिता, नन्दिकेश्वरस्य अभिनयदर्पणः, भरतस्य नाट्यशास्त्रम्, यदुपरि अभिनवगुप्तस्य अभिनवभारतीटीका, दशरूपकं यदुपरि सुदर्शनाचार्यस्य विवृत्तिर्लोकमणिदाहालस्य कलाटीका, सागरनन्दिनो नाटकलक्षणरत्नकोशः, रामचन्द्रगुणचन्द्रयोर्नाट्यदर्पणः, नाटकचन्द्रिका, विश्वनाथस्य साहित्यदर्पणः ( षष्ठः परिच्छेदः ) भानुदत्तस्य रसमञ्जरी, सुन्दरमिश्रस्य नाट्यप्रदीपः, शिवरामस्य रसरत्नहारो यदुपरिलोकमणिदाहालस्य कलाटीका, रूपगोस्वामिनः उज्ज्वलनीलमणिः चेतिप्रभृतिग्रन्थाः नाट्यशास्त्रसम्बद्धाः ।

उभावप्यधिकृत्यानेकाष्टीकाग्रन्था अपि प्रणीताः प्रथिताश्च सन्ति यासु नाट्यशास्त्रोपरि अभिनवगुप्तस्याभिनवभारती, काव्यादर्शोपरि तरुणवाचस्पतेष्टीका, अज्ञातकर्तृका हृदयङ्गमाटीका, रत्नश्रीटीका, नृसिंहदेवस्य कुसुमप्रतिभाटीका, काव्यालङ्कारसारसङ्ग्रहोपरि प्रतिहारेन्दुराजस्य टीका, लघुविवृत्तिः, तिलकस्योद्भटविवेकः, काव्यालङ्कारसूत्रोपरि गोप्पेन्द्रतिप्पभूपालस्य कामधेनुटीका, लोकमणिदाहालस्य कलाटीका, रुद्रटकाव्यालङ्कारोपरि नमिसाधोष्टीका, आशाधरस्य टीका, ध्वन्यालोकोपरि अभिनवगुप्तस्य लोचनटीका, बदरीनाथस्य दीधितिटीका, चण्डेश्वरस्य दीपशिखा, लोकमणिदाहालस्य लीलाख्यप्रतिपदटीका, लोचनोपरि बालबोधिनी टिप्पणी, काव्यमीमांसोपरि टीका, दशरूपकोपरि धनिकस्यावलोकः, बहुरूपस्य टीका, सुदर्शनाचार्यस्य विवृत्तिः, लोकमणिदाहालस्य कलाख्यप्रतिपदटीका, व्यक्तिविवेकोपरि रुय्यकटीका, औचित्यविचारचर्चोपरि लोकमणिदाहालस्य लीलाख्यप्रतिपदव्याख्या, सरस्वतीकण्ठाभरणोपरि रत्नेश्वरस्य टीका, काव्यप्रकाशोपरि षष्ठ्यधिकाष्टीका यासु रूय्यकस्य सङ्केतटीका, माणिक्यचन्द्रस्य सङ्केतटीका, नरहरेर्बालचित्तानुरञ्जनी, जयन्तभट्टस्य दीपिका, सोमेश्वरस्य काव्यादर्शः, वाचस्पतेर्वाचस्पतिटीका, चण्डीदासस्य दीपिका, विश्वनाथस्य काव्यप्रकाशदर्पणः, गोविन्दठक्कुरस्य काव्यप्रदीपः, यस्योपरि नागोजीभट्टस्य उद्द्योतटीका, भीमसेनस्य सुधासागरः, वामनस्य सुबोधिनी, भट्टगोपालस्य साहित्यचूडामणिः शिवप्रसादस्य हैमवतीटीका, शेषराजशर्म्मणो गुणवतीविवृत्तिः, अलङ्कारसर्वस्वोपरि जयरथस्य टीका, समुद्रबन्धस्य टीका, विद्याचक्रवर्तिनः अलङ्कारसञ्जीवनी, काव्यानुशासनोपरि स्वोपज्ञटीका, वाग्भटस्य काव्यालङ्कारोपरि अष्टाधिकाष्टीकाः यासु क्षेमहंसस्य

समासान्वयटिप्पणं गणेशस्य विवरणं, चन्द्रालोकोपरि वैद्यनाथस्य रमाटीका, विश्वेश्वरस्य राकागमटीका, एकावल्युपरि मल्लिनाथस्य तरलाटीका, प्रतापरुद्रयशोभूषणोपरि कुमारस्वामिनः रत्नापणटीका, साहित्यदर्पणोपरि पञ्चदशाधिकाष्टीकाः यासु अनन्तदासस्य लोचनं रामचरणतर्कवागीशस्य विवृत्तिः, हरिदासस्य अवतरणिका टीका, कृष्णमोहनस्य लक्ष्मीष्टीका, शेषराजशर्म्मणश्चन्द्रकलाटीका, शिवदत्तस्य रुचिराटीका, लोकमणिदाहालस्य कलाख्यप्रतिपदटोका, रसमञ्जर्युपरि अनन्तपण्डितस्य व्यङ्ग्यार्थकौमुदी, नागेशस्य प्रकाशः, उज्ज्वलनीलमण्युपरि जीवगोस्वामिनो लोचनरोचनी, विश्वनाथस्य आनन्दचन्द्रिका, कुवलयानन्दोपरि आशाधरस्य दीपिका, वैद्यनाथस्य अलङ्कारचन्द्रिका, गङ्गाधरस्य रसिकरञ्जनी, चित्रमीमांसोपरि बालकृष्णस्य सुधा, लोकमणिदाहालस्य लीलाख्यप्रतिपदव्याख्या, रसगङ्गाधरोपरि नागेशभट्टस्य गुरुमर्मप्रकाशिका, बदरीनाथस्य चन्द्रिका, केदारविपश्चितो रसचन्द्रिका, मधुसूदनस्य मधुसूदनीविवृतिः, अलङ्कारकौस्तुभोपरि स्वोपज्ञटीका, लोकमणिदाहालस्य शेषराजी टीका, विदग्धमुखमण्डनोपरि शेषराजस्य चन्द्रकला टीका च।

एतदतिरिक्तमपि सन्त्यनेके टीकाकाराष्टीकाग्रन्थाश्च येषां स्पष्टज्ञानाभावात्प्रमादाद्वाऽत्रोल्लेखो न कृतः। पाठकैः स्वयमेवान्वेष्टव्यम्।

अथैषु कतिपयालङ्कारिकाणां तद्ग्रन्थानाञ्च सङ्क्षिप्तपरिचयोऽत्र प्रस्तूयते।

**नन्दिकेश्वरः**—'साधिकारं नन्दिकेश्वरः' इति राजशेखरेण स्मृतः, पञ्चसायकप्रणेत्रा कामशास्त्राचार्यत्वेन प्रख्यापितः, सङ्गीतरत्नाकरप्रणेत्रा शार्ङ्गदेवेन सङ्गीताचार्यत्वेन श्रद्धितः, योगतारावली-नन्दिकेश्वरतिलक-प्रभाकरविजय-लिङ्गधारणचन्द्रिका-ताललक्षणाद्यनेकपरस्परविरुद्धसम्प्रदायसम्बद्धविविधग्रन्थानां प्रणेतृत्वेन च सम्मतो नन्दिकेश्वराख्यो विपश्चित्कः किंकालिकः इत्यादिविषये नैकवाक्ये किमपि कथयितुं न सुशकम्। विषयेऽस्मिन्नेतावदेवानुमातुं शक्यते यदुक्तानां सर्वेषामेव ग्रन्थानां प्रणेत्रा नैकेन नन्दिकेश्वरेण भाव्यम्। यथैव पृथक्पृष्ठभूमिकाश्चत्वारो बृहस्पतय उपस्थाप्यन्ते दर्शनकृत्स्मृतिकृत्सूत्रकृद्राजशास्त्रकृद्रूपेण तथैव नन्दिकेश्वरा अपि अनेके सम्भवन्ति। अलङ्कारशास्त्रसम्बद्धअभिनयदर्पणकृन्नन्दिकेश्वरस्तु तण्डुलशब्देनाऽप्यभिहितोऽपि कथ्यते। अस्य स्थितिकालविषये तु एतावदेव कथयितुं पार्यते यत्स भरतमुनिपूर्ववर्ती किन्तु कियत्कालपूर्ववर्तीति तु नैवानुमातुमपि सुशकम्। सामान्यतः पाणिनिः शिलालिकृतनटसूत्रं स्मरति। नन्दिकेश्वरो रसविषयकप्राचीनतमाचार्यत्वेन शिलालि-

तोऽपि पूर्ववर्ती सम्भवति। तन्नाम्ना एकमुपपुराणमपि स्मर्यते। सर्वैः सम्भूय रसाधिकरणप्रवक्ता नन्दिकेश्वरः विक्रमपूर्वसहस्राब्दीमभितः स्थितिमानित्यनुमीयते। अभिनयदर्पणस्तु तस्य नन्दीश्वरसंहितायाः पात्रसम्बद्धः परिच्छेदः। भरतो हि अङ्गहार-करणरेचकादीनामभिनयो नन्दिकेश्वरादधीतवानित्यभिनवभारतीतो ज्ञायते। नन्दिकेश्वरविषये स्थितिकालमधिकृत्य यत्रकुत्र यत्किञ्चिदप्युक्तं तत्सर्वं शुष्कानुमानमेव।

**शिलालिः**—शिलालिनामा कश्चिद्विपश्चिद् नटसूत्रं प्रणिनायेति 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' इति पाणिनीयसूत्रतो ज्ञायते। न ततोऽधिकं किञ्चिदपि ज्ञातमस्ति तद्विषये। सम्भवति एतान्येव नटसूत्राणि भरतनाट्यशास्त्रस्य पृष्ठभूमिः।

**भरतमुनिः**—अलङ्कारशास्त्रे नाट्याधिकरणमधिकृत्य द्वौ भरतावुपस्थाप्येते वृद्धभरतो भरतमुनिश्च। सामान्यतस्तु मनुयाज्ञवल्क्यहारीतवसिष्ठपराशरादीनां नामस्वपि वृद्धविशेषणं संयुक्तं दृश्यते। तथैव भरतेन सहापि व्यवहृतं स्यात्। तत्र तत्र वृद्धविशेषणसंयोजनेन तस्य तस्य प्राचीनरूपं स्मृतं स्यात्। कथ्यते नाट्यशास्त्रं हि मूलतो द्वादशसाहस्री संहिता आसीत् तस्य प्रणेता हि वृद्धभरतशब्देन सङ्केतितः सम्भवति। भरतनामसम्बद्धं नाट्यशास्त्र शतसाहस्री कृतिर्मन्यते। सम्प्रति यन्नाट्यशास्त्रमुपलब्धमस्ति तत्र सप्तत्रिंशदध्यायाः सन्ति क्वचित्तु षट्त्रिंशत एव। अस्य हि त्रयो भागाः सूत्रं कारिका भाष्यञ्च। एतदपि सम्भवति यद्भरतेन सूत्राणि ग्रथितानि स्युः। अनन्तरं तदनुवर्तिभिस्तन्नाम्ना कारिकाभाष्यभागौ संयोजितौ। यतो भरतस्थितिकालः सर्वैरपि प्रमाणैः शिलालितो नातिपश्चाद्वर्ती दृश्यते किन्तु नाट्यशास्त्रवाक्यानि तु बहुपश्चात्कालसम्बद्धानि दृश्यते। बहवो विद्वांसः सम्प्रति समुपलब्धनाट्यशास्त्ररचनाकालं विक्रमपूर्वद्वितीयशतकमभित आकलयन्ति किन्तु नाट्यशास्त्रस्योपरि राहुलकृतटीकां स्मरति अभिनवगुप्तः। राहुलस्तु विक्रमपूर्वचतुर्थशतकमभितः प्रणीते 'मणिमेकलये' इति ख्याते तामिलमहाकाव्ये स्मर्यते इति तत्स्थितिकालस्तस्मादपि पूर्ववर्ती भवेदेव। तेन व्याख्यातं नाट्यशास्त्रमवश्यमेव ततो न्यूनमपि द्विशताब्दीपूर्वं भवेदेव। तेन भरतस्य पूर्वसीमा तु विक्रमपूर्वषष्ठशतकादपि पूर्वमेव प्रतीयते। अपरञ्च, नाट्यशास्त्रे यादृशो भाषाविभागः कृतस्तदनुकूलकालस्तु महानन्दात्पूर्वतन एव सम्भवति। तत्र हि 'बाह्लीकभाषोदीच्यानां खशानाञ्च स्वदेशजा' इत्याद्युक्तमस्ति। महानन्ददिग्विजयानन्तरं तत्प्रतिपक्षभूताः खशाः प्रणेशुरित्यैतिहासिका वदन्ति। स्यादपि यद्वा तद्वा। पण्डितानां बहुमतं तु नाट्यशास्त्रपूर्णाहुतिकालस्तु विक्रमपूर्वद्वितीयशतकसन्निकट एवेत्यामन्यते। केचित्तु विक्रमानन्तरचतुर्थशतकसन्निकट इत्यपि।

नाट्यशास्त्रं हि नाट्यविषयस्य साङ्गोपाङ्गविवेचको ग्रन्थः। अत्र हि ५००० सङ्ख्याकाः श्लोकास्तथा कियद्भागो गद्यमयोऽपि। षष्ठसप्तमाष्टाविंशतितमाध्यायेषु केवलं गद्यभाग एव। नाट्यशास्त्रे हि त्रयोंऽशाः सूत्रं भाष्यं कारिकाश्च। एतदतिरिक्तं तत्र अनुवंश्यश्लोकाश्च यत्र तत्र दृश्यन्ते। एतावतानुमातुं शक्यते यद्ग्रन्थस्यास्य मूलभागः सूत्रात्मक आसीत्। तस्य तादृशं रूपं षष्ठसप्तमाध्याययोः सम्प्रत्यपि दृश्यते। तदनन्तरं सूत्रोपरि भाष्यं प्रणीतम्। सम्भवति कोह्लाचार्यः सूत्रोपरि भाष्यं प्रणीतवानासीत्। तदनन्तरं कारिकाः प्रणीताः सम्भवत्यासां प्रणेता शाण्डिल्यनामा भरतप्रशिष्यः। तदनन्तरञ्च वत्सधूर्तिलेनानुवंश्यश्लोकाः संयोजिताः। नाट्शास्त्रे एवेदं स्वीकृतं यन्नाट्यशास्त्रमिदं कोहलशाण्डिल्यवत्सधूर्तिलैः प्रचारितमासीदिति।

यथोक्तं—

'शेषं प्रस्तारतन्त्रेण कोहलः कथयिष्यति' इति।

शिष्यपरम्पराऽनुगताः श्लोका एव अनुवंश्यशब्देनाभिधीयन्ते। ते हि नाट्यशास्त्रात्पूर्वमेव कैश्चित्तदाचार्यैः प्रणीता आसन्। ते हि प्रमाणभूतत्वेन नाट्यशास्त्रे मतसम्पुष्ट्यर्थं यथास्थानं निवेशिताः सम्भवन्ति। तेन वर्तमानकाले समुपलब्धं नाट्यशास्त्रं नैकस्य नैककालीना च कृतिः प्रतीयते। भरतस्य मुनिभिः सह संवादरूपेण प्रणीतत्वादपि अस्य गुम्फकस्तु भरतानन्तरवर्ती कश्चिदेवेति स्पष्टमेव। यथा च 'मनुमेकाग्रमासीनम्' अथवा 'योगीश्वरं याज्ञवल्क्यं प्रणम्य मुनयोऽब्रुवन्' इत्यतः प्रारब्धां स्मृतिं वयं तत्तदुपदिष्टमतसम्पादकत्वेन मनुस्मृतियाज्ञवल्क्यस्मृतिनाम्ना व्यवहरामस्तथैवात्रापि। एतेनैतत्पर्यवस्यति यद्भरतप्रोक्तमिदं सूत्रात्मकं शास्त्रं कोहल-शाण्डिल्य-वत्सभूतिभिर्भाष्यकारिकानुवंश्यश्लोकादिभिः सङ्गृह्य संवर्ध्य सङ्गुम्फ्य च प्रचारितमिति। तदस्य साम्प्रतिकं रूपमपि विक्रमकालात्पूर्वमेव सुपूरितमासीत्।

इदं हि स्वविषयस्य सर्वोत्कृष्ट आकरग्रन्थः। इदञ्च भारतीयललितकलायाः काव्यशास्त्रस्य च विश्वकोश एव। अत्र हि प्राधान्येन वर्ण्यविषयो नाट्यमेव। किन्तु तत्रानुषङ्गिकरूपेण सङ्गीत-छन्दोऽलङ्कारादीनामपि प्रौढं प्रामाणिकञ्च विवेचन कृतमस्ति। अत्र हि नाट्यप्रकरणातिरिक्तम्, अष्टौ रसास्तेषां स्वरूपस्य विभावादितत्त्वानां च निरूपणम्, उपमा-रूपक-दीपक-यमकाख्याश्चत्वारोऽलङ्काराः षट्त्रिंशत्काव्यलक्षणानि, दशगुणाः, दश काव्यदोषाः साङ्गोपाङ्गं विवेचिताः। नाट्यविषयेऽपि इतिवृत्तपात्ररसरङ्गमञ्चरङ्गशिल्पाभिनयभाषाप्रयोगप्रवृत्तिवृत्तिसङ्गीत-गीत-दृष्टिप्रभृतितत्त्वानां पूर्णं वैज्ञानिकञ्च विवेचनं कृतमस्ति। तत्र हि प्रथमेऽध्याये नाट्योत्पत्तिः द्वितीये प्रेक्षागृहनिर्माणं, तृतीये रङ्गदेवता-

पूजनं, चतुर्थे ताण्डवसम्बद्धकरणानाम् अङ्गहाराणाञ्च विवेचनं, पञ्चमे पूर्वरङ्गविधानं, षष्ठे रसदिवेचनं, सप्तमे भावादिविवेचनम्, अष्टमेऽभिनयप्रसङ्गे उपाङ्गाभिनयः, नवमे हस्ताभिनयः, दशमे शरीराभिनयः, एकादशे चारीविधानं भौममाकाशञ्च, द्वादशे मण्डलविधानं, त्रयोदशं रसानुकूलगतिप्रचारः, चतुर्दशे प्रवृत्तधर्माभिव्यञ्जना, पञ्चदशे छन्दोविभागः, षोडशे वृत्तानां सोदाहरणलक्षणं, सप्तदशे वागभिनयो यत्र लक्षणालङ्कारकाव्यदोषगुणानां वर्णनम्, अष्टादशे भाषाभेदोऽभिनयप्रयोगश्च, एकोनविंशे काकुस्वरव्यञ्जना, विंशे दशरूपकलक्षणम्, एकविंशे नाटकसम्बद्धपञ्चसन्धिसन्ध्यङ्गानां विधानं, द्वाविंशे चतुर्विधवृत्तिविधानं, त्रयोविंशे आहार्याभिनयः, चतुर्विंशे सामान्याभिनयः, पञ्चविंशे बाह्योपचारः, षड्विंशे चित्राभिनयः, सप्तविंशे सिद्धिव्यञ्जननिर्देशः, अष्टाविंशे आतोद्यविधानम्, एकोनत्रिंशे ततातोद्यविधानं, त्रिंशे सुषिरातोद्यविधानम्, एकत्रिंशे तालविधानं, द्वात्रिंशे ध्रुवाविधानं, त्रयस्त्रिंशे वाद्यविधानं, चतुस्त्रिंशे पात्रविवेकः, शेषेषु प्रकीर्णविषया इति संक्षेपेण नाट्यशास्त्रविषयक्रमः।

अस्य हि बह्वष्टीकाकाराः। तत्र राहुलोद्भट-लोल्लट-शङ्कुक-भट्टनायक-भट्टयन्त्राभिनवगुप्तकीर्तिधरमातृगुप्ताचार्याः प्राचीनटीकाकाराः केचन प्रसिद्धाः। यथोक्तं सङ्गीतरत्नाकरे—

'व्याख्यातारो भारतीये लोल्लटोद्भटशङ्कुकाः।
भट्टाभिनवगुप्तश्च श्रीमत्कीर्तिधरोऽपरः॥'

तत्रापि अभिनवगुप्तस्य अभिनवभारती सर्वातिशायिनी व्याख्या। अस्योपरि हर्षनाम्ना केनचिद्विचक्षणेन वार्तिकग्रन्थोऽपि प्रणीत आसीदिति अभिनवभारतीतो ज्ञायते। अत्र च नान्यदेवस्य सरस्वतीहृदयालङ्कारटीकाऽपि प्राचीनतरा।

**कोहलः**—कोहलाचार्यं अलङ्कारशास्त्रिभिः शास्त्रप्रवक्तृत्वेन सादरं स्मर्यते। नाट्यशास्त्रेऽपि तस्य शास्त्रव्याख्यातृत्वेन समुल्लेखो दृश्यते। यथोक्तं तत्र—

"शेषं प्रस्तारतन्त्रेण कोहलः कथयिष्यति।"

नैतावन्मात्रमपितु कोहलो नाट्याचार्यत्वेन नैकेषु अलङ्कारग्रन्थेषु स्मर्यते। कुट्टिनीमतकारो दामोदरस्तं प्राचीननाट्याचार्यत्वेन स्मरति। सङ्गीतरत्नाकरकारः शार्ङ्गदेवः कोहलं स्वस्योपजीव्यं मन्यते। काव्यानुशासनकारो हेमचन्द्रस्तं भरतमनु स्मरति। यथा—'प्रपञ्चस्तु भरतकोहलादिशास्त्रेभ्योऽवगन्तव्यः।' इति। रसार्णवसुधाकरः शिङ्गभूपालः कोहलं भरतशाण्डिल्यदत्तिलमतङ्गैः सह नाट्यशास्त्राचार्यत्वेन स्मरति। कोहलनाम्ना सह एकं 'तालशास्त्रम्' अपि सम्बद्धं दृश्यते। 'दत्तिलकोहलीयं' नामैकं सङ्गीतशास्त्रमपि इति श्रूयते। अभिनवगुप्ताचार्यः कोहलं नाट्यशास्त्रप्रवक्तारमेव मन्यते। यथा—

'अभिनयत्रयं गीतातोद्ये च पञ्चाङ्गं नाट्यम्।........कोहलादिमतेन एकादशाङ्गत्वमुच्यत' इति।

अनेन तु तस्य शास्त्रकर्तृत्वमेव व्यज्यते न तु शास्त्रव्याख्यातृत्वमात्रम्। भरतमते हि नाट्यस्य पञ्चाङ्गानि भवन्ति आङ्गिक-वाचिका-हार्येत्यभिनयत्रयं गीतमातोद्यञ्च। कोहलमते तु नाट्यस्यैकादशाङ्गानि भवन्ति चतुर्विधोऽभिनयस्त्रिविधं गीतञ्चतुर्विधमातोद्यञ्चेति। शारदातनयोऽपि भावप्रकाशने 'इत्याह कोहलः' इत्यादिवाक्यैस्तं नैकवारं स्मरति समुद्धरति च तस्य मतम्। यद्यपि कालिदासः केवलं भरतमेव नाट्याचार्यत्वेन स्मरति 'मुनिना भरतेन यः प्रयोगो भवतीष्वष्टरसाश्रयः प्रयुक्तः' कथयित्वा विक्रमोर्वशीये (२।१८) स्मरति तथाप्येतावन्मात्रेण कोहलस्य प्राचीनत्वं नाट्याचार्यत्वञ्च नैव विलुप्यति। भरतस्य प्रधानशिष्यत्वेन कोहलो भरतसमकालिकः प्रतिभाति।

कोहलेन सहैव दत्तिल-वत्स-धूर्तिलप्रभृत्याचार्या अपि तत्र तत्र स्मर्यन्ते किन्तु तेषामैतिह्यं नास्माकं ततोऽधिकं ज्ञातम्।

**मेधावी वा मेधाविरुद्रः**—मेधावी अलङ्कारशास्त्रस्य प्रथमः प्रवक्ता। तस्य ग्रन्थस्तु सम्प्रति नैवोपलभ्यते किन्तु तस्य अलङ्कारशास्त्रसम्बद्धसिद्धान्ता यत्र तत्र समुद्धृताः सन्ति। काव्यशास्त्रस्य प्रथमाचार्यो हि भामहस्तमुद्धरति सबहुमानम्। यथा—

'हीनताऽसम्भवो लिङ्गवचोभेदो विपर्ययः।
उपमानाधिकत्वञ्च तेनासदृशताऽपि च॥
त एते उपमादोषाः सप्त मेधाविनोदिताः।
सोदाहरणलक्ष्माणो वर्ण्यन्तेऽत्र च ते पृथक्॥'

अनेनैतत्सिध्यति यन्मेधाविनः कश्चिदलङ्कारशास्त्रविषयको ग्रन्थ आसीदेव। एवमेव तत्रैव—

'यथासङ्ख्यमथोत्प्रेक्षामलङ्कारद्वयं विदुः।
सङ्ख्यानमिति मेधावी नोत्प्रेक्षाऽभिहिता क्वचित्॥'

रुद्रटस्य काव्यालङ्कारटीकायां नमिसाधुः कथयति—

"ननु दण्डिमेधाविरुद्रभामहादिकृतानि सन्त्येवालङ्कारशास्त्राणि।"

एवमेव—

'अत्र च स्वरूपोपादाने सत्यपि चत्वार इति ग्रहणाद्यन्मेधाविप्रभृतिभिरुक्तं यथा लिङ्गवचनभेदौ हीनताधिक्यमसम्भवो विपर्ययः सादृश्यमिति सप्तोपमादोषाः........।' इति।

तथैव—

"एत एव चत्वारः शब्दविधाः इति येषां सम्यङ्मतं तत्र तेषु नामादिषु मध्ये मेधाविरुद्रप्रभृतिभिः कर्मप्रवचनीया नोक्ता भवेयुः।" इति।

तथैव राजशेखरश्च काव्यमीमांसायां--

"प्रत्यक्षप्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव यतो मेधाविरुद्रकुमारदासादयो जात्यन्धाः कवयः श्रूयन्ते।" इति।

उपर्युत्थापितवर्णनेनैतत्सिध्यति यन्मेधावी अलङ्कारशास्त्रस्य पण्डित आसीत् स्वयं कविश्च। तस्य मते सप्तोपमादोषा भवन्ति। वामनमम्मटादिमते तु षडेव विपर्ययस्य हीनताधिकयोरेवान्तर्भावात्। एवञ्च तन्मते नामाख्यातोपसर्गनिपाता इति चत्वारः शब्दाः न तु कर्मप्रवचनीयाः। नैतावन्मात्रमपितु अग्निपुराणे मेधाविरुद्रौ काव्याचार्यत्वेन स्मृतौ स्तः।

मेधाविविषये द्वे परस्परविरोधिमते दृश्येते। केचिन्मेधावी रुद्रश्चेति पृथक्पृथगेव मन्यन्ते यथाऽग्निपुराणे। केचित्तु मेधाविरुद्र इति एकमेव व्यक्तित्वं गृह्णन्ति। भामहस्तु मेधाविनमेव स्मरति न तु रुद्रोत्तरं वा रुद्रमेव। नमिसाधुः राजशेखरश्च मेधाविरुद्रमेवैकव्यक्तित्वेन गृह्णीतः। वस्तुतस्तु मेधावीरुद्रश्चेति पृथक्त्वेनोपादानमेवोपयुक्तं प्रतिभाति अग्निपुराणे तथास्मृतत्वाद्भामहेन मेधाविमात्रस्य ग्रहणाच्च।

मेधाविरुद्रस्य वा मेधाविरुद्रयोः स्थितिकालविषये नैव किञ्चिदपि अनुमातुमपि शक्यते किमुत इदमित्थन्तया वक्तुम्। एतावदेव वक्तुं पार्यते यत् स वा तौ भामहपूर्वकालिका वा भामहपूर्वकालिकौ आसीद्वाऽऽस्ताम् भामहग्रन्थे मेधाविमतस्योल्लेखात्। तत्रापि नमिसाधुस्तु संस्कृतप्राकृतपौर्वापर्यविषय एवास्मानान्दोलयति 'दण्डिमेधाविरुद्रभामहादिकृतानि' इति कथनेन। तस्यानुसारं तु दण्डिनः पश्चाद्वर्तित्वेन मेधाविरुद्रस्योल्लेखो भामहपूर्ववर्तित्वेन। तथा हि सति अग्निपुराणं विपद्येत। तद्धि मेधाविरुद्रावेव काव्याचार्यत्वेन स्मरति न तु दण्डिनमपि। यदि मेधावी दण्ड्यनन्तरकालवर्ती सिध्येत् तदा तदुल्लेखकं पुराणमपि दण्ड्यनन्तरमेव प्रणीतं भवेद्येन तस्य पुराणत्वमेव प्रणश्येत्। यद्यपि प्राचीनत्वमेव न पुराणलक्षणं तथापि प्रायः सर्वत्र पुराणेषु अग्निपुराणस्योल्लेखात्तस्य नवीनत्वे सिद्धे सति सर्वेषामेव तदुल्लेखकानां पुराणानामपि दण्ड्यनन्तरकालवर्तिता सिध्यति येन समस्ताऽपि पुराणमान्यता विपन्ना भवेत्। अपरञ्च यदि तावानंशः पश्चान्निक्षिप्तो मन्यते तदाप्यनन्ततादोष आपद्यते निक्षिप्तांशस्येयत्तानिर्धारणासम्भवात्। इदमपि चिन्तनीयं यद्यत्र मेधाविरुद्रौ समुल्लिखितौ तदा दण्ड्यपि अवश्यमेवोल्लिखितो भवेद्यदि स तत्पूर्ववर्ती सम्भवेत्। किन्तु वस्तु-

स्थितिस्तु तत्प्रतिकूलैव। केचनैतदपि तर्कयन्ति यन्मम्मटपर्यन्ताचार्यैर्न कैश्चिदप्यग्निपुराणमलङ्कारशास्त्रविवेचकत्वेन स्मृतम्। मम्मटोऽपि केवलं विष्णुपुराणमेव स्मरति नत्वग्निपुराणम्। अलङ्कारशास्त्रपरम्परायामग्निपुराणस्योल्लेखस्तु प्रथमं साहित्यदर्पणकारेण विश्वनाथेनैव कृत इति अग्निपुराणस्य तावानंशो मम्मटानन्तरविश्वनाथपूर्ववर्तिकाले प्रक्षिप्त इति। तच्चिन्त्यमेव यतस्तथामते प्रक्षिप्तांशस्येयत्तानिर्धारणासम्भवादनन्ततादोष आपतीति पूर्वमेवोक्तमपरञ्च, उद्धरणमात्रमेव न प्राचीनत्वलक्षणम्। सम्भवति मम्मटादिभिस्तदज्ञातमपि स्यादथवोपेक्षितमपि। स्वमतोपस्थापनपरायणो यदि परोत्कर्षमुपेक्षते चेत्किमाश्चर्यम्। तेनैतदेव प्रतिष्ठापितं सम्भवति यन्मेधावी आलङ्कारिकेषु प्राचीनतमो येन समग्रमेवालङ्कारशास्त्रं प्रोक्तम्। तच्च शिष्यपरम्परया सुरक्षितं सत्तस्य कतिपयोंऽशो भामहेन स्वग्रन्थे समवतारितोऽथवा मेधाविनो ग्रन्थः कालकवलितः सञ्जातः। अग्निपुराणे यावदेव काव्यशास्त्रविवरणं दत्तं तत्सर्वं मेधाविरुद्रानुवादोति तु तत्रैव स्वीकृतमेव। तेन मेधाविरुद्रस्य वा मेधाविरुद्रयोः कालः पौराणिककालसंवादी। सामान्यत एतदनुमोयते यद्भरतमेधाविनौ शास्त्रप्रवर्तकाचार्यौ यत्राद्यो नाट्यशास्त्राचार्योऽपरोऽलङ्कारशास्त्राचार्यः इति।

**भामहः—**

प्राचीनालङ्कारिकेषु भामहोऽन्यतमः। यद्यपि भामहदण्डिनोः पौर्वापर्यं भामहस्य स्थितिकालश्च सर्वाधिकविवादविषयः सम्प्रत्यपि अनिर्णीतश्च तथापि विदुषां बहुमतं भामहस्य काव्यशास्त्राद्याचार्यत्वं समर्थयति। भामहो हि दण्डिनोऽसदृशमेव स्वपूर्ववर्तिनः सम्बद्धविदुषोऽसकृत्स्मरति। स हि स्वपूर्ववर्तिकाव्यशास्त्राचार्यत्वेन मेधाविनं स्मरति काव्यकारेषु च रामशर्माणं (२।५८) शाखवर्धनं (२।४७) च। शाखवर्धनस्य "राजमित्रं" हि यथोदितकाव्यलक्षणसम्मतमासीत्। रामशर्मणश्च रत्नाहरणं नाम काव्यमासीत्। तस्यैव अच्युतोत्तरे प्रहेलिकाऽप्यासीत् विवेचिताऽप्यासीत्। तद्विपरीतं दण्डी न कमपि नाम्नोद्धरति। किन्तु मेधाविशाखवर्धनरामशर्मणां देशकालविषये न किमपि ज्ञातमस्ति सम्प्रत्यपि। केचिद्धि भामहीयकाव्यालङ्कारगतानि—

"अयुक्तिमद्यथा दूता जलभृन्मारुतेन्दवः।
तथा भ्रमरहारीतचक्रवाकशुकादयः॥
अवाचो व्यक्तवाचश्च दूरदेशविचारिणः।
कथं दूत्यं प्रपद्येरन्निति युक्त्या न युज्यते॥
यदि चोत्कण्ठया यत्तदुन्मत्त इव भाषते।
तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते॥" (१।४१-४४)

इत्यादि पद्यानि कालिदासस्य मेघदूतं संकेतयन्ति इति मन्यन्ते किन्तु शाखवर्धनरामशर्मप्रभृतिकवीनां नामभिरेव स्मर्ता भामहः सर्वरससिद्धस्य कालिदासस्य नाम कथं न गृह्णातीति तेऽपि न समादधति। वस्तुतस्तु मेघादीनां दूत्यं लोकेऽनादिकालादेव किंवदन्तीरूपेण प्रचलितं दृश्यते। श्रूयते हि पुरा पारावतकाकशुकादयोऽपि प्रेमिणोर्दूत्यं कुर्वन्ति स्म। तेन नैतावन्मात्रेण भामहः कालिदासं स्मरतीति शक्यते निश्चयेन वक्तुम्। तदन्यत्र न कुत्रापि कालिदासीयग्रन्थानां छायापि दृश्यते भामहग्रन्थे केचिद्धि काव्यालङ्कारगते—

'शिष्टप्रयोगमात्रेण न्यासकारमतेन वा।
तृचा समस्तषष्ठिकं न कथञ्चिदुदाहरेत्॥
सूत्रज्ञापकमात्रेण वृत्तहन्ता यथोदितः।
अंकेन च न कुर्वीत वृत्तिं तद्गमको यथा॥ (६।३६,३७)

इति पद्ये समाधृत्य भामहः काशिकाविवरणपञ्जिकाकारं जिनेन्द्रबुद्धिं स्मरतीति कथयन्ति। किन्तु नैतदपि विश्वसनीयं प्रतिभाति, यतो हि न्यासपदं तु व्याख्याग्रन्थनिमित्तं पूर्वकालादेव प्रचलितं दृश्यते। बाणभट्टो हि हर्षचरिते 'कृतगुरुपदन्यासाः' इति न्यासं स्मरति यः शङ्करेण 'कृतोऽभ्यस्तो गुरुपदे दुर्बोधशब्दे न्यासो वृत्तिविवरणं यैः' इति व्याख्यातोऽस्ति। निश्चयमेव जिनेन्द्रबुद्धेः बाणपूर्ववर्तित्वमनुमन्यते न कोऽपि।

एवमेव ध्वन्यालोककार आनन्दवर्धनः शब्दशक्त्युद्भवानुरणनरूपप्रकारसमाश्रयेणार्थस्य नवत्वप्रतिपादनाय 'धरणीधारणायाधुना त्वं शेषः' इति हर्षचरितगतं वाक्यमुद्धृत्य तस्य प्राचीनोदाहरणे भामहीयकाव्यालङ्कारगतम्—

'शेषो हिमगिरिस्त्वञ्च महान्तो गुरवः स्थिराः।
यदलङ्घितमर्यादा श्चलन्तीं बिभ्रते भुवम्। (३।२७)

इति पद्यं प्रस्तौति। अनेन हि भामहस्य बाणपूर्ववर्तित्वं सिध्यति।

तथैव भामहग्रन्थे प्रतिपादितानि प्रमाणद्वैविध्यं, प्रत्यक्षस्य कल्पनापोढत्वं कल्पनायाश्च नामजात्यादियोजनारूपत्वं चैतानितथैव लिङ्गस्य त्रैरूप्यं, दूषणस्य न्यूनताद्युक्तित्वं, जातीनाञ्च दूषणाया सत्त्वं च दिङ्नागग्रन्थाद् गृहीतानि इति मत्वा केचन तं हि वैक्रमचतुर्थशतकोत्तरार्द्धभवदिङ्नागाचार्याद् वसुबन्धुशिष्यादुत्तरवर्तिनं मन्यन्ते। वस्तुतोऽस्मिन् न तथा कस्याऽपि विमतिस्तथापि न्यायशास्त्रमेव दिङ्नागायत्तमिति मतमपि

तथैवाशोभनीयं यथा हि मङ्गलाचरणगतसर्वज्ञपदेन भामहस्य बौद्धत्व-समर्थनम्। न च भामहो बौद्धो न च न्यायशास्त्रं दिङ्नागायत्तम्। दिङ्-नागाचार्यात्पूर्वमपि आसन्ननेके नैयायिकाः। स्वयं भामहोऽपि नैयायिक एवेति तद्ग्रन्थाध्ययनतो ज्ञायते। तन्ने तावन्मात्रेण न शक्यते भामहस्य दिङ्नागाधमर्णतां स्वीकर्तुम्।

अपरश्च काव्यालङ्कारगतम्—

काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत्।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः। (२।२०)

इति कथनं भट्टिकाव्यस्य—

व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम्।
हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया। (२२।३४)

इति पद्येन संवादी इत्यनुमीय भामहं भट्टिपरवर्तिनं मन्यन्ते। किन्तु प्रसङ्गतस्तु तदपि नैव सिध्यति। तत्प्रसङ्गश्चेत्थम्—

नानाधात्वर्थगम्भीरा यमकव्यपदेशिनी।
प्रहेलिका सा ह्युदिता रामशर्माच्युतोत्तरे॥
काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत्।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः॥"(२।१९,२०)।

इति। एतद्धि भामहस्य नष्टेम्। तेनैवोक्तम्—

गूढशब्दाभिधानञ्च न प्रयोज्यं कदाचन।
सुधियामपि नैवेदमुपकाराय कल्पते॥ (१।४५) इति।

एवमेव काव्यालङ्कारगतो हि—

विजिगीषुमुपन्यस्य वत्सेशं वृद्धदर्शनम्।
तस्यैव कृतिनः पश्चादभ्यधाच्चरशून्यताम्॥
अन्तर्योधसमाकीर्णं सालङ्कायननेतृकम्।
तथाविधं गजच्छद्म नाज्ञासीत् स स्वभूगतम्॥
यदि 'बोपेक्षितं तस्य सचिवैः स्वार्थसिद्धये।
अहो नु मन्दिमा तेषां भक्तिर्वा नास्ति भर्तरि॥
शरा दृढधनुर्मुक्ता मन्युमद्भिररातिभिः।
मर्माणि परिहृत्यास्य पतिष्यन्तीति काऽनुमा॥
हतोऽनेन मम भ्राता मम पुत्रः पिता मम।
मातुलो भागिनेयश्च रुषा संरब्धचेतसः॥

अस्यन्तो विविधान्याजावायुधान्यपराधिनम् ।
एकाकिनमरण्यानां न हन्युर्बहवः कथम् ।।
नमोऽस्तु तेभ्यो विद्वद्भ्यो येऽभिप्रायं कवेरियम् ।
शास्त्रलोकावपास्यैव नयन्ति नयवेदिनः ।।
सचेतसो वनेभस्य चर्मणा निर्मितस्य च ।
विशेषं वेद बालोऽपि कष्टं किन्तु कथं नु तत् ।।
(४।३९-४६)

इति प्रसङ्गस्तु निश्चयमेव भासस्य प्रतिज्ञायौगन्धरायणेन संवदते। तत्र हि प्रथमेऽङ्के यौगन्धरायणं प्रति हंसकवाक्ये "ततः प्रत्यागतप्राणमिदानीं भर्तारं प्रेक्ष्यानेन मम भ्राता हतोऽनेन मम पिताऽनेन मम सुतो मम वयस्य इति अन्यथा भर्तुः पराक्रमं वर्णयन्तः सर्वतोऽभिद्रुतास्ते पापाः।" इत्युक्तमस्ति। तथैव शालङ्कायनोपस्थितिरपि। अनेन भामहस्य भासपरवर्तित्वं तु निश्चयमेव सिध्यति। न चैषा विक्रमानन्तरप्रथमशतकभवसातवाहनसभासदो गुणाढ्यस्य वृहत्कथाया वा अनन्तराजसभासदो विक्रमानन्तर १०८५-११३७ मितवत्सरानभितः स्थितिमतः क्षेमेन्द्रस्य बृहत्कथामञ्जर्या वा तदनन्तरवर्तिनः सोमदेवस्य कथासरित्सागरस्य वा समालोचना मन्तव्या, तत्र काव्यस्यैव समालोचनाप्रसङ्गात्। यद्यपि कथाऽपि काव्यस्यैव भेदस्तथापि प्रसङ्गस्तु नाट्यमेवापेक्षते। भासो हि कालिदासपूर्ववर्तीति तु तस्य मालविकाग्निमित्रे "प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं बहुमानः" इति कथनाद् ज्ञायते।

भामहो हि भासं समीक्षते, कालिदासो हि भासं स्मरति, भामहस्तु तं नैवोद्धरतीति भामहस्य भासकालिदासयोरन्तर्वर्तिकालस्थितिमत्त्वं सिध्यति। सामान्यतो भासस्य स्थितिकालो विक्रमपूर्वतृतीयशतकादर्वाचीनस्तु नैव सम्भवति यतस्तत्रत्या हि भाषा भाषितरूपा दृश्यते। तदानीन्तना भाषा पण्डितयुगे नैव प्रविष्टाऽऽसीत्। सा हि कालिदासप्रयुक्तभाषापेक्षयाऽपि सरला। संस्कृतभाषायाः स्थितिरियं विक्रमपूर्वतृतीयशतकपर्यन्तं दृश्यते।

भामहदण्डिनोः पौर्वापर्यमादायापि पण्डिता विवदन्ते। केचिद्भामहं दण्डिपूर्ववर्तिनं मन्यन्तेऽपरे तु तद्विपरीतमेव। उभयोरेव ग्रन्थयोः परस्परसंवादिविषयस्य बहुलता तु दृश्यते किन्तु कोऽपि नापरं नामतः स्मरति। दण्डी तु

न केवलं भामहमेवापितु न कमपि नामत उद्धरति किन्तु भामहस्तु मेधाविरामशर्मशाखवर्धनप्रभृतीन् स्वपूर्ववर्तिनो नामत एव स्मरति तथापि नैव दण्डिनम्। दण्डी हि काव्यादर्शे स्वभावोक्तिमप्यलङ्कारं मन्यते भामहस्तु "स्वभावोक्तिरलङ्कार इति केचित्प्रचक्षन्ते" (२।९३) इति कथयित्वा तन्नैव स्वीकरोति। अनेन भामहो हि दण्डिनो मतं सङ्केतयतीति केषाञ्चिन्मतम्। किन्तु दण्डी हि अवन्तिसुन्दरीकथायां बाणभट्टं मयूरञ्च स्मरति। भामहस्तु बाणपूर्ववर्तित्वेन ध्वन्यालोके स्मर्यत इति तच्चिन्त्यमेव।

वस्तुतस्तु भामहो हि भासकालिदासान्तर्वर्तिकालस्थितिमानतः स विक्रमप्रथमशतकादनन्तरवर्ती तु कदापि न सम्भवति इति बहूनां विचारः।

भामहस्य सम्प्रत्येक एव ग्रन्थो लभ्यते काव्यालङ्कारो नाम। तत्र हि षट् परिच्छेदा यत्र प्रथमे काव्यशरीरनिर्णयः, द्वितीयेऽलङ्कृतिविवेकः, तृतीये विशिष्टालङ्कृतिविचारः, चतुर्थे दोषनिर्णयः, पञ्चमे न्यायविचारः, चरमे तु शब्दशुद्धिविवेकश्च विवेचितविषयाः।

भामहो हि स प्रथमोऽस्मज्ज्ञात आचार्यो येन काव्यशास्त्रं नाटचशास्त्रात्पृथगुद्धृत्य स्वतन्त्रशास्त्रत्वेन व्याख्यातम्। स हि यत्र कुत्र स्वपूर्ववर्तिन आचार्यानप्युद्धरति 'परे' 'केचित्' इत्यादिपदैर्मेधाविनं तु नामत एवापि किन्तु तेषु हि एकस्यापि ग्रन्थस्यानुपलब्धेर्वयं तेषां विषयेन किञ्चिदपि वक्तुं प्रभवामः। भरतेन हि उपमारूपकदीपकाख्याश्चत्वार एव नाटचालङ्कारा विवेचिता दृश्यन्ते, भामहस्तु यमकानुप्रासौ द्वौ शब्दालङ्कारौ रूपकदीपकोपमाक्षेपार्थान्तरन्यासव्यतिरेकविभावनासमासोक्त्यतिशयोक्तियथासङ्ख्योत्प्रेक्षाप्रेयोरसवदोजस्विपर्यायोक्तसमाहितोदात्तश्लिष्टापह्नुतिविशेषोक्तिविरोधतुल्ययोगिताप्रस्तुतप्रशंसाव्याजस्तुतिनिदर्शनोपमारूपकोपमेयोपमासहोक्तिपरिवृत्तिससन्देहानन्वयोत्प्रेक्षावयसंसृष्टिभाविकत्वाशीःप्रभृतयरर्थालङ्काराश्च काव्यालङ्कारत्वेन निरूपयति। तथानिरूपणे सः—

"गिरामलङ्कारविधिः सविस्तरः
स्वयं विनिश्चित्य धिया मयोदितः॥"

इति बहूनामलङ्काराणां स्वप्रख्यापितत्वमुद्घोषयति।

तत्रापि भामहो हेतुसूक्ष्मलेशाख्यानलङ्कारत्वेन नैव गृह्णाति यदा हि दण्डी तानेव वाचामुत्तमभूषणत्वेन स्वीकृत्य व्याख्याति। यदि हि भामहो दण्डिपूर्ववर्ती तदा सः—

हेतुश्च सूक्ष्मोलेशश्च नालङ्कारतया मतः।
समुदायाभिधानस्य वक्रोक्त्यनभिधानतः॥ (२।८६)

इति कस्य मतं दूषयति, तथैव–

'स्वभावोक्तिरलङ्कार इति केचित्प्रचक्षते ।'

इति कं सङ्केतयति । एवमेव यदि हि दण्डी भामहपूर्ववर्ती तदा हि सः–

'इति वाचामलङ्काराः दर्शिताः पूर्वसूरभिः ।' (२।७)

इति कान् हि स्मरति, इति तु सम्प्रत्यपि न सम्यङ्निर्णीतम् । एतदनुमीयते यद्भरतभामहयोरन्तराले आसन्ननेके अलङ्कारशास्त्रिणो येषु मेधाविसंज्ञितोऽन्यतमो यं हि भामहः सादरं स्मरति ।

परवर्तिषु ग्रन्थेषु भामहो हि सश्रद्धं स्मृतो दृश्यते । अप्पयदीक्षिताभिनवगुप्तानन्दवर्धनकेशवमिश्रनमिसाधुप्रतिहारेन्दुराजप्रेमचन्द्रभोजराजमम्मटमल्लिनाथरुद्रटवल्लभवामनविश्वेश्वरहेमचन्द्रप्रभृतिविदुषां ग्रन्थेषु भामहीयवाक्यान्युद्धृतानि लभ्यन्ते । कथ्यते हि दण्डचाचार्योऽपि भामहमुद्धरति निम्नाङ्कितकथने—

| काव्यादर्शे | भामहकाव्यालङ्कारे |
|---|---|
| १. अद्य या मम गोविन्द जाता त्वयि गृहागते ।<br>कालेनैषा भवेत्प्रीतिस्तवैवागमनात् पुनः ।<br>(२।२६६) | (३।५) |
| २. हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ।<br>(३।१२०) | हिमा⋯व्योमेत्यवाचकम् ।<br>(१।४१) |
| ३. अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।<br>शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धिकम् ।<br>(३।१२५) | (४।१) |
| ४. देशकालकलालोकन्यायागमविरद्धि च ।<br>(३।१२६) | (४।२) |
| ५. समुदायार्थशून्यं यत्तदपार्थमितीष्यते ।<br>(३।१२८) | (४।८) |

भामहो हि काश्मीरो रक्रिलगोभिसूनुरिति तस्यैव काव्यालङ्कारपुष्पिकावाक्याज्ज्ञायते । यथोक्तम्—

अवलोक्य मतानि सत्कवीना-
मवगम्य स्वधिया च काव्यलक्ष्य ।
सुजनावगमाय भामहेन
ग्रथितं रक्रिलगोभिसूनुनेदम् ॥' (६।६४)

काव्यालङ्कारविषये इदमुक्तमस्ति—

षष्ठ्या शरीरं निर्णीतं शतषष्ठ्या त्वलङ्कृतिः ।
पञ्चाशता दोषदृष्टिः सप्तत्या दोषनिर्णयः ॥
षष्ठ्या शब्दस्य सिद्धिः स्यादित्येव वस्तुपञ्चकम् ।
उक्तं षड्भिः परिच्छेदैर्भामहेन क्रमेण वा ॥ इति ।

अस्य हि उद्भटस्य भामहविवरणं व्याख्याग्रन्थः ।

**दण्डी**

काव्यशास्त्रस्य द्वितीयाचार्यत्वेन दण्डी स्मृतः । यद्यपि दण्डिनः स्थितिकालो नाद्यापि निर्णीतस्तथापि तस्य प्रेयोऽलङ्कारोदाहरणे—

इति साक्षात्कृते देवे राज्ञो यद्राजवर्मणः ।
प्रीतिप्रकाशनं तच्च प्रेय इत्यवगम्यताम् ॥ (२।२७९)

इति कथनात्तस्य राजवर्मणः समकालिकत्वं सिध्यति । राजवर्मा हि नरसिंहापराभिधानः काञ्चीनरेशः ७३७–७७९ मितवैक्रमाब्दानभितः सिंहासनारूढ आसिदित्यैतिहासिका वदन्ति । दण्डी हि बाणभट्टं मयूरञ्च स्मरति अवन्तिसुन्दरीकथायां तञ्चाभिनवगुप्तो लोचने समुद्धरतीति तस्य स्थितिकालस्येयमेव पूर्वापरसीमा । अतो हि सामान्यतः ७१५–७९० मितवैक्रमाब्दानभितो दण्डिनः स्थितिकालः । तस्य हि काव्यादर्शो दशकुमारचरितमवन्तिसुन्दरीकथा चेति त्रयो ग्रन्थाः प्रसिद्धाः । केचित् छन्दोविच्छित्तिः कलापरिच्छेदश्च तस्यैव ग्रन्थावित्यपि मन्यन्ते द्विसन्धानाख्यकाव्यमपि ।

दण्डिनः काव्यादर्शः काव्यसिद्धान्तानां व्यवस्थितरूपेण सङ्ग्राहकः प्रथमो ग्रन्थः । यद्यपि तत्पूर्ववर्तिभिर्मेधाविभामहादिभिरपि काव्यशास्त्रग्रन्थाः प्रणीता आसंस्तथापि काव्यसिद्धान्तानां व्यवस्थितः सङ्ग्रहस्तु दण्डिनैव प्रथमं प्रारब्धः । स स्वयमेव कथयति—

"पूर्वशास्त्राणि संहृत्य प्रयोगानुपलभ्य च ।
यथासामर्थ्यमस्माभिः क्रियते काव्यलक्षणम् ॥ (१।२)" इति ।

ग्रन्थेऽस्मिस्त्रयः परिच्छेदाः । तत्र हि प्रथमे काव्यशरीरं द्वितीये अर्थालङ्कारास्तृतीये तु शब्दालङ्काराश्च निरूपिताः सन्ति । तदनुसारेण हि इष्टार्थव्यवच्छिन्ना पदावली काव्यस्य शरीरम् । तच्च गद्यपद्यमिश्रभेदात्त्रिविधम् । वाङ्मयं चतुर्विधं संस्कृतप्राकृतापभ्रंशमिश्रभेदात् । तत्र संस्कृतं नाम दैवी वाक् । तत्समतद्भवदेशीतिबहुविधः प्राकृतक्रमः । महाराष्ट्री शौरसेनी गौडी लाटी च प्राकृतभेदाः । आभीरादिगिरोऽपभ्रंशः ।

अस्त्यनेको गिरां मार्गः। तत्र हि वैदर्भगौडीयौ प्रस्फुटान्तरौ। वैदर्भमार्गस्य श्लेषादयो दश गुणाः। गौडीये तेषां विपर्ययोऽपि। नैसर्गिकी प्रतिभा बहुनिर्मलं श्रुतममन्दोऽभियोगश्च काव्यसम्पदः कारणम्। काव्यशोभाकरो धर्मोऽलङ्कारः। स द्विविधः शाब्दश्चार्थश्च। स्वभावोक्त्यादयश्चार्था यमकादयः शाब्दाः।

काव्यादर्शो हि तिब्बतीभाषायामप्यनूदितोऽस्ति। असौ हि सम्प्रत्यपि बौद्धमठेषु पाठ्यग्रन्थत्वेन पठ्यते। अस्य हि दशाधिकाष्टीकाग्रन्थाः सन्ति। येषु रत्नश्रीज्ञानस्य 'रत्नश्री'टीका प्रकाशिकाऽऽख्या, वादिजिह्वालकृता श्रुतानुपालिनी टीका अज्ञातकर्तृका हृदयङ्गमा, केशवभट्टारककृता केशवाख्या, हरिनाथस्य मार्जना, मल्लिनाथस्य वैमत्यविधायिनी, त्रिभुवनचन्द्रस्य विवृतिः त्रिशरणनटभीमस्य चन्द्रिका, नरसिंहस्य दण्डचर्थमुक्तावली, विश्वनाथस्य रसिकरञ्जनी, भगीरथस्य भागीरथी, विजयानन्दकृता व्याख्या, यामुनेयस्य टीका, कृष्णकिङ्करतर्कवागीशस्य विवृतिः, धर्मवाचस्पतेर्वाचस्पत्याख्या टीका, प्रेमचन्द्रतर्कवागीशस्य मालिन्यप्रोञ्छनी, जीवानन्दविद्यासागरस्य विवृतिः, नृसिंहदेवस्य कुसुमप्रतिमा, रङ्गाचार्यस्य प्रभा, रामचन्द्रमिश्रस्य प्रकाशः, धर्मेन्द्रकुमारगुप्तस्य सुदर्शनाऽऽख्या च ज्ञाताः।

**वामनः**

आलङ्कारिकसूच्यां वामनस्य महत्त्वपूर्णं स्थानमस्ति। तस्य हि "काव्यालङ्कारसूत्राणि" विषयप्रतिपादनदृष्ट्या महर्घ्याणि। स हि रीतिसम्प्रदायस्याचार्यः। वामनो हि काश्मीरकस्य राज्ञो जयापीडस्य मन्त्री आसीदिति राजतरङ्गिणीकारस्य 'वामनाद्याश्च मन्त्रिणः' (४।४९७) इति वचनाज्ज्ञायते। जयापीडस्य स्थितिकालः ८३६-८७० मितवैक्रमाब्दानभित इति राजतरङ्गिणीतो ज्ञायते। तेन स एव तस्य स्थितिकालोऽपि। अर्थात् ८१०-८८० मितवैक्रमाब्दानभितो वामनस्य स्थितिकालः। काशिकावृत्तिकारो वामनस्तु तस्माद्भिन्नः प्राचीनश्च।

वामनस्य काव्यालंकारसूत्रेषु पञ्चाधिकरणानि सन्ति। तत्र शारीरकं नाम प्रथममधिकरणं यत्र प्रयोजनस्थापना, अधिकारचिन्ता, रीतिनिश्चयः, काव्याङ्गनि, काव्यविशेषाश्च चित्रिताः। दोषदर्शनं नाम द्वितीयमधिकरणं यत्र पदपदार्थदोषविभागो वाक्यवाक्यार्थदोषविभागश्च विषयौ। एवमेव गुणविवेचनाख्ये तृतीयेऽधिकरणे गुणालंकारविवेकः शब्दगुणविवेकोऽर्थगुणविवेचनञ्च निरूप्यविषयाः। आलंकारिकं नाम चतुर्थमधिकरणं यत्र

शब्दालङ्कारविचारः, उपमाविचारः, उपमाप्रपञ्चाधिकारश्च विवेच्यविषयाः। पञ्चममधिकरणं प्रयोगिकं नाम यत्र काव्यसमयः शब्दशुद्धिश्च सप्रपञ्च निरूपिते। ग्रन्थस्यास्य त्रयो भागाः सूत्राणि वृत्तिरुदाहरणप्रत्युदाहरणे च। अस्य वृत्तिभागश्च सूत्रकृता स्वयमेव प्रणीतः। उदाहरणेषु कानिचित्तु स्वयमेव वृत्तिकारेण प्रणीतानि कानिचित्तु कुमारसम्भव-रघुवंश-मेघदूत-विक्रमोर्वशीय-अभिज्ञानशाकुन्तल-किरातार्जुनीय-मृच्छकटिक–अमरुकशतक-उत्तररामचरित-महावीरचरित-वेणीसंहार-कादम्बरी-हर्षचरितप्रभृतिग्रन्थेभ्योऽपि गृहीतानि सन्ति। ग्रन्थस्यास्य गोपेन्द्रतिप्पभूपालप्रणीता कामधेनुसंज्ञिता, महेश्वरप्रणीता सहदेवकृता च व्याख्याः सन्ति प्राचीना यदाऽर्वाचीनासु लोकमणिदाहालप्रणीता कलाऽऽख्या व्याख्या प्रकाशिताऽस्ति।

वामनाचार्यमतानुसारेण गुणालङ्कारसंस्कृतौ शब्दार्थौ काव्यम्। रीतिरात्मा काव्यस्य। काव्यं हि ग्राह्य भवत्यलङ्कारादेव। अलङ्कृतिरलङ्कारः इति। करणव्युत्पत्या तु पुनरलङ्कारशब्दोऽयमुपमादिषु वर्तते। अलङ्करणञ्च दोषहानेन गुणालङ्कारादानेन च। तच्च शास्त्रादेव भवति न तु स्वेच्छया। काव्यं हि दृष्टार्थं सद्यः प्रीतिकरत्वात्। तददृष्टार्थञ्च कीर्तिहेतुत्वात्। तेनानन्दः कीर्तिश्च काव्यप्रयोजनम्। कवयो द्विधा अरोचकिनः सतृणाभ्यहारिणश्च। पूर्वे हि शिष्या भवन्ति विवेकित्वात्। नेतरे विवेकशून्यत्वात्। काव्यस्यात्मा रीतिः। सा हि विशिष्टपदरचना। विशेषस्तु गुणात्मा। रीतिस्त्रिधा वैदर्भी, गौडी पाञ्चाली च। तत्र समग्रगुणा वैदर्भी ओजःकान्तिमती गौडीया। माधुर्यसौकुमार्योपपन्ना पाञ्चाली। गुणसाकल्याद्वैदर्भी गाह्येतरद्वयापेक्षया। लोको विद्या प्रकीर्णञ्च काव्याङ्गानि। कवित्वबीजं प्रतिभानम्। काव्यं द्विविधं गद्यं पद्यञ्च। गुणविपर्यात्मानो दोषाः। असाधु, कष्टं, ग्राम्यमप्रतीतमनर्थकञ्च पददोषाः। तत्र व्याकरणविरुद्धमसाधु। श्रुतिविरमं कष्टम्। लोकमात्रप्रयुक्तं ग्राम्यम्। शास्त्रमात्रप्रयुक्तमप्रतीतम्। पूरणार्थंप्रयुक्तमनर्थकम्। अन्यार्थनेयगूढार्थाश्लीलक्लिष्टानि पदार्थदोषाः। तत्र रूढित्यागेन यौगिकमात्रार्थोपादानमन्यार्थम्। स्वयं प्रकल्पितार्थं नेयार्थम्। अप्रसिद्धार्थप्रयुक्तं गूढार्थम्। असभ्यार्थान्तरमसभ्यस्मृतिहेतुश्चाश्लीलम्। व्यवहितार्थप्रत्ययं क्लिष्टम्। भिन्नवृत्तयतिभ्रंशविसन्धयो वाक्यदोषाः। व्यर्थैकार्थसन्दिग्धाप्रयुक्तापक्रमलोकविद्याविरुद्धानि वाक्यार्थदोषाः।

काव्यशोभायाः कर्तारो धर्मा गुणाः। काव्यशोभातिशयहेतवोऽलङ्काराः। गुणा नित्यास्तदभावेन काव्यत्वासिद्धेः। ओजःप्रसादश्लेषसमतासमाधि-

माधुर्यसौकुमार्यौदारतार्थव्यक्तिकान्तयो बन्धगुणाः। त एवार्थगुणाः। यमकोऽनुप्रासश्च शब्दालङ्कारौ। उपमादयोऽर्थालङ्काराः। उपमा द्विविधा पूर्णा लुप्ता च। हीनत्वाधिकत्वलिङ्गवचनभेदासादृश्यसम्भवा उपमादोषाः। प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः। ते च प्रतिवस्तु-समासोक्ति-अप्रस्तुतप्रशंसा अपह्नुति-रूपक-श्लेष-वक्रोक्ति-उत्प्रेक्षा-अतिशयोक्ति-सन्देह-विरोध-विभावना-अनन्वय-उपमेयोपमा-परिवृत्ति-दीपक - निदर्शना-अर्थान्तरन्यास-व्यतिरेक-विशेषोक्ति-व्याजस्तुति-व्याजोक्ति-तुल्ययोगिता-आक्षेप-सहोक्ति - विशेषोक्ति - समाहित-संसृष्टिप्रभृतयः। नैकं पदं द्विः प्रयोज्यं प्रायेण। अतिप्रयुक्तं देशभाषा पदमपि प्रयोज्यं भवति। एवमेव लक्षणाशब्दाश्च।

वामनप्रणीतं शास्त्रमिदं लुप्तप्रायं मुकुलभट्टेन पुनः समुद्धृतमिति काव्यालङ्कारटीकाकृतः सहदेवस्य वचनाज्ज्ञायते।

**उद्भटः, भट्टोद्भटो वा**

काव्यालङ्कारशास्त्रपरम्परायां भट्टोद्भटस्य काव्यालङ्कारसारसंग्रहः सगौरवं स्थानं गृह्णाति। स हि काश्मीरकस्य जयापीडाख्यस्य राज्ञः सभापतिरासीदिति—

विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः।
भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः॥ (४।४९५)।

इति राजतरङ्गिणीकारवचनाज्ज्ञायते। तेन हि भट्टोद्भटोऽपि वामनसमकालिको वा तस्मात्किञ्चिज्ज्येष्ठः। तस्य हि त्रयो ग्रन्थाः प्रसिद्धाः भामहविवरणं, कुमारसम्भवकाव्यं, काव्यालङ्कारसारसंग्रहश्च। भामहविवरणं हि भामहस्य काव्यालङ्कारस्य टीका। यद्यपि सा सम्प्रति नैवोपलभ्यते किन्तु यत्र तत्र सश्रद्धं स्मृता दृश्यते, विशेषतः प्रतिहारेन्दुराजप्रणीतकाव्यालङ्कारसारसंग्रहलघुवृत्तौ। तथैवोद्भटेन भरतनाट्यशास्त्रस्य व्याख्या कृताऽऽसीदिति—

व्याख्यातारो भारतीये लोल्लटोद्भटशङ्कुकाः।
भट्टोऽभिनवगुप्तश्च श्रीमत्कीर्तिधरोऽपरः॥

इति सङ्गीतरत्नाकरे शार्ङ्गधरवचनाज्ज्ञायते। किन्तु साऽपि सम्प्रति लुप्तैव। तस्य हि कुमारसम्भवकाव्यमपि काव्यालङ्कारसारसंग्रहे उदाहृतभागमात्रं लभ्यते। तेन सम्प्रति भट्टोद्भटस्य एक एव ग्रन्थो लभ्यते काव्यालङ्कारसारसंग्रहो नाम।

ग्रन्थोऽयं षट्सु भागेष्वलङ्कारान् विभज्य पठति। तत्र ७९ कारिकाः सन्ति। प्रथमे हि वर्गे पुनरुक्तवदाभासछेकानुप्रास-अनुप्रास-लाटानुप्रास-रूपक उपमा-दीपक-प्रतिवस्तूपमाः निरूपिताः। द्वितीये हि वर्गे आक्षेप-अर्थान्तर-न्यास-व्यतिरेक-विभावना-समासेक्ति-अतिशयोक्तयो निरूपिताः। तृतीये वर्गे यथासङ्ख्य-उत्प्रेक्षा-स्वभावोक्तयः, चतुर्थे तु प्रेयोरसवदूर्जस्वि-पर्यायोक्त-समाहित-उदात्त-श्लिष्टाः, पञ्चमेतु अपह्नुति-विशेषोक्ति-विरोध-तुल्ययोगिता-अप्रस्तुतप्रशंसा-व्याजस्तुति-निदर्शना-उपमेयोपमा-सहोक्ति-परिवृत्तयः, षष्ठे तु अनन्वय-ससन्देह-संसृष्टि-भाविकानि निरूपितानि सन्ति।

ग्रन्थेऽस्मिन् कोङ्कणेन प्रतिहारेन्दुराजेन लघुविवृतिनाम्नी वृत्तिः प्रणीताऽस्ति। तस्या अयं पुष्पिकापद्यम्—

"मीमांसासारमेघात्पदजलधिविधोस्तर्कमाणिक्यकोशात्
साहित्यश्रीमुरारेर्बुधकुसुममधोः सौरिपादाब्जभृङ्गात्।
श्रुत्वा सौजन्यसिन्धोर्द्विजवरमुकुलात् कीर्तिवल्ल्यालवालात्
काव्यालङ्कारसारे लघुविवृतिमधात् कोङ्कणः श्रीन्दुराजः॥"

प्रतिहारेन्दुराजस्य स्थितिकालो विक्रमानन्तरदशमशतकपूर्वार्द्धमितः। एतदतिरिक्तं ग्रन्थेऽस्मिन् राजानकतिलकस्यापि व्याख्याऽऽसीदिति श्रूयते।

उद्भटेन हि पुनरुक्तवदाभास-काव्यलिङ्ग-छेकानुप्रास-दृष्टान्त-सङ्कराः इति पञ्चालङ्काराः नवीनतयोद्भाविताः। स हि दण्डिसम्मतान् लेशसूक्ष्म-हेत्वलङ्कारान् नैव गृह्णाति। स हि रसवदाद्यलङ्कारान् साधु व्याख्याति। इत्येतावदेव तस्य वैशिष्ट्यम्। तन्मते तु गुणालङ्कारौ काव्यस्य नित्यधर्मौ काव्यशोभाधायकौ।

**रुद्रटः**

भट्टोद्भटानन्तरं रुद्रटो हि काव्यालङ्कारशास्त्रिषु विशिष्टं स्थानं गृह्णाति। तस्य हि काव्यालङ्कारः काव्यशास्त्रपरम्परायामपरः प्रकाशः। रुद्रटो हि काश्मीरः शतानन्दापराख्यस्य भट्टवामुकस्य तनयः। स हि वामन-मुपजीवीति वामनपरवर्ती तं च राजशेखरः 'काकुवक्रोक्तिर्नाम शब्दालङ्कारोऽयमिति रुद्रटः' इति स्मरतीति राजशेखरपूर्ववर्ती। राजशेखरस्य समयः ९७७ मितवैक्रमाब्दानभितोऽनुमितः। तेन हि रुद्रटस्य स्थितिकालः ९००-९७० मितवैक्रमाब्दानभितोऽनुमितः।

रुद्रटस्य काव्यालङ्कारे षोडशाध्यायाः। प्रत्यध्याये प्रकरणान्यपि

षोडशैव। ग्रन्थस्यास्य नाम काव्यालङ्कारः। सम्बन्धश्चास्य काव्यस्वरूपविवेचना। प्रयोजनञ्चास्य कविशिक्षा। काव्यस्य प्रयोजनं यशः। ततश्च—

अर्थमनर्थोपशमं शमसममथवा मतं यदेवास्य।
विरचितरुचिरसुरस्तुतिरखिलं लभते तदेव कविः॥ (१।८)

काव्यस्य हेतुः शक्तिर्व्युत्पत्तिरभ्यासश्च। तत्र—

मनसि सदा सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः॥

सा द्विविधा सहजोत्पाद्या च। तत्र सहजा प्रतिभाऽऽख्या। उत्पाद्योपार्जनीया। एवमेव—

छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात्।
युक्तायुक्तिविवेको व्युत्पत्तिरियं समासेन॥ (१।१८)

सुजनसङ्गाज्ज्ञानोपार्जनमभ्यासः।

शब्दार्थौ काव्यम्। अर्थवद्वर्णसमुदायः शब्दः। स च नामाख्यातोपसर्गनिपातकर्मप्रवचनीयभेदेन पञ्चविधः। मेधाविरुद्रेण तु चत्वार एवोक्तास्तेन कर्मप्रवचनीयो नोक्तः। नाम्ना द्वेधा वृत्तिः समासासमासभेदेन। समासवत्या वृत्तेस्तिस्रो रीतय पाञ्चाली लाटीया गौडीया च क्रमेण लघुमध्यायतविरचनसमासा। द्वित्रिपदा पाञ्चाली, पञ्च सप्त वा लाटीया, यथाशक्तिसमासा गौडीया। असमासा तु वैदर्भी। पञ्चविधस्य शब्दस्य वाक्ये उपयोगः परस्परं सव्यपेक्षवृत्तीनामेकपराणां शब्दानामनाकाङ्क्षः समुदायो वाक्यम्। अन्यूनाधिकवाचकसुक्रमपुष्टार्थशब्दचारुपदं क्षोभक्षममक्षूणं वाक्यं प्रयुञ्जीत। वाक्यं द्वेधा भवति गद्यं छन्दोगतञ्च, भाषाभेदात् षोढा, ताश्च प्राकृत-संस्कृत-मागध-पिशाच-सूरसेनी-अपभ्रंशाः। वक्रोक्त्यनुप्रासयमकश्लेषचित्राणि शब्दालङ्काराः। मधुरा प्रौढा परुषा ललिता भद्रेति पञ्च वृत्तयः। असमर्थमप्रतीतं विसन्धि विपरीतकल्पनं ग्राम्यम् अव्युत्पत्तिदेश्यं च पदं दुष्टं भवेत्। अर्थः पुनरभिधावान् प्रवर्तते यस्य वाचकः शब्दः। तस्य च द्रव्यं गुणः जातिः क्रियेति भेदाः। मूर्तिमद् द्रव्यम्। द्रव्यादपृथग्भूतो द्रव्यसमवायी गुणः। स च सहज-आहार्य-आवस्थिकभेदात् त्रिविधः, नित्यं क्रियाऽनुमेधा द्रव्यविकारेण भवति धात्वर्थः। कारकसाध्या द्वेधा सकर्मिकाकर्मिका चेति। भिन्नक्रियागुणेष्वपि बहुषु द्रव्येषु चित्रगात्रेषु एकाकारा बुद्धिर्भवति यतः सा भवेज्जातिः। वास्तवमौपम्यमतिशयः श्लेषश्चार्थालङ्काराः। वस्तुस्वरूपमात्रकथनं वास्तवम्। तस्य सहोक्ति-समुचय-जाति-यथासङ्ख्य-भाव-

पर्याय-विषम-अनुमान-दीपक-परिकर-परिवृत्ति-परिसङ्ख्या-हेतु-कारणमाला-व्यतिरेक-अन्योन्य-उत्तर-सार-सूक्ष्म-लेश अवसर-मिलित-एकावल्यश्च भेदाः। समानमिति वस्त्वन्तराभिधानमौपम्यम्। तस्योपमोत्प्रेक्षादयो भेदाः। ते चोपमोत्प्रेक्षा–रूपकापह्नुति–संशय-समासोक्तिमतोत्तरान्योक्तिप्रतीयार्थान्तर-न्यासोभयन्यास-भ्रान्ति-मदाक्षेप-प्रत्यनीक-दृष्टान्तपूर्वसहोक्ति-समुच्चय-साम्य-स्मरणानीति एकविंशतिः। यत्रार्थधर्मनियमः प्रसिद्धबाधाद्विपर्ययं याति। कश्चित्क्वचित्स स्यादतिलोकमतिशयस्तस्य। तस्य च पूर्वविशेषोत्प्रेक्षाविभावना-तद्गुणाधिकविरोध-विषयासङ्गति-पिहित-व्याघातहेतवो भेदाः। यत्रैकार्थमनेकार्थैर्वाक्यं रचितं पदैरनेकस्मिन्। अर्थे कुरुते निश्चयमर्थश्लेषः स विज्ञेयः। तस्य चाविशेषविरोधाधिकवक्रव्याजोक्त्यवयवाः।

अर्थस्य दोषास्तु—

'अपहेतुरप्रतीतो निरागमो वाऽथ यन्न सम्बद्धः।
ग्राम्यो विरसस्तद्वानतिमात्रश्चेति दुष्टोऽर्थः॥'

काव्याद्धि सरसानां चतुर्वर्गे सुखेनावगमः। तेन तत्सरसं स्यात्। नीरसे हि न कस्यचिदपि प्रवृत्तिः। रसाश्च काव्ये शृङ्गारवीरकरुणा बीभत्सभयानकाद्भुता हास्यो रौद्रः शान्तः प्रेयानिति दश।

रसनाद्रसत्वमेषा मधुरादीनामिवोक्तमाचार्यैः।
निर्वेदादिष्वपि तन्निकाममस्तीति तेऽपि रसाः॥
स्नेहप्रकृतिः प्रेयान् सङ्गतशीलार्यनायको भवति। इति।

कथा हि द्विविधा उत्पाद्याऽनुत्पाद्या च। ते हि महान्तो येषु चतुर्वर्गः, चतुर्वर्गेष्वन्यतमो येषु ते लघवः। कथायां शास्त्रलोकमर्यादा नोल्लङ्घनीया।

इत्थं हि काव्यशास्त्रस्य विशदरूपेण विवेचकः शास्त्रग्रन्थोऽयं नमिसाधुना ११२५ मितवैक्रमाब्दे व्याख्यातोऽस्ति। तत्पूर्वमपि ग्रन्थस्यास्य वृत्तिग्रन्थः प्रणीत आसीदिति नमिसाधोरेव—

पूर्वमहामतिविरचितवृत्यनुसारेण किमपि रचयामि।
संक्षिप्ततरं रुद्रटकाव्यालङ्कारटिप्पणकम्।'

इति वचनाज्ज्ञायते। स च वृत्तिकृन्महामतिः सम्भवति रुद्रट एव स्यादिति।

केचित्तु शृङ्गारतिलकमपि रुद्रटकृतं मन्यन्ते किन्तु दुर्गाप्रसादटिप्पणानुसारेण तु तद् रुद्रभट्टकृतिर्न तु रुद्रटस्य। रुद्रटस्य काव्यालङ्कारो हि

आर्यासु निबद्धः। तत्र दशमरसत्वेन प्रेयोरसस्य कल्पना दृश्यते। श्रृङ्गार-तिलकं तु वार्णिकच्छन्दसि गुम्फितम्। तत्र नवैव रसाः प्रतिपादिताः सन्ति। एवञ्च काव्यालङ्कारस्य प्रयोजनं समस्तकाव्याङ्गविवेचनमेव किन्तु श्रृङ्गार-तिलकस्य तु नाट्योक्तरसस्थितेः काव्येऽपि प्रतिपादनमेव।

काव्यालङ्कारस्य काश्मीरकेण वल्लभदेवेन टीकाग्रन्थ प्रणीत आसी-दिति श्रूयते। सम्भवति नमिसाधुनाऽस्यैव संक्षिप्तं रूपं प्रस्तुतं स्यात्।

रुद्रभट्टस्य श्रृङ्गारतिलकं रसपक्षपाती काव्यलक्षणग्रन्थः। अत्र हि त्रयः परिच्छेदाः। प्रथमे हि परिच्छेदे नवानां रसानां भावानां नायक-नायिका-भेदसामान्यस्य च वर्णनमस्ति। द्वितीये विशेषतो विप्रलम्भश्रृङ्गारः सप्रपञ्चं विवेचितोऽस्ति। तृतीये हि इतररसानां वृत्तीनाञ्च वर्णनं दृश्यते।

यद्यपि रुद्रट-रुद्रभट्टौ समानव्यक्तित्वेनैव बहुशो गृहीतौ प्राचीनग्रन्थेषु तथापि काव्यालङ्कार-श्रृङ्गारतिलकयोः रचनावैषम्यान्न तथा प्रतिभाति। यथा प्रथमो हि अलङ्कारं विशदयति, अपरो रसाय। प्रथमो हि दशरसान् विवेचयति, अपरो हि नवानेव। आद्यो हि मधुरादि पञ्च हि वृत्तीः पठति, अपरस्तु कैशिकीप्रभृतिचतस्र एव। आद्यो हि संक्षेपेण नायकनायिकादि प्रस्तौति, अपरस्तु विशदरूपेण। रुद्रभट्टस्यापि स्थितिकालस्तु स एव।

**आनन्दवर्धनः**

आनन्दवर्धनो हि काव्यशास्त्राकाशे सर्वसमुज्ज्वलं नक्षत्रम्। काव्य-जगति तस्य ध्वन्यालोकस्य प्रवेशः सुमहत् सौभाग्यमाधत्ते। ध्वनिशास्त्रस्य व्याख्याकृत्त्वेन स हि सर्वानिवाचार्यानतिशेते।

स हि यद्यपि स्वपूर्ववर्तिषु भामहभट्टोद्भटातिरिक्तं नाम्ना न कमपि गृह्णाति तथापि तस्य—

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः॥

इति राजतरङ्गिणी (५।४) वचनात् स्थितिकालो वैक्रमदशमशतक-पूर्वार्द्धो मितः। अवन्तिवर्मा हि ९१०-९४१ मितवैक्रमाब्दानभितः सिंहासनासीन आसीत्। तेनानन्दवर्धनोऽपि ८८०-९५० मितवैक्रमाब्दान-भितः स्थितिमानित्यनुमीयते।

ध्वन्यालोको हि ध्वनिविवेचको ग्रन्थः। तत्र हि चत्वार उद्द्योताः। प्रथमे हि उद्द्योते ध्वनिप्रतिष्ठापना, द्वितीये व्यङ्ग्यमुखेन ध्वनिस्वरूपविवेकः, तृतीये तु व्यञ्जनकमुखेन तत्स्वरूपविवेकः, चतुर्थे तु ध्वनिव्युत्पादनप्रयोजनं चेति निरूपितविषयाः।

ध्वन्यालोकस्य हि त्रयोंऽशाः कारिका वृत्तिरुदाहरणानि च। केचिद्धि त्रयाणामेवानन्दवर्धनकर्तृकत्वं मन्यन्तेऽपरे तु कारिकाकारं वृत्तिकाराद्भिन्नमेव मन्यन्ते। विशेषतोऽभिनवगुप्तो द्वितीयपक्षसमर्थकः। उत्तरवर्तिसाहित्येषु ध्वनिकाररूपेणानन्दवर्धन एव गृहीतो दृश्यते। यथोक्तं जह्लणसङ्कलितसूक्तिमुक्तावलौ राजशेखरनाम्ना समुद्धृते पद्ये—

"ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः॥" इति।

तथैव—

'यत्नः कार्यः सुमतिना परिहारे विरोधिनाम्।'

इत्येतत्कारिकाव्याख्याने—'अत एव चेतिवृत्तमात्रवर्णनप्राधान्येऽङ्गाङ्गिभावरहितरसभावनिबन्धनेन च कवीनामेवंविधानि स्खलितानि भवन्तीति रसादिरूपव्यङ्ग्यतात्पर्यमेवेषां युक्तमिति यत्नोऽस्माभिरारब्धो न ध्वनिप्रतिपादनमात्राभिनिवेशेन इति कथनेनापि कारिकावृत्तिकृतोरैक्यं सिध्यति। किन्तु लोचनकारोऽभनवगुप्तस्तु—"न चैतन्मयोक्तमपितु कारिकाकाराभिप्रायेणेत्याह" इत्यादिकथनैः कारिकाकारं वृत्तिकाराद्भिन्नमेव मन्यते। तथापि सोऽपि कारिकाकारस्य नाम तु नैव गृह्णाति। एवावत्तु निश्चितमेव यत्कारिकाभागस्य रचना वामनस्य काव्यालङ्कारसूत्रवृत्तोरर्वाचीनैवेति तत्र—

"अस्फुटस्फुरितं काव्यतत्त्वमेतद्यथोदितम्।
अशक्नुवद्भिर्व्याकर्तुं रीतयः सम्प्रवर्तिता॥" (३।४७)

इति कथनाज्ज्ञायते। अपरञ्च, "रसाद्यनुगुणत्वेन (३।३३)" इति कारिकाया वृत्तिभागो यावान् सुविस्तृतो यत्तत्रत्यानि बहूनि तथ्यानि कारिकारूपेणैवोपस्थाप्यान्यपि सन्ति। यदि नाम कारिकाकार एव वृत्तिकारोऽप्यभविष्यत्तदा तथाकृतमभविष्यत्। कारिकाकारस्तु ध्वनेर्विभागं द्वितीय एवोद्द्योते करोति किन्तु वृत्तिकारस्तु तथा प्रथमे एवोद्योते करोति। समाने सति कारिकावृत्तिकृति तत्रैव ध्वनिविभागोऽपि निर्दिष्टः स्यात्। कारिकावसानवाक्यात्पृथगेव वृत्त्यवसानवाक्यास्तित्वमपि उभयोः पार्थक्यमेव जनयति। तत्रापि वृत्त्यवसानपद्ये 'तद्व्याकरोद्' इति पदं स्पष्टमेवानन्द-

वर्धनस्य वृत्तिमात्रस्य कर्तृत्वं साधयति। समाने हि सति कारिका-वृत्ति-भागयो र्निबन्धके न हि कदाचिदपि पृथगवसानपद्यसम्भावना।

इदं विश्वस्यते यत्कारिकाभागोऽस्य काव्यालोकसंज्ञितोऽनिर्णीतकर्तृको वृत्तिभागस्तु ध्वन्यालोकसंज्ञित आनन्दवर्धनप्रणीत इति।

कारिकाभागस्यास्य प्रणयनं वामनादर्वाचीनमिति पूर्वमेव प्रतिपादितम्। वामनो हि जयापीडस्य मन्त्री भट्टोद्भटसमकालिकः ८१०-८८० मितवैक्रमाब्दस्थितिमान्, आनन्दवर्धनस्तु ८८०–९५० मितवैक्रमाब्दानभितः स्थितिमानिति स्वल्पमेव तयोः स्थितिकालान्तरम्। रुद्रटोऽपि ९००–९७० मितवैक्रमाब्दानभितः स्थितिमानेवमेव। लोचनकृदभिनवगुप्तोऽपि १०७१ मितवैक्रमाब्दानभितः स्थितिमान्। राजशेखरश्च ९३०–१००० मितवैक्रमाब्दान्तरालवर्तीति सर्वेषामेव हि प्रत्ययः समकालिकत्वमेव सिध्यति। वामनानन्तरवर्ती वा तत्समकालिकोऽपि ध्वन्यालोककारिकाकारस्तैर्नस्त्रयंत इति नैव विश्वमनीयतामावहति। तेन हि ध्वन्यालोकस्य कारिकावृत्तिभागयोः प्रणेताऽऽनन्दवर्धन एवेति समामनन्ति विचक्षणाः।

ध्वन्यालोकस्य हि अज्ञातकर्तृका चन्द्रिकानाम्नी व्याख्याऽऽसीदिति 'चन्द्रिकाकारस्तु पठितमनुपठति', 'किं लोचनं विना लोको भाति चन्द्रिकयाऽपि हि', इत्यादिलोचनवाक्याज्ज्ञायते। अभिनवगुप्तस्य लोचनं यस्योपरि रामपारकस्य बालद्रिव्याख्या टिप्पणी, मधुसूदनमिश्रस्यावधानं, बदरीनाथशर्मणो दीधितिः, चन्द्रिकाप्रसादशुक्लस्य दीपशिखा, अलखदेवस्य प्रकाशिका द्वितीयाद्द्योतव्यापिनी, लोकमणिदाहालस्य लीला च ध्वन्यालोकस्य व्याख्याग्रन्थाः।

### मुकुलभट्टः

भट्टकल्लटस्य पुत्रो हि मुकुलभट्टः काश्मीरकः ९३०–१००० मितवैक्रमाब्दानभित आसीत्स्थितिमान्। तस्य हि चतुर्दशश्लोकात्मिका अभिधावृत्तिमातृका सम्प्रत्युपलभ्यते। तत्र हि लक्षणाऽप्यभिधाया एव भेदत्वेन निरूपिताऽस्ति। असौ हि ग्रन्थकारः प्रतिहारेन्दुराजस्य गुरुः।

### भट्टनायकः

भट्टनायको हि ध्वनिमतं दूषयति तन्मतश्चाभिनवगुप्तेन दूषितमिति आनन्दवर्धनाभिनवगुप्तयोरन्तरालवर्ती स आचार्यः। भट्टनायकस्य प्रसिद्धो ग्रन्थो हृदयदर्पणः। किन्तु स सम्प्रति नैवोपलभ्यते। भट्टनायको हि ध्वनि

निराकरोति किन्तु काव्यस्य रसवत्त्वं तु समर्थयति। अत एव तमुपहसन्नभिनवगुप्तः कथयति—

'वस्तुध्वनिं दूषयता रसध्वनिस्तदनुग्राहकः समर्थ्यत इति सुष्ठुतरो ध्वनिध्वंसोऽयम्। इति।'

रुय्यकप्रणीतालङ्कारसर्वस्वटीकायामलङ्कारविमर्शिन्यां जयरथः कथयति—

"भट्टनायकेन तु व्यङ्ग्यव्यापारस्य प्रौढोक्त्याभ्युपगतस्य काव्यांशत्वं ब्रुवता न्यग्भावितशब्दार्थस्वरूपस्य व्यापारस्यैव प्राधान्यमुक्तम्। तत्रापि अभिधाभावकत्वलक्षणव्यापारद्वयोत्तीर्णो रसचर्वणात्मा भोगादपरपर्यायो व्यापारः प्राधान्येन विश्रान्तिस्थानतयाऽङ्गीकृतः।" इति।

भट्टनायको हि रसोत्पत्तिविषये नवीनं दृष्टिकोणमादत्ते। स हि शब्दस्य त्रिविधं व्यापारं मन्यते। अभिधा, भावकत्वं, भोजकत्वञ्च। तत्राभिधाव्यापारेण काव्यस्य सामान्योऽर्थ उपस्थितो भवति। भावकत्वाव्यापारेण सीतारामादीनां विशेषस्वरूपमपकृत्य तान् साधारणीकरोति। भोजकत्वव्यापारेण सामाजिकान् रसानुभवं कारयति। यथोक्तम्—

अभिधा भावना चान्या तद्भोगीकृतिरेव च।
अभिधाधामतां याते शब्दार्थालङ्कृती ततः॥
भावनाभाव्य एषोऽपि शृङ्गारादिगणो मतः।
तद्भोगीकृतिरूपेण व्याप्यते सिद्धिमान् नरः॥ इति।

काव्यानुशासनविवेके हेमचन्द्रः स्मरति—

भट्टनायकस्त्वाह—रसो न प्रतीयते नोत्पद्यते नाभिव्यज्यते। स्वगतत्वेन हि प्रतीतौ करुणे दुःखित्वं स्यात्। न च सा प्रतीतिर्युक्ता सीतादेरविभावत्वात् स्वकान्तास्मृत्यसंवेदनात्। देवतादौ साधारणीकरणयोग्यत्वात्। समुद्रोल्लङ्घनादेरसाधारण्यात्। न च तत्त्वतो रामस्य स्मृतिरनुपलब्धत्वात्। न च शब्दानुमानादिभ्यस्तत्प्रतीतौ ताटस्थ्यमेव भवेत्तत्प्रीतिरनुभवस्मृत्यादिरूपा रसस्य युक्ता।" इति।

**राजशेखरः**

राजशेखरो हि विदर्भाभिजनः कान्यकुब्जवास्तव्यो राज्ञो महेन्द्रपालस्य तत्सूनोर्महीपालस्य च सदसि प्राप्तप्रधानासनः। तस्य पिता दुर्दुकाख्यो माता शीलवती प्रपितामहश्चाकालजलदः। बालरामायणप्रस्तावनायां स स्वयमेव च कथयति—

गुणालङ्कारारीतयस्तु तदुत्कर्षहेतव एव। अलङ्कारा अपि रसमेवालङ्कुर्वन्ति किंचात्मैवालङ्कार्यो भवति। रीतिवादिनां मतेऽपि पदरचनाया वैशिष्ट्यं गुणात्मकयैव। गुणाश्च रसस्यैव धर्मा इति रससाधकस्यैव रचनाविशेषस्य काव्यत्वं भवति। वक्रोक्तेरपि साध्यं तु रस एव। ध्वनिरपि यद्यपि वस्त्वलङ्काररूपोऽपि भवति तथापि तस्य काव्यात्मत्वं रसापेक्षयैव भवति। तेन हि पर्यवसायितया रसादिध्वनेरेव काव्यात्मत्वं सिध्यति। नितान्तानौचित्ये हि न रससिद्धिः। अत एव साम्प्रदायिकविभागः केवलमौपाधिकः। रस एव काव्यस्यात्मा।



# २२. लौकिककाव्यप्रकरणम्

## (क) ऐतिहासिककाव्यानि

**कवत इति कविः—**

कवेः कर्म काव्यम्। तत्र मूलतो दृश्यश्रव्यभेदाद् द्विविधम्। दृश्यं तत्राभिनेयं श्रव्यं तु पाठ्यमेव। गद्यपद्यमिश्रभेदादपरं त्रिविधम्। तत्रापि महाकाव्य-खण्डकाव्य-मुक्तकादिभेदात्पद्यकाव्यमनेकविधम्। कथाऽऽख्यायिकादिभेदाद् गद्यकाव्यमपि बहुविधम्। मिश्रञ्च चम्पूविरुदकरम्भकादिभेदादनेकविधम्। काव्यञ्च पुनरैतिहासिकप्रबन्धकाव्यादिभेदादपि बहुधा भेदितमस्ति। तत्र रामायणं महाभारतञ्चैतिहासिककाव्यत्वेन सम्मते स्तः। तयोः रामायणं हि महर्षेर्वाल्मीके-र्कृतिर्महाभारतं तु मुनिर्द्वैपायनस्य।

**वाल्मीकिरामायणम्—**

लौकिकसंस्कृतसाहित्यस्यादिकवेरस्यैतिह्यविषये बहुभिर्बहुधा संसूचितमस्ति। कथ्यते हि पद्मपुराणे यत् कश्चित् क्रूरकर्मा किरातः कस्यचित्तापसस्यानुग्रहेण लब्धसज्ज्ञानस्तपसि निरतः। सुचिरं तपस्यतस्तस्य शरीरं वल्मीकावृतं सञ्जातम्। ततश्च क्षीणपापोऽसौ सप्तर्षिकृपया ब्राह्मणत्वमवाप्य वाल्मीकिरित्यभिधानेन ज्ञातोऽभूदिति। स्कान्दे तु तदन्यथैवोक्तमस्ति। तदनुसारेण वल्मीकाख्यस्य मुनेः रेतपानात्समासादितगर्भायां सर्पिण्यां जातोऽयमिति। एतादृशः प्रसङ्गस्तु महत्त्वप्रतिपादनायैव कल्पित इति नास्ति तत्र विश्वसनीयता काऽपि। कस्यापि वल्मीकनाम्नो विप्रस्य पुत्रेणानेन भाव्यमिति तर्कः साधुः प्रतिभाति। असौ हि ऋक्षः प्राचेतसो वाल्मीकिश्चेति नामभिरवबुध्यत इति—

'ऋक्षोऽभूद्भार्गवस्तस्माद् वाल्मीकिर्योऽभिधीयते।'

इति वायुपुराणवचनाज्ज्ञायते। प्रचेता हि वरुणस्तस्य पुत्रो भृगुः प्राचेतसस्तदन्वयजा अपि तेन प्राचेतससंज्ञिताः।

वाल्मीकेः स्थितिकालविषये सम्प्रत्यपीदमित्थन्तया वक्तुं तु नैव पार्यते तथापि एतदनुमीयते यदसौ महर्षेर्व्यासादपि पूर्ववर्तीति। महाभारते हि वाल्मीकेस्तदाबद्धरामायणस्य च चर्चा दृश्यते। एतावत्तु निश्चितमेव यद्रा-

मायणस्य कथा ब्राह्मणकालादपि प्राचीनतरा कामं तस्याः काव्यरूपत्वं तदपेक्षया त्वर्वाचीनतरमेव तथ्यमेतद् वाल्मीकीये रामायणे एव स्वीकृतमस्ति कथनेनानेन—

इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम्।
महदुत्पन्नमाख्यानं रामायणमिति श्रुतम् । (१।५।३) इति ।
'अयोध्या नाम नगरी तत्राऽऽसीद् लोकविश्रुता । (तत्रैव ६) ।
तां तु राजा दशरथो महाराष्ट्रविवर्धनः ।
पुरीमावासयामास दिवि देवपतिर्यथा ॥ (तत्रैव ९)
अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः । (तत्रैव ७।२)

रामायणकाव्यस्य प्रणयनमपि बुद्धोदयान्नितान्तमेव पूर्वं सम्पन्नमासीदिति बहुभिस्तत्रत्यैराभ्यन्तरतथ्यैर्ज्ञायते कामं तस्य परिवर्द्धनं वा नवीनीकरणं तत्पश्चादपि विहितं सम्भवेत् । तदा हि विशाला मिथिला च स्वतन्त्रराष्ट्ररूपेण चित्रिते स्तः । बुद्धसमये उभेऽपि संयोज्य वैशालीराज्यं सङ्घटितमासीत् । तदा हि पाटलीपुत्रस्यास्तित्वमेवाऽपि नासीद् । ऐतिहासिकाः कथयन्ति यन्मागधेनाजातशत्रुणा विक्रमपूर्वं पञ्चमशतकमभितो वज्जीनामाक्रमणविफलयितुं गङ्गाशोणसङ्गमे तन्निर्मितमासीत् । एतेनापि रामायणस्य तत्पूर्ववर्तिता सिध्यति । तदा हि भारतस्योत्तरभूखण्डं मगधाङ्गमिथिलाकोशलकान्यकुब्जप्रभृतिलघुस्वतन्त्रराज्येषु विभक्तमासीत् । कोशलमपि उत्तरदक्षिणभेदेन द्विधा विभक्तमासीत् रामो ह्युत्तरकोशलेन्द्रस्तन्माता कौशल्या च दक्षिणकोशलेन्द्रस्य सुता । दक्षिणभारतं तु अरण्यनिरूपेण वर्णितमस्ति । रामायणे ह्युत्तरकोशलस्य राजधानी अयोध्या कथिता । परन्तु जैनबौद्धग्रन्थेषु पातञ्जलेऽपि महाभाष्ये सा साकेतशब्देन ज्ञापिताऽस्ति रामायणे हि साकेतशब्दो न कुत्रापि स्मृतो दृश्यते । रामायणग्रथनसमये श्रावस्तीनगरस्यास्तित्वमेव नाऽऽसीदिति तेन श्रावस्तीनिर्माणात्पूर्वमेव रामायणं प्रणीतमिति सिध्यति । रामायणरचनाकालमादाय यद्यपि पण्डिता विवदन्ते यथा गौरेसियोमहोदयो विक्रमपूर्वं द्वादशशतकं, श्लेगलमहाशयो विक्रमपूर्वैकादशशतकं, याकोवी तु विक्रमपूर्वाष्टमशतकं, कामिलबुल्केमहोदयो विक्रमपूर्वं षष्ठशतकं, मैकडानलमहाभागो विक्रमपूर्वपञ्चमशतकं, काशीप्रसादोऽप्येवमेव, एवमेव जयचन्द्रश्च, विन्टरनित्सस्तु विक्रमपूर्वतृतीयशतकं रामायणग्रथनकालत्वेन गृह्णन्ति तथापि तेषां विश्लेषणमेकाङ्गि एव दृश्यते ।

केचिद्रामायणे—

'यथा हि चोरः स तथा हि बुद्धस्तथागतं नास्तिकमत्र विद्धि ।
तस्माद्धि यः शक्यतमः प्रजानां स नास्तिके नाभिमुखो बुधः स्यात् ।'
( २।१०९।३४ )

इति पद्यमादाय तं बुद्धकालान्तरप्रणीतं मन्यन्ते । केचिदिदं प्रक्षिप्तमेव मन्यन्ते । किन्तु उभावेव पक्षौ नैव चिन्तयतो यद् बुद्धस्तथागतश्च बुद्धसामान्यपर्यायावबोधकशब्दौ न तु शौद्धोदनेः । प्रथमं तु मर्यादापुरुषोत्तमस्य रामस्य मुखारविन्दतस्तथाविधशब्दोच्चारणं वाल्मीकिनाऽवश्यमेव नैव प्रकल्पितमिति तस्य प्रक्षिप्तत्वं स्पष्टमेव । सत्यपि तस्य मौलिकत्वे तद्धि नैव शाक्यसिंहमेव नाम्ना स्मरति । बुद्धमतं हि अतिप्राचीनकालादेव प्रचलितं दृश्यते । अमरसिंहोऽपि स्वीये नामलिङ्गानुशासने प्रथमं बुद्धस्य—

सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः ।
समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः ।।
षडभिज्ञो दशबलोऽद्वयवादी विनायकः ।
मुनीन्द्रः श्रीघनः शास्ता मुनिः……… ।।

इत्यष्टादशनामानि निर्दिश्य ततो बुद्धावान्तरभेदभूतस्य शाक्यमुनेः
शाक्यमुनिस्तु यः ।

स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः ।
गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ।।

इति सप्तनामानि निर्दिशति । तेन नाऽत्र गौतमबुद्धस्य संकेतः । स तु रामात्कुशस्तस्यातिथिस्तस्यं निषधस्तस्यानलस्तस्य पुण्डरीकस्तस्य क्षेमधन्वा तस्य देवानीकस्तस्याहीनकस्तस्य रुरुस्तस्य पारियात्तकस्तस्य देवलस्तस्य वधलस्तस्योत्कस्तस्य वज्रनाभस्तस्य शङ्खणस्तस्य युषिताश्वस्तस्य विश्वसहस्तस्य हिरण्यनाभस्तस्य पुष्यस्तस्य ध्रुवसन्धिस्तस्य सुदर्शनस्तस्याग्निवर्णस्तस्य शीघ्रगस्तस्य मरुस्तस्य प्रसुश्रुतस्तस्य सुसन्धिस्तस्यामर्षस्तस्य सहस्वांस्तस्य विश्वभवस्तस्य बृहद्बलस्तस्य बृहत्क्षणस्तस्योरुक्षयस्तस्य वत्सव्यूहस्तस्य प्रतिव्योमस्तस्य दिवाकरस्तस्य सहदेवस्तस्य बृहदश्वस्तस्य भानुरथस्तस्य प्रतीताश्वस्तस्य सुप्रतीकस्तस्य मरुदेवस्तस्य सुनक्षत्रस्तस्य किन्नरस्तस्यान्तरिक्षस्तस्य सुपर्णस्तस्य मित्रजित्तस्य बृहद्राजस्तस्य धर्मी तस्य कृतञ्जयस्तस्य रणञ्जयस्तस्य सञ्जयस्तस्य शाक्यस्तस्य शुद्धोदनस्तस्य गौतम इति षट्पञ्चाशत्पुरुषानन्तरजः । ( गणनेयं विष्णुपुराणमनुसरति

चतुर्थांशस्य चतुर्थद्वाविंशतितमाध्यायौ )। तत्र पुनः केचिद्विशेषेण वेवराख्यपण्डितो रामायणे वारद्वयं यवनशब्दस्य प्रयोगमादाय तद् ग्रीकमहाकविहोमरतः पश्चात्प्रणीत मन्यन्ते। होमराख्यस्य महाकवेः 'इलियड' 'ओडसी' इति द्वे काव्ये प्रसिद्धे स्तः। इलियडाख्यं महाकाव्यं हि खीष्टपूर्व-पञ्चमशतकमभितः प्रणीनमासीत्। तत्रापि रामायण इव स्त्रीनिमित्तक-सङ्ग्रामो वर्णितः। किन्त्वेतदपि तथ्यच्युतमेव यतो हि भारतीये साहित्ये यवनानामुल्लेखोऽतिप्राचीनकालादेव प्रचलितो दृश्यते। ते हि मान्धातुः पुत्रस्य तुर्वसोः वंशजाः कथिताः। यौति इति यवनः पचादित्वाल्ल्युः युज्वा।

इत्थं हि कोशलराजधानीरूपेण अयोध्याया एवोल्लेखो न तु साकेतस्य. विशालामिथिलयोः पृथग्राज्यत्वेनोल्लेखः, दक्षिणभागस्यारण्यबहुलतोल्लेखः, उत्तरेऽपि अङ्ग-वङ्ग-मत्स्य-मगध-कोशल-साङ्काश्य-कान्यकुब्जादिलघुस्वतन्त्र-राज्यानां वर्णनम्। गङ्गाशोणसङ्गमोल्लेखप्रसङ्गेऽपि पाटलीपुत्रस्यानुल्लेखः, श्रावस्तीमल्लपुरी-तक्षशीला-पुष्करावती-मधुराप्रभृतिनगरीणां निर्माणवर्ण-नञ्चेतिप्रभृत्याभ्यन्तरसाक्ष्येभ्य इदमेव प्रतीयते यद्रामायणस्य प्रणयनं गौतम-बुद्धस्थितिकालान्नितान्तपूर्वमेव सम्पन्नमासीदिति। महाभारते रामसम्बद्ध-स्थानानां तीर्थरूपेण वर्णनाद्रामायणस्य रचना महाभारतात्पूर्वमेवेति निश्च-प्रचम्। रायायणे हि कुरुजनपद एव स्मृतो न तु हस्तिनापुरम्। हस्तिना-पुरं हि चन्द्रवंश्येन राज्ञा हस्तिना निर्मितमासीद्यस्यावस्थितिर्गङ्गाया दक्षिणे कूले कथिता।

केचित्तु रामायणमहाभारतयोः पौर्वापर्यविषयेऽपि शङ्कां जनयन्ति। तदनुसारेण महाभारत हि लोकसम्मतचरित्रसम्बद्धं रामायणं तु नितान्त-मेव काल्पनिकचरित्रावृतम्। महाभारते हि विश्रृङ्खलितप्रायं समाजमादर्शं शिक्षितुं रामायणं प्रणीतमिति तेषां तर्कः। किन्तु तच्चिन्त्यमेव यतो हि महाभारते एव विशेषतो वनपर्वणि रामायणस्य तस्य प्रणेतुर्वाल्मीकेश्च चर्चा दृश्यते।

याकोवीप्रभृतिविचक्षणानां कथनमस्ति यद्रामायण हि मूलतोऽयोध्या-काण्डतो युद्धकाण्डपर्यन्तमेव वाल्मीकिना विरचितमासीत्। तस्य हि बालो-त्तरकाण्डौ पश्चात्संयोजितौ केनापि। वाल्मीकिना राम आदर्शमहापुरुष एवाभिमतः किन्तु बालोत्तरकाण्डयोस्तु रामो भगवदवताररूपेणाङ्कितो दृश्यते। तत्रत्यानां विश्वामित्र-अहिल्या-गङ्गावतरण-ऋष्यशृङ्गादिकथानां नास्ति रामायणकथया सह कश्चित्सम्बन्धः। इति। वस्तुत एव मतमिदं समा-लोच्यं दृश्यते। युद्धकाण्डसमाप्तौ ग्रन्थान्तसूचनाऽपि प्रतीयते। तथा चोत्तरे हि काण्डे बहुलाख्यानां मूलभागे नैव कश्चिदपि सङ्केतो दृश्यते।

याकोवीप्रभृतिविचक्षणानां कथनमस्ति यद्रामायणं हि मूलतोऽयोध्याकाण्डतो युद्धकाण्डपर्यन्तमेव वाल्मीकिना विरचितमासीत्। तस्य हि बालोत्तरकाण्डौ पश्चात्संयोजितौ केनापि। वाल्मीकिना राम आदर्शमहापुरुष एवाभिमतः किन्तु बालोत्तरकाण्डयोस्तु रामो भगवदवताररूपेणाङ्कितो दृश्यते। तत्रत्यानां विश्वामित्र-अहिल्या-गङ्गावतरण-ऋष्यशृङ्गादिकथानां नास्ति रामायणकथया सह कश्चित्सम्बन्धः। इति। वस्तुत एव मतमिदं समालोच्यं दृश्यते। युद्धकाण्डसमाप्तौ ग्रन्थान्तसूचनाऽपि प्रतीयते। तथाचोत्तरे हि काण्डे बहूनामाख्यानानां मूलभागे नैव कश्चिदपि संकेतो दृश्यते। उत्तरकाण्डे—

एतावदेतदाख्यानं सोत्तरं ब्रह्मपूजितम्।
रामायणमिति ख्यातं मुख्यं वाल्मीकिना कृतम्॥ (१११।१)

इति कथनादपि युद्धकाण्डपर्यन्तमेव रामायणस्य मुख्यग्रन्थत्वं सिध्यति। तथैव तत्रैव—

एतदाख्यानमायुष्यं सभविष्यं सहोत्तरम्।
कृतवान् प्रचेतसः पुत्रस्तद् ब्रह्माऽप्यन्वमन्यत॥ (१११।११)

इति कथनादपि उत्तरकाण्डस्य पश्चात्प्रणयनं सिद्धचति। अत्रापि द्विविधा विप्रतिपत्तयः सम्भवन्ति। रामायणं यदि युद्धकाण्डावसाने परिसमाप्तं मन्यते तदा तत्र शान्तो हि मुख्यो रसो भवेद्वीरश्चाङ्गरसः। यदा तु उत्तरकाण्डे एव रामायणस्य परिसमाप्तिर्मन्यते तदा तु करुणो हि मुख्यो रसो वीरश्चाङ्गरसः। सामान्यतो हि पण्डिता रामायणं करुणरसप्रधानं काव्यं मन्यन्ते। ध्वनिकार आनन्दवर्द्धनोऽपि रामायणं हि शोकभावनया प्रारब्धं मन्यते, मन्यते च शोकान्तरूपम्। यथोक्तम्—

"रामायणे हि करुणो रसः स्वयमादिकविना सूचितः 'शोकः श्लोकत्वमागतः' इत्येवंवादिना। निर्व्यूढश्च स सीतात्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता।" इति। (४।५ कारिकावृत्तौ)। किन्त्वपरे तु नैव मन्यन्ते। प्रथमतस्तु 'श्लोकः श्लोकत्वमागतः' इत्यस्य रामायणकथया सह नैव कश्चिदर्थः। सम्भवति, क्रौञ्चघटनया महर्षिः काव्याय प्रेरितोऽभूत्किन्तु तस्य रामायणकथानकेन न कोऽपि संबन्धः। अपरञ्च, मूलतो हि रामायणं द्वादशसहस्रसंख्यकश्लोकात्मकमेवाऽऽसीत्। इदं हि शान्तरसप्रधानं काव्यं युद्धकाण्डपर्यन्तलम्बि। बालकाण्डस्याद्याश्चत्वारो सर्गाश्च प्रक्षिप्ता एव। तथैव पञ्चमसर्गस्य चत्वारः श्लोकाश्च। भागो ह्ययं भूमिकारूपेण वर्तते। यथा हि—

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ।
चकार चरितं कृत्स्नं विचित्रपदमर्थवत् ॥ ( १।४ )

इति कथनं कथमपि वाल्मीकेर्न सम्भवति । स आत्मानमेव भगवद्विशेषणं योजयति परोक्षलकारञ्च प्रयुनक्ति इति नैव श्रद्धास्पदम् । तत्रैवोक्तम्—

काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ।
पौलस्त्यवधमित्येवं चकार चरितव्रतः ॥ ( १।४।७ ) ।

इति कथनमपि तदेव समर्थयति तदंशस्य प्रक्षिप्तत्वं वाल्मीकिरामायणस्य युद्धकाण्डपर्यन्तमेव विस्तरञ्च । तेन हि—

कोशलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ ( १।५।५ )

इति वाल्मीकिरामायणस्य प्रथमः श्लोकस्तथैव ।

दशवर्षसहस्राणि दशवर्षशतानि च ।
भ्रातृभिः सहितः श्रीमान् रामो राज्यमकारयत् ॥ (५।१२८।१०६)

इति काव्यस्यास्य चरमः श्लोकः । तदनन्तरवर्ती —

धर्म्यं यशस्यमायुष्यं राज्ञाञ्च विजयावहम् ।
आदिकाव्यमिदं चार्षं पुरा वाल्मीकिना कृतम् ॥ ( १०७ )

इति श्लोकः कदापि वाल्मीकिप्रणीतो नैव सम्भवति । तेन हि रामायणे प्रक्षिप्तता बहुधा विद्यते एव ।

रामायणे हि वाल्मीकेराश्रमस्यास्तित्वमपि वर्ण्यते । अयोध्याकाण्डे षट्पञ्चाशत्सर्गे चित्रकूटे वाल्मीकेराश्रमस्यावस्थितिर्वर्णिताऽस्ति । बालकाण्डे तु तमसातटे, उत्तरकाण्डे च गङ्गाया अविदूरतस्तस्याश्रमस्योल्लेखः कृतः । प्रकरणात्तु प्रथमक्रमोऽपि प्रक्षिप्त इव दृश्यते, यतस्तत्रापि—

अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन् ।
तान् महर्षिः प्रमुदितः पूजयामास धर्मवित् ॥

इत्युक्त्वा लिट एव प्रयोगः कृतोऽस्ति । तेन हि वाल्मीकेः रामसमकालिकता प्रष्टव्या भवति । एतत्तु स्पष्टमेव यद्रामायणप्रणयनादपि बहुकालपूर्वमेव रामायणकथा प्रचलिताऽऽसीत् । सम्भवति यदा हि रामो राज्याधिरूढ आसीत्तदैव वाल्मीकिनामकेन भृगुवंशीयेन मुनिना रामस्योपाख्यानं श्लोकबद्धं कृतमासीत् । तस्यैवाधारेण पश्चाद्रामायणस्य प्रणयनं सञ्जातं यथा कथयति जयचन्द्रः । हरिवंशेऽपि एकचत्वारिंशाध्यायस्य १२२-१५५ श्लोकेषु रावणवधपर्यन्ता लवणासुरवधानुगा च कथा वर्णिता

स्ति न तूपकथा अपि। अत एव रामायणस्य मौलिकं रूपं तु रामसमकालिक-मेव। तस्य हि मिश्रितमपि रूपं विक्रमपूर्वैकादशशतकान्न कथमप्यर्वाचीनम्।

रामायणे हि दशरथस्य पुत्रेष्टिः, रामादिजन्म, सलक्ष्मणस्य रामस्य विश्वामित्रानुगमनं, सीतापरिणयः परशुरामदर्पभङ्गः, रामाभिषेकप्रयासः, रामस्य वनाय राज्ञ आदेशः ससीतस्य लक्ष्मणानुगस्य रामस्य वनगमनं, सीताया अपहरणं, रावणवधः, सीतया लक्ष्मणेन च सह रामस्य प्रत्यागमनं रामराज्याभिषेकः, रामराज्यवर्णनञ्चेति मुख्यरूपेण प्रतिपाद्यविषयाः।

रामायणस्य हि सम्प्रति चत्वारि संस्करणानि लभ्यन्ते। तेषु हि दाक्षिणात्ये ६४३ सर्गाः, औदीच्यपाठे ६६४ सर्गाः, गौडीयपाठे ५६६ सर्गाः पश्चिमोत्तर पाठे तु ५०० सर्गाः दृश्यन्ते।

ग्रन्थस्यास्य रामवर्मणस्तिलकाख्यटीका, अज्ञातकर्तृका कनकाख्या, नागेशभट्टस्य रामीया, माहेश्वरतीर्थस्य रामायणतत्त्वदीपिका, श्रीरामस्य अमृतकटकाख्या, गोविन्दराजस्य शृङ्गारभूषणाख्या, रामानन्दतीर्थस्य रामायणकूटाख्या, अहोबलस्य वाल्मीकिहृदयाख्या, अप्पयदीक्षितस्य रामायणतात्पर्यसंग्रहाख्या, त्र्यम्बकमखिनो धर्माकूतं, विश्वनाथस्य वाल्मीकितात्पर्यसरणिः, वरदराजस्य विवेकतिलकञ्चेति व्याख्याग्रन्था इति प्रसिद्धाः।

रामायणं हि सर्वेषामेव काव्यादिग्रन्थानामुपजीव्यो ग्रन्थः। कथामेतामेवा धृत्य सन्ति चतुःषष्टिमितानि रामायणानि प्रणीतानि। तेषु व्यासप्रणीतत्वेन प्रसिद्धमध्यात्मरामायणं सर्वाण्यतिशेते। कथानके तेषामिदमेवान्तरं यन्मर्यादापुरुषोत्तमत्वेन वाल्मीकिना चित्रितो रामः पश्चाद्वर्तिभिर्भगवद्रूपेण चित्र्यते। वाल्मीकीये हि मुख्यरामायणे रामस्य वीरोचितचरितमेव चित्रितमस्ति।

**द्वैपायनो व्यासः : महाभारतम्**

महाभारतं हि द्वितीयं भारतवर्षस्य राष्ट्रियमहाकाव्यम्। अस्य प्रणेता कृष्णद्वैपायनो व्यासः। इदं हि जयसंज्ञकस्येतिहासस्य भारतसंज्ञकस्याख्यानस्य च संग्रहत्वान्महाभारतमिति कथितम्। यथोक्तम्—

"महत्त्वाद्भारतत्वाच्च महाभारतमुच्यते" इति।

जये हि पाण्डवानां विजयवर्णनमस्ति। कथ्यते हि जयग्रन्थे ८८०० श्लोका आसन्। अयमेव ग्रन्थस्यास्य प्रथमः क्रमः। भारतं हि भरतवंश-सम्बद्धाख्यानग्रन्थः। भारतसहितस्य जयस्य श्लोकसङ्ख्या २४००० आसीत्।

यथोक्तम्—

चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् ।
उपाख्यानैर्विना तावद् भारतं प्रोच्यते बुधैः ।। इति ।

उपाख्यानसंयुक्तमिदं महाभारतमुच्यतेऽष्टादशपर्वात्मकम् । तेन ह्यस्य त्रीणि वाचनानि सञ्जातानि । प्रथम हि व्यासेन शुकवैशम्पायनादिभ्यः श्रावितमिदं जयसंज्ञकम् । ततश्च वैशम्पायनेन जनमेजयाय कथितं भारतसंज्ञकम् । तदस्य द्वितीयं वाचनम् । ततश्चेदं सौतिना शौनकादयः श्राविताः, इत्यस्य तृतीयं वाचनं महाभारतसंज्ञितम् । हरिवंशो हि महाभारतस्य खिलांशः । तेन हि तमप्यादाय महाभारते ९६२४४ श्लोकाः सम्मताः येषु मुख्यभागे ८४२४४ मिताः श्लोकाः, हरिवंशे १२००० मिताः ।

ग्रन्थोऽयं वैशम्पायनेन सौतिना च आख्यानोपाख्यानसंयोजनसम्बर्द्धनेन बृहत्कलेवरीकृतस्तथाप्यस्य व्यासकृतत्वं नैव विवादाय ।

महाभारतस्य प्रणयनं रामायणाद् बहुकालानन्तरं सञ्जातं दृश्यते । उभयोरपि ग्रन्थयोर्यो हि सांस्कृतिको भेदः स भूयासमेव कालमपेक्षते । न हि स्वल्पेन समयेन स शक्यसम्भवः । रामायणे हि यस्त्यागः स महाभारते ग्रहणपरायणतायां परिवर्तितः । शक्तोऽपि रामो राज्यं तृणवत्त्यक्त्वा पितुराज्ञया वनं गच्छति, यदाऽशक्तोऽपि दुर्योधनः पाण्डवानां दायमेवापहरति । रामायणे हि बहुपत्नीता अपरिहार्यकारणे एव मता महाभारते तु सामान्यरूपेणैव न केवलं सा अपितु बहुभर्तृताऽपि । एतादृशो विपर्यासो न कदाचिदपि स्वल्पकालसम्भवः । एतादृशः आमूलचूलव्यत्यासः परःसहस्राणि वर्षाण्यपेक्षते । तथापि ज्येष्ठभ्रात्रादरः, प्रजारञ्जनं, राष्ट्ररक्षा, परम्परानुपालनञ्चेतिप्रभृतिसंस्कारास्तु यथावत्प्रचलिता अपि दृश्यन्ते । यथा हि—

न राज्ञां यत्र पीडा स्यान्नाश्रमाणां विनाशनम् ।
स देशो दृश्यतां सौम्य नापराध्यामहे यथा ।। (७/१०२/४)

इति रामस्य कथनं, व्यासस्य महाभारते—

'कुमारो नास्ति येषाञ्च कन्यास्तत्राभिषेचय ।'

इति वचनेन यथावत्संवदते । महाभारतयुद्धे हि रामाद्धि एकत्रिंशत्पुरुषान्तरजो बृहद्बलोऽर्जुनतनयेनाभिमन्युना भारतयुद्धे क्षयमनीयत इति विष्णुपुराणवचनाज्ज्ञायते । बृहद्बलाच्चतुर्विंशतितमपुरुषरूपेण बुद्धस्य गोतमस्य जन्म । प्रतिपुरुषं न्यूनतममपि पञ्चाशद्वर्षसमयमानेन रामायणात्पञ्चदश-

शतवर्षानन्तरं महाभारतयुद्धकाल इति ज्ञायते। एतावत्तु निश्चितमेव यन्महाभारतयुद्धात्पञ्चाशद्वर्षाभ्यन्तरमेव महाभारतस्य रचना सञ्जाताऽऽसीद्यं हि पारिक्षिज्जनमेजयो वैशम्पायनाच्छृणोति स्म। तेन हि रामायणमहाभारतप्रणयनकाले षोडशशतवर्षान्तरितः कालो व्यतीतो भवेत्। तथैव बुद्धकालात्सार्द्धैकादशशतवर्षपूर्वमेवं महाभारतयुद्धं सम्पन्नमासीत्। तेन हि बुद्धकालादेकादशशतवर्षपूर्वं महाभारतप्रणयनम्। अपरश्च ६३६ वर्षेषु कलेर्व्यतीतेषु युधिष्ठिरजन्म। महाभारतयुद्धकाले स हि नवतिवर्षवयस्क आसीत्। १२६ मितवयसि स महाप्रस्थानमकरोदिति प्रायः कलेः ७६२+१८ =७८० वर्षेषु व्यतीतेषु महाभारतस्य प्रणयनं सञ्जातं यद्धि नृपविक्रमार्काद् २२६५ वर्षपूर्वमापतति। बृहद्बलान्वयः सुमित्रान्तः—

इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति।
यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ॥

इत्युक्तेः। शाक्यानां हि स्वतन्त्रता मागधेन अजातशत्रुणा विनाशितेति तु ज्ञातमेव। तेन सुमित्रो हि अजातशत्रुसमकालिकः। स हि बृहद्बलात्त्रिंशत्पुरुषानन्तर इति तस्यावस्थितिः कलेः २२००. वर्षेषु व्यतीतेषु। एवमेव जरासन्धाद्वर्षसहस्रमेकं मागधा बार्हद्रथाः, अष्टत्रिंशदुत्तरमब्दशतं प्रद्योताः ततश्च सपादशतद्वयवर्षानन्तरमजातशत्रुसम्भव इति तस्यापि कलेः ६३६+ १००+१०००+१३८+२२५=२०९९+५०=२१४९ वर्षेषु व्यतीतेषु स्थितिकालः। सुमित्रतः त्रिंशतवर्षपूर्वं गौतमबुद्धस्य स्थितिकालः स हि प्रद्योतस्य नन्दिवर्धनस्य समकालिक इति तस्य कलेः १९०० वर्षेषु व्यतीतेषु नृपविक्रमार्कात् ११४५ वर्षपूर्वमेव स्थितिकालः।

अतो हि गौतमबुद्धोदयात् ११२० वर्षपूर्वमेव महाभारतस्य प्रणयनं सम्पन्नमासीत्। महाभारतस्यान्तिमं सौतिकृतं वाचनमपि अधिसीमकृष्णसमये सञ्जातम्। स हि परीक्षितः पञ्चपुरुषानन्तर इति तस्य स्थितिकालः कलेः ६३६+१२६+६०+२००=१०२२ वर्षेषु व्यतीतेषु महाभारतस्य साम्प्रतिकं स्वरूपमवधारितमासीत्। अधिसीमकृष्णस्य पुत्रो निचक्नुर्गङ्गयाऽपहृते हस्तिनापुरे कौशाम्बीमध्यवसत्। निचक्नोरष्टादशपुरुषानन्तर उदयनो बुद्धसमकालिकस्याहीनरस्य पिता नृपविक्रमार्कात् १२०० वर्षपूर्वेस्थितिमान्। लोकमान्यतिलकस्तु ग्रन्थास्यास्य निर्णायकं प्रणयनं विक्रमपूर्वं ४०० वर्षाण्यभितः सम्पन्नं मन्यते। द्विजेन्द्रनाथस्तु तद् विक्रमपूर्वं ६०० वर्षाण्यभितः सञ्जातं निर्दिशति। अत्रापि नैतद्विस्मर्तव्यं यन्महाभारतकथानकमपि ग्रन्थप्रणयनकालात्पर्वमपि प्रचलितमासीदेव। तेनैव 'जयो नामेतिहासोऽयम्' इति कथितम्।

एतावत्तु निश्चितप्रायमेव यन्निखिलं हि महाभारतं नैव हि एककालकृतिः। तिसृः दशाः समनुभूयैवानेन साम्प्रतिकं स्वरूपं प्राप्तमिति तु पूर्वमुक्तमेव। तत्र जयस्य प्रणयनकालः साम्प्रतिकमहाभारतप्रणयानन्नैकशताब्दीभ्यः पूर्वमेवासीत्। जयो हि न्यूननममपि कलिगत ८०० वर्षपूर्वमेव प्रणीत आसीत्। अस्य च विस्तरो युधिष्ठिरस्य महाभारतयुद्धानन्तरराज्याभिषेकपर्यन्त एवासीत्। तेनाऽसौ वीररसप्रधाना कृतिः। अस्य द्वितीयं स्वरूपं भारताख्यमासीद्यस्य बिस्तरस्तु तावत्पर्यन्त एवासीत्किन्तु तत्राख्यानोपाख्यानादिसंयोजनेन तस्य कलेवरं विस्तृततरमासीत्। ततश्च भारते यदा शान्त्यादिस्वर्गारोहणपर्यन्तानि पर्वाणि उत्तरकाण्डरूपेण योजितानि तदाऽस्य साम्प्रतिकं स्वरूपं सम्पन्नम्। अस्यापि प्रणयनकालः कथमपि विक्रमपूर्वषष्ठशतकान्नार्वाचीनः कामं तत्रापि केचित् प्रक्षेपाः ततोप्यर्वाचीना सम्भवेयुः। अत्र काश्चिद् युक्तयोऽपि दृश्यन्ते तथामनने।

(१) पाणिनिर्हि भगवान् महाभारतं सम्यगेव जानाति। तस्य हि 'महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु' (६।२।३८) इति सूत्रे स्पष्टमेव भारते परे यदृच्छब्दः प्रकृत्या भवतीति प्रतिपादितमस्ति।

(२) विक्रमपूर्वपञ्चमशतकीये आश्वलायनगृह्यसूत्रे भारतस्य महाभारतस्य चोल्लेख एकत्रैव दृश्यते। (३।४।४४)।

(३) बौधायनधर्मसूत्रे महाभारतस्य चर्चा दृश्यते। अस्य प्रणयनकालो विक्रमपूर्वचतुर्थशतकमित इत्याचार्याः।

सन्त्यन्यान्यपि प्रमाणानि यानि हि खलु महाभारतस्य साम्प्रतिकस्वरूपस्य विक्रमपूर्वषष्ठशतकमभितोऽस्तित्वं सूचयन्ति।

महाभारते समुपवर्णिता भौगोलिकस्थितिः स्वयमेव तस्या अजातशत्रुपूर्ववर्तित्वं साधयति।

सम्प्रति समुपलभ्ये महाभारते आदि-सभा-वन-विराट-उद्योग-भीष्म-द्रोण-कर्ण-शल्य-सौप्तिक-स्त्री-शान्ति-अनुशासन-आश्वमेधिक-आश्रमवासिक-मौसल-महाप्रस्थानिकेतिसंज्ञितानि अष्टादशपर्वाणि सन्ति। अत्र हि मूलतः पाण्डवानां जन्मत आरभ्य मोक्षपर्यन्ता कथा वर्णिताऽस्ति। तत्र तत्र प्रसङ्गवशादाख्यानानि च संयोजितानि दृश्यन्ते।

ग्रन्थोऽयं बहुभिर्बहुधा व्याख्यातोऽस्ति। अस्य व्याख्यातृषु नारायण-नीलकण्ठानन्तमहार्जुनमिश्ररामानुजविमलबोधशङ्कराचार्यश्रीनिवासप्रभृतयो

द्वाविंशतिः प्रसिद्धाः। नारायणस्य भारतार्थप्रकाशः, अर्जुनमिश्रस्य भारतार्थदीपिका, नीलकण्ठस्य भारतभावदीपिका, काश्चनास्य प्रसिद्धाष्टीकाः। अस्य हि श्रीमद्भगवद्गीता, अनुस्मृतिः, गजेन्द्रमोक्षः, भीष्मस्तवराजः विष्णुसहस्रनाम चेति पञ्च सन्दर्भा पञ्चरत्नत्वेन गृहीताः। अस्य च पाठसम्प्रदायः औदीच्यो दाक्षिणात्य इति द्विविधः। श्लोकसंख्यायामध्यायक्रमे आख्यानसन्निवेशने च द्वयोर्भूयान्मतभेदः।

ग्रन्थस्यास्य प्रधानो रसः शान्तो वीरश्चाङ्गम्। असौ हि भौतिकजीवनस्य तुच्छतां निदर्शनमुखेन प्रतिपाद्य मोक्षं प्रति सर्वेषां मनोऽनुकूलयतीति सिध्यत्येवास्य शान्तप्राधान्यम्। असौ हि भारतीयसंस्कृतेर्विश्वकोशः। अत्र हि चत्वार एव पुरुषार्थाः साङ्गोपाङ्गं साधिता अन्ते च मोक्षस्य सर्वोपरित्वमपि साधितम्। सर्वेषामपि वर्णानामाश्रमाणाञ्च समानरूपेण ग्राह्योऽसौ ग्रन्थो धर्मस्य नित्यत्वं कामार्थयोरनित्यत्वञ्च प्रतिपादयति। तेनैवासौ पञ्चमो वेदः कथितः। अस्य हि अशीतितमो भाग उपदेशपरकः शेषभाग एव कथावस्तुपरक इति असौ आचारशास्त्ररूपेणापि गृह्यते। शान्तिपर्वणि प्राधान्येन राजधर्मः प्रतिपादितोऽस्ति। तदनुसारेण राज्यं हि नराणां जीवनस्थितयेऽपरिहार्या संस्था। यदि राज्यं न स्यात्तदा मात्स्यो न्यायः प्रवर्तेत। मनुष्यो हि स्वभावतो दुष्टप्रवृत्तिकः। तन्नियमनाय दण्ड एवैक उपायः। अराजकजन्यातङ्कपरिहारायैव जनैः सम्भूय—

'यं पूजयेत सम्भूय यश्च नः प्रतिपालयेत्।

इति संविदं कृत्वा राज्यं सङ्घटितमित्यस्य राज्योत्पत्तिमतम्।

यथा हि रामायणं कतिपयेषामुत्तरवर्तिग्रन्थानामुपजीव्यमासीत्तथैव महाभारतमपि। अस्मिन् हि विशेषतः शकुन्तलोपाख्यानं, मत्स्योपाख्यानं सावित्र्युपाख्यानं, रामोपाख्यानं, नलोपाख्यानञ्च तथात्वेन प्रसिद्धानि। शकुन्तलोपाख्यानमाधृत्य कालिदासेन अभिज्ञानशाकुन्तलं नाम नाटकं प्रणीतम्। नलोपाख्यानमादाय श्रीहर्षेण नैषधीयचरितमहाकाव्यं विरचितम्। ततोऽपि पूर्वं भासेन महाभारतकथामादाय नाटकचक्रमेव निर्मितम्।

रामायणमहाभारतयोः कतिपयेषु पक्षेषु सादृश्यमपि दृश्यते कतिपयेषु तु वैपरीत्यमपि। उभयोरेव वनवासकथा प्रभावोत्पादिका। रामायणे हि रामः पितुराज्ञया चतुर्दशवर्षाणि वने यापयति, तथैव महाभारतेऽपि द्यूतपराजिताः पाण्डवाः। रामायणे हि सीतामधिकृत्य विवादः प्रवर्तते, महाभारते द्रौपदीमधिकृत्य। रामायणे वर्णितं भ्रातृप्रेम महाभारतेऽपि स्वस्वपक्षे

समुपवर्णितं दृश्यते । वने रामं सीता लक्ष्मणश्चानुव्रजतस्तथैव महाभारते युधिष्ठिरं भीमादयो द्रौपदी च, दुर्योधनं दुशासनादयः । रामराज्यस्थिति-र्युधिष्ठिरराज्यस्थितिश्चोभयत्रादर्शरूपेण चित्रिताऽस्ति । उभयस्मिन्नेव राक्षसानामवस्थितिर्वर्णिता । यथा हि रामादीनां यज्ञादुत्पत्तिस्तथैव द्रौपद्या अपि । राष्ट्रियराज्यस्थितेर्वर्णनमुभयत्र समानमेव । किन्तु नैतावतेदमवधेयं यन्नास्ति तयोः किञ्चिदप्यसादृश्यमिति । रामायणस्य कथा सुसम्बद्धा यदा महाभारतस्था साऽसम्बद्धा संग्रहमात्ररूपा । प्रथमस्मिन्नेक एव नायकोऽ-परस्मिन् बहवो नायकाः । आद्ये हि संस्कृतिगतैकता, द्वितीये तु तत्रानेकता । आद्ये हि धर्मस्य प्राधान्यं, द्वितीये तु कर्मण एव । आद्ये हि चरिते आदर्शो द्वितीये ह्रासः । प्रथमस्मिन्नादर्शबाहुल्यमपरस्मिंस्तु व्यवहारप्राधान्यमिति ।

## (ख) महाकाव्यानि

महाकाव्यं हि संस्कृत-साहित्य-जगतः सर्वोत्कृष्टरत्नम् । अनेन हि अष्टाधिकसर्गेषु विभक्तेन भाव्यम् । अत्र हि एको नायकः सुरो वा क्षत्रियः, बहवो वा सद्वंशक्षत्रिया भूपा नायकाः । नायकेन हि धीरोदात्तप्रकृतिकेन भाव्यम्, शृङ्गारवीरशान्तानामेकोऽङ्गी रसः, अन्ये रसा अंगान्येव, सर्वेऽपि नाटकसन्धयः, वृत्तं त्वैतिहासिकं वा तदितरदपि सज्जनाश्रयं, चतुर्णामेव वर्गाणां साधनं फलं तु तेष्वेकं, आशीर्नमस्क्रिया वस्तुनिर्देशो वा प्रारम्भवाक्यं, सतां गुणसंकीर्तनं खलानां निन्दा च, प्रतिसर्गं हि भाविसर्गकथासंसूचक-मवसानं, यथायोगं सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासरप्रातर्मध्याह्नमृगया-शैलर्तु वनसागरसम्भोगविप्रलम्भमुनिस्वर्गपुराध्वररणप्रयाणोपयममन्त्रपुत्रोद-यादयः साङ्गोपांगं वर्णनीयाः । अस्य नाम वृत्तस्य कवेर्नायकस्य वा नाम्ना नाम, सर्गनाम तु सर्गोपादेयकथयैव । एतादृशलक्षणलक्षितं हि महाकाव्यं सौभाग्याय भवति ।

संस्कृतसाहित्यजगति महाकाव्यस्य विकाशः कदाप्रभृत्यभूदिति तु न पार्यते निश्चयेन वक्तुम् । एतावदेव निश्चितं यद् वाल्मीकिर्हि लौकिक-संस्कृतसाहित्यस्यादिकविरादिकाव्यञ्च तस्य रामायणम् । अत्र हि सप्त काण्डानि प्रतिकाण्डञ्च सर्गाः । अत्र हि नायको धीरोदात्तगुणान्वितः सद्वंशक्षत्रियो रामः । अत्र हि वीरो मुख्यो रसः श्रृंगारादयश्चान्येऽङ्गानि फलश्चास्य धर्मः । वस्तुनिर्देश एवास्य प्रारम्भवाक्यं यथा—

"कोशलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ।।"

आदिमहाकाव्यमिदं--

"धर्म्यं यशस्यमायुष्य राज्ञाञ्च विजयावहम् ।
आदिकाव्यमिदं चार्षं पुरा वाल्मीकिना कृतम् ॥" इति ।

धर्मो यथा--सामं दानं क्षमा धर्मः सत्यं धृतिपराक्रमौ ।
पार्थिवानां गुणा राजन् दण्डश्चाप्यपकारिषु ॥ (२।१७।२९)

राजहा ब्रह्महा गोघ्नश्चोरः प्राणिवधे रतः ।
नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥ (तत्रैव ३६)

अर्थो यथा--भूमिर्हिरण्यं रूपञ्च विग्रहे कारणानि च । ( ,, ३१ )

कामो यथा--ततः पर्वतशृंगाणि वनानि विविधानि च ।
पश्यन् सह मया कामी दण्डवान् विचरिष्यसि ॥(३।१७।२८)

ऋतुवर्णनं यथा हेमन्तस्य--

वसतस्तस्य त सुखं राघवस्य महात्मनः ।
शरद्व्ययाये हेमन्त ऋतुरिष्टः प्रवर्तत ॥
अयं स कालः सम्प्राप्तः प्रियो यस्ते प्रियंवद ।
अलङ्कृत इवाभाति येन संवत्सरः शुभः ॥
नीहारपरुषो लोकः पृथिवी सस्यमालिनी ।
जलान्यनुपयोग्यानि सुभगो हव्यवाहनः ॥
सेवमाने दिशं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥
प्रकृत्या हिम॰ोशाढ्यो दूरसूर्यश्च साम्प्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥
रविसङ्क्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥
अवश्यायतमोनद्धा नीहारतमसावृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥

( अरण्यकाण्डे षोडशसर्गे )

यद्यपि महाभारतेऽपि काव्यात्मकत्वं विलसत्येव तथापि न तथा तत्र काव्यलक्षणं घटते यथा रामायणे । तत्र हि बहवो नायकाः, वस्तुनिर्देश एव प्रारम्भवाक्यं वीरो हि मुख्यो रसो जये शान्तो महाभारते । फलञ्चास्य धर्म एव । अत्र हि पूर्वभागे युधिष्ठिराभिषेकान्ता कथा वीररसप्रधाना,

उत्तरभागं समावेश्य तु शान्तरसस्य प्राधान्यम्। रामायणेऽपि पूर्वकाण्ड-पर्यन्ता कथा वीररसप्रधाना उत्तरकाण्डं समावेश्य तु करुणरसस्य प्राधान्यम्।

अस्मज्ज्ञातेषु महाकाव्येषु महाभारतानन्तरं जाम्बवतीविजयं समुदेति। इदं सत्यमेवोच्यते यत्संस्कृतकाव्यस्योदयस्तु प्रशान्तपावने तपोवनेऽजायत किन्तु तस्य विकासो हि राज्ञां प्रासादेष्वेव समभवदुपरतञ्च तद्राजप्रासादानां विनाशेन सहैव। कथ्यते हि पाणिनेरुदयाय प्रद्योतस्य नन्दिवर्द्धनस्य. वररुचेरुदये प्रद्योतस्यैव नन्दिनः, पतञ्जलेरुदयाय शुङ्गस्य पुष्यमित्रस्य, भासस्योदये राजसिंहस्य, कालिदासस्योत्कर्षाय विक्रमस्य, अश्वघोषोदये कनिष्कस्य भारवेरुत्कर्षाय पुलकेशिद्वितीयस्य विष्णुवर्द्धनस्य, भट्टेरुत्कर्षाय श्रीधर-नरेन्द्रस्य, बाणस्योदये हर्षवर्द्धनस्य, माघस्योदयाय भोजाख्यस्य कस्यचिद् गुर्जरेश्वरस्य, रत्नाकरस्यावस्थानेऽवन्तिवर्मणः काश्मीरकस्य, श्रीहर्षस्योदये जयचन्द्रस्य कान्यकुब्जेश्वरस्य, विल्हणस्योदये चालुक्यस्य विक्रमादित्यस्य, जगन्नाथोदयाय शाहजहानस्य भूमिकां नैव विस्मर्तुं शक्यते। वस्तुतस्तु कवयो हि द्विविधोद्देश्यपूर्तये राज्ञ आश्रयन्ते स्म। प्रथमं तु तेषां राजाश्रयेणाजीविकासमस्या समाहिता भवति स्म। अपरञ्च, तत्र तेषां ग्रन्थ-परीक्षका अपि सुलभा भवन्ति स्म। यथा स्मरति राजशेखरः "श्रूयते हि पाटलिपुत्रे शास्त्रकारपरीक्षा" इति।

राजप्रासादाश्रिता अपि कवयो न केवलं राजप्रशस्तीरेव जानन्ति स्मापितु तृणकुटीरेऽपि तेषां दृष्टिः शश्वदेव जागरिता भवति स्म। तत्र हि एकतः—

'प्रासादवातायनसंश्रितानां नेत्रोत्सवं पुष्पपुराङ्गनानाम्।'

इत्युच्यते तथैवापरतः—

'आरण्यकोपात्तफलप्रसूतिस्तम्बेन नीवार इवावशिष्टः।'

इत्यपि संस्मर्यते। ते हि आदर्शमुपस्थापयितुं वाञ्छन्ति स्म। तेन हि नृपांस्तु तत्साधनत्वेनैव ते वर्णयन्ति स्म। यदि तादृश आदर्शोऽन्यत्रापि सम्भवति चेत्तानपि ते गृह्णन्ति स्म एव। यथा मेघदूते हि सामान्यपक्षो नायकरूपेण वर्णितोऽस्ति। तथैव मृच्छकटिकं हि दरिद्रविप्रस्य चारुदत्तस्य जीवनवृत्तस्यैकदेश एव। तेन हि संस्कृतकाव्यमुच्चवर्गस्यैव जीवनदर्पण इति यदुच्यते तदसारमेव। यथा च—

लघुनि तृणकुटीरे क्षेत्रकोणे यवानां नवकलमपलालप्रस्तरे सोपधाने।
परिहरति सुषुप्तं हालिकाद्वन्द्वमारात्कुचकलशमहोष्माबद्धरेखस्तुषारः॥

प्रहरकमपनीय स्वं निदिद्रासतोच्चैः प्रतिपदमुपहूतः केनचिज्जागृहीति ।
मुहुरविशदवर्णां निद्रया शून्यशून्यां दददपि गिरमन्तर्बुध्यते नो मनुष्यः ।।

वासः खण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकं
रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलालोच्चयः ।
दम्पत्योरिति जल्पितं निशि यदा चौरः प्रविष्टस्तदा
लब्धं कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः ।।

इत्यादि । सत्यमेव विस्मायकमेतद्यत्प्रासादप्रसादिताः कवयः, प्रासादादपि तपोवनमेव नगरादपि ग्राममेव बहुधा स्वकाव्यविषयीकुर्वन्ति स्म ।

इदमप्यपरं संस्कृतकाव्यस्य वैशिष्ट्यं यत्तत्र पाण्डित्यप्रदर्शनापेक्षया रसबन्धस्यैवाध्यवसायो बहुधा प्रवर्तितो दृश्यते । यद्यपि कालिदासापरवर्तिनो हि कवयो ज्ञानगरिमाणमपि स्वकाव्यविषयत्वेन ग्रथ्नन्ति स्म, तथापि तत्रापि रसापेक्षा तु नैव कथमपि क्षीणा वोपेक्षिता दृश्यते । नैषधीयचरिते ज्ञानगरिमा सर्वातिशायित्वेनान्तर्लीनो दृश्यते तथापि तत्र रसपेशलता सर्वत्र विलसत्येव । न केवलं काव्यसामान्य एवापितु शास्त्रकाव्येष्वपि येषां हि प्रधानमुद्देश्यं व्याकरणशिक्षणमेव भवति रसपेशलतापेक्षितैव दृश्यते ।

सामान्यतः श्रृङ्गारवीरकरुणशान्तेष्वन्यतम एव रसः काव्यस्याङ्गित्वेन स्वीकृतोऽन्ये तु अङ्गरूपमात्रमेव । तत्रापि महाकाव्ये प्रायो वीरो वा शान्त एव सम्मतः ।

अथात्र कतिपये संस्कृतकाव्यकारास्तेषां काव्यानि च परिचयाय विवर्ण्यन्ते संक्षेपतः ।

**१. पाणिनिः : जाम्बवतीजयम्**

पाणिनिर्हि महामुनिर्न केवलं व्याकरणसंहितामेव प्रणिनायापितु स जाम्बवतीजयाख्यं महाकाव्यमपि विरचितवानासीत् । स हि भगवान् कुत्रत्यः किङ्कालिको वेति नाद्यापि पार्यते निश्चेतुम् । जनाः कथयन्ति यत्स हि पेशावरनिकटस्थितः शालातुरग्रामो हि पाणिनेर्जन्मस्थानं, तस्य च स्थितिकालो बुद्धसमकालिको वा तस्मादपि प्राग्वर्तीति । अधिकांशविचक्षणा विश्वसन्ति यत्पाणिनिर्हि प्रद्योतवंशस्य मागधस्य राज्ञो नन्दिवर्धनस्य मित्रमासीत् । स हि महाभारतयुद्धकालात् ११३० वर्षानन्तरं मगधस्य सम्राडासीत् प्रद्योतात् पञ्चमः पुरुषः । तेन हि कलेः १८५६ वर्षेषु व्यतीतेषु तस्य स्थितिकालो यो हि नृपविक्रमार्कात् ११८९ वर्षपूर्वं राजतरङ्गिणीकारसम्मतमानानुसारेणापतति, श्रीमद्भागवतानुसारेण तु १९१५ वर्षपूर्वम् । पाणिनिर्हि दाक्षीपुत्र

शालातुरीयादिनामभिरपि ज्ञायते परवर्तिभिर्विचक्षणैः। यथोक्तं त्रिकाण्डशेषे—

पाणिनिस्त्वाहिको दाक्षीपुत्रः शालङ्किपाणिनौ।
शालीतुरीयः.... ॥ (२।७।२४)

एतावत्तु निश्चितमेव यत्पाणिनिर्हि भारतस्योत्तरे भागे यत्र कुत्राऽप्यासीत्। अधिकं त्वेतदेव सम्भवति यत्स साम्प्रतिकपञ्चनदप्रदेशे जन्म लब्ध्वा स्वीयं जीवनं पाटलिपुत्रे यापयामासेति। स हि पाटलिपुत्रवास्तव्यस्य वर्षाचार्यस्य शिष्य आसीत्। तेन शङ्करप्रसादाद् व्याकरणं लब्ध्वा प्रकाशितमिति भट्टसोमेश्वरप्रणीतकथासरित्सागरतो ज्ञायते। राजशेखरश्च स्मरति काव्यमीमांसायाम्—

"अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः।
वररुचिपतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः॥"

इति। आधुनिकलेखकास्तु कतिपये पौरस्त्या वा पाश्चात्याः पाणिनेः स्थितिकालं विक्रमपूर्वसप्तमशतकादारभ्य चतुर्थशतकपर्यन्तं मन्यन्ते।

यद्यपि कतिपये विचक्षणाः पाणिनेः काव्यप्रणेतृत्वे ससन्देहास्तथापि भूयांसो हि बुधास्तद्विश्वसन्ति। राजशेखरः कथयति—

'नमः पाणिनये तस्मै येन रुद्रप्रसादतः।
आदौ व्याकरणं प्रोक्तमनु जाम्बवतीजयम्॥'

तस्य हि काव्यं पातालविजयनाम्नाऽपि प्रसिद्धम्। काव्यमिदं सम्प्रति स्वरूपेण तु नैवोपलभ्यते किन्तु यत्र कुत्र समुद्धृतास्तत्रत्या इति कथिता अंशा एव लभ्यन्ते। दिङ्मात्रं यथा—

"उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तथा पुरोऽपि रागाद्गलितं न लक्षितम्॥"
"गतेऽर्धरात्रे परिमन्दमन्दं गर्जन्ति यत्प्रावृषि कालमेघाः।
अपश्यती वत्समिवेन्दुबिम्बं तच्छर्वरि गौरिव हुङ्करोति॥"
"विलोक्य सङ्गमे रागं पश्चिमायां विवस्वतः।
कृतं कृष्णं मुखं प्राच्या न हि नार्यो विनेर्ष्यया॥"
"निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः।
धारानिपातैः सह किन्नु वान्तश्चन्द्रोऽयमित्यार्ततरं ररास॥"
"ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्।
विनोदयन्ती सकलङ्कमिन्दुं तापं खेरभ्यधिकञ्चकार॥"

२. व्याडिः : बलचरितम्

मेधाव्यपरनामकेन व्याडिना बलचरितं नाम महाकाव्यं प्रणीतमासीदिति समुद्रगुप्तस्य कृष्णचरिते मुनिकविवर्णनप्रसङ्गे—

"रसाचार्यः कविर्व्याडिः शब्दब्रह्मैकवाङ्मुनिः।
दाक्षीपुत्रवचोव्याख्यापटुर्मीमांसकाग्रणीः ॥

बलचरितं कृत्वा यो जिगाय भारतं व्यासञ्च।
महाकाव्यविनिर्माणे तन्मार्गस्य प्रदीपमिव ॥"

इति कथनाज्ज्ञायते। व्याडिर्हि मेधावी नन्दस्य मागधस्य समये पाटलिपुत्रे वर्षाचार्यस्य शिष्य आसीदिति कथासरित्सागरतो ज्ञायते। राजशेखरोऽपि पाटलिपुत्रे व्याडेरवस्थितिं समर्थयति कथनेनानेन—

अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः।
वररुचिपतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः ॥

इति मागधो हि नन्दो विष्णुपुराणगणनानुसारेण कलेः २२४५ वर्षेषु व्यतीतेषु स्थितिमानित्यनुमितः। तदनुसारेण हि तस्यापि स्थितिकालो विक्रमपूर्वं ८०० वर्षाण्यभित सम्भवति। राजतरङ्गिणीकारानुसारेण त्वेवम्। श्रीमद्भागवतानुसारेण तु स समयः कलेः १५०० वर्षेषु व्यतीतेषु समापतति यश्च नृपविक्रमार्कात् १५४५ वर्षपूर्वं सम्भवति।

व्याडेर्महाकाव्यमपि स्वरूपेण तु नैवोपलभ्यते सम्प्रति किन्तु अज्ञातकर्तृकायाममरकोषटीकायां 'कमपि भूभुवनाङ्गणकोणम्।' इति 'व्याडिभाषासमावेशः' इति स्मृतं लभ्यते। नैतदधिकं विषयेऽस्मिन्नस्माकं ज्ञातमस्ति।

व्याडिर्हि मेधावी अलङ्कारशास्त्रमपि प्रणीतवानासीदिति काव्यालङ्कारकृतो भामहस्य 'इति मेधाविनोदिताः' इति स्मरणाज्ज्ञायते। अग्निपुराणेऽपि मेधाविरुद्रो हि काव्याचार्यत्वेन स्मृतो स्तः।

३. वररुचिः : स्वर्गारोहणम्

वररुचिर्हि कात्यायनो मेधाजित्कात्यपुनर्वसुनामभिरपि ज्ञातः। स हि कथासरित्सागरानुसारेण मागधस्य योगनन्दस्य मन्त्री आसीत्। योगनन्दश्च कलेः २२४५ वर्षेषु व्यतीतेषु अभिषिक्त आसीदिति विष्णुपुराणकृतगणनातो ज्ञायते। तेन हि स नृपविक्रमार्कात् ८०० वर्षपूर्वं स्थितिमानित्यनुमीयते।

वररुचेर्हि पाणिनीयव्याकरणोपरि वार्तिकानि तु प्रसिद्धान्येव। पाणिनिना हि भगवता सूत्रात्मिका व्याकरणसंहिता प्रणीता। तस्या हि व्याडिना विन्ध्यस्थ-नन्दिनीसुत-मेधाविप्रभृत्यपरनामकेन वृत्तिः प्रणीता। तदाधृत्य

वररुचिना तस्या उपरि वार्तिकानि प्रणीतानि । तदतिरिक्तमनेन स्वर्गारोहणाख्यं काव्यमपि प्राणायीति समुद्रगुप्तस्य कृष्णचरिते मुनिकविवर्णनप्रसङ्गे–

"यः स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि ।
काव्येन रुचिरेणैव ख्यातो वररुचिः कविः ॥
न केवलं व्याकरणं पुपोष दाक्षीसुतस्येरितवार्तिकैर्यः ।
काव्येऽपि भूयोऽनुचकार तं वै कात्यायनोऽसौ कविकर्मदक्षः ॥"

इति कथनाज्ज्ञायते । जह्लणकृतसूक्तिमुक्तावल्यां तु—

यथार्थता कथं नाम्नि मा भूद्वररुचेरिह ।
व्यधत्त कण्ठाभरणं यः सदा ( स्वर्गा ) रोहणप्रियः ॥

इति राजशेखरसम्बन्धेनोक्तमस्ति । न केवलमेतावन्मात्रमपितु पातञ्जले महाभाष्येऽपि ( ४।३।१०१ ) 'वाररुचं काव्यम्' इत्युक्तमस्ति । अस्य ह्यनेके श्लोकाः शार्ङ्गधरपद्धतौ, सदुक्तिकर्णामृते, सुभाषितरत्नावल्याञ्च समुद्धृता दृश्यन्ते किन्तु ग्रन्थस्तु स्वरूपेण नैव सम्प्रति लभ्यते ।

४. पतञ्जलिः : महानन्दमयम्

महाभाष्यकारेण भगवता पतञ्जलिनाऽपि महानन्दमयं नाम महाकाव्यं प्रणीतमासीदिति समुद्रगुप्तस्य कृष्णचरिते मुनिकविवर्णनप्रसङ्गे—

"महाकाव्यमयं काव्यं योगदर्शनमद्भुतम् ।
योगव्याख्यानभूतं तद्रचितं चित्तदोषापहम् ॥"

इति स्मरणाज्ज्ञायते । पतञ्जलिर्हि गोनर्दीयः पुष्यमित्रस्य शुङ्गस्य मागधस्य समकालिक आसीदिति तस्य 'इह पुष्यमित्रं याजयामः' इति महाभाष्ये वचनाज्ज्ञायते । पुष्यमित्रो हि कले २५१३ वर्षेषु यातेषु साम्राज्यमलभतेति तस्य विक्रमपूर्वं ५३२ वर्षाण्यभितः स्थितिः सिध्यति । एतत्तु राजतरङ्गिणीकाराशयेन । श्रीमद्भागवतानुसारेण तु कालोऽयं विक्रमपूर्वं १२५८ वर्षाण्यभितः आपतति ।

पतञ्जलेर्महाकाव्यं तु सम्प्रति स्वरूपेण नैवोपलभ्यते किन्तु यत्र तत्र स्मृतं दृश्यते । सदुक्तिकर्णामृते पातञ्जलश्लोकरूपेण—

"यद्यपि स्वच्छभावेन दर्शयत्यम्बुधिर्मणीन् ।
तथापि जानुदध्ने (ध्नो)यमिति चेतसि मा कृथाः ।"

इति पद्यमुद्धृतमस्ति । कथ्यते हि महाभाष्येऽप्यस्य कतिपये श्लोका वा तच्चरणा उद्धृताः सन्ति ।

ततश्चोदेति कविकुलगुरुः कालिदासः ।

## ५. कालिदासः

(क) प्रारम्भिककथनम्, तस्य देशः स्थितिकालश्च—

संस्कृतसाहित्ये कालिदासस्य स्थानं सर्वातिशायित्वेन विलसति। कालिदासप्रणीतत्वेन त्रयः श्रव्यकाव्यग्रन्थाः रघुवंशं कुमारसम्भवञ्चेति द्वे महाकाव्ये मेघदूतं खण्डकाव्यम्, त्रयो दृश्यकाव्यग्रन्थाः अभिज्ञानशाकुन्तलं नाटकम्, विक्रमोर्वशीयं नाटकं मालविकाग्निमित्रं नाटकञ्चेति प्रसिद्धाः सन्ति । एतदतिरिक्तं ऋतुसंहारं नाम श्रव्यकाव्यग्रन्थः श्यामलाष्टकप्रभृति-स्फुटरचनाश्च कालिदासविरचिता इत्यपि विश्वस्यते । केचित्तु कालिदास-त्रयीमप्यनुमान्ति । तदनु सूक्तिमुक्तावल्यां राजशेखरप्रणीतत्वेनोद्धृतं निम्ना-ङ्कितं पद्यमेवाधारः ।

"एकोऽपि जीयते हन्त कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ॥"

केचित्त्वत्रत्य 'कालिदासत्रयी' पदस्य काव्यत्रये निरूढमर्थं गृह्णन्ति भक्त्या न तु कवीनां त्रयीति । अपरे तु मुख्यमेवार्थं समाधृत्य राजशेखरसमये एव कालिदासाभिधास्त्रयः कवयः प्रसिद्धा आसन्निति मन्यन्ते । ग्रन्थानां कालि-दासप्रणीतत्वेन प्रसिद्धानामाभ्यन्तरपरीक्षणेन तु श्लोकेनानेन कवीनां त्रय्येव सङ्केतिता सम्भवति इति दृश्यते । श्रव्यकाव्येष्वपि रघुवंशकुमारसम्भव-मेघदूत-ऋतुसंहाराणां परस्परं रचनावैशिष्ट्यं नैकप्रणीतत्वं समर्थयति । विषयोऽयमत्र सङ्क्षेपेण विचार्यते । मेघदूते हि—

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तरस्यां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैर्यत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥ (१।२७)

इति सर्वातिशायित्वेन स्मृता उज्जयिनी रघुवंश-कुमारसम्भवयो-र्नाम्नाऽपि न स्मर्यते । कुमारसम्भवस्य कर्ता हिमालयस्य केदारकूर्माचल-खण्डयोरेव रमते । रघुवंशस्य प्रणेता तु चतुर्थषष्ठसर्गयोर्भारतवर्षमेव भ्रमति । ऋतुसंहारस्य कर्ता पर्वतीयमेव ऋतुपरिवर्तनं विवृणोति । विषय-प्रतिपादनदृष्ट्याऽपि तेषां सर्वेषामेवैककर्तृकत्वं नैव सिध्यति । तेषु तेषु हि भौगोलिकवर्णनमपि मिथो न संवदते । एवमेव स्थितिकालदृष्ट्याऽपि तत्र

सामञ्जस्यं नैव सिध्यति। मालविकाग्निमित्रस्य प्रणेता अग्निमित्रं हि पुष्यमित्रस्य पुत्रं विदिशे नायकत्वेन गृह्णाति। विक्रमोर्वशीये तु कश्चिदपर एव विक्रमाख्यो नायकः। रघुवंशस्य कर्ता मगधं हि सर्वोत्कृष्टराज्यत्वेन स्मरति यतो हि स रघोर्दिग्विजयप्रसङ्गे मगधं नाम्नाऽपि न स्मरति किन्तु षष्ठसर्गे स्वयंवरप्रसङ्गे परन्तपाख्यस्य मगधराजस्य तत्रोपस्थितिं कथयति। यथा हि तत्रोक्तम्—

"कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम्।
नक्षत्रताराग्रहसङ्कुलाऽपि ज्योतिष्मती चन्द्रमसैव रात्रिः॥"

इति। ऋतुसंहारस्य कर्ता हि विन्ध्योपकण्ठं साधु वर्णयति यदा कुमारसम्भवस्य प्रणेता तु गन्धमादनं साधु जानाति। तथैव रघुवंशे हि मालव साम्राज्यसमसामयिकी भौगोलिकस्थितिः वर्णिताऽस्ति। मेघदूतस्य कर्ता तु उज्जयिनीं विशेषेण स्तौति। सम्प्रति कालिदासकृतित्वेन ख्यातेषु त्रिषु रूपकेषु तावत्स्वेव श्रव्यकाव्येषु ऋतुसंहारोत्तरेषु च विषयादिदृष्ट्या अभिज्ञानशाकुन्तलकुमारसम्भवयोः, विक्रमोर्वशीयरघुवंशयोः, मालविकाग्निमित्रऋतुसंहारयोश्च साम्यं समर्थयन्ति पण्डिताः, किन्तु समुद्रगुप्तप्रणीतकृष्णचरितं तु दृश्यकाव्यानां कालिदासाभिधकाव्यकारकर्तृत्वं श्रव्यकाव्यानां तु हरिषेणस्य कालिदासविशेषणस्य कृतित्वं समर्थयति। यथोक्तं तत्र—

पुरन्दरबलो विप्रः शूद्रकः शास्त्रशस्त्रजित्।
धनुर्वेदं चौरशास्त्रं रूपके द्वे तथाऽकरोत्॥
तत्कथां कृतवन्तौ तौ कवी रामिलसौमिलौ।
तस्यैव सदसि स्थित्वा तौ मानं बहु चाप्तताम्॥
सतां मतः सोऽश्वमेधं कृतवानुरुविक्रमः।
वत्सरं स्वं शकान् जित्वा प्रावर्तयत वैक्रमम्॥
तस्याऽभवन्नरपतेः कविसप्तवर्णः
श्रीकालिदास इति योऽप्रतिमप्रभावः।
दुष्यन्तभूपतिकथां प्रणयप्रतिष्ठां
रम्याभिनेयभरितां सरसाञ्चकार॥
शाकुन्तलेन स कविर्नाटकेनाप्तवान् यशः।
वस्तुरम्यं दर्शयन्ति त्रीण्यन्यानि लघूनि च॥
भूयः स मृच्छकटिकं नवाङ्कं नाटकं व्यधात्।
व्यधात्तस्मिन् स्वचरितं विद्यानयबलोर्जितम्॥

अत्रान्येषु त्रिषु विक्रमोर्वशीयं मालविकाग्निमित्रमिति द्वे तु ज्ञाते तृतीयं सम्प्रति नैवोपलभ्यत इति युधिष्ठिरमीमांसकमतम्। एवमेव—

काव्येन सोऽद्य रघुकार इति प्रसिद्धो
यः कालिदास इति..........महार्हनामा।
प्रामाण्यमाप्तवचनस्य च तस्य धर्म्ये
ब्रह्मत्वमध्वरविधौ मम सर्वदैव॥
चत्वार्यन्यानि काव्यानि व्यदधाच्च लघूनि यः।
प्राभावयच्च मां कर्तुं कृष्णस्य चरितं शुभम्॥
हरिषेणकविर्वाग्मी शास्त्रशस्त्रविचक्षणः।
यशोऽलभत काव्यैः स्वैर्नानाचरितशोभनैः॥ इत्यादि।

उपर्युक्तोद्धरणेन तु रूपकाणां कालिदासकर्तृकत्वं श्रव्यकाव्यानां तु हरिषेणप्रणीतत्वं सिध्यति।

समुद्रगुप्तस्य हि हरिषेणः सभापण्डित आसीदिति तु तस्य प्रयागशिला स्तम्भाभिलेखतोऽपि ज्ञायते। यथोक्तं तत्र—

३१—पुनाति भुवनत्रयं पशुपतेर्जटान्तर्गुहानिरोधपरिमोक्षशीघ्रमिव पाण्डुगाङ्गं पयः। ९। एतच्च काव्यमेषामेव भट्टारकपादानां दासस्य समीपपरिसर्पणानुग्रहोन्मीलितमतेः।

३२—खाद्यटपाकिकस्य महादण्डनायकध्रुवभूतिपुत्रस्य सन्धिविग्रहिककुमारामात्यमहादण्डनायकहरिषेणस्य सर्वभूतहितसुखायास्तु।

३३—अनुष्ठितश्च परमभट्टारकपादानुध्यातेन महादण्डनायकतिलभट्टकेन। इति।

हरिषेणो हि चन्द्रगुप्तस्य मन्त्रिणः शिखरस्वामिनः पौत्रः कुमारगुप्तस्य मन्त्रिणः पृथिवीषेणस्य पुत्र आसीदित्यपि कुमारगुप्तस्य कर्मदण्डशिलास्तम्भाभिलेखस्य षष्ठसप्तमपङ्क्तितो ज्ञायते।

एतावत्तु निश्चयेन कथयितुं शक्यते यदभिज्ञानशाकुन्तलादिरूपकाणां प्रणेता कविः परमशैवः किन्तु रघुवंशप्रणेता तु मङ्गलाचरणे पार्वती शङ्करौ स्तुवन्नपि विष्णोः प्राधान्यसमर्थको भागवतः। राजकविवर्णनप्रसंगे समुद्रगुप्तस्यकृष्णचरिते कविवर्णनक्रमेऽपि कालिदासोऽश्वघोषात्पूर्वमेवोपस्थापितोऽस्ति। अश्वघोषस्य कनिष्कसभासत्त्वं चतुर्थसौगतमहासंसदि भागग्रहणञ्च तत्रैवोक्तम्। यथोक्तं तत्र—

सौगतानां महासंसत् तुरीयाऽभून्महोज्ज्वला।
तस्यां सभ्यो बभूवायं विश्वविद्वच्छिरोमणिः॥ इति।

' इत्थं हि कालिदासस्य चत्वारि स्वरूपाणि चिन्त्यन्ते अभिज्ञानशाकुन्तल-कुमारसम्भवयोः प्रणेतैकः, विक्रमोर्वशीयरघुवंशयोः रचयिताऽपरः, मालविकाग्निमित्रऋतुसंहारयोः कर्ता तृतीयः, मेघदूतस्य प्रणेता चतुर्थ इति। आद्यो हि केदारखण्डीयः, द्वितीयस्तु मागधस्तृतीयो वैन्ध्यश्चतुर्थस्त्वावन्तिकः। एकतो हि यदा कुमारसम्भवकृतं हिमालयस्य यथार्थवर्णनं कवेः पर्वतीयत्वं पुष्णाति, अपरतस्तु तदेव ऋतुसंहारोपवर्णितं ग्रीष्मवर्णनं स्पष्टमेव विन्ध्य-वासित्वं कवेः सूचयति। तेनैव युधिष्ठिरमीमांसकः साधुर्यदा स कथयति यत्कालिदासप्रणीतत्वेन प्रसिद्धानां सर्वेषामेव ग्रन्थानामेककविप्रणीतत्व-समर्थनेनैव कालिदासस्य स्थितिकालनिर्धारणसमस्याऽसमाहिताऽस्तीति।

अथाऽत्र त्रिपथगामिनः समालोचका दृश्यन्ते। तत्र केचन कालिदासं विक्रमपूर्वकालिकं मन्यन्ते। अपरे तु तं विक्रमसमकालिकम्। अन्ये हि तं विक्रमानन्तर-विक्रमानन्तर चतुर्थशतकभवमपि मन्यन्ते। अथापरे तु तं विक्रमानन्तर-पञ्चमशतकभवमपि। सर्वेऽपि स्वाभिमतपक्षसम्पुष्टये नैकांस्तर्कानुपस्था-पयन्ति।

ये हि खलु कालिदासं विक्रमपूर्ववर्तिनं मन्यन्ते ते हि मालविकाग्निमित्रं नाटकमाश्रयन्ति। तदनुसारेण कालिदासो हि अग्निमित्रसमकालिको यतो हि स कथयति—

"आशास्यनीतिविगमप्रभृति प्रजानां
सम्पत्स्यते न खलु गोप्तरि माग्निमित्रे।" इति।

एष हि महापराक्रमं पुष्यमित्रं विहाय तत्कृतवैरमत एव पुष्यपुरं विहाय विदिशायां स्थितं तत्पुत्रमग्निमित्रं नाटके नायकीकरोतीति परं प्रमाणं तस्य तत्समकालिकत्वस्य। अग्निमित्रो हि तदा पित्रा कृतवैरो विदिशापालक आसीदिति।

"सोऽहमिदानीमंशुमता सगरपुत्रेणेव प्रत्याहृताश्वो यक्ष्ये। तदिदानी-मकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्य-मिति।"

कथनेन ज्ञायते। तत्र हि सम्राट् पुष्यमित्रस्तत्कालप्रचलितेन सेनापति-शब्देन प्रतिज्ञातोऽपि दृश्यते। यथोक्तं—

"स्वस्ति। यज्ञशरणात् सेनापतिः पुष्यमित्रो वैदिशस्थं पुत्रमायुष्यन्त-मग्निमित्रं स्नेहात्परिष्वज्येदमनुदर्शयति......इति।"

"अहिघोरे क्खु पुत्त ओ सेनावदिणा णिउत्तो" इत्यपि।

पुष्यमित्रो हि प्रथमं मौर्यस्य देवभूतेः सेनापतिरासीत्। स हि तं हत्वा स्वयमेव राज्यं बुभुजे। तेन हि स तदा सेनापतिशब्देनैव ज्ञातो व्यवहृतश्चासीत्। स हि नीचगिरौ शिलावेश्ममात्राणि जानाति। तथैव स विदिशां दशार्णानां राजधानीत्वेन स्मरति, यद्धि शुङ्गकाले एवाऽऽसीत्। स हि शुङ्गवंशीयं त्रैपुरुषिकं जानाति। यदि नाम कालिदासः शुङ्गशासनानन्तरकालिकः स्यात्तदा स तथाविधमनतिप्रसिद्धं युवराजमग्निमित्रं नैव नायकीकुर्यात्। किन्तु पक्षस्यास्य सिद्धावपि सन्त्यनेका विप्रतिपत्तयः। कालिदासो हि रघुवंशे षष्ठसर्गे इन्दुमतीस्वयंवरप्रसङ्गे राजवर्णनक्रमे प्रथमं मगधेश्वरमेव गृह्णाति वर्णयति च तदुत्कर्षं यथा स मागध एव स्यात्, किन्तु तत्सम्मतः परन्तपो नाम मागधो राजा न कुत्रापि पुराणेष्वपि श्रूयते। रघुवंशे एव चतुर्थसर्गे मगधं वा पुष्पपुरं पुनर्नामतोऽपि न स्मरति। स हि मालविकाग्निमित्रे विदर्भान् हि दशार्णानामधीनस्थराज्यत्वेन वर्णयति यत्र हि यज्ञसेनमाधवसेनयोर्द्वैराज्यं स्थापितमस्ति। रघुवंशे तु 'सौराष्ट्रस्थानपरो विदर्भान्' इति पृथगेव स्वतन्त्रराज्यरूपेण स विदर्भान् स्मरति। अपरञ्च, अग्निमित्रसमये साकेतप्रदेशो मगधानामन्तर्वर्तिप्रदेश आसीत्। रघुवंशे तु स साम्राज्यकेन्द्रत्वेन वर्णितोऽस्ति। तेन हि रघुवंशस्य प्रणेता कालिदासोऽग्निमित्रसमकालिक इति नैव सर्वतोभावेन सङ्गच्छते।

अपरे तु कालिदासं हि विक्रमादित्यसमकालिकं मन्यन्ते। यद्यपि कोऽसौ विक्रमादित्य इति नाद्युनाऽपि निर्णीतं तथापि कालिदासो हि विक्रमादित्यस्य सभापण्डित आसीदिति तु सर्वे एवामनन्ति।

अन्ये तु कालिदासं हि समुद्रगुप्तसभासदमपि मन्यन्ते विक्रमानन्तरचतुर्थशतकभवम्।

इतरे तु तं विक्रमानन्तरषष्ठशतकभवस्य यशोवर्मणः सभापण्डितमपि मन्यन्ते।

केचित्तु तं रघुवंशोपवर्णिताग्निवर्णसमकालिकमपि कथयन्ति। समुपलब्धेषु सप्तस्वेव कृतिषु कालिदासः सप्तविधेनैव रूपेणात्मानं प्रदर्शयतीति दुष्कर एव तस्य देशस्थितिकालनिर्णयः। अतो विक्रमपूर्वद्वादशशतकमारभ्य विक्रमानन्तरषष्ठशतकपर्यंतं समालोचकास्तत्स्थितिकालपूर्वापरसीमां मन्यन्ते।

तेषु हि ये खलु कालिदासं विक्रमानन्तरषष्ठशतकभवं मन्यन्ते फर्ग्युसनमहाशयोऽग्रणीः। स हि रघुवंशे (४।६८) हूणपराजयवर्णनमवलोक्य

तद्विक्रमानन्तरैकोत्तरषट्शतवर्षघटितोज्जयिनीनरेशयशोधर्मकृतहूणपराजयेन संयोज्य कालिदासं तस्यैव राज्ञः सभापण्डितं मन्यते। इतिहासे हि घटनैषा कारूरसङ्ग्रामनाम्ना ख्याता। फर्ग्यूसनानुसारेण अनेनैव राज्ञा हि हूणान् पराजित्य विक्रमादित्योपाधिधारणं कृतमासीत् प्रवर्तितश्च तेन विक्रमशको यस्य प्राचीनत्वसिद्धये षट्शतवर्षाणि तत्र योजितानीति। किन्तु मतमिदं नैव निर्दोषं यतो हि तत्पूर्वमेव शकोऽयं मालवनाम्ना प्रचलित आसीदिति—

१९. 'मालवानां गणस्थित्या याते शतचतुष्टये।
त्रिनवत्यधिकेऽब्दानाम्रितौ सेव्यघनस्तने॥
सहस्यमासशुक्लस्य प्रशस्तेऽह्नि त्रयोदशे।
मङ्गलाचारविधिना प्रासादोऽयं निवेशितः॥'

इति बन्धुवर्मणो मन्दसोरशिलाभिलेखतस्तथैव

२१.................................

पञ्चसु शतेषु शरदां यातेष्वेकोनवतिसहितेषु।
मालवगणस्थितिवशात्कालज्ञानाय लिखितेषु॥.......

इति। यशोधर्मण एव मन्दसोरशिलाभिलेखतोऽपि ज्ञायते। तेन हि न च यशोधर्मा विक्रमादित्यो नैव च विक्रमशकस्तेन प्रवर्तितो न हि च कालिदासस्तस्य सभापण्डितः।

तेषु हि ये कालिदासं विक्रमानन्तरचतुर्थशतकभवं मन्यन्ते तेषु हि केचन पाश्चात्यसमालोचका उल्लेखनीयाः। तदनुसारेण हि कालिदासग्रन्थेषु समुपस्थापितः समाजो गुप्तकालिकः प्रतिभाति। स हि 'कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम्' (रघु० ६।२२) इति कथनेन मगधेश्वरं प्रथमत उपस्थापनेन (रघु० ६।२०) समुद्रगुप्तस्यैश्वर्यं वर्णयति तथैव "कुमारकल्पं सुषुवे कुमारम्" (रघु० ५।३६) कथनेन कुमारगुप्तस्य जन्माऽपि सङ्केतयति। किन्तु कथनमिदं नैव तर्केण सह संवदते। गुप्तकालिको हि कालिदासः षट्शतवर्षपूर्वभवमनतिख्यातयशसमग्निमित्रं नायकीकरोतीति तर्कः कुतर्क एव। अपरञ्च रघुवंशे (६।५९-६५, ४।४९, ५०) समुपवर्णितस्य पाण्ड्यराज्यस्य यस्योरगाख्यं पुरं राजधानी आसीत् गुप्तकाले नामाऽपि न श्रूयते स्वतन्त्रराज्यरूपेण। तदस्तित्वं तु शुङ्गकाल एवासीत्।

सङ्क्षेपतः कालिदासविषये वासुदेवमहोदयेन कतिपयानि तथ्यानि सङ्कलितानि तेषां विचारणया एतदेव सिध्यति यत्कालिदासः शुङ्गकालीन एव विशेषतोऽग्निमित्रसभासद् वैदिशः।

शुङ्गकालीनत्वेन सम्मतासु 'भीट' मुद्रासु मृगमनुधावमानः कश्चिन्नृपः श्चित्रितो दृश्यते। अनेन सिध्यति यदभिज्ञानशाकुन्तलस्य शुङ्गकाले एव रचना सम्मताऽऽसीत्। तादृशी घटनाऽभिज्ञानशाकुन्तले एव वर्णिताऽस्ति नान्यत्र।

कालिदासस्य नैसर्गिकी शैली तमाचार्ययुगस्य प्रतिनिधित्वेनोपस्थापयति न तु पण्डितयुगीनत्वेन। तस्य हि रचनायां नैव कुत्रापि पाण्डित्यप्रदर्शन-प्रयासः, न हि तत्र शब्दानामाडम्बरः, न चित्रता, नालङ्कारप्राचुर्यं, न हि वर्णनस्यातिमात्रविस्तरः न च दुरूहत्वं कुत्रापि। उक्तमेव—

अस्पृष्टदोषा नलिनीव दृष्टा हारावलीव ग्रथिता गुणौघैः।
प्रियाङ्कपालीव विमर्दहृद्या न कालिदासादपरस्य वाणी॥

स हि शिष्टभाषितभाषाया एव प्रयोगं कृतवान्। तस्य पदेषु प्रकृति-र्नृत्यति सानुरागम्। शैलीयं पाणिनिवररुचिपतञ्जलिशैल्या सह साधु संवदते। यथा हि जाम्बवतीविजये पाणिनेः—

'असौ गिरेः शीतलकन्दरस्थः पारावतो मन्मथचाटुदक्षः।
घर्मालसाङ्गीं मधुराणि कूजन् संवीजते पक्षपुटेन कान्ताम्॥'

यथा च कालिदासस्य—

मधुर्द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः॥

अनेन कालिदासस्य पण्डितयुगात्प्रागेव सम्भवः संसूच्यते। कालिदासस्य अमरसिंहवराहमिहिरादिसमकालिकत्वं यदुच्यते तदपि सत्याद् दूरमेवा-पैति। यतो हि कालिदास पेलवशब्दं कोमलेऽर्थे प्रयुनक्ति यथा कुमार-सम्भवे (५।४)—

'पदं सहेत भ्रमरस्य पेलव शिरीषपुष्पं न पुनः पतत्रिणः।' इति।

अमरसिंहस्तु 'पेलवं विरलं तनु' (३।१।६६) इति पठति।

एवमेव कालिदासो हि परमेष्ठिपदेन विष्णुं जानाति।

(रघु० १०।३३, ११।८६)

अमरसिंहस्तु तत्पितामहपर्यायवाचकं मन्यते (१।१।१६)।

कालिदासो हि छन्दोमात्रैकगोचरानपि शब्दान् यत्र कुत्र प्रयुनक्ति यथा वेदेषु—

'आ नो भद्राः क्रतवो यन्तु विश्वतः।'

कालिदासोऽपि—

तं पातयां प्रथममास पपात पश्चात्। ( रघु ९।६१ )
संयोजयां विधिवदास समेतबन्धुः। ( रघु १६।८६)

अनन्तरकालिकेषु कविषु नेदृशी प्रवृत्तिर्दृश्यते। तेन हि कालिदासेनावश्यमेव वैदिकलौकिकसंस्कृतसन्धिकालभवेन भाव्यम्। कालश्चायं विक्रमपूर्वचतुर्थशतकादारभ्य विक्रमोदयं यावदभ्युपगतः। कालिदासो हि परशुरामं केवलं मुनिरूपेणैव जानाति। स हि अधिकांशतः साकेतनिमित्तमयोध्याशब्दमेव प्रयुनक्ति वाल्मीकिवत्। यथा—

पुरमविशदयोध्यां (११।९३)। आलोकयिष्यन् मुदितामयोध्यां (१४।१९), गृहवर्जमयोध्यया (१५।९८) सैन्यैरयोध्याभिमुखः प्रतस्थे (१६।२५), अयोध्यादेवताश्चैनं (१७।३६)। साकेतशब्दस्य प्रयोगस्तु स्वल्प एव। यथा रघुवंशे-जनस्य साकेतनिवासिनस्तौ (५।३१), साकेतोपवनमुदारमध्युवास (१३।७९) इति। अनेनापि कालिदासस्य आचार्ययुगीनत्वं सिध्यति। पतञ्जलिरपि साकेतस्यैव बहुधा प्रयोगं करोति। 'अरुणद्यवनः साकेतम्' इत्यादौ। यद्यपि अभिज्ञानशाकुन्तलस्य कासुचित्प्रतिषु प्रस्तावनायां 'रसभावविशेषदीक्षागुरोर्विक्रमादित्यस्य अभिरूपभूयिष्ठा परिषद्' इत्युक्तं दृश्यते तथैव नैतावदेव पर्याप्तं प्रमाणं कालिदासस्य विक्रमादित्यसभापण्डितत्वस्य। प्रथमं तु विक्रमादित्यशब्दो वस्तुतः संज्ञा उत उपपदमित्यप्यद्यावधि नैव निर्णीतम्। अत्रत्यं हि "रसभावविशेषदीक्षागुरोः" इति विशेषणमपि साभिप्रायमेव दृश्यते। किं शकारिर्हि विक्रमादित्याख्यो नृपः कालिदासस्य रसभावविशेषदीक्षागुरुः सम्भवति? यदि तथा तर्हि का तस्य वैशिष्ट्यसमर्थनपरा कृतिः? सम्भवतो नैव। तेन हि पदमिदमुपपदमेव कस्यचित्तादृशयोग्यतासम्पन्नस्य राज्ञः। तर्हि कोऽसौ नृप इत्यपेक्षायामुच्यते सम्भवतः स हि मृच्छकटिकस्य कर्तृत्वेन सम्मतः शूद्रक एव। तथ्यमेवेदं समुद्रगुप्तप्रणीते कृष्णचरिते समुद्घाटितमस्ति। यदि शूद्रकः कालिदाससमकालिको वा तदाश्रयस्तदा स यदा भाससौमिल्लकविपुत्रादीन् स्मरति तदा शूद्रकं कथमुपेक्षत इत्यपेक्षायामुच्यते तत्र द्विविधा हि स्थितिः सम्भवति। प्रथमं तु यदा हि मालविकाग्निमित्रं प्रणीयमानमासीत्तदा मृच्छकटिकं नैव प्रणीतं सम्भवति। द्वितीयं तु रसभावविशेषदीक्षागुरोरिति कथनेन तस्य सम्मानं प्रकटितमपि सम्भवति। यतो हि मृच्छकटिकं हि शूद्रकस्य चरमा कृतिरिति तत्प्रस्तावनातः समुद्रगुप्तस्य कृष्णचरितादपि ज्ञायते। तेन स्थितमेतद्यत्कालिदासो हि अग्निमित्रशूद्रकयोरन्यतरस्य सभापण्डित आसी-

दिति। मालविकाग्निमित्रव्याख्याता काटयवेमो हि 'अत्र प्रजानामाशास्य-सिद्धि प्रति गोप्तुरग्निमित्रस्य कथनं तत्कालराजोपलक्षणमिति मन्तव्यम्' इति सूचयति। तथैव समुद्रगुप्तस्य कृष्णचरिते राजकविवर्णनप्रसङ्गे शूद्रकस्य वर्णने—

वत्सरं स्वं शकाञ्जित्वा प्रावर्तयत वैक्रमम्।
भूयः स मृच्छकटिकं नवाङ्कं नाटकं व्यधात्॥
तस्याभवन्नरपतेः कविराप्तवर्णः
श्रीकालिदास इति योऽप्रतिमप्रभावः।
दुष्यन्तभूपतिकथां प्रणयप्रतिष्ठां
रम्याभिनेयभरितां सरसाञ्चकार॥

इति। अग्निमित्रकाले एव सिन्धोर्दक्षिणरोधसि यवनानां प्राबल्यमासीदिति मालविकाग्निमित्रतो ज्ञायते। सम्भवति पुष्पपुरं प्रत्यागतेऽग्निमित्रे शूद्रको हि विशालां शशासेति। शूद्रकोऽपि ब्राह्मण एव। तेनाग्निमित्रशूद्रकयोर्यौनसम्बन्धोऽपि सम्भवति। शूद्रकस्य पुत्रो देवमित्रो यथाऽग्निमित्रस्य वसुमित्रः। शूद्रकस्य अग्निमित्रतश्चोऽनन्तरकालिकत्वमैतिहासिकदृष्टचाऽपि सम्भवति। सम्भवति अग्निमित्रे पुष्पपुरं प्रति प्रस्थिते कालिदासः शूद्रकं समाश्रितवान्। यतो हि तस्य मालविकाग्निमित्रं प्रथमा कृतिरिति तस्यैव प्रस्तावनायाः 'पुराणमित्येव न साधु सर्वम्' इति वचनात्सिध्यति। विक्रमोर्वशीयं हि त्रोटकमवान्तरचना। अभिज्ञानशाकुन्तलञ्च नाटकेषु चरमम्। शुङ्गाः सर्वेऽपि माहेश्वरा यथा कालिदासः। शूद्रकोऽपि परमशैवः ज्ञात्वा शर्वप्रसादाद्' इति तत्रोक्तेः। एवमेव तस्य श्रव्यकाव्येऽपि ऋतुसंहारं प्रथमा कृतिः, कुमारसम्भवं मेघदूतं रघुवंशञ्च ततः क्रमेण प्रणितानि। शूद्रको हि जीवनकाले एव पुत्रं देवमित्रं राज्येऽभिषिच्य वनं प्रविष्ट आसीत्तपसे। शुङ्गा हि ११९ वर्षाणि भुवं बुभुजुर्यत्र पुष्यमित्र एक एव षष्टिवर्षाणि महीं शशास। ततश्चाग्निमित्रः केवलं सप्तवर्षाण्येव [कालिदासस्य हि अग्निवर्णाग्निमित्रावुभावेव विलासिनावल्पायुषौ च] ततश्च वसुमित्रो दशवर्षाणि। वसुमित्रानन्तरं शुङ्गा हि क्षीणबला बभूवुर्यतो हि विशालेशः शूद्रकोऽश्वमेधेनेष्टुं प्राभवत् प्रावर्तयच्च शकान् जित्वा विक्रमशकं कलिगत २०४५ वर्षेषु।

एतावदपि विश्वस्यते यत्क्षुद्रकगणवञ्चनया सिकन्दरपराजितो मालवगणस्तत्प्रदेशमुज्झित्वा स्थायिवसतिविचयाय यत्र तत्र प्रस्थितः। स हि उज्जयिनीं प्राप्य स्वां स्थितिं प्रबलां चक्रुः। तदा तेषां हि नेता शूद्रक आसीत्। तत्रापि

मालवगणः शकैराक्रान्तस्तांश्च विद्रावणाय स समर्थोऽभूत्। तदेवावसरमादाय मालवशकः प्रारब्धो यो पश्चाद्विक्रमनाम्ना प्रसिद्धो देशेषु। तद्विजयद्योतनाय शूद्रकेण विक्रमादित्योपाधिर्धारिता। शूद्रक एव कालिदासस्य रसभावविशेषदीक्षागुरुर्भवितुमर्हति नान्यः कश्चिदपि नृपः। तस्य हि धनुर्वेदं चौरशास्त्रं द्व रूपके, मृच्छकटिकञ्च प्रसिद्धा ग्रन्थाः। कालिदासस्मृतौ हि सौमिल्लकः शूद्रकस्यैव सभापण्डित आसीद्येन रामिलकेन सह सम्भूय शूद्रकस्य चरितं विरचितम्।

## (ख) कालिदासस्य कृतयः

कालिदासकृतित्वेन सम्प्रति मालविकाग्निमित्रं विक्रमोर्वशीयमभिज्ञानशाकुन्तलञ्चेति त्रीणि रूपकाणि ऋतुसंहारं, कुमारसम्भवं, मेघदूतं, रघुवंशञ्चेति चत्वारि श्रव्यकाव्यानि यत्र प्रथमं खण्डकाव्यं, द्वितीयचतुर्थे महाकाव्ये तृतीयं तु गीतिकाव्यमिति प्रसिद्धानि। अत्रैतेषां संक्षेपेण परिचयो दीयते।

### (१) मालविकाग्निमित्रम्

मालविकाग्निमित्रं हि नाटकं पञ्चस्वङ्केषु विभक्तम्। अत्र हि धीरललितप्रकृतिकोऽग्निमित्रो नायकस्तत्प्रकृतिका च मालविका नायिका। नायको हि शुङ्गवंश्यो नृपो नायिका च विदर्भराजकन्या। वृत्तमैतिहासिकस्वरूपम्। अग्निमित्रेण सह प्रतिश्रुतसम्बन्धो हि वैदर्भराजपितृव्यपुत्रो हि माधवसेनः सोदरया मालविकया सह विदिशां प्रस्थितो वैदर्भस्य यज्ञसेनस्यान्तपालेनावस्कन्द्य गृहीतः। ग्रहणविप्लवे विनष्टा मालविका अग्निमित्रान्तपालेन वीरसेनेन शिल्पाधिकारे योग्येति मत्वा महादेव्या धारिण्या उपायनं प्रेषिता। ताञ्च दृष्ट्वा नायकस्तदुत्सुकमना भवति। विदूषकस्य प्रोद्योगेन तयोरन्ते परिणयः सम्पद्यते। गृहीतस्य वैदर्भस्य राज्यमपि यज्ञसेनमाधवसेनयोर्द्वैराज्यरूपेण व्यवस्थाप्यते। सामान्यमिदं वस्तु कालिदासलेखनीं प्राप्य तथा ग्रथिता भवति येन नाटकमिदमनन्तरवर्तिनां श्रीहर्षादीनामपि उपजीव्यं भवति। अत्र हि सर्वत्र वैदर्भी रीतिः प्रसादश्च गुणः। गणदासहरदत्तयोर्विवादप्रसङ्गो नाटकं रञ्जयति विशेषेण। स्त्रीप्रधानमिदं नाटकं नाटिकाप्रकृतिकम्।

### (२) वक्रमोर्वशीयम्

विक्रमोर्वशीयं हि पञ्चस्वङ्केषु विभक्तं त्रोटकम्। अत्र हि पुरुरवस ऊर्वश्याश्च प्राधान्येन प्रेमव्यापारो वर्णितः। केशिदैत्येन पीड्यमानोर्वशी पुरुरवसा विक्रम्य रक्ष्यते। परस्परावलोकनेन तौ हि स्नेहार्द्रचित्तौ भवतः।

नायके नितान्तमनुरक्तोर्वशी नाटकाभिनयानन्तरे पुरुषोत्तमेति वक्तव्ये पुरूरवा इत्युचरति। तेन 'भुवं गच्छ' इति भरतेन शप्ता पुरूरवसा सह परिणीता भवति। अथ च प्रणयकुपितोर्वशी निषिद्धस्त्रीप्रवेशां कार्तिकेयवनीं प्रविष्टा लतायां परिणता भवति। पुरूरवा अपि तां कथञ्चित्तत्र पूर्वभावं प्रत्यावर्तयति। पश्चाच्च यावज्जीवमेव पुरन्दरेण तयोः संयोगेऽनुमते त्रोटकं समाप्नोति।

### (३) अभिज्ञानशाकुन्तलम्

शकुन्तलादुष्यन्तप्रणयकथासम्बद्धमिदं नाटकं कालिदासस्यं प्रौढा कृतिः। रूपकमिदं सप्तस्वङ्केषु विस्तृतम्। मृगयाव्यसनी दुष्यन्तो हि मृगमनुधावन्महर्षेः कण्वस्य तपोवनं प्रविशति। तत्र स शकुन्तलां दृष्ट्वा तदाकृष्टचेता भवति तथैव शकुन्तलापि। तौ हि गान्धर्वेण विधिना परिणीतौ भवतः। दुष्यन्तश्च शकुन्तलां समाश्वास्य शीघ्रमेव तन्नयनं प्रतिज्ञाय नगरीं प्रत्यागच्छति। तद्विरहदुःखिता शकुन्तला दुर्वाससं नैव शृणोति शप्ता च भवति यं विचिन्त्य सा तमुपेक्षितवती सोऽपि तां विस्मरत्विति। सखीभ्यामनुनीतः सः पश्चादभिज्ञानदर्शनेन स्मरिष्यतीति शापप्रतीकारमपि स्वीकरोति। तीर्थयात्रातः प्रत्यागतः कण्वः पुत्रीं तथाभूतां सगर्भाञ्च विज्ञाय तां पतिगृहं प्रेषयति मार्गे शचीतीर्थे स्नानसमये अभिज्ञाननिमित्तकांगुलिमुद्रा जले पतति। शापप्रभावात्प्राप्तां प्रियां दुष्यन्तो नैव परिचिनोति। तथोपेक्षिताञ्च तां तज्जननी मेनका मारीचस्य महेर्षेराश्रमं नयति! तत्रैव सा भरतं सूते। धीवरादङ्गुलीयकलाभेन लब्धस्मृतिर्नायकः प्रियानिमित्तं भृशमनुतपति। युद्धे पुरन्दरसाहाय्यं कृत्वा प्रतिनिवर्तमानो राजा मारीचाश्रमे सपुत्रां प्रेयसीं पश्यति। ततश्च मारीचेनाशिषा संवर्धितौ दम्पती सुखमनुभवत। इत्यस्य कथासारः।

नाटकमिदं सर्वोत्कृष्टकृतित्वने सम्मतम्। उच्यते हि काव्येषु नाटकं रम्यं तत्रापि अभिज्ञानशाकुन्तलं रम्यतमम्। शाकुन्तलेऽपि चतुर्थोऽङ्कस्तत्राऽपि श्लोकचतुष्टयं तु विशिष्टतमं मतम्। तच्च प्रसिद्धमेव।

### (४) ऋतुसंहारम्

काव्यमिदं षट्सर्गात्मकम्! अत्र हि ग्रीष्मादारभ्य वसन्तपर्यन्तं षड्तवः साङ्गोपाङ्गमुपवर्णिताः। अत्र १५३ मितानि नानावृत्तमयानि पद्यानि सन्ति एकैकस्मिन् सर्गे एकैक ऋतुरूपः वर्णितोऽस्ति। इदं हि कालिदासस्य प्रथमकृतित्वेन गृह्यते समालोचकैः। कथ्यते हि काव्येऽस्मिन् यत् प्रकृत्या सह

समवेदना तस्याः सूक्ष्मेक्षिका तस्या एव वैशद्येन वर्णनञ्च तन्न कुत्राप्यन्यत्र काव्ये दृश्यते। इदं हि प्रसादगुणस्य तु मूर्तिरेव। विनोदायात्र कानिचित्पद्यान्युद्ध्रियन्ते। तत्र ग्रीष्मवर्णनं यथा—

सितेषु हर्म्येषु निशासु योषितां सुखप्रसुप्तानि मुखानि चन्द्रमाः।
विलोक्य नूनं भृशमुत्सुकश्चिरं निशाक्षये याति ह्रियेव पाण्डुताम्॥ (१।९)

वर्षावर्णनं यथा—

निपातयन्त्यः परितस्तटद्रुमान्प्रवृद्धवेगैः सलिलैरनिर्मलैः।
स्त्रियः सुदुष्टा इव जातिविभ्रमाः प्रयान्ति नद्यस्त्वरितं पयोनिधिम्॥ (२।७)

पयोधरैर्भीमगभीरनिस्वनैस्तडिद्भिरुद्वेजितचेतसो भृशम्।
कृतापराधानपि योषितः प्रियान् परिष्वजन्ते शयने निरन्तरम्॥ (२।११)

शरद्वर्णनं यथा—

तारागणप्रवरभूषणमुद्वहन्ती मेघावरोधपरिमुक्तशशाङ्कवक्त्रा।
ज्योत्स्नादुकूलममलं रजनी दधाना वृद्धिं प्रयात्यनुदिनं प्रमदेव बाला॥ (३।७)

हेमन्तवर्णनं यथा—

बहुगणरमणीयो योषितां चित्तहारी
परिणतबहुशालिव्याकुलग्रामसीमा।
विनिपतिततुषारः क्रौञ्चनादोपगीतः
प्रदिशतु हिमयुक्तः काल एषः सुखं वः॥ (४।१९)

शिशिरवर्णनं यथा—

प्रचुरगुडविकारः स्वादुशालीक्षुरम्यः
प्रबलसुरतकेलिर्जातकन्दर्पदर्पः।
प्रियजनरहितानां चित्तसन्तापहेतुः
शिशिरसमय एष श्रेयसे वोऽस्तु नित्यम्॥ (५।१६)

वसन्तवर्णनं यथा—

कर्णेषु योग्यं नवकर्णिकारं
चलेषु नीलेष्वलकेष्वशोभम्।
पुष्पं च फुल्लं नवमल्लिकायाः
प्रयान्ति कान्तिं प्रमदाजनानाम्॥ (६।६)

(५) मेघदूतम्

गीतिकाव्यपरम्परायां श्रेष्ठत्वेन सम्मतमिदं खण्डकाव्यं पूर्वोत्तरभाग-विभक्तम्। अत्र हि अष्टादशाधिकशतं पद्यानि मल्लिनाथटीकायां दृश्यन्ते। स्वामिनो वर्षभोग्येन शापेन स्वदेशं विहाय रामगिरिमधिवसन् कश्चिद्यक्षः प्रावृण्मुखे प्रत्यासन्ने नभसि दयिताजीवितावलम्बनार्थी स्वकुशल-मयमुदान्तं प्रियायै प्रेषयितुमिच्छन् तन्निमित्तमुदगुच्चलितं बलाहकं प्रार्थयते निर्दिशति च मार्गं रामगिरित आरभ्यालकापर्यन्तम्। तदनुसारेण राम-गिरित आम्रकूटस्ततश्च नर्मदा ततो वेत्रवती ततश्च विदिशा ततश्च वामेन विशाला तदनु कुरुक्षेत्रं ततः कनखलं ततः कैलाशस्तदनु मानसं ततोऽलकेति गन्तव्यमार्गः। ततश्च अलकायां गृहपरिचयानन्तरं सन्देशकथन ग्रथितमस्ति। सन्देशश्च नितान्तमेव मार्मिकम्। यथा--

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन् न सहते सङ्गमं नौ कृतान्तः॥ (उत्तर० ४७)

समालोचका ह्यत्र वाल्मीकीयरामायणस्य वर्षावर्णनस्य हनुमतो दौत्यस्य च प्रभावं पश्यन्ति। काव्यस्याय वैदर्भी रीतिः कवेरपूर्ववर्णननिपुणता प्रस्फुटन्ती पदे पदे प्रतिभा च काव्यमिदं सर्वोत्कृष्टकोटौ स्थापयन्ति। एतच्च पश्चादनेकेषां दूतकाव्यानामुपजीव्यमप्यभूत्। यथा हि विक्रमस्य नेमिदूतं वादिचन्द्रस्य पवनदूतं, व्रजनाथस्य मनोदूत, अज्ञातकर्तृकमिन्दुदूतं, वेङ्कटना-थस्य हंससन्देशश्च दूतकाव्यपरम्परायामुल्लेख्या ग्रन्थाः।

६. कुमारसम्भवम्—

सप्तदशसर्गेषु निबद्धमिदं महाकाव्यं कालिदासस्य कोमलकल्पनाया अपूर्वमुदाहरणम्। केचिन्मन्यन्ते यत्काव्यस्य ह्यस्यान्त्यनवसर्गाः केनचित्का-लिदासोत्तरभवेन कविना प्रणीता इति। किन्तु तेषामपि कालिदासकृतित्वेन ग्रहणे न तथा काचिद्विप्रतिपत्तिर्भाषाभावादिदृष्टया। काव्यमिदं ऋतुसंहार-मिव वस्तुनिर्देशात्प्रारब्धमस्ति। काव्येषु कमनीयतममिदं महाकाव्यं जीवन-सम्बद्धाः सर्वा अपि कलाः स्वस्मिन् समायोजयति। उत्तरस्यां दिशि हिमालयो नाम नगाधिराजोऽस्ति। हिमालयाद्धि मेनकायां भगवती पार्वती जन्म गृह्णाति। बाल्यात्परे वयसि प्राप्ता सा पिनाकपाणिं पतिमाप्तुं तपोनिरतं तं सेवते। एतस्मिन्नेवान्तरे तारकासुरपीडिता देवास्तत्प्रतीकाराय परमेष्ठिनं

शरणं गच्छन्ति । सोऽपि तान् तद्विनाशाय शम्भुवीर्यज एवालं तेन तदर्थं प्रयतन्तामिति निर्दिशति । ततश्च पाकशासनो मधुसहायं कामं शिवसमाधिभङ्गाय चोदयति । कामश्च तथा कुर्वन् तृतीयनेत्रोत्थवह्निना भस्मावशेषः क्रियते । ततश्च तता निराशा पार्वती स्वाभिलाषापूर्तये तपश्चरति । प्रसन्नश्च शम्भुस्तस्याः अभिलषितं स्वीकरोति । सप्तर्षिप्रार्थितो हिमालयः सुतां शम्भवे समर्पयति । सम्पन्ने चोद्वाहे नवदम्पती यथेच्छं विहरत । तयोरेकान्तं शक्रचोदितो वीतिहोत्रो विघ्नयति कपोतरूपेण । स्खलितश्च शम्भोर्वीर्यं धारयितुमसमर्थोऽनलस्तद्गङ्गायां निक्षिपति । गङ्गाऽपि तत्तेजोऽसहमाना तच्छरवणे प्रक्षिपति । ज्वलच्च तत्सेवमानाः कृत्तिका गर्भं धारयन्ति । ततश्च कुमारः स्कन्दो जनिं गृह्णाति । द्रवयाः स पुरन्दरप्रेरणया तारकासुरं निहन्ति । सर्वतोभावेन कमनीयतमेऽस्मिन् काव्ये सर्वेऽपि श्लोका भाव-भावस्वभावं नवनवत्व नयन्ति । दिङ्मात्रमुद्धरणं यथा—

'यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किम्पुरुषाङ्गनानाम् ।' (१।१४)

अवचित बलिपुष्पा वेदिसम्मार्गदक्षा
नियमविधिजलानां बर्हिषाञ्चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥ (१।६०)

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ । (५।८५)

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥ (६।८४)

नवपरिणयलज्जाभूषणां तत्र गौरी
वदनमपहरन्तीं तत्कृताक्षेपमीशः ।
अपि शयनसखीभ्यो दत्तवाचं कथञ्चित्
प्रमथमुखविकारैर्हासयामास गूढम् ॥ (७।९५)

नीलकण्ठपरिभुक्तयौवनां तां विलोक्य जननी समाश्वसत् ।
भर्तृवल्लभतया हि मानसीं मातुरस्यति शुचं वधूजनः ॥ (८।१२)

अत्र हि जगद्गुरोः सुरतवर्णनमशिष्टं मन्यमानाः केचिदालोचकास्तन्निन्दन्ति । अपरे तु काव्ये न तद्दोषायेति तत्स्वीकुर्वन्ति । कुमारसम्भवनाम्ना ख्यापितो ग्रन्थः पार्वतीपरमेश्वरसुरतलीलावर्णनात्समाप्नोतीति न शोभनस्तर्कः । सोऽवश्यमेव कविना पूरितः स्यात् यतः कुमारसम्भवानन्तरं रघुवंशस्यापि प्रणयनं सम्पन्नं दृश्यते ।

७. रघुवंशम्—

रघुवंशं हि कालिदासस्य प्रौढतमं काव्यम्। अस्य हि सम्प्रति एकोनविंशति सर्गाः प्राप्यन्ते। विश्वस्यते हि काव्येऽस्मिन् ततोऽप्यधिका सर्गाः सम्भवन्तीति यतस्तत्र ग्रन्थसमाप्तिसूचकं नैव पद्यं लभ्यते। काव्यमिदं वागर्थरूपपरमेश्वरयुगलवन्दनया प्रारभ्यते। सश्रीकोऽपि कोशलेन्द्रो दिलीपोऽनपत्यतया तदर्थं वसिष्ठाश्रमं गच्छति। कुलगुरुस्तदर्थं सुरभीशापं निवारकं विज्ञाय तन्निमित्तं नन्दिनीसेवनायादिशति। स्वरक्षार्थं समर्पितदेहाय तस्मै नन्दिनी पुत्रप्राप्तिरूपवरं ददाति। दिनेषु गच्छत्सु सुदक्षिणा रघुं प्रसूते। रघोरपि अजस्तस्य दशरथाख्यः सुतः क्रमेण पृथिवीं पालयतः। दशरथस्य सम्पादितपुत्रेष्टियज्ञस्य रामभरतलक्ष्मणशत्रुघ्नाख्याश्चत्वारः पुत्रा भवन्ति। रामो हि धनुःषणं विजित्य जनकजां सीतामुद्वहति। स हि पितुराज्ञया चतुर्दशवर्षाणि वने तिष्ठति निहन्ति च तत्र स सीतापहारकं लोकरावणं रावणम्। रामस्य कुशलवाख्यौ सुतौ। कुशस्य हि कुमुद्वत्यामतिथिर्नाम सुतः। तदन्वये एव अग्निवर्णस्य राज्ञो जन्म। इति सङ्क्षेपेण रघुवंशगता कथा। द्वितीये सर्गे नन्दिनीपरिचर्यावर्णनं, तृतीये सदोहदायाः सुदक्षिणाया वर्णनं, चतुर्थे रघुदिग्विजयवर्णनं, षष्ठे इन्दुमतीस्वयंवरसभावर्णनं, सप्तमे अजस्य इन्दुमत्या सह विवाहवर्णनं, अष्टमे अजविलापः नवमे वसन्तवनं मृगयावर्णनञ्च, दशमे भगवत्स्तुतिः, त्रयादशे भूगोलवर्णनं, चतुर्दशे सीतापरित्यागः, षोडशे अजस्य अयोध्याप्रत्यागमनं, जलाविहारवर्णनञ्च, सप्तदशे राज्याभिषेकवर्णनमतिथेः, एकोनविंशेऽग्निवर्णस्य कामकेलिवर्णनं काव्यस्यास्य समुल्लेखनीया विषयाः।

केचिदस्य काव्यस्य सप्तदशसर्गे एवावसानं मन्यन्ते। तदवसानपद्यमपि तथासूचकमेव दृश्यते नैव च तदनन्तरवर्तिनोरध्याययोः कालिदाससम्मता चमत्कृतिरपि। एतावत्तु निश्चयमेव यदत्र द्वौ पक्षौ सम्भवतः। प्रथमस्तु काव्यमिदं सप्तदशसर्गे एव विरतं सम्भवति अपरश्च, यदि न तथा तदाऽस्य एकोनविंशतिसर्गानन्तरमपि आसन्नन्येऽपि कतिपये सर्गा ये खलु कालेन कवलिताः। अथवा एदन्तराले एव कवि पार्थिवं विग्रहमत्यजदिति। अथवा हि प्राच्यसंस्कृतिसमुन्नायको हि कविर्न तथाऽप्रशस्ते प्रसंगे स्वं काव्यं समापयिष्यति।

पूर्वोक्तातिरिक्तमपि श्यामलादण्डक-नवरत्नमालाप्रभृति, स्फुटरचना अपि कालिदासकृतित्वेन गृह्यन्ते, किन्तु ताः कतमस्य कालिदासस्येति न शक्यते स्पष्टतया वक्तुम्। नवरत्नमालायां दशपद्यानि सन्ति येषु नव मातङ्गीस्तुतिपराणि एकं तु फलनिर्देशकं, श्यामलादण्डकेऽपि तस्या एव स्तुतिः। प्राच्य-

परम्परायां हि षडधिका विक्रमादित्या यत्रैकः संज्ञी त्वपरे उपाधिधारिणस्तथैव ततोऽप्यधिकाः कालिदासा यत्रैको हि संज्ञी अपरे तूपाधिधारिणः। समुद्रगुप्तस्य सभाकविर्हरिषेणो हि 'कालिदास' इत्युपाधिना ख्यात आसीत्। तथैव भोजस्य सभाकविः परिमलोऽपि। अकबरसभायामपि कश्चित् कालिदासोपाधिधारी कविरासीत्। काव्यमालाया निर्णयसागरमुद्रणालयप्रकाशितायाः प्रथमे गुच्छके श्यामलादण्डकस्य पादसूच्यां (अष्टमे पृष्ठे) दुर्गाप्रसादः कथयति—

राजशेखरात्पूर्वं त्रयः कालिदासाः समुत्पन्नाः। ते च कस्मिन् कस्मिन् देशे काले च प्रादुरभूवन्निति न ज्ञायते। अकबरीयकालिदासस्तु चतुर्थोऽर्वाचीनः। राजशेखरस्तु ख्रीस्तसंवत्सरस्य दशमे शतके समुत्पन्नः इति।

(ग) कालिदासस्य जीवनदर्शनम्—

कालिदासो हि परम्परासमर्थको भारतीय आसीद्, यो हि सनातने धर्मे मनागपि परिवर्तनं वोपेक्षणं नैव सहते। तेनैव सोऽभिज्ञानशाकुन्तलस्य मङ्गलाचरणपद्ये बौद्धसम्मतनिरीश्वरवादनिरासाय 'प्रत्यक्षाभिः प्रपन्नस्तनुभिः' इति कथयति। स हि त्रयीसम्मतं चातुर्वर्ण्यं चातुराश्रम्यञ्चेत्थं समर्थयति—

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्॥ (रघु० १।८)
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये।
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्॥ (,, ३।७०)
न हि सति कुलधुर्ये सूर्यवंश्या गृहाय। (,, ७।७१)

तदनुसारेण पुरुषार्थचतुष्टयसिद्धिरेव जीवनस्य लक्ष्यम्। तत्रापि अर्थकामाभ्यां धर्मरक्षकाभ्यां भाव्यं यतो मोक्षसिद्धिः सम्पद्यते। तेनैव तस्य दुष्यन्तः प्रथमं विप्रकन्यां मत्वा शकुन्तलायां नैव बद्धस्पृहो भवति। प्रासादागताश्च तां धर्मोल्लङ्घनभयेनैव निराद्रियते न तु कामचारेण। कुशस्तु स्पष्टमेव कथयति—

'आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति।
(रघु० १६।८)

स हि कविरात्मवादी। तस्यात्मविश्वासो हि यत्र तत्र प्रस्फुटितो दृश्यते। तस्य दुष्यन्त उद्घोषयति—

सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः। (शाकु० १।२२)

तथैव शम्भुनोपेक्षिताऽपि पार्वती—

इयेष सा कर्तुमवन्ध्यरूपतां
समाधिमास्थाय तयोभिरात्मनः।
अवाप्यते वा कथमन्यथा द्वयं
तथाविधं प्रेम पतिश्च तादृशः ॥ (५।२)

उपायेनाशक्यं न किमपि सम्भवतीति तस्य प्रबलो राद्धान्तः। तस्य हि सर्वाण्यपि पात्राणि तथैवाचरन्ति।

स हि मर्यादाकविः। स्वसम्मतां मर्यादां स कदापि नैवोल्लङ्घयति। तस्य हि मर्यादोल्लङ्घनमपि मर्यादास्थापनायैव भवति। यथोक्तम्—

नृपतेः प्रतिसिद्धमेव तत् कृतवान् पंक्तिरथो विलंघ्य यद्।
अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ॥

( रघु० ९।७४ )

स हि परमार्थतो माहेश्वरः सम्मतः। स प्रायः सर्वास्वेव कृतिषु महेश्वरमयीष्टदेवत्वेन स्तौति। किन्तु नैतावतैतच्चिन्तनीयं यत्सोऽन्यदेवेषु न तथा बद्धादर इति। स तु देवत्रयस्यैकान्तैक्यं समर्थयति। यथा मङ्गलपद्ये शिवः कुमारसम्भवे ( २ सर्गे ) ब्रह्मा, रघुवंशे (१० सर्गे), विष्णुश्च स्तुताः सन्ति। प्रत्यभिज्ञावादी स साङ्ख्ययोगावपि तथैवाद्रियते। वेदेषु परमश्रद्धा, पुनर्जन्मवादः, ईश्वरस्य जगत्प्रणेतृत्वञ्च कालिदासस्य जीवनदर्शनस्य केचित्पक्षाः। स हि सन्दिशति—

'त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम्।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥'

( रघु० १।७ ) इति

(घ) कालिदासस्य काव्यवैशिष्टचम्—

कविकुलगुरुः कालिदासः संस्कृतवाङ्मये स्वप्रकृते प्रथमोऽन्तिमश्च कविः। कथितं हि—

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥

इति। स हि वैदर्भरीतेः कविः। स्वल्पसमासा स्वभावसरला च तस्य शैली सर्वानेव सद्य आकर्षयति इति तस्य कलापक्षापेक्षया हृदयपक्षस्य प्राधान्यं काव्येषु। मूलतः स अभिधाया कविः किन्तु तस्य काव्यं ध्वनिप्रधानम्। स हि गूढमप्यर्थं सरलतया व्यनक्ति। तत्र हि रसस्य

तथा प्राञ्जला सिद्धिर्यया कमनीयता तत्रैव कृतनिवासा दृश्यते। स हि न कुत्रापि पश्चाद्वर्तिकविरिव पाण्डित्यं प्रदर्शयति। तस्य हि सर्वाण्यपि पात्राणि नैव विचारवाहकान्यपि तु स्पष्टव्यक्तिकानि कथानुकूलानि च। सर्वोऽपि पात्रवर्गः स्वे स्वे स्थानेऽनुकूलत्वेन निबद्धोऽस्ति। तस्य काव्ये समय-स्थान-क्रियाणां समन्वितिः स्पष्टं दृश्यते। प्रसादगुणसमुज्ज्वला तस्य कृतिर्नितराश्चमत्कारातिशयं बिभर्ति। यथा हि—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनाऽपि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥ (शाकु० १।१८)

शमयति गजानन्यान् गन्धद्विपः कलभोऽपि सन्
भवति सुतरां वेगोदग्रं भुजङ्गशिशोर्विषम्।
भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं
न खलु वयसा जात्यैवायं स्वकार्यसहो भरः॥ (विक्र० ५।१८)

प्रतिपक्षेणाऽपि पतिं सेवन्ते भर्तृवत्सलाः साध्व्यः।
अन्यसरितामपि जलं समुद्रगाः प्रापयन्त्युदधिम्॥(माल०५।१९)

कालिदासस्य यथायात्तमभिवर्तमाना भाषा सर्वानानन्दयति। रघुवंशे हि तापसः कौत्सो रघुं कथयति—

शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः।
आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः॥ (५।१५)

तस्य हि उपमाचमत्कारस्तु सर्वानेवातिशेते। यद्यपि तत्कृतौ यमकोत्प्रेक्षाऽर्थान्तरन्यासादीनामप्यलङ्काराणां कमनीयः प्रयोगो दृश्यते तथापि स हि उपमानिपुणः प्रतिभाति सर्वत्र। स हि प्रायः पूर्णोपमामेव प्रयुनक्ति काव्ये चमत्कारोत्कर्षाय। यथा हि—

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः॥ (रघु०६।६७)

रघुवंशे हि नवमे सर्गे तेन हि यमकप्रयोगोऽपि तथैव विहितः। यथा हि—

परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिङ्गितबोधनम्।
श्रमजयात्प्रगुणाञ्च करोत्यसौ तनुमतोऽनुमतः सचिवैर्ययौ॥ (९।४९)

स हि अलङ्कारान् प्रयुङ्क्ते किन्तु न कदापि तेनार्थसम्पदो मनागपि वस्तु ह्रासमनुमन्यते।

तस्य हि मन्दाक्रान्ताऽभीष्टं वृत्तं तथैव वंशस्थमपि। तस्य हि काव्ये विविधवृत्तयोजनाचातुरी दृश्यते। इन्द्रवज्रा हि बहुधा प्रयुक्ता तत्रापि। मधुराधिपतेर्निखिलं मधुरम्। स यदेव स्पृशति तदेव चारुत्वमुत्पादयति।

कालिदासस्य कृतिषु प्रकृतिर्नृत्यति सर्वत्र सजीवत्वेन। तत्र हि जडमपि चेतनवद् व्यवहरति। शकुन्तलायै वृक्षा अपि पतिगृहगमनायानुमन्यन्ते। सीताविलापेन समस्तमेव वनं स्तब्धं भवति। यथा—

नृत्तं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्यः।
तस्याः प्रपन्नं समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि॥
(रघु० १४।६९)

तस्य हि कृतौ मनोवस्थाविश्लेषणं तु परमाधुनिकानपि दूरे स्थापयति। तेनैव कालिदासकृतौ कलाभावपक्षयो प्रशस्यः समन्वयो लभ्यते। शकुन्तलां त्यक्त्वा शिविरं प्रतिनिवर्तमानस्य दुष्यन्तस्यावस्थेत्थं वर्णिता—

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य॥ (१।३१)

शङ्करदर्शनानन्तरं पार्वत्या अवस्थेत्थं चित्रिता—

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ॥ (कुमार० ५।८५)

एभिरन्यैश्च वैशिष्ट्यैः कालिदासः कविकुलगुरुः स्मृतोऽनुकृतश्च पश्चाद्वर्तिभिः कविभिः।

६. अश्वघोषः

कालिदासस्य प्रभावोष्मणा सहैवोदेति नापि तत्समकक्षोऽपि न तथा तद्गुनो महाकविरश्वघोषः। समुद्रगुप्तप्रणीते कृष्णचरिते राजकविवर्णनप्रसङ्गे उक्तं—

जन्मनाऽर्थो भवद् विद्वान् सौगतस्तर्कवारिधिः।
सौनन्दबुद्धचरिते महाकाव्ये चकार यः॥
तस्य शूरकवेर्घोष इति नामाऽभवत्ततम्।
धर्मव्याख्यानरूपान् स नव ग्रन्थानरीरचत्॥
सौगतानां महासंसत्तुरीयाऽभून्महोज्ज्वला।
तस्यां सभ्यो बभूवायं विश्वविद्वच्छिरोमणिः॥ (१७-१९)

अश्वघोषेणाऽपि स्वस्थितिकालादिविषये मौनमेवावलम्बितं तथापि कालिदासापेक्षया तद्विषये किञ्चिदपि वक्तुं शक्यते। समुद्रगुप्तस्य कृष्णचरित्राज्ज्ञायते यदश्वघोषश्चतुर्थबौद्धमहासंसदः सभ्य आसीत्। बौद्धानां हि प्रथमा संसद् बुद्धमहानिर्वाणानन्तरं विक्रमपूर्वं ४३६ मितवर्षमभितो राजगृहे महाकाश्यपस्याध्यक्षतायामानन्दस्योपस्थितौ सम्पन्नाऽऽसीद्यत्र त्रिपिटिकस्वरूपं निश्चितमासीत्। द्वितीया तु ततः शतवर्षानन्तरं वैशाल्यां समायोजिताऽऽसीद्यस्याः प्रतिस्पर्धिनी संसदपि कौशाम्ब्यामाहूताऽऽभूत्। तृतीया हि अशोकस्य तत्त्वावधाने पाटलिपुत्रे समाहूताऽऽसीत्। तुरीया तु कनिष्कस्य तत्त्वावधाने पुरुषपुरे (केषाञ्चिन्मते काश्मीरे एव) समायोजिताऽऽसीद् विक्रमानन्तरं २०७ मितवर्षमभित। श्रूयते हि कनिष्कः कुषाणवंश्यः सम्राट् पाटलीपुत्रं विजित्य बुद्धस्य जलपात्रमश्वघोषञ्च सहैव पुरुषपुरं नीतवानिति। सारनाथस्थिते कनिष्कशिलालेखे अश्वघोषराज इति नामनिर्देशोऽपि मिलति। तेन ह्यस्य स्थितिकालो विक्रमानन्तरतृतीयशतकमभित इत्यनुमितः। इदमपि निश्चेतुं शक्यते यदश्वघोषः प्रथमं सनातनधर्मावलम्बी ब्राह्मण आसीत्पश्चाच्च बुद्धमतमनुसृतवानिति। निजसमयस्य महतः पण्डितस्यास्य माता सुवर्णाक्षी नाम्नी आसीत्। साकेतलब्धजन्माऽसौ पश्चात्पाटलिपुत्रं गतः शेषं कालं पुरुषपुरे निनाय। असौ हि दार्शनिकः कविर्गायकश्च। कथ्यते हि अस्य स्वरमाधुर्यविलोभिता अश्वा अपि ह्रेषां त्यक्त्वापि अस्य गानं शृण्वन्ति स्मेति नामास्य अश्वघोष इति।

एतत्कृतित्वेन बहवो ग्रन्थाः प्रसिद्धा येषु सौन्दरनन्दं बुद्धचरितं च महाकाव्ये, सूत्रालङ्कारो वज्रसूचिश्च द्वौ बौद्धदर्शनग्रन्थौ, गण्डिस्तोत्रं गाथाग्रन्थः, शारिपुत्रप्रकरणञ्च प्रसिद्धानि। अथैषां संक्षेपेण परिचय उपस्थाप्यते।

(१) सौन्दरनन्दं महाकाव्यम्—

अष्टादशसर्गेषु निबद्धमिदं महाकाव्यं गौतमबुद्धस्य अनुजस्य नन्दस्य तत्पत्न्याः सुन्दर्याश्च कथानकं वर्णयति। काव्योत्कर्षदृष्ट्या सौन्दरनन्दं बुद्धचरितमतिशेते। अत्र हि कविर्निखिलमेव कलाकौशलं काव्यवैभवञ्च व्यनक्ति। काव्यमिदं कुमारसम्भवस्य प्रतिस्पर्धि दृश्यते।

(२) बुद्धचरितम्—

गौतमबुद्धजीवनसम्बद्धमिदं महाकाव्यमष्टाविंशतिसर्गेषु विभक्तमासीदिति विश्वस्यते। सम्प्रतिस्तु तच्चतुर्दशसर्गपर्यन्तमेव लभ्यते। कथ्यते हि समग्रोऽयं

ग्रन्थस्तिब्बती भाषायामनूदित आसीत् । ततश्च केनचिच्चीनदेशीयविपश्चिता चीनीभाषायां पुनरनूदितः । स एव ततो जान्सटनमहोदयेन आङ्ग्लेन आङ्ग्लभाषायां पुनरवतारितः । सोऽपि ततोऽपि सूर्यनारायणचौधरी महाभागेन हिन्दीभाषायामनूद्य प्रकाशितः, तमेवाधृत्य रामचन्द्रदासेन विपश्चिता संस्कृते पद्यानि प्रणीतानि सन्ति। एतत्पूर्वमेव कश्चिन्नैपालीयः न विः काव्यस्यास्य समुपलब्धत्रयोदशसर्गातिरिक्तं सर्गचतुष्टयं प्रणीय संयोजितवानासीदिति विश्वनाथमहोदयः स्वीये संस्कृतसाहित्येतिहासे ( ९१ सङ्ख्याकपृष्ठे ) निर्दिशति । हंसराजश्च तं अमृतनन्दनाम्ना जानाति स्वीये संस्कृतसाहित्येतिहासग्रन्थे ( ९० सङ्ख्याकपृष्ठे ) । समुपलब्धभागेऽपि प्रथमसर्गस्य आद्याः सप्तश्लोकाश्चतुर्दशसर्गस्य चरमा एकाशीतिश्लोका अपि तेनैव पूरिता दृश्यन्ते । काव्येऽस्मिन् गौतमबुद्धस्य जन्मत आरभ्य धातुविभाजनपर्यन्ता कथा वर्णितास्ति । काव्ये हि भगवत्प्रसूतिरन्तःपुरविहारः, संवेगोत्पत्तिः, स्त्रीविघाततोऽभिनिष्क्रमणं छन्दकनिवर्तनं तपोवनप्रवेशोऽन्तःपुरविलापः कुमारान्वेषणं श्रेण्याभिगमनं कामविगर्हणमराडदर्शनं मारविजयो बुद्धत्वप्राप्तिरिति चतुर्दशप्रकरणानि पूर्वभागे । बुद्धस्य काशीगमनं शिष्येभ्यो दीक्षादानं महाशिष्याणां प्रव्रज्याऽनाथपिण्डदस्य दीक्षा पितृपुत्रसमागमो जेतवनस्वीकृतिः प्रव्रज्यास्रोतः आम्रपाल्या उपवने आयुर्निर्णयो निर्वाणमार्गे महापरिनिर्वाणं निर्वाणप्रशंसा धातुविभाजनमिति तावन्त्येव प्रकरणानि उत्तरभागे च सन्ति । काव्यमिदमितिवृत्तबहुलं रघुवंशप्रतिस्पर्धि । काव्येऽस्मिन् वैदर्भीरीतिः प्रसादश्च गुणः सार्वत्रिकः । अत्र हि कवेः कलाकौशलं स्पष्टमेव प्रतिभाति । दिङ्मात्रं यथा—

रूपस्य हन्त्री व्यसनं बलस्य शोकस्य योनिर्निधनं रतीनाम् ।
नाशः स्मृतीनां रिपुरिन्द्रियाणामेषा जरा नाम ययैष भग्नः ।। ( ३।३० )
आदित्यपूर्वं विपुलं कुलं ते नवं वयो दीप्तमिदं वपुश्च । (१०।२३)
यत्नेन लब्धाः परिरक्षिताश्च ये विप्रलभ्य प्रतियान्ति भूयः ।
तेष्वात्मवान् याचितकोपमेषु कामेषु विद्वानिह को रमेत ।। (११।२२)

(३) शारिपुत्रप्रकरणम्—

प्राच्यनाटचवैभवमण्डितस्यास्य प्रकरणस्य ताडपत्रलिखिता मातृका मध्येशियाभागे तुरफानाऽऽख्ये स्थाने लूडर्समहाभागेन प्राप्ताऽऽसीत् । तत्र हि पुष्पिकावाक्ये 'सुवर्णाक्षी सुतोऽश्वघोष' इति वचनात् सूत्रालङ्कारेऽप्यस्य द्विर्नामग्रहणादत्यत्रत्यपद्यस्यैकस्य बुद्धचरितेऽपि पाठाच्चेदमश्वघोषस्यैव कृतिरिति निश्चेतुं शक्यते । अत्र हि नवाङ्काः । नायकश्चास्य धीरोदात्तस्वभावः

शारिपुत्रो यः खलु तरुणमौद्गल्यायनेन सह बुद्धाद्दीक्षामाप्नोति। प्रकरणमिदं सर्वानेव नाट्यनियमाननुपालयति। अत्र हि सशिष्यो बुद्धः संस्कृतेन विदूषकप्रभृतयस्तु प्राकृतेन व्यवहरन्ति। प्राकृतञ्च मागधी, अर्द्धमागधी तन्मिश्रञ्चेति त्रिविधं प्रयुक्तं दृश्यते।

एतदतिरिक्तमपि समुपलब्धे द्वे रूपकेऽपि अश्वघोषस्यैव कृती इति समालोचका मन्यन्ते, किन्तु तयोः पूर्णस्वरूपानुपलब्धेर्न तु निश्चयेन तत् द्रढयितुं शक्यते।

(४) सूत्रालङ्कारः—

बौद्धदर्शनशिक्षणपरस्यास्य ग्रन्थस्य केवलं तिब्बतीभाषायामनूदितं रूपमेव लभ्यते न तु मूलस्वरूपम्। अत्र हि नैतिकविचारोन्नायिकाः कतिपयाः कथाः सङ्गृहीताः सन्ति।

(५) वज्रसूची—

ग्रन्थोऽयमपि बौद्धधर्मव्याख्यानपरो दूषयति च वर्णव्यवस्थापद्धतिम्। किञ्चेदं वर्णव्यवस्थानुगामिनः सूचीव भिनत्ति तेनेद व्रजसूची। केचिद्धि वज्रसूचीं धर्मकीर्तिकृति मन्यन्ते न त्वश्वघोषस्य। ते हि तथामनने कतिपयान् पक्षानग्रे सारयन्ति यत्तिब्बिती चीनी वा परम्परा कृतिमिमां नैवाश्वघोषसम्बद्धां मन्यते, यच्चीनदेश्य इत्सिङ्गोऽश्वघोषरचनासु ग्रन्थमिमं नैवोल्लिखति, यदश्वघोषो हि न तथा वर्णव्यवस्थाविरोधी यथा ग्रन्थे प्रदर्शितमस्ति, यत्कृतेरस्याः प्रणयनशैली नैवावशिष्टाभिरश्वघोषकृतिभिः सह संवदते, यदस्य चीनीरूपान्तरमिदं धर्मकीर्तिप्रणीतं मन्यत इति। किन्त्वपरे तु ग्रन्थस्यास्य 'अश्वघोषो वज्रसूचिं ग्रन्थयामि यथामतम्' इति ग्रन्थारम्भवाक्य 'कृतिरियं सिद्धाचार्याश्वघोषपादानाम्' इति पुष्पिकावाक्यमपि चाधारीकृत्य ग्रन्थमिममश्वघोषप्रणीतमेव मन्यन्ते। स्याद्यद्वा तद्वा। सम्प्रति तु ग्रन्थोऽयमश्वघोषकृतित्वेनैव संज्ञातोऽस्ति।

६. महायानश्रद्धोत्पादकशास्त्रम्—

शास्त्रमिदं शून्यवादविवेचकम्। अस्यापि मौलिकं रूपं तु नैवोपलभ्यते किन्तु चीनी भाषात आङ्गलभाषायां सुजुकीतिख्यातेन जापानदेश्येन विपश्चिता कृतोऽनुवादोऽस्य लभ्यते।

एतदतिरिक्तं गण्डीस्तोत्रगाथानामकं गीतिकाव्यं, राष्ट्रपालः ऊर्वशीवियोगश्च नाट्यग्रन्थौ चाश्वघोषस्यैव नाम्ना गृह्यन्ते। गण्डीस्तोत्रं हि स्रग्धरावृत्ते गुम्फितमस्ति। इदं हि बुद्धधर्मसंघसमवेतस्तुतिकाव्यं मेघदूतप्रतिस्पर्धि।

अश्वघोषो हि स्वसमयस्य प्रतिष्ठितो बौद्धविचक्षण आसीद्यः पश्चाद्भगवद्रूपेणैव संस्तुतः। स हि प्रबलस्तार्किक उत्कृष्टदार्शनिकश्चासीत्। स हि सरसकविः सफलनाट्यकारः सङ्गीतपारङ्गतश्चासीत्। स हि प्रथमो विचक्षणो येन दर्शनस्य नीरसा धारा काव्ये नितान्तसरसरूपेण प्रवाहिता। स हि न केवलं त्रिपिटकस्यैवापि तु श्रुतिस्मृतिपुराणानामपि मर्मज्ञः पण्डित आसीत्। तस्य हि काव्ये पुराणेभ्यः सुबहून्युदाहरणानि गृहीतानि सन्ति। यथा—

भुक्त्वाऽपि राज्यं दिवि देवतानां शतक्रतौ वृत्तभयात्प्रणष्टे।
दर्पान्महर्षीनपि वाहयित्वा कामेष्वतृप्तो नहुषः पपात॥ (बुद्ध॰ ११।१४)

इति। कालिदासाश्वघोषयोः कृतिषु विलक्षणं साम्यं दृश्यते। रघुवंशे हि अजसन्दर्शनलालसानां स्त्रीणां विचेष्टितं बुद्धचरिते तृतीयसर्गे तथैवानूदितमस्ति। नैतावन्मात्रमपि तु यत्र कुत्र तु वाक्यसंरचनाऽपि निकायं साम्यं बिभर्ति। दिङ्मात्रं यथा—

'सोऽनिश्चयान्नापि ययौ न तस्थौ
तरंस्तरङ्गेष्विव राजहंसः। ( सौन्दर॰ ४।४२ )।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराततनया न ययौ न तस्थौ। (कुमार॰ ५।८५)

यत्र कुत्र तु स्वाभाविकतायामश्वघोषः कालिदासमप्यतिशयमानो दृश्यते। यथा—

दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्।
दिशं न काञ्चिद्विदिशं न काञ्चित् स्नेहक्षयात्केवलमेति शान्तिम्॥

तथा कृतिर्निवृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्।
दिशं न काञ्चिद विदिशं न काञ्चित् क्लेशक्षयात्केवलमेति शान्तिम्॥
( सौन्दर॰ १६।२८, २९ )

स्वेनैव रूपेण विभूषिता हि विभूषणानामपि भूषणं सा। (सौन्दर॰ ४।१२)

उभयोरेव काव्यविदो उपमासौष्ठवं यमकपरायणत्वञ्च प्रशंसनीयं दृश्यते। भाषाधिकारे तु कालिदासोऽश्वघोषं नितरामतिशेते। कालिदासस्य काव्यधाराऽबाधितेव प्रवहति। अश्वघोषस्य तु सा यत्र कुत्र विच्छिन्नेव कृत्रिमेव च दृश्यते। प्रथमस्य काव्यं हि मानवजीवनस्य सर्वाङ्गीणं चित्रमुपस्थापयति स्वाभाविकगत्या, किन्तु द्वितीयस्य तु तद्दार्शनिकविचारप्रतिपादकमेव। आद्यस्य हि काव्ये घटनाप्राधान्यं, द्वितीयस्य तु विचारभार

एव। एकस्य काव्ये कल्पनासौष्ठवं कलाप्राधान्यञ्चापरस्य तु भावपक्षस्यैव वैशिष्टचम्। उभावेव शृङ्गारकरुणशिल्पिनौ किन्तु शान्तरसमधिकृत्य तु कालिदासादश्वघोष एव सफलः प्रतिभाति। रघुवंशे अजविलापापेक्षया बुद्धचरिते यशोधरायाः सौन्दरनन्दे सुन्दर्या विलाप एव प्रकर्षमाधत्त इति सत्यमेव। उभावपि—

त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः। (रघु० ९ ४७)
ऋतुर्व्यतीतः परिवर्तते पुनः क्षयं प्रयातः पुनरेति चन्द्रमाः।
गतं गतं नैव तु सन्निवर्तते जलं नदीनाञ्च नृणाञ्च यौवनम्॥
(सौन्दर० १)

प्रसन्नपदावल्या दार्शनिकगूढविषयप्रतिपादनमेवाश्वघोषस्य सर्वातिशायि वैशिष्टचम्। स हि स्वपूर्ववर्तिकविभ्यो भासकालिदासादिभ्यः प्रभावित आसीदिति न किमप्याश्चर्यम्। यत्तु कालिदासं विक्रमानन्तर ४३७-४७१ वर्षमितकालस्थितिमतो द्वितीयचन्द्रगुप्तस्य सभासदं मत्वाऽश्वघोषं तत्पूर्ववर्तिनं मन्यते तद्धि विस्मयावहम्। द्वितीयचन्द्रगुप्तो हि समुद्रगुप्तस्य तनयः। समुद्रगुप्तः स्वकीयकृष्णचरिते कालिदासं स्वपूर्ववर्तित्वेन स्मरति। तर्हि कथं तस्य तत्तनयस्य समकालिकत्वम्। अपरञ्च समुद्रगुप्तस्य पितुः प्रथमचन्द्रगुप्तस्यैव शासनकाले कोशलो मगधसाम्राज्येऽन्तःपातित आसीत्। तत्पौत्रसभासत्कथं नाम तादृशं प्रणष्टराज्यं राजवंशं स्वकाव्ये नायकत्वेनावतारयेदिति विषयोऽयं विवेकस्य। तेन हि कालिदासात्परवर्त्येवाश्वघोष इति स्पष्टमेव। स हि कुषाणवंश्यस्य कनिष्कस्य समकालिक इति बहुविधैः प्रमाणैः सिध्यत्येव।

### ७. बुद्धघोषः

बुद्धघोषस्य हि बौद्धस्य दशसर्गात्मकं पद्मचूडामणिसंज्ञकं महाकाव्यं स्मर्यते। स हि बौद्धग्रन्थव्याख्याकृत्त्वेन सश्रद्धं स्मृतेषु चतुर्षु विद्वत्स्वन्यतमः। शेषाश्च नागसेन-बुद्धदत्त-धर्मपालाः। विशुद्धिमार्गः (विसुद्धिमग्ग) महावंशः, अट्ठकथाश्चास्य कृतित्वेन प्रसिद्धाः। कथ्यते हि स प्रथमं ब्राह्मण आसीत्पश्चाच्च बौद्धधर्ममङ्गीकृतवान्। तस्य हि ग्रन्थे कालिदासाश्वघोषयोः स्पष्टः प्रभावः परिलक्ष्यते। बौद्धविवरणानुसारेण ४६२ मितवैक्रमाब्दे त्रिपिटकस्य पालीरूपान्तरानयनाय लङ्कां प्रेषित आसीत्। तस्य हि ग्रन्थः ५६३ वैक्रमाब्दे चीनीभाषायां रूपान्तरित आसीदतो हि तस्य स्थितिकालः ४६० मितवैक्रमाब्दमभितः सम्भाव्यः।

८. भीमकः : भीमः

भीमकस्य महाकवेः रावणार्जुनीयं वा अर्जुनरावणीयं नाम महाकाव्यं स्मृतं दृश्यते समालोचकैः। तच्च अष्टाध्याय्याः काशिकावृत्तौ समुद्धृतमपि दृश्यते। तेनास्य स्थितिकालो वैक्रमपञ्चमशतकसन्निकर्षे एव क्वचित्सम्भाव्यः।

९. भर्तृमेण्ठः

राजशेखरेण वाल्मीकिसमकक्षत्वेन स्मृतो भर्तृमेण्ठः उज्जयिनीचक्रवर्तिनः श्रीहर्षाख्यस्य विक्रमादित्यस्य शकारेः कृपाभाजनस्य मातृगुप्तस्य सभापण्डितः काश्मीरक आसीत्। संस्कृतसाहित्ये तस्य नाम प्रतिभाशालिविचक्षणेषु गण्यते। यथोक्तं राजशेखरेण—

बभूव वल्मीकभवः पुरा कविस्ततः प्रपेदे भुवि भर्तृमेण्ठताम्।
स्थितः पुनर्यो भवभूतिरेखया स वर्तते सम्प्रति राजशेखरः॥ इति

असौ कविवरो हि मातृगुप्तसमकालीनः। मातृगुप्तो हि उज्जयिनीपतेः श्रीहर्षस्य समकालिकः। तेनाऽस्य समयो वैक्रम ४८७ मिताब्दसन्निकर्ष एव क्वचित्सम्भाव्यं इति द्विजेन्द्रनाथमतम्। (संस्कृतसाहित्यविमर्शे ४३६ पृष्ठे अन्तिमप्रखण्डे।)

अस्य हि हयग्रीववधं महाकाव्यं स्मर्यते यदधुना स्वरूपतो नैवोपलभ्यते। यथोक्तं राजतरङ्गिण्यां—

हयग्रीववधं मेण्ठस्तदग्रे दर्शयन्नवम्। (३।२६०)

एवमेव राजशेखरः कथयति—

इह कालिदासभर्तृमेण्ठावत्तामररूपसूरभारवयः।
हरिचन्द्रचन्द्रगुप्तौ परीक्षिताविह विशालायाम्॥

भोजदेवः कथयति—

यस्मिन्नितिहासार्थानपेशलान् पेशलान् कविः कुरुते।
स हयग्रीववधादिप्रबन्ध इव सर्गबन्धः स्यात्॥
(श्रृंगारप्रकाशे ११।१५६।)

धनपाल उद्गिरति—

वक्रोक्त्या भर्तृमेण्ठस्य वहन्त्या सृणिरूपताम्।
आविद्धा इव धुन्वन्ति मूर्धानं कविकुञ्जराः॥

पद्मगुप्तः कथयति—

पूर्णेन्दुबिम्बादपि सुन्दराणि तेषामदूरे पुरतो यशांसि ।
ये भर्तृमेण्ठादिकवीन्द्रसूक्तिव्यक्तोपदिष्टेन यथा प्रयान्ति ॥
( नवसाहसाङ्कचरिते १।५ )

यथा कथयति परिमलकालिदासोऽपि—

तत्त्वस्पृशस्ते कवयः पुराणाः श्रीभर्तृमेण्ठप्रमुखा जयन्ति ।
निस्त्रिंशधारासदृशेन येषां वैदर्भमार्गेण गिरः प्रवृत्ताः ॥

१० मातृगुप्तः

उज्जयिनीचक्रवर्तिनो विक्रमादित्यस्य श्रीहर्षस्य कृपया लब्धकाश्मीर-राजसिंहासनो मातृगुप्तः स्वसमयस्योत्कृष्टतमः कविरासीत् । तस्य हि पद्यानि यत्र तत्र समुद्धृतानि दृश्यन्ते । यथौचित्यविचारचर्चायां—

नायं निशामुखसरोरुहराजहंसः
कीरीकपोलतलकान्ततनुः शशाङ्कः ।
आभाति नाथ तदिदं दिवि दुग्धसिन्धु-
डिण्डीरपिण्डपरिपाण्डु यशस्त्वदीयम् ॥

एतदतिरिक्तं निम्नांकितं पद्यमपि मातृगुप्तप्रणीतत्वेन कथितम्—

शीतेनोद्धृषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः
शान्ताग्नि स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे ।
निद्रा क्वापि विमानितेव दयिता सन्त्यज्य दूरङ्गता
सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥

समुद्रगुप्तस्य कृष्णचरिते उक्तमस्ति यत्—

मातृगुप्तो जयति यः कविराजो न केवलम् ।
कश्मीरराजोऽप्यभवत् सरस्वत्याः प्रसादतः ॥
विधाय शूद्रकजयं सर्गान्तानन्दमद्भुतम् ।
न्यदर्शयत् वीररसं कविरावन्तिकः कृतिः ॥ (२१-२२)

मातृगुप्तस्य स्थितिकालो नाद्यापि संनीर्णीतः । तस्य हि शूद्रकजयं नाम काव्यं प्रथितमासीत् । स हि जन्मनाऽऽवान्तिकः स्मृतः ।

११ हरिचन्द्रः

हरिचन्द्रकविविषयेऽपि वयं स्वल्पमेव जानीमः । समुद्रगुप्तस्य कृष्ण-चरिते राजकविवर्णनप्रसङ्गे उक्तमस्ति—

निजकीर्तेर्वैजयन्ती कर्णंकीर्तिं चकार यः।
हरिचन्द्रो विजयते पाञ्चालक्षितिपः कविः ॥ २० इति ।

अनेनैतज्ज्ञायते यद् हरिचन्द्रः पाञ्चालनरेन्द्र आसीदासीच्च तस्य काव्य-यशः सुविख्यातं न केवलं स्वसमयेऽपि तु पश्चाद्वर्तिनि कालेऽपि । यथा स्मरति राजशेखरः--

इह कालिदासभर्तृमेण्ठावत्रामररूपसूरभारवयः ।
हरिचन्द्रचन्द्रगुप्तौ परीक्षिताविह विशालायाम् ॥ इति ।

तथैव हर्षचरितेऽप्युक्तम्--

पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थितिः ।
भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ॥ इति ।

अस्य हि कर्णकीर्तिर्नाम काव्यं प्रसिद्धम् ।

१२ हरिषेणः

हरिषेणः स्वसमयस्य सर्वोत्कृष्टः कविरासीदिति समुद्रगुप्तस्य कृष्ण-चरिते राजकविवर्णनप्रसंगे ग्रथितान्निम्नाङ्कितपद्याज्ज्ञायते--

तुङ्गं ह्यमात्यपदमाप्तदशः प्रसिद्धं
भुक्त्वा चिरं पितुरिहास्ति सुहृन्ममायम् ।
सन्धौ च विग्रहकृतौ च महाधिकारी
विज्ञः कुमारसचिवो नृपनीतिदक्षः ॥

काव्येन सोऽद्य रघुकार इति प्रसिद्धो
यः कालिदास इति............... . ... महार्हनामा ।
प्रामाण्यमाप्तवचनस्य च तस्य धर्म्ये
ब्रह्मत्वमध्वरविधौ मम सर्वदैव ॥

चत्वार्यन्यानि काव्यानि व्यदधाच्च लघूनि यः ।
प्राभावयच्च मां कर्तुं कृष्णस्य चरितं शुभम् ॥
हरिषेणकविर्वाग्मी शास्त्रशस्त्रविचक्षणः ।
यशोऽलभत काव्यैः स्वैर्नानाचरितशोभनैः ॥

येषां न केवलं काव्यं श्रेष्ठं धर्मार्थकामदम् ।
राजता वा राजनीतिरूपकर्त्री मनःस्थिता ॥
ते राजकवयोऽमात्याः शुद्धकर्मगुणैर्भुवि ।
वर्णिताश्चाष्टगुरवो दिङ्नागप्रतिपक्षिणः । ( २३–२८ ) इति ।

हरिषेणो हि ध्रुवभूतेः पुत्रः समुद्रगुप्तसमकालीन आसीदिति समुद्रगुप्तस्य प्रयागस्तम्भाभिलेखतोऽपि ज्ञायते। अभिलेखोऽयं तिलभट्टानुष्ठितः ४०७ मितवैक्रमवत्सरप्रतिष्ठापितः। यथोक्तं तत्र—

३१. ........"एतच्च काव्यमेषामेव भट्टारकपादानां दासस्य समीपपरिसर्प्पणानुग्रहोन्मीलितमतेः।

३२. खाद्यटपाकिकस्य महादण्डायकध्रुवभूतिपुत्रस्य सान्धिविग्रहिककुमारामात्यमहादण्डनायकहरिषेणस्य सर्वभूतहितसुखायास्तु।" इति। काव्यञ्च यथा—

३०. प्रदानभुजविक्रमप्रशमशास्त्रवाक्योदयै-
रूपर्युपरिसञ्चयोच्छ्रितमनेकमार्गं यशः।
पुनाति भुवनत्रयं पशुपतेर्जटान्तर्गुहा-
निरोधपरिमोक्षशीघ्रमिव पाण्डु गाङ्गं पयः॥ इति।

समुद्रगुप्तो हि मगधसम्राट् प्रथमचन्द्रगुप्तस्य पुत्रो घटोत्कचस्य राज्ञः पौत्रः श्रीगुप्तस्य प्रपौत्रः ३९२-४३२ मितवैक्रमाब्दानाभितो महीं शासितवान्।

हरिषेणेन हि पञ्च काव्यानि प्रणीतान्यासन्निति समुद्रगुप्तस्य कृष्णचरितोल्लेखाज्ज्ञायते। यत्रैकं रघुवशं चत्वार्यन्यानि लघूनि। किन्तु हरिषेणस्य रघुवंशकर्तृत्वं नैव सन्देहबाह्यम्। एकतो रघुवंशं हि काव्यं कालिदासकर्तृत्वेन प्रसिद्धमेव। अपरञ्च समुद्रगुप्तस्य तत्समर्थकवचनमपि न तथा स्पष्टम्। यथा हि—

काव्येन सोऽद्य रघुकार इति प्रसिद्धो
यः कालिदास इति .... .... महार्हनामा॥ इति।

अत्र हि इतिशब्दस्य स्थाने इवशब्दपाठोऽपि सम्भवति। तथा हि सति—

काव्येन सोऽद्य रघुकार इव प्रसिद्धो
यः कालिदास इति (दिक्षु) महार्हनामा॥

इति भवति। स्यादेतद्वा न वा, एतावत्तु निश्चयमेव यद्धरिषेणः स्वसमय उत्कृष्टः पण्डितः कविश्चासीत्। तस्य हि गद्यपद्यमयी भाषा समुद्रगुप्तस्य प्रयागशिलास्तम्भेऽद्यापि द्रष्टुं शक्यते।

१३. समुद्रगुप्तः

मगधसम्राट् समुद्रगुप्तः स्वसमयस्य प्रतिष्ठितः कविराज आसीदिति तस्यैव प्रयागशिलास्तम्भलेखतो ज्ञायते। यथोक्तं तत्र—

(२७) निशितविदग्धमतिगान्धर्वललितैर्व्रीडितगुरुतुम्बुरुनारदादेः विद्वज्जनोपजीव्यानेककाव्यक्रियाभिः प्रतिष्ठितकविराजशब्दस्य ........इत्यादि ।

यस्य हि कृष्णचरितं नाम महाकाव्यमासीद्यद्धि सम्प्रति खण्डितरूपेणैव लभ्यते । तद्धि प्रथमं जीवाराममहाभागेन सविवरणं १९९८ मितवैक्रमाब्दे प्रकाशितमासीत् । तदेव पुनः युधिष्ठिरमहाभागेन स्वीये संस्कृतव्याकरणशास्त्रेतिहासनामक ग्रन्थे तस्य तृतीयभागे सप्तमपरिशिष्टरूपेण प्रकाशितं दृश्यते । वयमपि तस्यैव युधिष्ठिरमहाभागस्याधमर्णाः । काव्यस्यास्य सम्प्रति प्रस्तावनाभाग एव लभ्यते यत्र हि मुनिकवयो राजकवयो जीविकाकवय इति त्रीणि शीर्षकाणि दृश्यन्ते । मुनिकविवर्णनप्रसङ्गे दश मुनिकवयः स्मृताः यत्र प्रथमस्तु लुप्तपाठः । तत्र युधिष्ठिरमहाभागमतेन पाणिनिः स्मृतो भवति वररुचिप्रसङ्गे 'काव्येन भूयोऽनुचकार तं वै' इति कथनात् । स्यादप्येतत् । तेन प्रथमो जाम्बवतीविजयकाव्यकृत्पाणिनिः, ततश्च क्रमेण कण्ठाभरणकृत् शाङ्ख्यायनः, स्वर्गारोहणस्य कर्ता वररुचिः कात्यायनः, बलचरितकृद् व्याडिः, इन्द्रविजयस्य प्रणेता देवलः, महानन्दमयकृत्पतञ्जलिः, विंशत्यधिकनाटकानां प्रणेता भासः, भीमजयस्य प्रणेता वर्धमानः, बुद्धचरितस्य कर्ता चीनदेव, सूर्यस्तवस्य प्रणेता मिहिरदेवश्च । तथैव राजकविवर्णनप्रसङ्गे वत्सराजचरितस्य प्रणेता सुबन्धुः, मृच्छकटिकस्य कर्ता शूद्रकः, अभिज्ञानशाकुन्तलस्य अन्येषामपि त्रयाणां लघुनाटकानां कर्ता कालिदासः, सौनन्दस्य बुद्धचरितस्य प्रणेता घोषः (अश्वघोषः) शूरापराभिधानः, कर्णकीर्तेः प्रणेता हरिचन्द्रः, शूद्रकजयस्य कर्ता मातृगुप्तः, रघुकार इति प्रसिद्धः, अन्येषामपि त्रयाणां लघुकाव्यानां प्रणेता कालिदासापराभिधानो हरिषेणश्चेत्यष्टौ स्मृताः । जीविकाकविवर्णनस्य तु समग्रोऽपि भागः प्रणष्टो दृश्यते ।

### १४. वत्सभट्टिः

वत्सभट्टिर्हि स्वसमयस्य प्रख्यातः कविरासीदिति बन्धुवर्मणो मन्दसारशिलास्तम्भाभिलेखाज्ज्ञायते । यथोक्तं तत्र—

२३. पूर्वा चेयं प्रयत्नेन रचिता वत्सभट्टिना ॥४४॥ इति ।

अभिलेखेऽस्मिन् समष्टया चतुश्चत्वारिंशच्छ्लोका विद्यन्ते काव्यमयाः यत्र हि कालिदासीयकौशलस्य स्पष्टः प्रभावो दृश्यते । यथा हि—

चलत्पताकान्यवलासनाथान्यत्यर्थशुक्लान्यधिकोन्नतानि ।
तडिल्लताचित्रसिताभ्रकूटतुल्योपमानानि गृहाणि यत्र ॥१०॥

× × ×

विद्युद्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः । (उत्तरमेघे ५)

कवेरस्य उक्तशिलास्तम्भलेखाधारेण विक्रमानन्तर ५१३ मितवत्सरमभितोऽनुमितः स्थितिकालः ।

१५. कुब्जः

कुब्जाख्यः कविः शान्तिवर्मणः प्रशस्त्यात्मकं काव्यं स्वयमेव प्रणीय तदुट्टङ्कितवानिति तलगुण्डास्थितशिलास्तम्भाभिलेखतो ज्ञायते । तत्र हि चतुस्त्रिंशत्पाद्यनि काव्यमयानि सन्ति ।

तत्रोक्तमवसाने—

१४. तस्यौरसस्य तनयस्य विशालकीर्तेः
पट्टत्रयापणविराजितचारुमूर्तेः ।
श्रीशान्तिवर्म्मनृपतेर्वरशासनस्थः
कुब्जः स्वकाव्यमिदमश्मतले लिलेख ॥३४॥

स्थितिकालश्चास्योक्ताभिलेखानुसारमेव विक्रमानन्तर ५१२ मितवर्षमभितोऽनुमितः ।

१६. वासुलः

वासुलो हि कविः कक्काख्यस्य पुत्रो यशोधर्मप्रशस्त्यात्मकमेकमष्टाविंशतिपद्यात्मकं काव्यमपरं नवश्लोकात्मकं काव्यद्वयं प्रणिनायेति यशोधर्मदेवस्य मन्दसारशिलास्तम्भाभिलेखतो ज्ञायते । यथोक्तं तत्र—

९. इति शुश्रूषया तस्य नृपतेः पुण्यकर्मणः ।
वासुलेनोपरचिताः श्लोकाः कक्कस्य सूनुना ॥९॥
"उत्कीर्णा गोविन्देन ।"

तस्य हि काव्यकौशलं निभाल्यतामत्र । यथा—

२२ यस्मिन् काले कलमृदुगिरां कोकिलानां प्रलापाः
भिन्दन्तीव स्मरशरनिभाः प्रोषितानां मनांसि ।
भृङ्गालीनां ध्वनिरनुवनं भारमन्द्रश्च यस्मिन्नाधूतज्यं धनुरिव नदच्छ्रूयते पुष्पकेतोः ॥२५॥
२३ प्रियतमकुपितानां कम्पयन् बद्धरागं
किसलयमिव मुग्धं मानसं माननीनाम् ।

उपनयति विवस्वान् मानभङ्गाय यस्मिन् ।
कुसुमसमयमासे तत्र निर्म्मापितोऽयम् ॥२६॥

१७. भारविः

संस्कृतमहाकाव्यपरम्परायां भारवेस्तृतीयं स्थानं कालक्रमदृष्टया । स हि संस्कृतकाव्यजगति अलङ्कृतशैल्याः प्रथम उन्नायकः पण्डितयुगस्य प्रवर्तकश्च । तस्य किरातार्जुनीयं महाकाव्यं प्रसिद्धं यद्धि काव्यसर्वस्वभूतयोर्भावकक्षापक्षयोः समन्वयापेक्षयाऽपि कवेः पाण्डित्यप्रदर्शनमेव प्राधान्येनावलम्बते ।

महापण्डितस्यास्यैतिह्यविषये स्पष्टतया न किमपि वक्तुं शक्यते । केचनामु दाक्षिणात्यं मन्यन्ते कतिपयं तूत्तरखण्डभवमपि । स्वविषये कविर्मौनमेवालम्बते पण्डितेतरवत् । एतावदेव निश्चीयते यत्कविरसौ माघपूर्ववर्ती कालिदासपरवर्ती च । सम्प्राप्ताभिलेखेषु पुलकेशिनो द्वितीयस्य चालुक्यवंशस्य शासनकाले रविकीर्तिना समुट्टङ्किते शिलाभिलेखे कविरयं कालिदासेन सह स्मृतो दृश्यते । यथा—

१७. ....................

येनायोजि नवेश्यस्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः ॥३७॥ इति ।

१८. ....................

शिलालेखोट्टङ्कनसमयश्चेत्थं निर्दिष्टः—

१९. ....................

त्रिंशत्सु त्रिसहस्रेषु भारतादाहवादितः ।
सप्ताब्दशतयुक्तेषु गतेष्वब्देषु पञ्चसु ॥३३॥
पञ्चाशत्सु कलौ काले षट्सु पञ्चशतासु च ।
समासु समतीतासु शकानामपि भूभुजाम् ॥३४॥

महाभारतयुद्धकालतः ३०३० वर्षानन्तरं, कलेः ३०३०+७०५=३७३५ मितवर्षे शककालात् ५५६ वर्षेषु व्यतीतेषु चेत्यस्याशयः । कलेः ६३६ वर्षेषु व्यतीतेषु युधिष्ठिरो जनिं लेभे । महाभारतयुद्धे सोऽशीतिवर्षवयस्क आसीत् । तेन हि कलेः ७२६ वर्षेषु व्यतीतेषु महाभारतयुद्धं प्रवर्तितमासीत् । तथैव नृपविक्रमार्कात् १३५ वर्षेषु यातेषु शकयुगः प्रवर्तितो मन्यते । तेन शकाब्दक्रिष्टाब्दयोरपि ७८ वर्षाणामन्तरं विद्यते । अतोऽस्य कालः ६७१ मितवैक्रमाब्दमभितो दृश्यते । तदा कालिदासमकक्षमेव ख्यातिकीर्तिना

कविना न्यूनमपि ततः शताब्दीपूर्ववर्तिना तु भाव्यमेव। अपरञ्च विक्रमानन्तर ७०७ मितवर्षाण्यभितः प्रणीतायामष्टाध्याय्याः काशिकावृत्तौ 'संशय्य कर्णादिषु तिष्ठते यः' इति भारवीयं पद्यमुदाहृतं दृश्यते। तेन न कथमपि भारविना तत्परवर्तिना भाव्यम्। अवन्तीसुन्दरीकथानुसारेण भारविर्हि विष्णुवर्धनाऽऽख्यस्य कस्यचिन्नृपस्य सभापण्डितः आसीदिति ज्ञायते। यथोक्तं तत्र—

स मेधावी कविर्विद्वान् भारविः प्रभवो गिराम्।
अनुरुध्याऽकरोन्मैत्रीं नरेन्द्रे विष्णुवर्धने॥ इति।

केचिदत्र भारविशब्दं द्वितीयान्तमपि पठन्ति। तथैवाऽप्यस्तु। कोऽसौ विष्णुवर्धन इत्यपेक्षायां समालोचकास्तं पुलकेशिनोऽनुजं मन्यन्ते येन हि ६७२ मितवैक्रमाब्दे श्रीहर्षः पराजितः। वस्तुतस्तु तर्कोऽयं तथ्येन सह नैव संवदते। यतो हि—

११. अपरिमितविभूतिस्फीतसामन्तसेना-
मुकुटमणिमयूखाक्रान्तपादारविन्दः।
युधि पतितगजेन्द्रानीकबीभत्सभूतो
भयविगलितहर्षो येन चाकारि हर्षः॥२३॥

इति ऐहोलाभिलेखे स्मृतं दृश्यते। यदि हि पुलकेशिनोऽनुजस्य विष्णुवर्धनस्य सभासत्त्वेन भारविर्गृह्यते तदा तस्य रविकीर्तेरपि परकालिकत्वमापतेत्। तेन हि यदि भारवेर्विष्णुवर्धनाख्यस्य सभापण्डितत्वमेव मन्येत तदाऽपि विष्णुवर्धनेन केनाऽप्यन्येन पुलकेशिपूर्ववर्तिना भाव्यम्। कतिपये तु बाणेन हर्षचरिते स्वपूर्ववर्तिकविप्रसङ्गे भारविर्नैव स्मृतोऽतस्तेन बाणपरवर्तिना भाव्यमित्यपि निर्दिशन्ति। सत्यमेतावन्मात्रमत्र यद्बाणो भारविं नाम्ना नैव स्मरति। बाणो हर्षसभापण्डितः। तेन हि बाणरविकीर्त्योः समकालिकत्वमेव सिध्यति। श्रीहर्षो हि सम्राट् ६६२ मितवैक्रमाब्दे साम्राज्येऽभिषिक्तः ७०५ मित वैक्रमाब्दे निर्माणमाप्तवान्। बाणस्तु हर्षनिधनानन्तरमपि जीवित आसीत्। ६७१ मितवैक्रमाब्दे रविकीर्तिना तथाऽऽदृतो भारविर्यदि बाणेन नैव स्मृतश्चेत्तद् बाणस्यैव दोषो वा तदुपेक्षा। सम्भवति कान्यकुब्जेश्वरसभासद्भूतो बाणो भारविं नैव जानाति स्म तथा वा तं समुल्लेखनीयं नैव मन्यते स्म। भारवेः प्रसिद्धिरधिकरूपेण दाक्षिणात्यप्रदेश एवाऽऽसीत्तदानीम्। अस्मद्विचारे तु बाणो भारविं जानन्नपि केनाऽपि कारणेन नैव तत्रोल्लिखति स्म। यतो हि ७०७ मितवैक्रमाब्दाद्भितः प्रणी-

तायां काशिकायां स्वकथनदाढर्चाय 'संशय्य कर्णादिषु तिष्ठते यः' इति भारवेर्वचनं काश्मीरौ जयादित्यवामनौ परमप्रामाणिकत्वेनोद्धरतस्तत्समकालीन एव प्रीसिकूटवासी बाणो नैव तज्जानातीति नैव विश्वासभूमिः। तत्र प्रादेशिकताऽपि कारणत्वेन सम्भवति। यतो हि न केवलं बाणोऽपि तु ध्वन्यालोककृदपि भारविं नैवोद्धरति किन्तु बाणभट्टं बहुशः। विद्वत्प्रसिद्धिरपि भारविं बाणपूर्ववर्तिनमेव समर्थयति। यथा—

मेण्ठे स्वर्द्विरदाधिरोहिणिवशं याते सुबन्धौ विधेः।
शान्ते हन्त च भारवौ विघटिते बाणे विषादस्पृशः॥
( मङ्खस्य श्रीकण्ठचरिते २।५३ )

दण्डिनः—

वंशवीर्यप्रतापादीन् वर्णयित्वा रिपोरपि।
तज्जयान्नायकोत्कर्षकथनं च धिनोति न॥

इति कथनं (काव्यादर्शे १।१२) भारवेः किरातार्जुनीये प्रतिभटकिरातवर्णनं लक्षयति इति समालोचका वदन्ति। सति तथा भारवेर्दण्डिनोऽपि पूर्ववर्तित्वं सिध्यति।

एवमेव दुर्विनीताख्येन कोङ्कणनरेशस्याविनीतस्य पुत्रेण किरातार्जुनीयस्य पञ्चदशसर्गस्य टीका प्रणीताऽऽसीत्। स च राजा ६३७ मितवैक्रमाब्दमभितः स्थितिवानासीत्। अनेनापि भारवेस्तत्समये प्रसिद्धिः सिध्यति। दण्डिप्रणीतत्वेन प्रसिद्धायामवन्तिसुन्दरीकथायां कथितम्—

"को हि नाम भगवतीं भवितव्यतामतिक्रम्य यथासमीहितेन साधयति यथा यतः कौशिककुमारं महाशैवं महाप्रभावं गवां प्रभवं प्रदीप्तभासं भारविं रविमिवेन्दुरनुरूप्यदर्श इव पुन्यकर्मणि विष्णुवर्धनाख्ये राजसूनौ प्रणयमन्वबध्नात्।" इति।

दण्डिनः कथनमिदमादाय पण्डिता भारविनं दण्डिनः प्रपितामहं मन्यन्ते। उक्तं हि यद भारविरस्योपाधिः, जन्मनाम तु दामोदरः। असौ हि नारायणस्वामिनः पुत्रः। तस्य पुत्रो मनोरथाऽऽख्यः। तस्य च वीरदत्तादयश्चत्वारः सुताः। वीरदत्तस्य गौर्याख्यायां पत्न्यां जातो दण्डीति। एतेन भारवेर्दामोदरस्य चैक्यं सिध्यति। किन्तु नैतद्विश्वासभूमिः। न च दण्डिना तत्समर्थितं यत्र कुत्रापि न च किरातार्जुनीयव्याख्यातारश्च तत्स्मरन्ति। एतेन भारवेर्दण्डिपूर्ववर्तित्वं तु सूच्यत एव।

एवञ्च सन्ति कतिपयानि वचनानि यैर्भारवेर्माघपूर्ववर्तित्वं संसूच्यते।

यथा— "तावद्भा भारवेर्भाति यावन्माघस्य नोदयः।"
"उपमा कालिदासस्य भारवेरर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः॥"

नैतावन्मात्रमपि तु बृहत्त्रय्यां किरातार्जुनीयस्यैव नाम प्रथमं गृह्यते तदनन्तरमेव शिशुपालवधनैषधीयचरितयोः।

एभिरन्यान्यैश्च प्रमाणैरनुमीयते यद्भारविर्हि न्यूनतमपि विक्रमानन्तर षष्ठशतके स्थितिवानासीत्। तस्य स्थितिकालः कविजीविते ५८५ मितवैक्रमाब्दमभितोऽनुमितः। तस्य हि हंसराजानुसारेण ६०७ मितावैक्रमाब्दः स्थितिकालः। वयं हि राजशेखरस्य

इह कालिदासभर्तृमेण्ठावत्रामररूपसूरभारवयः।
हरिचन्द्रचन्द्रगुप्तौ परीक्षिताविह विशालायाम्॥

इति कथनमादृत्य भारविं विक्रमानन्तर ५००-५८० मितवर्षान्तरालवर्तिनं मन्यामहे बाणान्न्यूनतममपि शताधिकवर्षपूर्ववर्तिनम्।

न केवलं स्थितिकालस्यापि तु कवेरस्य देशविषयेऽपि तथैवान्धकारो विद्यते। राजशेखरानुसारेणासौ विशालायां परीक्षित आसीत् किन्तु नैतावताऽस्य देशो निर्णेतुं शक्यते। अधिकांशतः पण्डिता अमुं दाक्षिणात्यं मन्यन्ते किन्तु अस्य शरद्धिमालययोर्वर्णनं तु कविममुमौत्तरीयमेव सूचयति। अस्य हि सह्याद्रिप्रसंगमालोक्य केचित्तं महाराष्ट्रीयं मन्यन्तेऽन्ये तु तद्वाचोयुक्तिमेव मन्यन्ते।

भारवेः कृतित्वेन सम्प्रति किरातार्जुनीयमेव लभ्यते। एतदनुमीयते यदेतादृशस्य महाप्रतिभासम्पन्नस्य कवेः स्युरेव तदितरा अपि कृतयः कालेन कवलिताः।

किरातार्जुनीयं हि सर्वविधलक्षणोपेतं महाकाव्यम्। अत्र हि सन्ति अष्टादशसर्गाः सम्प्रति समुपलब्धाः। महाभारतस्य वनपर्वणि समुल्लिखतमर्जुनस्य पाशुपतास्त्रप्राप्तिवृत्तान्तमादाय निबद्धमिदं महाकाव्यं भावपक्षापेक्षया कलापक्षमेव समधिकं पुष्णाति। द्यूते पराजितो युधिष्ठिरः सानुजः सभार्यः संविदानुसारेण वनवासनिमित्तं द्वैतवनं प्रविशति। तत्र स्थितः स दुर्योधनवृत्तान्तज्ञानाय कञ्चित्किरातं वर्णिरूपेण हस्तिनापुरं प्रेषयति। ज्ञातवृत्तश्च स द्वैतवनमागत्य सर्वं राज्ञे निवेदयति। युधिष्ठिरोऽपि तत्सर्वं भ्रातृभ्यः श्रावयति। विपक्षस्योत्कर्षमसहमाना पाञ्चाली पतिं धिक्कृतवती

सती युद्धाय प्रेरयति। प्रियोक्तं द्रढयन् भीमोऽपि तं धैर्यमपहाय विक्रमाय प्रेरयति। युधिष्ठिरश्च तं सान्त्वयन्नेव व्यासेन निर्दिश्यते फाल्गुनाय दिव्यास्त्रलाभाय प्रेषयितुम्। तत्परामर्शानुसारमेवार्जुनस्तपसे हिमालयं प्रविशति यक्षेण सह। इन्द्रकीलपर्वतं गत्वा तपसि रतोऽर्जुनो: विघ्नैः प्रतिहन्यमानोऽपि स्वलक्ष्यान्नैव विचलति। तं परीक्षितुं त्र्यम्बकः किरातवेषेण तत्रागच्छति। उभावेव समकालं मायाविनं शूकरं प्रहरतः। तस्य निधनकारणमादाय तयोर्विवादः समुत्तिष्ठते। युद्धे पराजितोऽप्यर्जुनः स्वप्रयासं नैव जहाति। तेन परमप्रीतः शङ्करस्तस्मै पाशुपतास्त्रं ददाति। काव्यमिदमालक्ष्य मल्लिनाथः कथयति —

नेता मध्यमपाण्डवो भगवतो नारायणस्यांशजः
तस्योत्कर्षकृते नु वर्ण्यचरितो दिव्यः किरातः पुनः।
शृङ्गारादिरसोऽङ्गमत्र विजयी वीरः प्रधानो रसः
शैलोद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम्।। इति

चतुर्दिग्विकसितप्रतिभावानसौ कविः स्वल्पेनैव वस्तुमाध्यमेन समग्रमेव दर्शनमत्र समाक्षिप्तवानासीत्। काव्येऽस्मिन् वनेचरमुखाद् दुर्योधनशासनवृत्तान्तवर्णनं द्रौपदीवाक्यं, भीमगर्जनं, युधिष्ठिरस्य नीतियुक्तवचनं, अर्जुनप्रस्थानसमये द्रौपदीवाक्यं, शरद्वर्णनं, हिमालयवर्णनं, गन्धर्वाप्सरसां विलासवर्णनं, उद्यानजलक्रीडा, सायंचन्द्रोदय-सुरत-प्रभातादिवर्णनं, शिवार्जुनयोर्युद्धवर्णनं, चोत्तरोत्तरं प्रातिस्विकोत्कर्षं जनयन्ति।

कथ्यते हि भारविः भाषा-भाव-सौन्दर्य-रससिद्धिवर्णनाचातुरी-शास्त्रीयपाण्डित्यादिविविधपक्षाणामेकाश्रय इति। तस्य हि भावानुसारी शब्दप्रयोगः, अर्थगौरवं, उदात्तकल्पना च तं कविषु श्रेष्ठं भावयन्ति। स हि सर्वानेव रसान् साधु साधयति विविधानि च्छन्दांसि च। तस्य भाषायां माधुर्यप्रौढतयोरपूर्वः समन्वयो दृश्यते। भावपक्षं न तथोपेक्षमाणोऽपि कविरसौ प्राधान्येन कलापक्षधरः। पञ्चदशसर्गे तस्य शब्दविलासो दर्शनीयः। तत्र कतिपये श्लोका एकाक्षरिणः सन्ति। यथा—

न नोननुन्नो नुन्नोनो नाना नानानना ननु।
नुन्नोऽनुन्नो ननुन्नेनो नानेनानुन्ननुन्ननुत्।। इति।

तथैव—

ससासिः सासुसूः सासो येया येया ययाययः।
ललो लीलां ललोऽलोलः शशीशशिशुशी शशन्।। (१५।४)

द्व्यक्षरं यथा—

चारचञ्चुश्चिरारेची चञ्चच्चीररुचारुचः।
चचार रुचिरश्चारु चारैराचारचञ्चुरः॥ (१५।३८)

चित्रकाव्यप्रणयनस्य त्वयं प्रवर्तक एव। अमुमेवानुवृत्य पश्चाद्वर्तिनो माघरत्नाकराद्याः कवयस्तथा प्रावर्तयन्त काव्यस्य चित्रत्वम्। सत्यपि शब्दविलासप्राचुर्ये भारवावकृत्रिमं नाम न किञ्चिदस्ति। स स्वयमेव कथयति—

अकृत्रिमप्रेमरसाभिरामं रामार्पितं दृष्टिविलोभि दृष्टम्।
मनःप्रसादाञ्जलिना निकामं जग्राह पाथेयमिवेन्द्रसूनुः॥ (३।३७)

तथैव—

स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्॥ (२।२७) इति।

राजनीतौ प्रावीण्यं यथा—

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः।
व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः॥ (१।४२)

प्रकर्षतन्त्रा हि रणे जयश्रीः
सखीनिव प्रीतियुजोऽनुजीविनः समानमानान् सुहृदश्च बन्धुभिः।
स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुताम्॥
'गुरूपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्मविप्लवम्।'

अस्य हि व्याकरणज्ञानं तु पूर्ववर्तिनं कालिदासमूर्ध्ववर्तिनं माघमपि अतिवृत्य तिष्ठति। स हि अनद्यतने लङमेव प्रयुनक्ति न लुङम्, एवमेव पुरावृत्तवर्णने एव लिट् प्रयुक्तः। अद्यतनभूतार्थकलुङ् तु दशकृत्व एव प्रयुक्तो यदा माघेन २७२ कृत्व इति समालोचकाः। कालिदासस्तु सर्वत्र सामान्येन प्रयुनक्ति।

छन्दःप्रयोगेऽप्यस्य महत्कौशलं दृश्यते। तस्य वंशस्थचारुत्वं प्रशंसन् क्षेमेन्द्रः कथयति—

वृत्तच्छत्रस्य सा काऽपि वंशस्थस्य विचित्रता।
प्रतिभा भारवेर्येन सच्छायेनाधिकीकृता॥ इति।

अप्रसिद्धमपि उद्गताप्रभृतिवृत्तमसौ साधु प्रयुनक्ति। असौ हि एकस्मिन्नेव सर्गे षोडशविधानि छन्दांस्यपि प्रयुक्तवान् यथा पञ्चमे।

अलङ्कृतशैल्युन्नायकस्याऽप्यस्य भाषा सरला हृद्या च विद्यते। घटे सागरमेव समावेशयन्नप्यसौ स्पष्टतां न मुञ्चति। कथितमेव—

प्रदेशवृत्त्यापि महान्तमर्थं प्रदर्शयन्ती रसमादधाना।
सा भारवेः सत्पथदीपिकेव रम्या कृतिः कैरिह नोपजीव्या॥ इति।

मल्लिनाथः कथयति—

नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभज्यते।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्॥ इति।

सूक्तिप्रियः कविरसौ सूक्तिमुक्तानां मालामेव ग्रथ्नाति। तस्य हि काव्यस्याधिकांशभागः सूक्तिमयः। यथा 'हितं मनोहारि च दुर्लभं वचः', 'न वञ्चनीयाः प्रभवोऽनुजीविभिः', 'प्रकर्षतन्त्रा हि रणे जयश्रीः', 'अविवेकः परमापदां पदम्' इत्यादि।

अर्थगौरवं तु तस्य वैशिष्टयेषु प्रकृष्टमेव। किन्त्वेतेन नैवेदमवधेयं यदस्य काव्ये सर्वत्रागम्यता एवास्ति। अर्थगौरवस्यात्रायमेवाशयो यत्स सुदीर्घमपि पन्थानं स्वल्पेनैव प्रयासेन पारयति। यथा हि—

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः॥ इति।

साधूक्तं समालोचकैर्यद्भारवेः काव्यं कालिदासीयेन सह साम्यं नैवाप्यधिगच्छेत्तथापि तत्र ललितपदावल्या अर्थगाम्भीर्यस्य च मञ्जुलसमन्वयः काञ्चनमणिसंयोगमनुहरति। कटुसत्यवादी कविरसौ द्रौपदी मुखेन कथयति—

'प्रत्यागतं त्वास्मि कृतार्थमेव स्तनोपपीडं परिरब्धुकामा।' इति।

वस्तुतस्तु अकृतार्थं प्रत्यागतमपि न कोऽपि समनोयोगं गृह्णाति। तथाकथनेनासौ 'सर्वे नन्दन्ति यशसाऽऽगतेन समासाहेन योधमुख्येन वीरः' इति श्रुतिवाक्यमनुहरति। तथैव—

'विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः सन् जुहुधीह पावकम्।'

धनुर्भृता तु विक्रमितव्यमेव वस्तुतः।

यथा हि 'सञ्चारिणी दीपशिखेव रात्रौ' इति कथनेन कालिदासो दीपशिखाविशेषणमुपार्जयद्यथा वा माघो घण्टामाघ इति तथैव भारविरपि आतपत्रभारविरित्युच्यते पद्येनानेन—

उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतः सरसिजसम्भवः परागः।
वात्याभिर्वियति विवर्तितः समन्तादाधत्ते कनकमयातपत्रलक्ष्मीम्॥(५।३९)

भारविः कर्मणि विश्वसिति न तु भाग्ये। स द्रौपदीमुखनाऽस्य सुन्दरमुदाहरणं प्रस्तौति। यथा—

करोति यः सर्वजनातिरिक्तां सम्भावनामर्थवतीं क्रियाभिः।
संसत्सु जाते पुरुषाधिकारे न पूरणी तं समुपैति सङ्ख्या॥ इति।

न हि यत्र प्रविशति तत्र तेनैव रूपेण मिलति। इदमेव भारवेः साफल्यस्य रहस्यम्। स हि ग्राम्यजीवनवर्णने ग्रामीण एव भवति राजनीतौ तु अमात्य एव। गोपालमधिकृत्य स कथयति

गतान् पशूनां सहजन्मबन्धुतां गृहाश्रयं प्रेम वनेषु बिभ्रतः।
ददर्श गोपानुपधेनु पाण्डवः कृतानुकारानिव गोभिरार्जवे॥ इति।

वस्तुतो ग्रामकामो गोपालो वनकामश्च नापितो व्यर्थ एव।
तस्येद कथनं वस्तुतो यथार्थं तस्य काव्ये—

भवन्ति ते सभ्यतमा विपश्चितां मनोगतं वाचि निवेशयन्ति ये।
नयन्ति तेष्वप्युपपन्ननैपुणा गभीरमर्थं कतिचित्प्रकाशताम्। (१४।४)

'विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम्।

सत्स्वपि विविधेषु गुणेषु भारविर्यदा कदा स्वीयमुत्कर्षमपि विस्मृत्य तथा करोति येन तस्य कृतेः काव्यत्वमपि हीयते। अलङ्कारभारेण यत्र कुत्र चित्रत्वेन काव्यार्थो व्याहतो दृश्यते। तथैव शृङ्गारवर्णने रसोचिततरलतायाः स्थानमैन्द्रियप्रकर्षो गृह्णाति। विविधच्छन्दसां प्रयोगो भारायैव दृश्यते यथा पञ्चमस्कन्धे। यत्र कुत्र वार्ता पात्रयोग्यतामतिवर्तते। तथापि तस्य काव्यस्योत्कर्षस्तु न केनाऽप्यपह्नोतुं शक्यते। आचार्यपण्डितयुगयोः सेतुत्वेन पण्डितयुगस्य प्रवर्तकोऽयं कविः स्वप्रयासे सफलो दृश्यते पश्चाद्वर्तिभिर्बहुशोऽनुक्रियते च।

१८. भट्टिः

शास्त्रकाव्यस्य प्रणेतृषु भट्टिर्द्वितीयः कविर्महाकाव्यस्य निर्मातृषु ज्ञातेषु चतुर्थः। तस्य हि रावणवधं नाम महाकाव्यं प्रसिद्धम्। भट्टेरैतिह्यं नाद्यापि सम्प्रज्ञातं तेन तद्विषयेऽपि वयमनुमानमेवाश्रयामः। स हि रावणवधस्य द्वाविंशतिसर्गस्य पुष्पिकावाक्ये कथयति—

काव्यमिदं विहितं मया वलभ्यां श्रीधरसेननरेन्द्रपालितायाम्।
कीर्तिरतो भवतान्नृपस्य तस्य क्षेमकरः क्षितिपो यतः प्रजानाम्॥३५॥

इति। अनेनैतावत्तु ज्ञायते यद्भट्टिर्हि सौराष्ट्रस्य वलभीनगर्यां शासति

श्रीधरसेनाऽऽख्ये नृपे काव्यमिदं प्रणीतवानिति । बलभ्यां हि श्रीधरसेनाख्या श्चत्वारो राजान आसन्निति पुरावृत्तविदो वदन्ति । तेषु हि प्रथमः ५५९ मितवैक्रमाब्दमभित आसीत्, द्वितीयश्च ३६७ मितवैक्रमाब्दमभितो यदा चतुर्थः ६९८ मितवैक्रमाब्दमभितः । कथ्यते हि द्वितीयस्य श्रीधरसेनस्य समये भट्टिः स्थितिमानासीत् । तस्य ह्येकस्मिन् शिलालेखे ६६७ मितवैक्रमाब्दोट्टङ्किते भट्टिसंज्ञकब्राह्मणाय भूमिदानविवरणमुल्लिखितं दृश्यते । तेन हि भट्टेरपि स एव स्थितिकालो विक्रमस्य सप्तमशतकमितः ।

भट्टिमधिकृत्य समालोचका नैकमत्यं भजन्ते । केचन वाक्यपदीयस्य कर्तुः शतकत्रयस्य प्रणेतुः भट्टेश्चैक्यमिच्छति । तेषां मते हि भट्टिशब्दो भर्तृहरिशब्दस्यापभ्रंश एव नान्यः । अपरेषां मते तु अन्य एव वाक्यपदीयकारश्चान्य एव शतकत्रयस्य कर्ता । ततोऽपिभिन्नो भट्टिः । अष्टाध्याय्या भागवृत्तिकर्ता महाभाष्यस्य व्याख्याता भर्तृहरिश्चान्य एवेति । भागवृत्तौ भट्टिकाव्यं दूषणायोद्धृयत इति भट्टिकवेः भागवृत्तिकारस्य चैक्यं तु काल्पनिकमेव । तस्य च वाक्यपदीयकारेण सहैक्यमपि न समीचीनं प्रतिभाति । यदि तथा वाक्यपदीयेऽपि श्रीधरसेनः स्मृतः स्यात् । यथार्थसत्यं तु गुहायां निहितम् । वयं सामान्यतो भट्टिं भर्तृहरेः पृथगेव व्यक्तित्वं मत्वाऽग्रेसरामः । भट्टिकविसमये प्राकृतसाहित्यं संस्कृतसाहित्यापेक्षया समधिकं समुन्नतमासीत् । व्याकरणस्य सारल्येन जनानामभिरुचिः प्राकृतं प्रत्याकर्षितासीदिदानीम् । न कोऽपि जनः पाणिनीयं हि शास्त्रमधिकर्तुं परायण आसीत् । तेनैव हि व्याकरणविचक्षणेन भट्टिकविना व्याकरणसम्बद्धनियमानां सरलतमेनोपायेन शिक्षणाय काव्यमिदं प्रणीतं यतः सुकुमारमतीनामपि तत्र प्रवेशः सुकरो भवेदिति ।

भट्टिकाव्यं द्वाविंशतिसर्गेषु विभक्तमस्ति । अत्र हि दशरथवर्णनादारभ्य रामराज्याभिषेकपर्यन्ता कथा निबद्धाऽस्ति । स्वरूपेण काव्यमपि ग्रन्थोऽयं व्याकरणप्रयोगदृष्टया गुम्फितत्वात्तत्र सर्गाणां विभाजनमपि व्याकरणदृष्टयैव कृतं दृश्यते । सर्गाश्च प्रकीर्णाधिकारप्रसन्नतिङन्तेतिचतुःकाण्डेषु विभक्ताः । प्रकीर्णे हि आदिमपञ्चसर्गाः सन्ति यत्र दशरथवर्णनादारभ्य रामवनगमनपर्यन्ता कथा निबद्धाऽस्ति । नाम्नैव प्रकीर्णकेऽस्मिन् काण्डे नैव सुनिश्चिता प्रयोगयोजना । अधिकारकाण्डे षष्ठसर्गादारभ्य नवमसर्गपर्यन्ताश्चत्वारः सर्गाः सन्ति यत्र हि निश्चितप्रयोगयोजना दृश्यते स्थाने स्थाने प्रकीर्णकमपि । षष्ठे हि दुहादिद्विकर्मकधातुप्रयोगा निर्दिष्टाः । तथैव

सप्तमे ताच्छीलिककृत्प्रयोगाः भावे कर्तरि च प्रयोगा निर्दिष्टाः। अष्टमे आत्मनेपदाधिकारो व्याख्यातो यदा नवमेऽनभिहितेऽधिकारश्चर्चितः। प्रसन्नकाण्डेऽपि तदनुवर्तिनश्चत्वारः सर्गाः सन्ति यत्र हि दशमे शब्दार्थालङ्काराणां भेदोपभेदनिदर्शनं विहितम्। एकादशे माधुर्यस्य, द्वादशे भाविकस्य, त्रयोदशे भाषासमसंज्ञकश्लेषभेदस्य प्रदर्शनं कृतमस्ति। चतुर्थे हि तिङन्तकाण्डे चतुर्दशसर्गादारभ्य द्वाविंशतिसर्गपर्यन्ता नव सर्गाः सन्ति यत्र हि नवानां लकाराणां प्रयोगा निदर्शिताः सन्ति।

किन्तु नैतावतैतदवधेयं यद्रावणवध हि केवलं व्याकरणग्रन्थः। अत्र हि शास्त्रकाव्ययोः प्राञ्जलः समन्वयो दृश्यते। अत्र ह्येकतः काव्योचितसरसतादिगुणा भ्राजन्तेऽपरतश्च व्याकरणसम्मतप्रयोगानामापणमपि विलसति। तेन ह्ययं ग्रन्थः कवित्वपाण्डित्ययोः सुन्दरः सङ्गमः। तत्रापि प्राधान्यमत्र काव्यपक्षस्यैव दृश्यते यतो व्याकरणनियमस्य तु तत्पूरणार्थमेव निदर्शनं कृतमस्ति। तेन प्रथममिदं काव्यं ततश्च शास्त्रम्। अस्य हि रसपरिपाकः, अलङ्कारयोजना, प्रकृतिचित्रणं वस्तुविसर्पणञ्च कवेरस्य कवित्वशक्तिमितरकविशक्तितोऽपि कथमप्यन्यूनां समर्थयन्ति। काव्येऽस्मिन् समुपस्थापितं शरद्वर्णनं दृष्ट्वा को नाम सचेता न मुह्यति। अत्र वीरो रसोऽङ्गी शृङ्गारश्चाङ्गमेव। भट्टिर्हि वस्तुसंघटनायामितिवृत्तनिर्वाहे च कालिदासमनुसरति। द्वादशसर्गे प्रबद्धा राजनीतिचर्चा भारविं स्मारयति। अस्य हि व्यञ्जनाप्रणालीमत्र निभाल्यताम्---

न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्ज यत्कलं न गुञ्जितं तन्न जहार यन्मनः॥

इति। व्यर्थमेव तज्जलं यत्र नो कमलं, निस्सारमेव तत्कमलं यत्र नो भ्रमरः, धिक्तं भ्रमरं यो मधुरं न गुञ्जति, वृथा तद्गुञ्जनं यन्मनो न हरति इत्यस्याशयः। तथापि तत्र व्याकरणस्यापि तावदेव प्राधान्यमस्त्येव। स स्वयमेव कथयति —

दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम्।
हस्तादर्श इवान्धानां भवेद् व्याकरणादृते॥ (२२।२३)।

अपि च---

व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम्।
हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया॥ इति।

पद्यमिदमादाय समालोचका भामहीयं—

काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत् ।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः ॥

इति पद्यं भट्टेरनुकृतौ गुम्फितमिति वदन्ति । अन्येषां तु का कथा द्विजेन्द्रनाथोऽपि तथैव मन्यते । यथाऽऽह स—

………… "इति भट्टिकाव्यादुद्धृतेन पद्येन सुतरां व्यज्यते यद् भामहात्पूर्वकालभव एव भट्टिरासीदिति ।" ( संस्कृत० ४५० तमपृष्ठे ) एवमेव हंसराजोऽपि चिन्तयन्ति ( संस्कृत० १०० तमपृष्ठ ) । एवमेव कपिलोऽपि । ( संस्कृत० २३९ तमपृष्ठे ) । किन्तु विश्वनाथोऽत्र विप्रतिपद्यते । तदनुसारेण व्याख्यागम्यकाव्यस्य काव्याचार्यकृतनिन्दां दृष्ट्वा तन्निराकरणाय भट्टिनेदमुक्तम् । तेन नैव भामहो भट्टिमनुसरति ! स तु भट्टेस्तु का कथा बाणभट्टादपि पूर्ववर्तीति विद्वांसो मन्यन्त इति । (संस्कृत० ९५ तमपृष्ठे ।) वयं तु सादरं तत्त्वान्वेषणाय प्रार्थयामः समालोचकान् । न हि तथ्यं सर्वत्र गतानुगतिकत्वमेव भजते । यदि कश्चिद्विचक्षणो भामहीयं काव्यालङ्कारं निभृतं पठति तदा स तथ्यं स्वयमेवाविष्करोति । भामहेन पद्यमिदं रामशर्मणोऽच्युतोत्तरमादाय कथितमिति तत्र प्रसङ्गेनापि स्पष्टमेव । यथोक्तं तत्र—

नानाधात्वर्थगम्भीरा यमकव्यपदेशिनी ।
प्रहेलिका सा ह्युदिता रामशर्माऽच्युतोत्तरे ॥
काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत् ।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः ॥
(काव्यालङ्कारे० २।१९, २०)

भट्टिस्तु ततोऽपि पञ्चशतीपश्चाद्वर्तीत्यपि स्पष्टमेव विदुषाम् । यदि तथापि मन्येत यद्भामहो भट्टिमनुसरति तदा तथाकथनस्य भट्टेः किं प्रयोजनं सम्भवति । सम्भवतो न किमपि । स तु तत्काव्यं दूषितं न मन्येतेत्याशयेन स्वयमेव तदुद्घोषयति यन्मया ज्ञानादेव तथा कृतमिति । तेन स्पष्टमेव तथाकथनेन भट्टिर्भामहीयंकथ नं स्मरति न तु भामहो भट्टिम् । अपरञ्च भट्टिः स्वयमेवालङ्कारनिवेशने भामहीयं ग्रन्थमनुसरति इत्यपि न विस्मर्तव्यम् । यदि नाम भामहो हि भट्टेः परवर्ती भवेत्तदा भट्टिकाव्यतोऽपि सन्दूषणायापि कतिपयोदाहरणानि गृहीतानि स्युः यथा रामशर्मणो राजमित्रात्किन्तु यथार्थतो न तथा । अतो भट्टेः भामहपूर्ववर्तित्वं कथमपि न सिध्यति । समालोचकास्तु सदा स्वतन्त्रा एव कामं ते यथाकामं कथयन्तु नाम ।

ग्रन्थस्यास्य सन्ति पञ्चदशाधिकाष्टीकाः यासु मल्लिनाथस्यैका, जयमङ्गलस्य जयमङ्गला, भरतमल्लिकस्यापरा प्राचीनाः प्रसिद्धाः कतिपयाः आधुनिकासु शेषराजस्य चन्द्रकला, गोपालशास्त्रिणश्चैका, लोकमणिदाहालस्य कला च ज्ञाताः।

भट्टिविषयेऽयमपि अपरो भ्रमः समालोचकेषु यत्ते नामसादृश्यादेव गुप्तकालभवस्य बन्धुवर्मणो मन्दसारस्थशिलालेखस्य लेखकस्य वत्सभट्टेरेव रावणवधकारेण भट्टिना सहैक्यं वाञ्छन्ति। किन्तु ते विस्मरन्ति यत्तत्र वत्सभट्टेर्व्याकरणस्खलितानि तथाभवनेऽर्गलायन्ते। कथं नाम महावैयाकरणो भट्टिस्तथाविधत्रुटिमवलम्बेत। तेनायमपि मतः काल्पनिकः प्रतिभाति।

भट्टिभूमकयोर्विषयेऽप्ययमेव विवादः। वस्तुतस्तु संस्कृतकाव्यानां काव्यकाराणां चाधिकृत इतिहासः सम्प्रत्यपि नैव सुबद्धोऽस्ति। तेन यस्मै यद्रोचते स तथैव कथयति यथा वयमपि। भट्टिर्भूमकमनुसरति। स हि प्रथमः शास्त्रकविरित्येकः पक्षः। भूमक एव भट्टिमनुसरतीत्यपरः पक्षः। प्रथमपक्षधराणां मते भूमकस्य भीमस्य रावणार्जुनीयं वाऽर्जुनरावणीयं हि काशिकावृत्तौ समुद्धृतमस्ति। तेन हि भूमको न्यूनतमपि वैक्रमपञ्चमशतकमभितो हि स्थितिमान्। भट्टिस्तु ततोऽपि नितान्तपरवर्तीति। निबन्धनदृष्ट्याऽपि तथैव सिध्यति यतो हि भट्टिकाव्यं स्वप्रयासे नितान्तसफलं दृश्यते यदा रावणार्जुनीयं तदपेक्षयाऽधरीकृतमेव। तेन रावणार्जुनीयस्य प्रयासेऽस्मिन् प्राथम्यं सिध्यति यतो हि प्राप्तलाभो भट्टिः स्वप्रयासे सफलीभूतः। सत्यपि भट्टेर्भूमकपूर्ववर्तित्वे तस्य शास्त्रकविपरम्परायां प्रथमत्वं तु नैव सिध्यति। यतो हि एतादृशानि काव्यानि आचार्ययुगेऽप्यासन्नेव पाणिनिव्याडिकात्यायन(वररुचि)-पतञ्जलि-प्रभृतिप्रणीतानि।

असिध्यत्यपि तस्य शास्त्रकवित्वे प्राथम्ये भट्टिर्हि प्रक्रमेऽस्मिन् नितान्तसफलः कविरितरापेक्षया। वासुदेवो हि तमनुकरोति वासुदेवविजये धातुकाव्यकारश्च। तस्य हि शास्त्रकाव्यसम्मेलनं वर्णनातीतमेव। यथा—

रामोऽपि दाराहरणेन तप्तो वयं हतैर्बन्धुभिरात्मतुल्यैः।
तप्तेन तप्तस्य यथा तथा नः सन्धिः परेणास्तु विमुञ्च सीताम्॥ इत्यादि।

केचिद्भट्टिकाव्ये स्वाभाविकापेक्षया कृत्रिमतायाः आडम्बरस्य च प्राधान्यं कथयन्ति। सत्यपि तथा व्याकरणलक्ष्यस्य कवेर्न तन्महान् दोष इत्यपरे। वयं तु तादृशी कृत्रिमता काव्यसामान्येऽपि लभामहे किमुत

जटिलव्याकरणसम्बद्धे ग्रन्थे। काव्यस्यास्य माधुर्ये तत्सर्वं विलीयते। गुणसन्निपाते कश्चिद्दोषस्तु निमज्जत्येव।

यद्यपि भट्टिभर्तृहर्योरैक्यपार्थक्यविषयः सम्प्रत्यपि अनिर्णीत एव तथैव भट्टिकाव्यस्य 'दीपतुल्यः'–इत्याद्याः 'काव्यमिदं'.........इत्यन्तानां श्लोकानां प्रक्षिप्तत्वमौलिकत्वप्रश्नोऽपि विचारणीय एव तथापि प्रथमप्रश्ने वयमपि तयोरैक्यसम्भावनामपि नैवास्वीकर्तुं प्रभवामः। यदि नाम दीपतुल्यप्रभृति-पद्यानां प्रक्षिप्तता यथा कविजीवितकारेण संकेतिता सिध्यति तदा तु तयो-रैक्यं नितान्तमेव सम्भवति। कविजीवितकारो दीपतुल्यादिश्लोकानां जय-मङ्गलप्रक्षिप्तत्वं मन्यते। स कथयति—

'यः कोऽपि कविः पाठकोपयोगार्थं काव्य प्रणीय 'हताद्दुर्मेधसश्चास्मिन्निति' वदेद्वा ? भट्टिरेव भवतु। सोऽप्येतादृशदुरहाभाव इति कथं वक्तुं शक्यते ?' (११० तमपृष्ठे)।

सत्यपि तयोरैक्ये वा पार्थक्ये भट्टिकाव्यस्योपयोगित्वं तु तथैव तिष्ठति।

**१९. कुमारदासः**

कुमारदासस्य जानकीहरणमपि संस्कृतसाहित्ये लब्धप्रतिष्ठा कृतिः। कथ्यते हि यद्रघुवंशे स्थिते सति जानकीहरणं कर्तुं कुमारदासो वा रावण एव क्षमो नान्य इति। अत्रैकतः रघुवंशे इति कालिदासग्रथितकाव्ये तदा-ख्येऽपरतस्तु रघुवंश्ये रामे इति। कथ्यते हि कुमारसेनो भावपक्षे कालि-दासस्य कलापक्षे भारवेरधमर्णस्तथैव भट्टिकवेश्च।

कोऽस्य इत्यपेक्षायां प्रायः सर्वे एव तं सिंहलवासिनं मन्यन्ते। लङ्कायां हि, यथा जनश्रुतिः, ५७२-५८५ मितवैक्रमाब्दान्तराले कश्चित्कुमार-दासाख्यो राजा शासति स्म। स एव जानकीहरणस्य कर्ता वा न वेति नैव निश्चयः। सति तथा, तदा तस्य भट्टेरपि पूर्ववर्तित्वं सिध्यति। जनश्रुतिमनु-सृत्य तस्य ग्रन्थस्य लङ्कायामेव प्रथमवारमुपलब्धेश्च तं सिंहलवासिनमेव कथने नैवापत्तिरन्यथा प्रमाणाभावात्।

तस्य स्थितिकालस्तु विवादभूमिरेव। केचित्तं काशिकावृत्त्यनुयायिनं मत्वा ६६० मितवैक्रमाब्दात्परवर्तिनं वामनेन स्मृतत्वात् ८०० मितवैक्रमा-ब्दात्पूर्ववर्तिनं मन्यन्ते। केचित्तं माघपूर्ववर्तिनं परे तु तदवरकालभवमपि मन्यन्ते। एवमेव भट्टिकुमारदासयोरपि। स्थितिः केचित्तु तं कालिदाससम-कालीनमपि मन्यन्ते। मन्यन्तां खलु यथेच्छं समालोचकाः। केचित्काशि-कायां कुमारदासप्रभावं पश्यन्ति, अन्ये तु कुमारदासे काशिकाप्रभावम्।

राजशेखरस्तु तमैतिहासिकरूपेण स्मरति। तदनुसारेण स हि जन्मान्ध आसीन्मेधाविरुद्र इव। सामान्यतो विक्रमानन्तरं षष्ठशतकमेव कुमारदासस्य स्थितिकालं मन्यन्ते समालोचका यतो हि माघादारभ्य रामधारास्थाने कृष्णधारा प्रवहति। कुमारदासश्च रामधाराप्लुतः कविः। तेन हि तस्य माघपूर्ववर्तित्वमेव समुचितम्। यदि हि स सिंहलेश्वरस्तदाख्यस्तदा तु जानकीहरणस्य प्रणयनकालः ५७७ मितवैक्रमाब्दमभितः सम्भवति नो चेदन्यथाऽपि परिकल्पनीयमेव। वस्तुतस्त्वसौ भारविप्रवर्तितं पण्डितयुगं न मनागप्यनुसरति तेनासौ भारवेरपि पूर्ववर्ती सम्भवति।

जानकीहरणं पञ्चविंशतिसर्गेषु विभक्तं महाकाव्यम्। किन्त्वस्य पञ्चदशसर्गपर्यन्तमेव मुद्रिता प्रतिर्लभ्यते। कथ्यते हि अस्यैका हस्तलिपि विंशतिसर्गव्यापिनी लभ्यते। सम्पूर्णग्रन्थस्तु सिंहलीभाषायामनूदित एव लभ्यते। ग्रन्थेऽस्मिन् रामायणीया कथा निबद्धाऽस्ति ततोऽपि चमत्कारितया। काव्यमिदं वैदर्भरीतेः क्रीडाभूमिः। अस्य हि यमकानुप्रासप्रयोगो विलक्षणः। सर्वतोभावेन कालिदासमनुवर्तमानः कविरसौ यत्र कुत्र तु स्वं कालिदासरूपेणैवोपस्थापयति। चारुतैवाऽस्य विशिष्टो गुणः। अस्यापि व्याकरणप्रियत्वं भाषापाण्डित्यञ्च स्पष्टमेव परिलक्ष्यते। वंशस्थमस्य प्रियं छन्दः। आस्वादयोग्या च तस्य वर्णनाचातुरी। दिङ्मात्रं यथा —

शिशिरशीकरवाहिनि मारुते चरति शीतभयादिव सत्वरः।
मनसिजः प्रविवेश वियोगिनीहृदयमाहितशोकहुताशनम्॥
प्रालेयकालप्रियविप्रयोगग्लानेव रात्रिः क्षयमाससाद।
जगाम मन्दं दिवसो वसन्तक्रूरातपश्रान्त इव श्रमेण॥

वसन्ते सूर्यस्य प्रचण्डकिरणत्वं दाक्षिणात्ये एव प्रदेशे भवति न तु उत्तराञ्चले। एवमेव—

विनीद्रपुष्पाभरणः पलाशः समुल्लसत्पुष्पलतावनद्धः।
उद्भूतभस्मा मधुनेव रेजे राशीकृतो मन्मथदाववह्निः॥
सा मदेन मदनेन लज्जया साध्वसेन च विमिश्रचेष्टिता।
आययौ सपदि तादृशां दशां या न वक्तुमपि शक्यविभ्रमा॥
स्त्रियो न पुंसामुदयस्य साधनं त एव तद्धामविभूतिहेतवः।
तडिद्वियुक्तोऽपि घनः प्रजृम्भते विना न मेघं विलसन्ति विद्युतः॥

## २०. माघः

'माघे सन्ति त्रयो गुणाः' इति कथनेन माघस्य कालिदासभारविदण्डिना-

मेकायतनीभूतं स्वरूपमाख्यायते। तस्य हि शिशुपालवधं नाम महाकाव्यं जगति प्रसिद्धमस्ति। 'नवसर्गगते माघे नवशब्दो न विद्यते', 'माघे माघे गतं वयः' इत्याद्युक्तिभिर्बहुप्रशंसितस्य महाकाव्यस्य प्रणेतृनाम्नैव समाधिका ख्यातिः।

इतः पूर्वं ये महाकवयो निर्दिष्टा विशेषतः कालिदास-अश्वघोष-भारवि-भट्टि-कुमारदासाः तेषां हि प्रातिस्विकं वैशिष्ट्यमितरेभ्यः पृथक्कृत्य तान् परिचाययति। कालिदासो हि रससिद्धः कविः भारविस्तु कलापक्षपोषकः अश्वघोषो हि दार्शनिकः भट्टिस्तु वैयाकरणः। कुमारदासस्तु कालिदास-शैलीपोषकः। कालिदासकुमारदासयोरिदमेवान्तरं यत्प्रथमः स्वाभाविकगत्या प्रयासं विनैव प्रवहति यदाऽपरस्तारस्मिन्नेव पथि सप्रयासं धावति। उभावेव भावपक्षोन्नायकौ। भारविभट्टिकयोरिदमेवान्तरं यत्प्रथमः कविरपरस्तु मूलतो वैयाकरणः। कथ्यते हि माघे सर्वेऽपि कवय एकीभूय स्थिताः। तस्मिन् हि कालिदासस्य रसचमत्कारः, अश्वघोषस्य स्वाभीष्टदर्शनसिद्धि-र्भारवेरर्थगौरवं, भट्टेर्व्याकरणप्रयोगपरता च सर्वे एव परस्परं समन्विताः सन्ति।

माघस्यैतिह्यविषये स्वल्पमपि आभ्यन्तरप्रमाणमपि लभ्यते। शिशुपालवधस्य समाप्तौ कविवंशवर्णनप्रसङ्गोऽपि समुपस्थापितोऽस्ति। तदनुसारेण माघो हि सुप्रभदेवाख्यस्य पौत्रो दत्तकाख्यस्य पुत्र आसीत्। यथोक्तं तत्र—

सर्वाधिकारी सुकृताधिकारः श्रीवर्मलातस्य बभूव राज्ञः।
असक्तदृष्टिर्विरजाः सदैव देवोऽपरः सुप्रभदेवनामा॥

... ......... ...........

तस्याभवद् दत्तक इत्युदात्तः क्षमी मृदुर्धर्मपरस्तनूजः॥

...............................

"तस्यात्मजः सुकविकीर्तिदुराशयाऽदः
काव्यं व्यधत्त शिशुपालवधाभिधानम्।"

वर्मलातनामा नृपतिः वर्मनामा वर्मनाभः धर्मनामः धर्मलात इतिप्रभृति-नामभिरपि परिचितः। वसन्तगढग्रामे तेन स्थापितमेकं शिलाशासनं समुपलब्धमस्ति। यथोक्तं तत्र—

द्विरशीत्यधिके काले षण्णां वर्षशतोत्तरे।
जगन्मातुरिदं स्थानं स्थापितं गोष्ठिपुङ्गवैः॥

जयति जयलक्ष्म्यलक्षितवक्षःस्थलसंशयोदारः।
श्रीवर्मलातनृपतिः पतिरवनेरधिकबलवीर्यः॥ इति ।।

संस्कृतकविजीविते १४१ तमपृष्ठे पार्श्वसूचौ)। यद्यपि कविवंशवर्णनपराणि पञ्च पद्यान्यपि मल्लिनाथादिभिर्व्याख्यातान्येव तथापि तेषां मौलिकत्वं तु ससंशयमेव यतो हि तद्ग्रंथनशैली ग्रन्थनिर्वाहितशैल्या भिन्नैव। सम्भवति पश्चाद्वर्तिना केनाऽपि तानि प्रक्षिप्तान्यपि स्युः। सत्यपि तथा स्वल्पमपि कविपरिचयप्रकाशं तु तेभ्यः प्राप्यत्येव प्रक्षेपकस्यापि आप्तत्वात्। श्रीवर्मलातो नृपः सम्भवतो वलभीं शास्ति स्म। तस्य च स्थितिकालः स्पष्टतः ६८२ मितवैक्रमाब्दमभितः शिलालेखे तथोल्लिखितत्वात्। तेन हि सुप्रभदेवस्याऽप्ययमेव कालः। तस्य हि सुतो दत्तकः सर्वाश्रयः। तस्य च कालस्तदन्तरवर्ती, सम्भवतः ६७०-७३० मितवैक्रमाब्दानभितः। तस्य पुत्रो माघ इति तस्य कालः ७००-७८० मितवैक्रमाब्दानभितोऽनुमितः समालोचकैः। केचित्तु शिशुपालवधगतं—

"अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा॥" (२।११२)

इति पद्यमाधृत्य वृत्तिशब्देन काशिकावृत्तिं जयादित्यप्रणीतां न्यासशब्देन जितेन्द्रबुद्धेः विवरणपञ्जिकां च गृहीत्वा यथानिर्दिष्टं मल्लिनाथवल्लभदेवादिभिर्व्याख्यातृभिः माघस्य समयो जितेन्द्रबुद्धेः पश्चाद्वर्तीत्यपि मन्यन्ते। किन्त्वेष भ्रम एव दृश्यते 'दिङ्नागानां पथि परिहरन्' इति कथनेन कालिदासदिङ्नागयोः समकालिकत्वकल्पनमिव। यतो हि बाणस्य समयस्तु सुनिश्चित एव। न कदापि काशिकावृत्तिकारेण बाणपूर्ववर्तिना भाव्यम्। काशिकावृत्युपरि हरदत्तस्य पदमञ्जरी टीका। तस्या एव व्याख्या जितेन्द्रबुद्धेर्न्यासापराभिधा। किन्तु बाणभट्टोऽपि न्यासग्रन्थं स्मरति 'कृतगुरुपदन्यासा लोक इव व्याकरणेऽपि' इति कथनेन। तेन हि जितेन्द्रबुद्धेः पूर्वमपि आसन्ननेके न्याससंज्ञिता ग्रन्थाः। अष्टाध्याय्याः वृत्तिग्रन्थश्च काशिकापूर्वमप्यासीदेव यदुपरि वार्तिकानि प्रणीतानि कात्यायनादिभिः। वस्तुतस्तु अष्टाध्यायी सूत्राणामाद्यो वृत्तिकारः पाणिनिरेव तदनु च व्याडिरिति सर्वसम्मतमेव। अतो नेदं प्रमाणं माघकालनिर्णये। अपरञ्च जितेन्द्रबुद्धिः पदमञ्जरीमनुसरति। पदमञ्जरीकारो हरदत्तः स्वयमेव माघं स्मरतीति निरस्तैव जितेन्द्रबुद्धेर्माघपूर्ववर्तिता।

सामान्यतो बाह्यप्रमाणैरपि माघस्य समयं निर्णेतुं शक्यते। बाणभट्टो माघं न स्मरतीति सामान्यतः इदमेव तस्य स्थितिकालस्य पूर्वसीमा।

यद्यपि स भट्टिमपि न स्मरति तथैव भारविमपि तथापि सामान्यरूपेणेदमुच्यते। भारविमनुजीवति माघ इति तथा रेखा कल्पिता। यशस्तिलकचम्पूकारः सोमदेवः (१०१६ वै०), ततः पूर्ववर्ती ध्वन्यालोककृदानन्दवर्धनः (९०७ वै०) कविराजमार्गस्य प्रणेता नृपतुङ्गदेव (८७१ वै०) च माघं स्मरन्ति। तुङ्गदेवस्तु तं कालिदाससमकक्षत्वेन स्तौति। अतस्ततोऽपि न्यूनतममपि शताब्दीपूर्वमेव माघस्य स्थितिकालेन भाव्यमेव। अनेनाऽपि माघस्य स्थितिकालः ७७० वैक्रमाब्दमभित आपतति सामान्यतः। स च दीर्घजीवी आसीत्। तेन तस्य स्थितिकालः ७००–७८० मितवैक्रमाब्दान्तरालेऽनुमितः साधुरेव।

प्रचलितकिंवदन्त्यनुसारेण, यथा भोजप्रबन्धे प्रबन्धचिन्तामणौ च लिखितं, माघो नाम कश्चिद्विचक्षणो भोजस्य सभायामासीत्। कोऽसौ माघः कश्चासौ भोज इति तु नाधुनाऽपि स्पष्टम्। सामान्यतो राजा भोजशब्देनाऽप्युच्यते। महाभारते भोजशब्दो राजबोधकत्वेन प्रयुक्तो दृश्यते। नाम्नापि भोजाख्यास्त्रयो राजानोऽभूवन्निति वदन्त्यैतिहासिका येषु टोडरमहाशय एकः। धारानगरीशः परमारवंशीयो भोजस्तु १०६०–१११० मितवैक्रमाब्दान्तराले स्थितिमानिति सप्रमाणं वक्तुं पार्यते। माघस्य तत्समकालिकत्वे मते सति तस्य हि 'रम्या इति प्राप्तवतीः पताकाः' (५।५३) 'त्रासाकुलः परिपतन्' (५।२६) इति पद्यद्वयमुद्धरत आनन्दवर्धनस्य कः स्थितिकालः स्यादयं हि कुन्तको, राजशेखरः, महिमभट्टश्च, स्वयमेव भोजोऽपि स्मरति अभिनवगुप्तस्तु व्याख्यात्यपि। तेन नैव माघो धारानगरीशभोजसमकालिकः। इदं सम्भवति यत्कश्चिद्भोजाख्यो नृपः यमैतिहासिका द्वितीयभोजमिति परिचिन्वन्ति, चित्तौर (चित्रवर) नगरं ७०७ मितवैक्रमाब्दात् ७३२ मितवैक्रमाब्दपर्यन्तं शासनरत आसीत्। तेनास्य माघाश्रयदातृत्वं सिध्यत्यपि। अपरञ्च माघस्य श्रीमालवास्तव्यत्वम्—

'इति श्रीभिन्नमालवास्तव्यदत्तकसूनोर्महावैयाकरणस्य माघस्य कृतौ शिशुपालवधे महाकाव्ये—'

इति शिशुपालवधपुष्पिकावाक्यतो ज्ञायते। श्रीमालवास्तव्यश्चित्तोरनगरीमाश्रितवानिति न किमप्याश्चर्यम्।

माघस्य सम्प्रत्येकैव कृतिर्लभ्यते शिशुपालवधं नाम महाकाव्यम्। तत्र हि महाभारताश्रिता शिशुपालवधात्मिका कथा वर्णिताऽस्ति। नारदाद्युधिष्ठिरयज्ञवृत्तान्तं श्रुत्वा कृष्णः ससैन्यस्तत्र गच्छति। तत्र च कृष्णस्या-

ग्रपूजाविरोधिनमुद्धतं शिशुपालं स निहन्ति। एतावतीमेव कथां कविः स्वप्रतिभाबलाद् विस्तृतेषु विंशतिसर्गेषु वर्णयति। संक्षिप्तकथाश्रयेण काव्यप्रवर्तनं संस्कृतपण्डितानां महानामोदविषयः। कालिदासो हि सुविस्तृता कथामादाय काव्यरत्नं प्रणीतवान्। एवमेव कुमारदासोऽपि। भारविस्तु तदपेक्षया स्वल्पतरां कथामाश्रित्य महाकाव्यं विरचितवान्। माघस्ततोऽपि स्वल्पतरां कथां गृहीतवान्। रत्नाकरस्तु स्वल्पतमामेव कथामाधृत्य पञ्चाशत्सर्गात्मकं महाकाव्यं प्रणीतवान्। तत्र हि शिशुपालवधस्य प्रथमे सर्गे नारदागमनं श्रीकृष्णेन तदादरः नारदेन शिशुपालवधाय प्रोत्साहनं शक्रसन्देशकथनम्। द्वितीये कृष्णबलरामोद्धवानां गुप्तमन्त्रणा उद्धवपरामर्शानुसारेण युधिष्ठिरस्य यज्ञे गमनाय निर्णयः. तृतीये श्रीकृष्णस्य प्रस्थानं द्वारकासेनासमुद्रादीनां वर्णनम्, चतुर्थे रैवतकपर्वतवर्णनम्, पञ्चमे तत्र सैन्यशिविरवर्णनं, षष्ठे षट्ऋतुवर्णनं, सप्तमे वनविहारवर्णनं, अष्टमे जलक्रीडावर्णनं, नवमे सायं चन्द्रोदय-श्रृंगारविधानादिवर्णनं, दशमे दानगोष्ठीरात्रिक्रीडावर्णनम्, एकादशे प्रभातवर्णनं, द्वादशे प्रस्थानवर्णनं यमुनावर्णनञ्च, त्रयोदशे कृष्णपाण्डवसमागमः श्रीकृष्णस्य नगरप्रवेशवर्णनं च, चतुर्दशे राजसूययज्ञक्रमः श्रीकृष्णस्याग्रपूजा, भीष्मेण तस्य स्तवनञ्च, पञ्चदशे शिशुपालक्रोधो युद्धाय सन्नद्धता च राज्ञां, षोडशे दूतसंवादः सप्तदशे युद्धप्रयाणं, अष्टादशे युद्धवर्णनं, एकोनविंशे युद्धवर्णनं चित्रालंकारयोजना च, विंशे शिशुपालस्य वधः, इति प्रतिसर्गकथासारः।

माघो हि एकीभूतकालिदासभारविभट्टय इति समालोचकाः कथयन्ति तस्य काव्ये कालिदासस्य काव्यसौन्दर्यं भारवेरर्थगौरव भट्टेश्च व्याकरणपाटवञ्च दृश्यते। तस्मिन् हि काव्यनैपुण्यव्याकरणपाटवयोः सुन्दरसमन्वयो दृश्यते। तत्र हि कलापक्षस्य प्राचुर्येण सहैव भावपक्षस्यापि समादरो लभ्यते अत्र वीरो मुख्यरसः शृंगारश्चाङ्गम्। कोमलपदावल्या सहैव शब्दजालोऽपि तत्र विलसति। अस्य हि सुसंघटिता भाषा भावाभिव्यक्तये नितान्तं सक्षमा दृश्यते। अत्र त्रयाणमेव काव्यगुणानां समन्वितः प्रयोगो दृश्यते। अस्यचित्रालंकारजालो भारविं भट्टिञ्चातिशेते। तेनैवोक्तं 'माघे माघे गतं वयः' इति। यथा हि 'सञ्चारिणी दीपशिखेव रात्रौ' इति कथनात्कालिदासो दीपशिखासंज्ञां लेभे यथा वा 'आदन्तो कनकमयातपत्रलक्ष्मीम्' इति कथनाद्भारविरातपत्रसंज्ञां लेभे तथैव माघोऽपि निम्नांकितपद्येन घण्टासंज्ञामलभत—

'उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्।। (४।२०)। इति

कथ्यते हि 'नवसर्गे गते माघे नवशब्दो न विद्यते ।' तथाकथनेऽयमेव हेतुर्यत्तत्र नवनवानां शब्दानां बाहुल्येन प्रयोग कृतोऽस्ति । नवतामेव माघो रमणीयताया स्वरूपं मन्यते । कथयति सः —

'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ।' ( ४।१७ )

समालोचकाः कथयन्ति यन्माघस्य भाषायां पाण्डित्येन सह परिष्कारः, कोमलतया सह माधुर्यं, ओजसा सह सशक्तता, अर्थगाम्भीर्येण सह स्फूर्तिरपि द्रष्टुं शक्यते । यथा हि --

मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे । ( ६।२० )

तस्य हि सूक्ष्मेक्षिकाऽपि सर्वानेवातिशेते । स यदेव कथयति तस्य मूलमेव स्पृशति । यथा हि —

प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहुतः केनचिज्जागृहीति ।
मुहुरविशदवर्णा—
दददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥
कुमुदवनमपश्रि श्रीमदम्भोजदण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां हा विचित्रो विपाकः ॥

माघेन हि काव्ये बहूनिच्छन्दांसि प्रयुक्तानि । तेषु हि वंशस्थवृत्तमतीव प्रियम् ।

शिशुपालवधस्य सन्त्यनेकाष्टीका विंशत्यधिकाः यासु मल्लिनाथस्य सर्वंकषा प्रसिद्धाः प्राचीनासु नवासु च शेषराजस्य चन्द्रकला ।

माघाय हि अलंकृतकाव्यपरम्परा भारवितः प्राप्ताऽऽसीद्या सा साधु निरवाहयत् । तस्य हि प्रत्येकं वर्णनमलंकृतभाषायामेव लभ्यते । स हि यद्यपि इतिवृत्तनिर्वाहे स्खलति, यत्र कुत्र तु प्राकरणिकवर्णनस्य मूलकथया सह नास्ति कोऽपि सम्बन्धस्तथापि वर्णनाचातुर्या स निष्प्रयोजनानपि विषयान् प्रयोजनसम्बद्धामिव करोति । वस्तुतश्चतुर्थसर्गादारभ्य त्रयोदशसर्गपर्यन्तो विषयो मूलकथया सह नितान्तमेवासम्बद्धः । इतिवृत्तेन सह तु प्रथमद्वितीयचतुर्दशविंशतिसर्गा एव सम्बद्धाः । वीररसाप्लाविते इतिवृत्ते गौणेन

शृङ्गारवर्णनेन काव्यस्य कलेवरवृद्धिरेव भवति नान्यत्। वस्तुतस्तु अङ्गीभूतेन शृङ्गारेण अङ्गभूतो वीर उद्वेजित इव दृश्यते तत्र। यदा कदा तस्य प्रकृतिचित्रणमपि कृत्रिममलङ्कारभाराक्षिप्तमिव दृश्यते तस्य हि प्रकृतिचित्रणमुद्दीपनरूपेणैव कृतं दृश्यते किन्तु ग्राम्यजीवनचित्रणं तु नितान्तं स्वाभाविकमपि दृश्यते तस्य वर्णनसौन्दर्यं चमत्कारविधानञ्च चरमोत्कर्षतां स्पृशति। नारदावतरणं स इत्थं वर्णयति–

"चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः॥"

तथैव—

"गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः।
पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः॥"

कतिपयपक्षेषु माघो भारविना सह साम्यं बिभर्ति कतिपयपक्षे वैषम्यमपि। उभयोस्तुलनात्मकमध्ययनमत्र दिङ्मात्रमुपस्थाप्यते। उभेऽपि काव्ये 'श्रियः' इति पदेनारभेते। उभयोरेवारम्भे राजनीतिर्वर्णिताऽस्ति। उभयोरेव चतुर्थसर्गो नानावृत्तमयः। उभेऽपि शब्दचित्रकाव्यं प्राथम्येन प्रस्तुतः प्रथमे १५ सर्गे द्वितीये १९ तमे सर्गे। किन्तु प्रथमं हि शिवमहिमवर्णनपरं द्वितीयं तु कृष्णकथासम्बद्धम्। प्रथमे प्रतिसर्गान्ते लक्ष्मीशब्दस्य प्रयोगो द्वितीये श्रीशब्दस्य। प्रथमे हि हिमालयवर्णनाय यमकं प्रयुनक्ति द्वितीयं रैवतकवर्णनाय। प्रथमे व्यासस्य भूमिकां द्वितीये नारदः पूरयति। इदमपि विश्वस्यते यद् भावाभिव्यक्तौ पाण्डित्यप्रदर्शने च माघो भारविमतिशेते तथैव छन्दोयोजनायां चित्रालङ्कारप्रयोगे च। आद्यो हि विवेचकोऽपरो समीक्षकः। प्रथमे हि ओजोभूयस्त्वं द्वितीये तु माधुर्यप्राचुर्यम्। आद्यो हि निपुणः कलाकारो द्वितीयस्तु दक्षचित्रकारः। प्रथमे या सुकुमारता सा द्वितीये प्रौढतामावहति। आद्ये हि काव्यवनिता आसन्नयौवना द्वितीये तु प्राप्तयौवना दृश्यत इति।

## २१. रत्नाकरः

भोजदेवः (१०६०—११०७ वै०) सादरं कथयति—

"अस्तङ्गतभारविरवि कालवशात्कालिदासविधुविधुरम्।
निर्वाणबाणदीपं जगदिदमुद्द्योति रत्नेन॥" इति।

तथैव राजशेखरेण काव्यशास्त्रिणा—

"मा स्म सन्तु हि चत्वारः प्रायो रत्नाकरा इमे।
इतीव स कृतो धात्रा कवी रत्नाकरोऽपरः॥"

इति प्रशंसितो रत्नाकरकविः संस्कृतसाहित्ये स्वल्पतमं कथानकमादाय सर्वातिशायिबृहत्कायमहाकाव्यप्रणेतृत्वेन प्रसिद्धः। स हि राजानक-वागीश्वर-विद्याधिपतिप्रभृत्युपाधिभिर्विभूषितो दृश्यते। महाकवेरस्य हरविजयं नाम पञ्चाशत्सर्गात्मकं महाकाव्यं, वक्रोक्तिपञ्चाशिका, ध्वनिगाथापञ्जिका च ज्ञाता ग्रन्थाः।

कविरसौ काश्मीर इति तु तस्य राजानकोपाधिनैव ज्ञायते। सौभाग्य-वशात्स स्वाश्रयभूतं चिप्पटजयापीडं बालबृहस्पत्यपराभिधं काव्यान्ते स्मरति। चिप्पटजयापीडस्य स्थितिकालो राजतरङ्गिण्यनुसारेण ८३६–८७० मितवैक्र-माब्दानभितोऽनुमितः। तेन रत्नाकरस्याऽपि स एव स्थितिकालः। तस्य च ९१२–९४१ मितवैक्रमाब्दान्तरवर्तिनोऽवन्तिवर्मणः काश्मीरनरेशस्य सभा-सत्त्वमपि राजतरङ्गिण्याः—

"मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः॥" (५।३९)

इति वचनाज्ज्ञायते। शताधिकवर्षजीवनोऽस्य कवेः स्थितिकालस्तेन ८२०–९४० मितवैक्रमाब्दान्तराले समापतति।

अस्य हरविजयं महाकाव्यं न तथा परां कोटिमारुहदपि विविधदृष्ट्या महत्त्वपूर्णं गौरवशालि च। अत्र सुविस्तृताः पञ्चाशत्सर्गाः सन्ति। अत्र हि भगवता शङ्करेण शक्रादिप्रार्थनयाऽन्धकासुरस्य वधो वर्णितः। तत्र हि प्रथमे सर्गे ज्योतिष्मत्याख्या शिवपुरी वर्णिता। तदनु च इन्द्रादिभिरन्धकतापनिवेद-नाय शङ्करपार्श्वे षड्ऋतूनां प्रेषणं, ऋतुभिरन्धककृतापराधनिवेदनं, अन्धका-सुरनाशाय शिवगणस्य परामर्शः, शिवगणविहारः, शिवदूतस्यान्धकासुरेण सह संवादः, शिवसेनाप्रयाणं, युद्धवर्णनमन्धकासुरवधश्चास्येतिवृत्तसूचिः। शिशु-पालवधमिव हरविजयमपि इतिवृत्तनिर्वाहे स्खलत्येव। अत्रापि इतिवृत्तापे-क्षया तदसम्बद्धवर्णनस्यैव प्राचुर्यम्। तथापि भावाभिव्यक्तिदृष्ट्या काव्यमिदं शिशुपालवधमप्यतिशेते। अत्र हि शैवदर्शन-नीति-कामशास्त्रेतिहासपुराण-नाट्यसङ्गीतालङ्कारशास्त्रचित्रकाव्यप्रभृतीनां प्राशस्त्येनोपस्थापनमेवास्यो-त्कृष्टतमत्वस्य चिह्नम्। तस्य च वर्णनाचातुरी निभालनीया दृश्यते। स स्वयमेव कथयति सगौरवं—

'ललितमधुराः सालङ्काराः प्रसादमनोहरा
विकटयमकश्लेषोद्गारप्रबन्धनिरर्गलाः।
असदृशगतीश्चित्रे मार्गे ममोद्गिरतो गिरो
न खलु नृपतेश्चेतो वाचस्पतेरपि शङ्कते॥

यथा हि माघेन प्रतिसर्गान्ते 'लक्ष्मीपतेश्चरितकीर्तनमात्रचारु' इति कथितं तथैव हरविजयेऽपि 'चन्द्रार्धचूडचरिताश्रयचारु' इति निगदितमस्ति प्रतिसर्गान्ते । महाकाव्यस्यास्यौचित्यं प्रतिपादयन्महाकविः स्वयमेव कथयति—

"हरविजयमहाकवेः प्रतिज्ञां शृणुत कृतप्रणयो मम प्रबन्धे ।
अपि शिशुरकविः कविः प्रभावाद्भवति कविश्च महाकविः क्रमेण ।।" इति।

इदं नैव गर्वोक्तिमात्रमपि तु यथार्थवाक्यमपि । वस्तुतो हरविजये समग्रमेव महाकाव्यलक्षणमात्मसात्कृतमस्ति । तेनेदं महाकवीनां कृते कृतं महाकाव्यमेव । भारविमाघौ तु द्व्यक्षरश्लोकाननुष्टुप् छन्दस्येव ग्रथ्नीतो रत्नाकरस्तु तस्य शार्दूलविक्रीडितमन्दाक्रान्ताप्रभृतिच्छन्दस्स्वपि सफलप्रयोक्ता । तस्यालङ्कारयोजनाऽपि मनोहारिणी दृश्यते । रत्नाकरो हि उत्प्रेक्षाप्रियः कविः ।

कवेरस्य वसन्ततिलकां मानयन् क्षेमेन्द्रः कथयति—

वसन्ततिलकारूढा वाग्वल्ली गाढसङ्गिनी ।
रत्नाकरस्योत्कलिका चकास्त्याननकानने ।।

काव्यस्यास्य अलकाख्येन विदुषा विषमपदोद्द्योतिनी टीका प्रणीता दृश्यते तथैव लोकमणिदाहालस्य कलाख्या व्याख्या च ।

साधूक्तं द्विजेन्द्रनाथेन (संस्कृत० ४५९ तमपृष्ठे ) यद्रत्नाकरस्य कवित्वचमत्कारो नूनं माघरचनामधरीकरोतीति । वस्तुतोऽस्य वाग्रत्नप्रभया माघो हतप्रभ इव लक्ष्यते । निभाल्यतां तस्य काव्यस्य छटा —

सन्ध्याप्रवृत्तिरुधिरारुणसान्द्रधातु-
धूलिच्छटाकपिशिताम्बरदिग्विभागाः ।
अध्यम्बुराशि गिरिपङ्क्तिरवन्यपप्त-
दभ्यापतत्कुलिशताकुलिता दिनश्रीः ।। इति ।

## २२. आनन्दवर्धनः

यद्यपि आलङ्कारिकपङ्क्तौ आनन्दवर्धनः सगर्वं स्मर्यते तथापि तस्य काव्यजगत्यपि न तथा प्रसिद्धिस्तु न तथाऽप्रसिद्धिरपि । तस्य हि अर्जुनचरितं तं हि महाकविरूपेणाऽपि परिचाययति । तस्य देवीशतकमपि तं तथैव सङ्केतयति यद्यपि तत्स्तुतिकाव्यमेव । अस्य विषमबाणलीलाऽप्यस्य कवित्वं सूचयन्ति । ध्वन्यालोके कतिपयान्युदाहरणानि अर्जुनचरिताद् गृहीतानि दृश्यन्ते ।

असौ हि काश्मीरपालकस्यावन्तिवर्मणः समकालिक आसीदिति राजतरङ्गिणीकारस्य—

> 'मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
> प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः ॥' (५।३९)

इति कथनाज्ज्ञायते। अवन्तिवर्मा हि ९१२-९३० मितवैक्रमाब्दान्तरे स्थितिमानासीत्। तस्य सभासद्भूत आनन्दवर्धनोऽपि ८८०-९५० मितवैक्रमाब्दानभितः स्थितिमांस्तु भवेदेव।

अर्जुनचरितं सम्प्रत्यनुपलब्धग्रन्थरत्नेष्वेकम्।

## २३ शिवस्वामी

शिवस्वामी अपि आनन्दवर्धन इव अवन्तिवर्मण सभायामासीदिति राजतरङ्गिणीकथनाज्ज्ञायते (५।३९)। तेन हि तस्यापि स्थितिकालोऽवन्तिवर्मकालसम एवेति अनुमीयते किन्तु स आनन्दवर्धनाज्ज्येष्ठ एव प्रतिभाति। अतोऽस्य कालः ८५०–९३० मितवैक्रमाब्दाभ्यर्णेऽनुमितः।

तस्य कप्फनाभ्युदय नाम महाकाव्यं बौद्धमतानुगम्। कथ्यते हि शैवोऽपि स चन्द्रमित्रनामकबौद्धानुनयेन ग्रन्थमिमं प्रणीतवानिति। काव्यप्रकाशकृन्मम्मटाचार्यः काव्यादस्मात्—

'उल्लास्यकालकरवालमहाम्बुवाहम्' इति पद्यं ध्वन्युदाहरणक्रमे समुद्धरति। कप्फनो हि लीलावतीनगर्या अधीशो युद्धे स्ववीर्येण श्रावस्तीनरेशं प्रसेनजितं जयति। पराजितः प्रसेनजित् बुद्धं ध्यायति। ध्यातमात्रो बुद्धः प्रकटीभूय कप्फनं विजयते। कप्फनोऽपि ज्ञातरहस्यो बुद्धं शरणं गच्छति कृतकृत्यश्च भवतीत्यस्य कथासारः। काव्येऽस्मिन् सर्गाः सन्ति विंशतिः। काव्ये तत्र मलयपर्वत-विविधर्तु-कुसुमावचय-जलविहारादिविषयाश्च साधु निभालिताः। स हि सफलः कविरासीदिति तस्यैव—

> विदितबहुकथार्थश्चित्रकाव्योपदेष्टा
> यमककविरगम्यश्चारुसन्दानमानी।
> अनुकृतरघुकारोऽभ्यस्तमेष्टप्रचारो
> जयति कविरुदारो दण्डिदण्डः शिवाङ्कः ॥

इति कथनादेव सिध्यति। अस्य प्रयोगनैपुण्यं वर्णनाचातुरी च प्रशंसार्हा। दिङ्मात्रमुदाहरणं यथा—

> वेणीषु मूर्च्छामिव सम्प्रयाता कपोलयोर्लीनमिवादधानाः।
> स्मितेष्विवोच्छ्वासमिवोद्वहन्तो विलासिनीः शिशिलुरिन्दुपादाः ॥ इति।

**२४. वाक्पतिराजः**

वाक्पतिराजो हि मूलतः प्राकृतभाषाकविरूपेण प्रसिद्धः । तस्य हि गउडवहो ( गउडवधं ) नाम प्राकृतभाषानिबद्धं महाकाव्यमस्ति । तत्र हि कान्यकुब्जेश्वरेण यशोवर्मणा गौडराजकुमारस्य वधपर्यन्ता कथा चित्रिताऽस्ति । यशोवर्मा हि तस्याश्रयदाता नृपः । तेन हि तस्यापि स्थितिकालो यशोवर्मकालसमकालमेव ७९० मितविक्रमाब्दमभित आपतति । यशोवर्मा हि ७८६ मितवैक्रमाब्दे काश्मीरेण ललितादित्येन पराजित आसीदिति ।

"कविवाक्पतिराजश्रीभवभूत्यादिसेवितः ।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ।।"

इति राजतरङ्गिणी( ४।१४४ )कारवचनाज्ज्ञायते । वाक्पतिराजो हि भवभूतेः समकालिकः किन्तु तदवरजः । स हि भवभूतेः काव्यगतामधमर्णतां स्वीकुरुते स्वयमेव ।

तस्य च मधुमथनविजयं नाम महाकाव्यमपि प्रसिद्धम् । स स्वयमेव गौडवधे तदुद्घोषयत्यपि । सम्प्रति तत्काव्यं तु नैवोपलभ्यते किन्तु सदुक्तिकर्णामृतप्रभृतिग्रन्थे समुद्धृतानि तस्य कानिचित्पद्यान्येव दृश्यन्ते । तेषु द्वित्राणि यथा सङ्कलितं कविजीविते ।

सेयं द्यौस्तदिदं शशाङ्कदिनकृच्चिह्नं नभः सा क्षितिः
तत्पातालतलं त एव गिरयस्तेऽम्भोधरास्ता दिशः ।
इत्थं नाभिविनिर्गतेन स शिरः कम्पाद्भुतं वेधसा
यस्यान्तश्च बहिश्च दृष्टमखिलं त्रैलोक्यमव्यात्स वः ।।
खर्वग्रन्थिविमुक्तसन्धिविकसद्वक्षः स्फुरत्कौस्तुभं
निर्यन्नाभिसरोजकुड्मलकुटीगम्भीरसामध्वनि ।
पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितं
पायाद्वः क्रमवर्धमानमहिमाश्चर्यं मुरारेर्वपुः ।।

अनेन कवेरस्य विष्णुभक्तिर्व्यज्यते ।

**२५. अभिनन्दः**

रामचरितमहाकाव्यस्य प्रणेता अभिनन्दः काश्मीर आसीत् । तस्य कृतिः रामचरितं नाम महाकाव्यं ३६ सर्गेषु विभक्तमासीत् । तद्धि सम्प्रति स्वरूपेण तु नैवोपलभ्यते किन्तु तद्धि भोजराजः ( १०६० वै० ) महिमभट्टः ( ११५० वै० ) च स्मरतः । तेन ह्यस्य स्थितिकालो विक्रमानन्तरनवमशतकोत्तरार्द्धोऽनुमितः । अस्य पदावली सरला सरसा च वर्तते । काव्यमिदं

मूलतोऽपूर्णमासीत् । तद्धि तत्पाश्चाद्वर्तिभ्यां लेखकाभ्यां प्रत्येकं चतुरः सर्गान् विरचय्य पूरितम् । तावुभावपि पाठौ सम्प्रति लभ्येते । असौ हि काश्मीरवासिनः शतानन्दाख्यस्य पुत्रः ।

२६. अभिनन्दो वा गौडाभिनन्दः

जरन्नैयायिकस्य जयन्तभट्टस्य ( ९३७ वै० ) पुत्रेण अभिनन्देन कादम्बरीकथासारनामकमष्टसर्गात्मकं महाकाव्यं प्रणीतमस्ति । असौ हि बाणभट्टप्रणीतकादम्बर्याः कथासारः । कथ्यते ह्यसौ ७९०–८२६ मितवैक्रमाब्दान्तराले राज्यं कुर्वतः काश्मीरस्य ललितादित्यस्य मन्त्रिणः शक्तिस्वामिनः प्रपौत्रः कल्याणस्वामिनः पौत्रो जयन्तभट्टस्य पुत्रो राजशेखरसमकालिकः । तेन ह्यस्य स्थितिकालो वैक्रमनवमशतकोत्तरार्द्धं इति । एतदतिरिक्तमस्य योगवासिष्ठसारनामको ग्रन्थोऽपि लभ्यते । कथासारस्तु सर्वमेव सर्गान्त्यश्लोकान् विहायानुष्टुप्छन्दसि गुम्फितः । तस्यानुष्टुप्प्रवृत्तौ दाक्षिण्यं क्षेमेन्द्रोऽपि प्रशंसति । यथा—

"अनुष्टुप्सततासक्ता साभिनन्दस्य नन्दनी ।
विद्याधरस्य वदने गुलिकेव प्रभावभूः ।।" इति ।

ग्रन्थविषयमादाय स स्वयमेव कथयति—

"काव्यविस्तरसन्धानखेदालसधियः प्रति ।
तेन कादम्बरीसिन्धोः कथामात्रं समुद्धृतम् ।।" इति ।

२७. शङ्कुकः

वैक्रमनवमशतकोत्तरार्द्धाभ्यर्णस्थितिमता शङ्कुकाख्येन विदुषा भुवनाभ्युदयं नाम महाकाव्यं प्रणीतमासीदिति राजतरङ्गिणीतः (४।७०५) ज्ञायते । कविरयं विद्वन्मानससिन्धुरित्यपि कथ्यते स्म ।

२८. धनञ्जयः

वैक्रमदशमशतकोत्तरार्द्धभवोऽयं कविर्द्विसन्धानकाव्यस्योन्नायकः । अस्य हि राघवपाण्डवीयं महाकाव्यं प्रसिद्धम्, यत्र प्रत्येकं पद्यमेकतो रामकथामपरतः पाण्डवकथां व्यनक्ति । अस्येयं काव्यशैली पश्चाद्वर्तिभिः कविराजरामचन्द्रचिदम्बरवेङ्कटाध्वरिमेघविजयगणिहरदत्तप्रभृतिभिरप्यनुसृता ।

२९. कनकसेनो वादिराजः

१००७ मितवैक्रमाब्दमभितः स्थितिमता वादिराजेन जैनमुनिना यशोधरचरितं नाम महाकाव्यं प्रणीतमासीत् । तस्य हि सम्प्रति चत्वारः सर्गा

एवोपलभ्यन्ते। अत्र कस्यचिज्जैनस्य राज्ञो यशोधराख्यस्य चरितं चित्रितमस्ति। अस्य च स्थितिकालः १००७ मितवैक्रमाब्दाभ्यर्णेऽनुमितः।

२९. हलायुधः

हलायुधस्य कविरहस्यं शास्त्रकाव्यस्य परम्परामग्रे चालयति। तत्र हि व्याकरणस्य धातुसम्बद्धनियमानामुदाहरणानि दत्तानि सन्ति। कविरसौ राष्ट्रकूटस्य राज्ञस्तृतीयस्य कृष्णस्य सभापण्डित आसीत् स्तौति च स तं स्वकाव्ये। कृष्णस्य समयः ९९७–१०१२ मितवैक्रमाब्दानभितोऽनुमितः। अतो हलायुधोऽपि ९७०–१०५० मितवैक्रमाब्दाभ्यर्णे स्थितिमानिति विभाव्यते।

३०. पद्मगुप्तः

पद्मगुप्तो हि परमिलापराभिधः परिमलकालिदाससंज्ञयाऽपि प्रसिद्धो महाकविः नवसाहसाङ्कचरिताख्यं महाकाव्यं प्रणीतवानासीत्। तस्य च प्रणयनकालः ११०० मितवैक्रमाब्दोऽनुमितः। पद्मगुप्तो हि मुञ्जाख्यस्य ( १०३१–१०५२ वै० ) धारानगरीशस्य भोजस्य ( १०५२–११११ वै० ) सभापण्डित आसीत्। अत्र हि नवसाहसाङ्कोपाधिविभूषितस्य भोजस्य चरित्रं वर्णितमस्ति मूलतः। अत्र हि नवसाहसाङ्कस्य मृगयाविहारः, तस्य नागवंश्यया शशिप्रभया सह विवाहश्च निपुणं वर्णितः। काव्येऽस्मिन्नष्टादश सर्गाः सम्प्रति दृश्यन्ते। काव्यमिदमतीव सरलं स्वाभाविकं प्रसादगुणयुक्तश्च।

कवेरस्य पितुर्नाम मृगाङ्कगुप्तः, स्थितिकालश्च १०२०-११०५ मितवैक्रमाब्दान्तरालेऽनुमितः। स हि तत्काव्यं चरमे वयसि प्रणीतवानासीत्। भोजप्रबन्धे उल्लिखितः कालिदासोऽयमेव सम्भवति।

३१. क्षेमेन्द्रः

क्षेमेन्द्रो हि काश्मीरराजस्य १०८५–११२० मितवैक्रमाब्दानभितः स्थितिमतोऽनन्तस्य तदुत्तरवर्तिनः ११२०–११४६ मितवैक्रमाब्दाभ्यर्णे स्थितिमतः कलशाख्यस्य राज्ञः सभापण्डित आसीत्। तेनास्य स्थितिकालः १०६०-११५० मितवैक्रमाब्दान्तराल आपततीत्यनुमितः। अस्य पिता प्रकाशेन्द्राऽऽख्यो विद्यागुरुश्च गङ्गकाचार्यः। कथ्यते ह्यनेन महामाहेश्वरादभिनवगुप्तात्साहित्यविद्याऽधीतेति।

मूलतः परमशैवोऽप्ययं विष्णौ बुद्धेऽपि समानमेवादरभावं दर्शयति। अस्य हि सन्त्यनेकाः कृतयः पञ्चत्रिंशत्तोऽधिकाः। अस्य शशिवंशमहाकाव्यमप्यासीदिति श्रूयते यन्न सम्प्रति समुपलब्धम्। अन्यासु मुख्यासु कृतिषु

भारतमञ्जरी, रामायणमञ्जरी, बृहत्कथामञ्जरी, दशावतारचरितकाव्यं, समयमातृकाकाव्यं, पद्यकादम्बरी, बौद्धावदानकल्पलता, मुक्तावलीकाव्यं, लावण्यवतीकाव्यं, लोकप्रकाशकोशः, औचित्यविचारचर्चा, सुवृत्ततिलकं, अमृततरङ्गकाव्यं च प्राधान्येन गृहीतानि। सन्त्यन्याश्चास्य रचनाः काव्यमालायां क्षेमेन्द्रकाव्यसङ्ग्रहे च सङ्गृहीताः। तस्य कृतिषु भारतमञ्जरी सर्वा अप्यतिशेते। तामधिकृत्योक्तम्—

'प्राप्तः सामान्यजल्पोऽपि क्षेमेन्द्रोऽद्य कवीन्द्रताम्।' इति।

प्रथमं तु सर्वोऽपि जनः सामान्यजल्प एव भवति। साधनैव जनं यं कमपि साधयति।

३२. बिल्हणः

बिल्हणो हि काश्मीरः ज्येष्ठकलशाख्यस्य पुत्रः। अस्य माता नागाऽऽख्या इष्टारामानन्दौ भ्रातरौ। असौ हि १०८०-११६० मितवैक्रमाब्दान्तराले स्थितिमानित्यनुमीयते। कथ्यते ह्यसौ ११०७ मितवैक्रमाब्दमभितो जन्मभुवं विहाय देशान्तरं प्रस्थितः। प्रथमं हि सः अनहिलवादस्य चालुक्यवंशीयनृपस्य त्रैलोक्यमल्लस्य सभासद्रूपेण कञ्चित्कालं स्थित्वा पुनः कल्याणस्य विक्रमादित्याख्यस्य (चतुर्थस्य) नृपस्य सभायामुपस्थितः। तत्रैव सः ११४२ मितवैक्रमाब्दमभितः विक्रमाङ्कदेवचरितं नामैतिहासिकं महाकाव्यं प्रणीतवानासीत्। महाकाव्येऽस्मिन् सन्त्यष्टादशसर्गाः सम्प्रत्युपलब्धाः। तत्र हि तेन स्वाश्रयभूतस्य विक्रमाङ्कदेवस्य तत्पूर्वजानाञ्च चरितं चित्रितमस्ति। तत्र विक्रमाङ्कदेवस्य मृगयायात्रा, चन्द्रलेखया सह विवाहश्च सुनिपुणं वर्णितः। एतदतिरिक्तमस्य चौरपञ्चाशिका, कर्णसुन्दरीनाटिका च प्रसिद्धौ ग्रन्थौ। विक्रमाङ्कदेवचरितस्य विश्वनाथभारद्वाजप्रणीता रमा टीका प्रसिद्धा चौरपञ्चाशिकायाश्चतस्रष्टीका यासु रामतर्कवागीशस्य प्रसिद्धा।

३३. लोलिम्बराजः

साहित्ये गान्धर्वशास्त्रे आयुर्वेदे च समानगतिर्लोलिम्बराजः ११००-१२०० मितवैक्रमाब्दानभितः स्थितिमानासीत्। अस्य च पिता दिवाकरः आश्रयदाता हरिहरनृपश्च। अनेन बहवो ग्रन्थाः प्रणीता येषु हरिविलासाख्यं महाकाव्यं प्रसिद्धमस्ति। १२०७ मितवैक्रमाब्दमभितः स्थितिमता पुरुषोत्तमदेवेन तत्काव्यं तस्य वर्णदेशनाख्ये ग्रन्थे स्मृतमस्ति। सम्प्रति लोलिम्बराजस्य ग्रन्थावली प्रकाशिताऽऽस्ति। केचित्कविममुं १४५७ मितवैक्रमाब्दाभ्यर्णे स्थितिमन्तमपि मन्यन्ते किन्तु तं पुरुषोत्तमदेवः स्मरतीति नैतन्मतं समीचीनं प्रतिभाति।

३४. कृष्णलीलांशुको वा बिल्वमङ्गलः

विक्रमस्य द्वादशशताब्द्यन्तिमभागे मालावारप्रदेशे गृहीतजनुषा बिल्वमङ्गलेन कृष्णलीलांशुकापराभिधानेनाप्यनेके ग्रन्थाः प्रणीताः सन्ति येषु गोविन्दाभिषेकं नाम द्वादशसर्गात्मकं महाकाव्यं प्रसिद्धमस्ति। काव्यमिदं श्रीचिह्नकाव्यमित्यपि प्रसिद्धम्। यथार्थनामेदं काव्यं श्रीकृष्णभक्तिवर्णनपरम्। अत्र हि प्राकृतव्याकरणस्य नियमा अपि सोदाहरणं निरूपिताः।

३५. मङ्खो वा मङ्खकः

११५०–१२१० वितवैक्रमाब्दमभितः स्थितिमता जयसिंहाख्यस्य (११८६–१२०७ वै०) काश्मीरनृपस्याश्रितकविना मङ्खकेन श्रीकण्ठचरितं नाम पञ्चविंशतिसर्गात्मकं महाकाव्यं प्रणीतं दृश्यते। अत्र हि शङ्करेण कृतस्त्रिपुरविजयः सुनिपुणं वर्णितः। कल्हणविल्हणजल्हणा अस्य समकालीनाः। प्रसिद्धकाव्यशास्त्री रुय्यकोऽस्य गुरुरासीत्। अस्य हि वर्णनं सजीवं रोचकञ्च।

३६. हरिचन्द्रः

११८०–१२६० मितवैक्रमाब्दानभितः स्थितिमत्त्वेनानुमितो हरिचन्द्रः जैनमतावलम्बी आसीत्। तस्य पिता नोमकवंश्यः आर्द्रदेवो माता रथ्यादेवी। तस्य धर्मशर्माभ्युदयं नाम महाकाव्यं जैनपरम्परायामतीव श्रद्धितं यथा माघकाव्यं नैषधीयचरितञ्च। अस्य ग्रन्थस्य १२८७ मितवैक्रमाब्दे लिखिता हस्तलिपिर्लभ्यत इति तत्पूर्वमेव तस्यावस्थितिरनुमीयते।

संस्कृतसाहित्ये बहवो हरिश्चन्द्रनामानः कवयः स्मृताः। एको हि हरिश्चन्द्र समुद्रगुप्तेन कृष्णचरित्रे स्मृतः। अपरश्च हरिश्चन्द्रो बाणभट्टेन

पदबन्धोज्ज्वलो हारो कृतवर्णक्रमस्थितिः।
भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते॥

इति हर्षचरिते स्मृतः। एको हरिश्चन्द्रो जीवनधरचम्पूकृत् विक्रमानन्तरनवमशतकोत्तरार्द्धभवः। कश्चिदपरो हरिश्चन्द्रश्चरकसंहितायाष्टीकाकारः। कश्चिदपरो हरिश्चन्द्रः क्षेमेन्द्रेण कर्पूरमञ्जर्यां स्मृतः। एको हरिश्चन्द्रो वाक्पतिराजेन स्मृतः। किन्तु धर्मशर्माभ्युदयस्य कर्ता कश्चिदपर एव हरिचन्द्रः। काव्यमिदमेकविंशतिसर्गात्मकम्। अत्र हि इक्ष्वाकुवंश्यस्यमहासेनपुत्रस्य धर्मनाथस्य पञ्चदशतीर्थङ्करस्य चरित्रं चित्रितमस्ति। स्वग्रन्थविषये स स्वयमेव कथयति—

स कर्णपीयूषरसप्रवाहं रसध्वनेरध्वनि सार्थवाहम्।
श्रीधर्मशर्माभ्युदयाभिधानं महाकविः काव्यमिदं व्यधत्त ॥ इति।

३७ कल्हणः

कल्हणस्यालङ्कारैरलंकृत ऐतिहासिको ग्रन्थो राजतरङ्गिणी स्वीयेनैतिहासिकविषयेन सह काव्यात्मकत्वमपि बिभर्ति। अत्र ह्यष्टावध्यायाः। ग्रन्थोऽयं १२०७ मितवैक्रमाब्दमभितोऽभिलिखित आसीत्तेनास्य कवेरपि स एव समयः। कविरसौ काश्मीरः।

३८. जल्हणः

कल्हणसमकालिकेन जल्हणाख्येन विदुषा सोमपालविलासनामकं महाकाव्यं प्रणीतमस्ति। सोमपालो हि राजपूर्याः शासकः कवेरस्याश्रयदाता। जल्हणं हि मङ्खः स्मरतीति तस्य ११६०–१२५० मितवैक्रमाब्दानभितः स्थितिकालः।

३९. वाग्भटः

११००–१२०० मितवैक्रमाब्दानभितः स्थितिमतो वाग्भटस्य नेमिनाथाख्यजैनसाधुचरितमाश्रित्य प्रणीतं नेमिनिर्वाणं नाम महाकाव्यं प्रसिद्धमस्ति। कविरयं गुर्जरदेशीयः प्रतिभाति। सामान्यतस्तु संस्कृतसाहित्ये चत्वारो वाग्भटाः प्रसिद्धाः। एको वाग्भटालङ्कारस्य कर्ता, अपरो हि काव्यानुशासनकृत्। तृतीयस्तु अष्टाङ्गसंग्रहस्य प्रणेता। चतुर्थस्तु तस्यैव पितामहः। नेमिनिर्वाणकृत्तु तदितरो दृश्यते। स हि १२०७ मितवैक्रमाब्दपर्यन्तं जीवित आसीत्। ग्रन्थस्यास्य ज्ञानभूषणप्रणीता पञ्जिकाख्या टीका लभ्यते।

४०. सन्ध्याकरनन्दी

रामपालाख्यस्य वङ्गनरेशस्य ( ११६१–११८७ वै० ) राजसभासत् सन्ध्याकरनन्दी रामपालचरितं नाम रामरामपालकथाश्रयं द्विसन्धानकाव्यं प्रणीतवानासीत्। तस्य हि स्थितिकालः ११३०–१२०० मितवैक्रमाब्दानभितोऽनुमितः।

४१. हेमचन्द्राचार्यः

११४५–१२२९ मितवैक्रमाब्दानभितः स्थितिमतो जैनस्य हेमचन्द्राचार्यस्य त्रिषष्टिशलाकापुरुषचरितं द्व्याश्रयकाव्यसंज्ञितं कुमारपालचरितं संस्कृत-प्राकृतमयञ्चेति द्वे काव्ये प्रथिते स्तः। स हि गुर्जरनरेशस्य जयसिंहस्य (११४९–११९९ वै०) तद्भ्रात्रेयस्य कुमारपालस्य (११९९-१२३० वै०) च सभाध्यक्ष आसीत्। असौ हि ११४५ मितवैक्रमाब्दे धुन्धकनगरे

मोढजातिवणिग्गृहे जात आसीत् कार्तिकपौर्णमास्याम् । तस्य पिता चच्चिगो माता च पाहिनी । अस्याभिभावको जयन्ताख्यो जैनो गुरुश्च देवचन्द्राऽऽख्यः । तस्य हि जन्मनाम चाङ्गदेव आसीत् । यदा हि जैनधर्मे दीक्षितोऽभवत्तदा तस्य सोमदेव इति नामाऽभूत् । पश्चाच्च ( ११६६ वै० ) हेमचन्द्रनाम्ना ख्यातोऽभूत् ।

अस्य हि त्रिषष्टिशलाकापुरुषचरितं हि पौराणिकशैल्यां गुम्फितं महाकाव्यम् । अत्र हि त्रिषष्टिसिद्धानां जीवनचरितं चित्रितमस्ति । इदं हि दशसु पर्वसु विभक्तमस्ति । अस्य भाषाऽतीव सरला शैली तु प्राञ्जला । इदं हि जैनसम्प्रदायमहाभारतमित्युच्यते ।

कुमारपालचरितं ह्यष्टाविंशसर्गात्मकं महाकाव्यम् । इदं हि द्व्याश्रयकाव्यमित्यप्युच्यते । अत्र विंशतिसर्गाः संस्कृतभाषायामष्टौ च सर्गाः प्राकृतभाषायां निबद्धाः सन्ति । कुमारपालस्य राज्ञो जीवनवृत्तमधिकुर्वत्काव्यमिदमैतिहासिकमपि भट्टिकाव्यमिव व्याकरणनियमविवेचकं जैनमतप्रचारकञ्च । अस्य सप्तविंशतिसर्गपर्यन्ताऽभयतिलकगणेष्टीका लभ्यते चरमसर्गस्य तु पूर्णकलशप्रणीता ।

**४२. माधवभट्टो कविराजः**

माधवभट्टः कविराजः अवन्तिपुर्याः कदम्बवंशयस्य राज्ञः कामदेवस्य १२३९–१२७४ मितवैक्रमाब्दान्तराले शासतः सभापण्डित आसीत् । कविराज इत्यस्योपाधिः । तेन ह्यस्य स्थितिकालोऽपि १२००–१२८० मितवैक्रमाब्दान्तरालेऽनुमितः । गौतमगोत्रीयस्यास्य पिता कीर्तिनारायणो माता च चन्द्रमुखी ।

अस्य हि द्वे काव्ये प्रसिद्धे राघवपाण्डवीयं पारिजातहरणञ्च । राघवपाण्डवीयं हि रामायणमहाभारताश्रितकथासम्बद्धं द्विसन्धानकाव्यं त्रयोदशसर्गात्मकम् । पारिजातहरणे तु श्रीकृष्णेन कृतं पारिजातहरणकथानकं दशसर्गेष्वाबद्धमस्ति ।

कविरसौ वक्रोक्तिकथने परमनिपुणः । स स्वयमेव कथयति—

सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः ।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा ।। इति ।

कदाचिद्रत्नाकरमपि समावेशितमभविष्यत्तदाऽस्य गर्वोक्तिरियं सार्थकाऽप्यभविष्यत् । तस्य हि द्वौ पद्यौ समुद्धरतो वरदराजाचार्यः—

"तद्वाक्यान्ते दत्तकर्णानुमोदः पुत्रप्रीत्या जातकृच्छ्रः कुमारम् ।
धर्मात्मानं प्रेषयामास दूरं विश्वामित्रप्रीतये भूमिपालः ॥"
"मात्रा समं सावरजः स राजा प्रस्थापितो धाम तपोवनानाम् ।
स्थानान्तरं विद्विषतां रणेषु समर्थकोदण्डधरः प्रतस्थे ॥"

ग्रन्थमिममधिकृत्य षट्टीकाः सन्ति । तासु चरित्रवर्धनस्य टीका प्रसिद्धा ग्राह्या च ।

४३. चण्डकविः

अजमेर हस्तिनापुरसंयुक्तराज्यशासकस्य पृथ्वीराजस्याश्रितेन कविना चण्डाख्येन पृथ्वीराजविजयं नाम महाकाव्यं प्रणीतमस्ति । पृथ्वीराजस्थितिकालानुसारमेवास्य कवेः स्थितिकालः ११८०-१२६० मितवैक्रमाब्दान्तरालेऽनुमितः । काव्येऽस्मिन् सम्प्रति अष्टावेव सर्गा लभ्यन्ते । तेनेदमपूर्णमेव प्रतिभाति । सम्भवति अस्य शेषभागो यवनाक्रमणे विनष्टो वा कविरेवदमपूर्णमेव त्यक्त्वाऽस्तङ्गतोऽपि । काव्येऽस्मिन्, पृथ्वीराजस्य विजयकर्माणि वर्णितानि सन्ति । ग्रन्थस्यास्य जोनराजप्रणीता टीका लभ्यते ।

४४. जयदेवः

जयदेवाख्यस्य कवेरनेके ग्रन्था प्रसिद्धा येषु गीतगोविन्दं नाम महाकाव्यमेकम् । जयदेवनामकाः अनेके विचक्षणा लभ्यन्ते येषु पञ्च कवयोऽपि । तेष्वेकः प्रसन्नराघवस्य रचयिताऽपरो गीतगोविन्दस्य । तयोरपि पूर्वापेक्षयाऽपरः प्राचीनतर इति समालोचकानां मतम् । गीतगोविन्दकारो जयदेवः वङ्गाधिपतेर्लक्ष्मणसेनस्य ११७६-१२४६ मितवैक्रमाब्दान्तरालवर्तिनः सभापण्डित आसीत् । यथाऽयं श्लोकः कथ्यते—

गोवर्धनश्च शरणो जयदेव उमापतिः ।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च ॥ इति ।

जयदेवः स्वयमेव कथयति गीतगोविन्दे—

वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः ।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धन-
स्पर्धी कोऽपि मतिश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः ॥इति ।

कवेरस्य पिता भोजदेवाऽऽख्यो माता राधाऽऽख्या पत्नी च पद्मावती । वङ्गदेशस्य बिन्दुबिल्वग्रामोऽस्य जन्मभूमिः ।

ग्रन्थोऽयं द्वादशसर्गात्मको दाक्षिणात्येषु अष्टपदीत्यपि कथितः। अस्मिन् हि राधाकृष्णयोर्विप्रलम्भसम्भोगश्रृङ्गारः साधूपवर्णितः। माधुर्यप्रसादगुणावत्र कृतनिलयौ दृश्येते। कविः स्वयमेव कथयति—

साध्वी माध्वीकचिन्ता न भवति भवतश्शर्करे कर्कशाऽसि
द्राक्षे द्रक्ष्यन्ति के त्वाममृतमृतमसि क्षीरनीरं रसस्ते॥
याकन्दक्रन्दकान्ताधरधरणितलं गच्छ यच्छन्ति भावं
यावच्छृङ्गारसारस्वतमिह जयदेवस्य विश्वग्वचांसि॥

ग्रन्थस्यास्य सन्ति त्रिंशदधिकाष्टीका यासु उदयनाचार्यशंकरमिश्रगागाभट्टप्रणीताः प्रसिद्धाः सन्ति। निभाल्यतामस्य काव्यचमत्कारः—

"उरसि मुरारेरुपहितहारे घन इव तरलविलोके।
तडिदिव पीते रतिविपरीते राजसि सुकृतविमोके॥"

## ४५. श्रीहर्षः

स्वसमयस्य प्रकृष्टपण्डितो महाकविः श्रीहर्षः कान्यकुब्जेश्वरस्य गहडवालवंश्यस्य गोविन्दचन्द्रप्रपौत्रस्य विजयचन्द्रपुत्रस्य जयचन्द्रस्य १२२५–१२५२ मितवैक्रमाब्दानभितः शासतः सभापण्डित आसीदिति तस्यैव—

'ताम्बूलद्वतयमासनञ्च लभते यः कान्यकुब्जेश्वरात्' इति कथनेन ज्ञायते। तदा हि काशीषु कान्यकुब्जेषु च गहडवालवंश्यानां नृपाणां शासनमासीत्। तस्य शासनकालः ११६१ मितवैक्रमाब्दतः १२१२ यावदासीत्। तदनु तस्यात्मजो विजयचन्द्रः १२१२ तः १२२५ यावत् तस्य पुत्रो जयचन्द्रः १२२५ तः १२५२ मितवैक्रमाब्दान् यावत् काशीकान्यकुब्जांश्चाशासतामित्यैतिहासिकानां मतम्। श्रीहर्षस्य पिता हीरो गोविन्दचन्द्रस्य सभापण्डित आसीत्, श्रीहर्षश्च प्रथमं विजयचन्द्रस्य तदनु जयचन्द्रस्य च सभापण्डित आसीत्।

कथ्यते हि श्रीहर्षस्य पिता हीरो गोविन्दचन्द्रस्य सभाध्यक्ष आसीत्। एकदा स हि नैयायिकेन उदयनाचार्येण वादाहवे पराजितः सन् तेनावसादेन खिन्नमनाः अकाले एव पञ्चत्वं गतः। तदा श्रीहर्षो बाल एवासीत्। म्रियमाणः पिता बालमपि स्वपुत्रं स्वप्रतिपक्षिपराजयेन तं सन्तोषयितुमुपदिष्टवान्। तमेवोपदेशं हृदि कृत्वा सरस्वतीसेवायां सततसंलग्नः श्रीहर्षः काले स्वपितुः प्रतिपक्षिणमुदयनाचार्यं वादाहवे पराजित्य स्वर्गतं पितरमप्रीणत्। तदा विजयचन्द्रः सत्तासीन

आसीत्। तस्य विद्वत्तया सोऽतीवप्रभावितोऽभवत् । तत्प्रस्तुतं पद्यमित्थं स्मर्यते राजसभायाम्—

गोविन्दनन्दनतया च वपुःश्रिया च
मास्मिन्नृपे कुरुत कामधियं तरुण्यः।
अस्त्रीकरोति जगतां विजये स्मरः स्त्री-
रस्त्रीजनः पुनरनेन विधीयते स्त्री ।। इति ।

अस्यैव विजयचन्द्रस्य प्रशंसायां श्रीहर्षो हि विजयप्रशस्तिनामकं ग्रन्थं प्रणीतवान् । विजयचन्द्र एव स्वजीवनोत्तरार्द्धं कान्यकुब्जेऽयापयत् । तेनैव सह श्रीहर्षोऽपि वाराणसीतः कान्यकुब्जमगात् । एतत्पूर्वमेव तेन खण्डनखण्डखाद्याख्यो ग्रन्थः प्रणीत आसीत् । श्रीहर्षेण विद्याऽध्ययनकाले विशेषतो न्यायदर्शनाध्ययनाय कानिचिद्वर्षाणि वङ्गदेशे यापितानि । तदा स वङ्गेश्वरेणार्थादिनानुगृहीत आसीत् । तदर्थं प्रत्युपकारसमर्पणाय स गौडोर्वीशकुलप्रशस्तिसंज्ञकं ग्रन्थं प्रणीतवानासीत् । एवमेव कस्यचिदन्यस्यापि तथाकरणाय हिन्दप्रशस्तिसंज्ञको ग्रन्थोऽप्यनेन प्राणायि । १२२५ मितवैक्रमाब्दे विजयचन्द्रः स्वर्गतः । तदनु लब्धराज्यो जयचन्द्रोऽपि श्रीहर्षं तथैव सममानयत् । सोऽपि तत्प्रशंसतामेव नवसाहसाङ्कचरितचम्पूं प्राणयत् । जयचन्द्रोऽपि धारानगरीशभोज इव नवसाहसाङ्कोपाधिं धृतवानासीत् । एवमेव अर्णवर्णनं, शिवशक्तिसिद्धिः, स्थैर्यविचारणप्रकरणं, ईश्वराभिसन्धिः, द्विरूपकोशश्च तत्प्रणीता इतरे ग्रन्थाः ।

एतदन्तरे कान्यकुब्जे हि एका सहृदयसमुद्वेजिका घटना सम्भूता । जयचन्द्रस्य राज्ञः पुत्री संयोगिता स्वयंवरार्हा सञ्जाता । सा हि खलु पृथ्वीराजं काङ्क्षितवती किन्तु तेन सह कृतवैरो जयचन्द्रस्तं न केवलं स्वयंवरे अनाहूतवानपि तु तस्य लोहमयी मूर्तिं निर्माय्य द्वारपालस्थले स्थापितवान् । संयोगिताऽपि तस्यामेव मूर्तौ स्वयंवरमालां निहितवती । दत्तपूर्वसङ्केतः संयोगितया अत एव तत्र छद्मवेषेणोपस्थितः पृथ्वीराजोऽपि तामादाय देहलीं प्रति निवृत्तः । तन्निमित्तं पृथ्वीराजजयचन्द्रयोर्महानाहवः संवृत्तो यत्र जयचन्द्रो नितरां पराजितः । घटनयाऽनया सहृदयत्वेन प्रभावितः कविर्दमयन्तीनलप्रेमसम्बद्धां प्राचीनां कथामादाय नैषधीयचरिताख्यमहाकाव्यप्रणयनाय प्रवृत्तः किन्तु तदपूर्णं विहायैव निधनं गतो वा मुहम्मदविमर्देऽवशिष्टभागः प्रणष्टो वा कान्यकुब्जे गहडवालवंशराज्यच्युत्या निराशीकृतः कविर्जीवन्नपि अग्रे नैव प्रणीतवान् वा, यत्किञ्चिदपि स्यात्, सम्प्रति महाकाव्यस्यास्य द्वाविंशतिः सर्गा लभ्यन्ते । केचित्तु दमयन्ती-

नलयोः सुखसङ्गमेन समापितमिमं ग्रन्थं पूर्णं मन्यन्ते। परे तु ग्रन्थमिमं षष्टिसर्गेषु विस्तृतं मत्वाऽवशिष्टांशोपलब्धावाशावन्तोऽपि सन्ति। हर्षविजयकलेवरं दृष्ट्वैतत्सम्भावयितुमपि शक्यते। स्याद्यद्वा तद्वा। महाकाव्यस्यास्य समुपलब्धभाग एवालं विचक्षणानां परीक्षणाय बुद्धेः। कथ्यतेऽपि नैषधं विद्वदौषधमिति। नलश्रीवर्णनादारब्धमिदं महाकाव्यं नलदमयन्त्योः सुखसङ्गमं प्राप्य विश्राम्यति। लीलया दमयन्तीस्मृतिद्वयमानमनोविनोदाय निष्कूटेषु विहारार्थं गतो नलः एकं स्वर्णमयं हंसं पश्यति गृह्णाति च तम्। हंसः स्वामवस्थां विनिवेद्य नं मोचनाय प्रार्थयते प्रतिजानीते च दमयन्तीसन्देशश्रावणेन तदुपकारमोचनाय। हंसस्यावस्था यथा——

'मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी।
गतिस्तयोरेष जनस्तमर्दयन्नहो विधे त्वां करुणा रुणद्धि नो॥' इति।

राज्ञा सदयं मोचितो हंसस्तत्प्रत्युपकाराय भोजनगरीं गत्वा दमयन्त्यै तत्प्रेमविवरणं श्रावयति। तेन दमयन्त्यां पूर्वराग उत्पद्यते। काले दमयन्त्याः स्वयंवरसभा आयुज्यते विदर्भेण। तत्र दमयन्त्यामाशक्ता नलरूपं धृत्वा तत्रागच्छन्ति चत्वारो दिक्पालाः। पश्चाच्च ते दमयन्त्या नलं प्रति समर्पणभावं दृष्ट्वा प्रसन्नाः देवाः स्वानि स्वानि रूपाण्येव गृह्णन्ति। ततश्च सुखेन दमयन्ती नलं स्वयंवरस्रजा विभूषयति। परिणयानन्तरं जातेर्ष्यः कलिर्नलं प्रविश्य तं विरूपयति। पश्चाच्च लब्धस्वरूपेण नलेन सह दमयन्त्याः सुखसङ्गमो भवति काव्यस्य द्वाविंशतिसर्गसमाप्तिश्च।

नैयायिकस्याऽपि कवेरस्य सरला सरला च वर्णनाचातुरी प्रशंस्या विद्वन्मनोविनोदनक्षमा च दृश्यते। स स्वयमेव कथयति —

'साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा मम संविधातरि समं लीलायते भारती।
शय्या वाऽस्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम्।' इति।

ग्रन्थस्यास्य प्रतिसर्गमेव कवेरस्य विस्तृतं प्रौढञ्च ज्ञाननिधिं सूचयति तत्रापि विशेषतः सप्तदशसर्गं तस्य दर्शनप्रावीण्यं व्याकरणनिष्णातत्वञ्च प्रमाणयति।

यद्यपि प्रकरणविशेषे श्रीहर्षे तत्पूर्ववर्तिनां प्रभावस्पष्टमेव दृश्यते यथा इन्दुमतीस्वयंवरस्य दमयन्तीस्वयंवरे तथापि तस्य मौलिकी पद्धतिस्तु न केनाऽप्यपलपितुं शक्यते। कथ्यते हि कालिदासस्योपमाच्छटा भारवेरर्थगाम्भीर्यवैलक्षण्यं दण्डिनः कोमलकमनीयपदावली च सन्ति माघे किन्तु—

'उदिते नैषधे काव्ये क्व माघः क्व च भारविः ।'

पूर्ववर्तिकव्यपेक्षयाऽस्य नारीस्वरूपचित्रणं सजीवं विद्यते। तथैव चतुर्थसर्गगतं विप्रलम्भश्रृङ्गारवर्णनमपि सर्वानतिशेते। समालोचका आमनन्ति यत् श्रीहर्षो हि संस्कृतसाहित्यस्य वरेण्यकविष्वन्यतमः। तस्य हि पाण्डित्यं, प्रस्तुतियोग्यता, व्युत्पत्तिश्च सर्वानेव कवीनतिशेते। नैषधीयचरितं हि बृहत्त्रयीषु सर्वोत्कृष्टकृतिः। अस्य हि भाषासौन्दर्यं भावसौष्ठवञ्च कमेव सहृदयं न मोहयति सम्भूय। अस्य हि रसविलासः, करुणस्य द्रवीभावः, चिन्तनस्य विशालता, भावनामुदात्तताः कल्पना प्राचुर्यश्चास्य कवेरनन्यसाधारणत्वं जनयन्ति। सत्यमेव कविः स्वयमेव कथययि—

'निपीय यस्य क्षितिरक्षिणः कथा तथाद्रियन्ते न बुधाः सुधामपि।
नलः सितच्छत्रितकीर्तिमण्डलः स राशिरासीन्महसां महोज्वलः॥'

वस्तुतः काव्यस्यास्याध्ययनानन्तरं न कोऽपि काव्यान्तरं तथाद्रियते। एवमेव करुणस्य द्रवीभावो यथा—

मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी।
गतिस्तयोरेषजनस्तमर्दयन्नहो विधे त्वां करुणा रुणद्धि नो॥ (१।१३५)

अयोगश्रृङ्गारस्य च्छटा यथा—

इदमनङ्गशरावलिपन्नगक्षतविसारिवियोगविषावशा ।
शशिकलेव खरांशुकरार्दिता करुणनीरनिधौ निदधौ न कम्॥(२।३२)

सम्भोगश्रृङ्गारप्रवाहो यथा—

वल्लभस्य भुजयोः स्मरोत्सवे दित्सतोः प्रसभमङ्कपालिकाम्।
एककश्चिरमरोधि बालया तल्पयन्त्रणनिरन्तरालया॥(१८।४३)

उत्प्रेक्षाया वैलक्षण्यं यथा—

हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ।
कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिम॥ (२।२५)

व्यङ्ग्योत्कर्षो यथा—

उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मनः।
अपवर्गे तृतीयेति भणतः पाणिनेरपि॥ (१७।७०)

सत्यपि नैषधीयचरितस्य सर्वोत्कृष्टमहाकाव्यत्वे समालोचकास्तत्रापि काश्चित्त्रुटीस्तु लभन्त एव यतो हि ते जात्यैव छिद्रान्वेषकाः। नैषधीय-

चरिते हि अप्रचलितशब्दानां प्रयोगः, भाषायां जटिलता, शास्त्रीयसन्दर्भाधिक्येन काव्यस्य दुरूहता, कल्पनायाः क्लिष्टता, सौन्दर्यस्यातिशयवर्णनं, वर्णनौचित्यस्यानिर्वाहश्चेति प्रभृतयः सन्त्यनेके पक्षा ये हि खलु तैः श्रीहर्षस्य त्रुटित्वेनेङ्गिताः। सम्भवन्त्यपि ते यत्र कुत्र किन्तु श्रीहर्षकृतौ भावपक्षापेक्षया कलापक्षस्य प्राधान्यं तु सर्वेषामेव सहृदयानां मानसं खेदयति।

ग्रन्थमिदमधिकृत्य सन्ति पञ्चविंशत्यधिकाष्टीकाः। तासु विद्याधरस्य साहित्यविद्याधरी, आनन्दस्य टीका, मल्लिनाथस्य जीवातुः, नारायणस्य नारायणी वा नैषधप्रकाशः इति प्राचीनाः, शेषराजशर्मणश्चन्द्रकला नवीनासु प्रसिद्धा। स्वकाव्यविषये कविः स्वयमेव कथयति—

"ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासो प्रयत्नान्मया
प्राज्ञम्मन्यमना हठेन पठितो माऽस्मिन् खलः खेलतु।
श्रद्धाराद्धगुरुः श्लथीकृतदृढग्रन्थिः समासादय-
स्त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः॥" इति।

तदेतत्—

आदौ कविः कालिदासोऽश्वघोषस्तु ततः परम्।
ततः कुमारदासोऽथ भारविर्भट्टिरेव च॥
माघो रत्नाकरः सिद्धो हरिश्चन्द्रस्तथैव च।
कविराजश्च श्रीहर्षः प्रख्याताः कवयो दश॥

इति कविदशकं व्याख्यातम्।

४६. कृष्णानन्दः

१२५०-१३१० मितवैक्रमाब्दाभ्यर्णे जातेन पुरीवास्तव्येन कृष्णानन्दाख्येन कविना नलोपाख्यानसम्बद्धं सहृदयानन्दनामकं महाकाव्यं प्रणीतम्। कविरसौ वैदर्भरीत्यां विशिष्टः। तेनाऽस्य काव्यं सरसं सरलञ्च।

४७. जयरथः

१२६०-१३२० मितवैक्रमाब्दाभ्यर्णे स्थितिमता काश्मीरेण जयरथाख्येन कविना हरचरितचिन्तामणिनामकं द्वात्रिंशत्प्रकाशनिबद्धं महाकाव्यं प्रणीतमस्ति। काव्येऽकस्मिन् शिवस्य काश्मीरशैवानाञ्च पराक्रमो वर्णितोऽस्ति।

४८. अभयदेव

१२५०-१३२० मितवैक्रमाब्दाभ्यर्णे जातेन जैनमतावलम्बिना अभय-

देवेन १२७८ मितवैक्रमाब्दे एकोनविंशतिसर्गात्मकं महाकाव्यं प्रणीतमस्ति यत्र जयन्ताख्यस्य विक्रमसिंहवंश्यस्य राज्ञो जीवनचरितं वर्णितमस्ति ।

४९. अरिसिंहः

अभयदेवसमकालिकेनैव अर्थात् १२५०–१३२० मितवैक्रमाब्दाभ्यर्णे स्थितिमता अरिसिंहेन १२७९ मितवैक्रमाब्दे सुकृतकीर्तनं नाम महाकाव्यं प्रणीतमस्ति । महाकाव्येऽस्मिन्नेकादशसर्गाः सन्ति । कविरसौ राज्ञः श्रीवीरधवलस्य ( १२७७ वै० ) मन्त्रिणो वस्तुपालस्याश्रितकविरासीत् । काव्येऽस्मिन्तेन वीरधवलस्य वंशावल्या सह वस्तुपालस्य सत्कार्याणां चित्रणं कृतमस्ति ।

५०. बालचन्द्रसूरिः

वस्तुपालस्याश्रितकविना १२५०–१३३० मितवैक्रमाब्दाभ्यर्णे जातेन बालचन्द्रसूरिणा १२९७ मितवैक्रमाब्दे चतुर्दशसर्गात्मकं वसन्तविलासाख्यं महाकाव्य प्रणीतमस्ति यत्र वस्तुपालसुकृत्यानां वर्णनं कृतमस्ति ।

५१. सोमेश्वरदेवः

वीरधवलस्याश्रितकविना वस्तुपालमित्रेण १२६०–१३३० मितवैक्रमाब्दान्तराले जातेन सोमेश्वरदेवेन पञ्चदशसर्गात्मकं सुरथोत्सवनामकं महाकाव्य प्रणीतमस्ति यत्र हि चैत्रवंश्यस्य सुरथाख्यस्य राज्ञश्चरितं वर्णितमस्ति ।

५२. अमरचन्द्रः

वीरधवलस्य मन्त्रिणो वस्तुपालस्य आश्रितकविना १२८०–१३५० मितवैक्रमाब्दान्तराले जातेन अमरचन्द्रेण बालभारतनामकं चतुश्चत्वारिंशत्सर्गात्मकं महाकाव्यं प्रणीतमस्ति यत्र हि महाभारतगता कथैव रोचकशैल्यां समुपन्यस्ताऽस्ति ।

५३. देवप्रभसूरिः

१३०७ मितवैक्रमाब्दाभ्यर्णे स्थितिमता देवप्रभसूरिणा अष्टादशसर्गेषूपनिबद्धं पाण्डवचरितं नाम महाकाव्यं प्रणीतं यत्र पाण्डवानां चरितं काव्यभाषया वर्णितमस्ति ।

५४. चन्द्रप्रभसूरिः

१३३५ मितवैक्रमाब्दमभितः स्थितिमता चन्द्रप्रभसूरिणा प्रभावकचरितं नाम महाकाव्यं प्रणीतमस्ति यत्र हि जैनसाधोः प्रभावकस्य चरितं चित्रितमस्ति ।

### ५५. वीरनन्दी

१३४० मितवैक्रमाब्दमभितः स्थितिमता वीरनन्द्याख्येन कविना चन्द्रप्रभचरितं नाम महाकाव्यं प्रणीतमस्ति। ग्रन्थेऽस्मिन्नष्टादशसर्गाः सन्ति येषु राजकनकप्रभस्य जैनसाधोश्चन्द्रप्रभस्य च जीवनचरितं वर्णितमस्ति।

### ५६. सर्वानन्दः

१३५० मितवैक्रमाब्दाभ्यर्णे स्थितिमता सर्वानन्देन जगडूचरितं नाम काव्यं प्रणीतमस्ति। अस्य हि सप्तसर्गाः सम्प्रत्युपलब्धाः। काव्येऽस्मिन् जगडूनामकस्य कस्यचित्साधोश्चरितं चित्रितमस्ति। असौ हि १३१३ मितवैक्रमाब्दे गुर्जरदेशे घटिताकालपीडासमये जनानां समुद्धारकत्वेन गृहीतोऽस्ति।

### ५७. नयचन्द्रः

१३६० मितवैक्रमाब्दमभितः स्थितिमता नयचन्द्राख्येन विदुषा सप्तदशसर्गात्मकं हम्मीरमहाकाव्यं प्रणीतमस्ति। अत्र हि चौहान वंशस्य राज्ञो हम्मीरस्य चरितं चित्रितमस्ति। हम्मीरो हि अलावुदीनभयाच्छरणागतं कञ्चिद्यवनमाश्रयं दत्तवान् यन्निमित्तं सः अलावुदीनेन हतः।

### ५८. वासुदेवः

मालावारस्य वेदाख्यनामके स्थाने निवसता वासुदेवेन कविना एकविंशतिः काव्यग्रन्थाः प्रणीताः सन्ति। अस्य पिता महर्षिनामा माता च गोपालिका। तस्य हि कृतिषु युधिष्ठिरविजयं नलोदयश्चेति द्वे महाकाव्ये विश्रुते युधिष्ठिरविजये अष्टास्वाश्वासेषु युधिष्ठिरस्य पराक्रमो वर्णितोऽस्ति। नलोदये सम्प्रति चत्वार एव आश्वासा उपलभ्यन्ते येषु राज्यप्राप्त्यनन्तरं नलस्य चरितं चित्रितमस्ति।

कवेरस्य सम्प्रत्यपि नैव कालनिर्णयो जातः। युधिष्ठिरविजये कुलशेखराख्यस्य राज्ञो नलोदये रामाख्यस्य राज्ञ उल्लेखस्तु लभ्यते, किन्तु तेन कालनिर्णये नैव काऽपि सहायता सिध्यति। मालावारे बहूनां हि नृपाणां 'कुलशेखर' इत्युपाधिरेवाऽऽसीत्। अपरञ्च तत्र हि एकाधिककवीनां वासुदेव इत्यभिधानमपि लभ्यते। तेनैव केचित्तु नलोदयस्य कर्तारं युधिष्ठिरविजयकृद्वासुदेवाद्भिन्नमेव वासुदेवं मन्यन्ते। कथ्यते हि केरलेषु ८५७ मितवैक्रमाब्दाभ्यर्णे कश्चित्कुलशेखरो नाम राजा शासति स्म। तेन युधिष्ठिरविजयस्य प्रणयनकालो वैक्रमनवमशतकोऽपि सम्भवति। केचित्कविममुं नारायणभट्टस्य पुत्रं मत्वा तं वैक्रमसप्तदशशतकीयमपि मन्यन्ते। एतावदेव निभृतं वक्तुं

शक्यते यन्नलोदयस्य प्रणयनेन १६५६ मितवैक्रमाब्दात्पूर्वमेव सम्पन्नेन भाव्यं यतो हि अयमेव समयः प्राचीनहस्तलिप्यां दृश्यते। इदमपि अवधेयं भवति यत् १४५७ मितवैक्रमाब्दमभितः स्थितिमानुद्दण्डकविः वासुदेवस्य पितरं महर्षिरिति कथयति। तेन वासुदेवेन १४५७ मितवैक्रमाब्दात्पूर्ववर्तिना तु भाव्यमेव। वासुदेवो हि विक्रमानन्तरदशमशतकादारभ्य पञ्चदशशतकपर्यन्तं कस्मिंश्चिदपि काले स्थितिमान् सम्भवति किन्तु विदुषां बहुमतं तु तं वैक्रमचतुर्दशशतकीनमेव मन्यते।

केचित्तु नलोदयं हि कालिदासस्य कृतिमपि कथयन्ति, किन्तु नैतदुपपद्यते भाषिकसंरचनादिदृष्ट्याऽपि। केचित्त्वस्य प्रणेतारं रविदासनाम्नःऽपि जानन्ति। नलोदयं हि काव्यं भाषाभावप्रस्तुतीकरणादिदृष्ट्या नितान्तमेव पश्चाद्वर्तिनी कृतिः।

**५९. अगस्त्यः**

वारङ्गलनरेशस्य प्रतापरुद्रदेवस्य (१३५१-१३८२ वै०) सभाकविना अगस्त्याख्येन विदुषा चतुःसप्ततिः काव्यग्रन्था प्रणीता इति समालोचकाः कथयन्ति। असौ हि विद्यानाथोपाधिना विभूषित आसीत्। अस्य हि बालभारतसंज्ञकमेकं महाकाव्यं सम्प्रति समुपलभ्यते, यत्र हि पाण्डवानां जीवनचरितमवतारितमस्ति। अत्र हि वैदर्भी रीतिः क्रीडन्तीव दृश्यते।

**६० वेदान्तदेशिकः वेङ्कटनाथः**

काञ्चीनगर्यां १३२५ मितवैक्रमाब्दे जन्म गृहीत्वा १४३३ मितवैक्रमाब्दं यावत् जीवितवता सुदीर्घायुषा वेदान्तदेशिकाऽऽख्येन वेङ्कटनाथेन विंशत्यधिकशतग्रन्थाः प्रणीता आसन्। असौ हि महान् कविर्दार्शनिकश्चासीद्रामानुजसम्मतविशिष्टाद्वैतमतानुयायी। स हि वेदान्ताचार्य-कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्रप्रभृत्युपाधिभिः विभूषितश्चासीत्। अस्य हि पिताऽऽनन्दसूरिर्माता च तोताम्बा। अस्य हि यादवाभ्युदयमहाकाव्यं हंससन्देशखण्डकाव्यं सङ्कल्पसूर्योदयनाटकञ्च साहित्यजगति सश्रद्धं स्मृता ग्रन्थाः।

यादवाभ्युदयं हि चतुर्विंशतिसर्गेषु विस्तृतं महाकाव्यम्। अत्र हि कृष्णावतारकथा सुनिपुणं वर्णिताऽस्ति। काव्येऽस्मिन् तिस्र एव रीतयः साधु प्रयुक्ताः सन्ति। सर्वत्रात्र प्रसादमाधुर्ययोरेव बाहुल्यम्। षष्ठे च सर्गे चित्रकाव्याभ्यासोऽत्र। यत्र कुत्रात्र पूर्ववर्तिनां कवीनामनुसरणमपि दृश्यते। विमानाद् भूतलदृश्यवर्णनं रघुवंशस्य त्रयोदशसर्गं स्मारयति चित्रकाव्याभ्यासश्च भारविमाघौ च। ग्रन्थस्यास्य महनीयत्वमेतावताऽप्यवधेयं यदप्पयदीक्षितपदृशो विशिष्टेतराद्वैतमतानुयायी ग्रन्थस्यास्य व्याख्याऽयं प्रवृत्तः।

अस्य हंससन्देशोऽपि कालिदासीयं मेघदूतमनुसरति। अत्र रामो हि हंस दूतत्वेन सीतासकाशं प्रेषयति दयिताजीविताल्म्बनार्थी। मेघदूते इवात्रापि मन्दाक्रान्तैव वृत्तम्।

विशिष्टाद्वैतमतानुयायित्वादसौ हि साहित्यिकमपि कार्यं स्वाभीष्टमत-प्रतिपादनायैव प्रयुनक्तीति कवेरस्य वैशिष्ट्यम्।

## ६१. गङ्गादेवी

गङ्गादेव्या मधुराविजयाख्यं महाकाव्य सर्वत्र प्रसिद्धमस्ति। असौ हि विजयनगरराज्यसंस्थापकस्य बुक्काख्यनृपस्य (वै० १४००–१४३६) द्वितीय-पुत्र-वीरकम्परायस्य धर्मपत्नी। तेन हि तस्याः स्थितिकालः १४१५ मित-वैक्रमाब्दाभ्यर्णेऽनुमितः। अस्या आन्ध्रयाः महाकाव्यं स्वपतेः कम्पनाख्यस्य दक्षिणवर्तिप्रदेशविजयोदान्तमवलम्ब्यग्रथितमस्ति। विशेषतः कम्पनसम्पादितो मधुरेश्वरवधवृत्तान्तोऽस्य केन्द्रभूमिः।

## ६२. साकल्यमल्लो वा मल्लाचार्यः

१४००–१४७० मितवैक्रमाब्दानभितः स्थितिमतां साकल्यमल्लेन मल्ला-चार्याख्येन रामकथामाश्रित्य उदारराघवसंज्ञकमष्टादशसर्गात्मक महाकाव्यं प्रणीतमस्ति। तस्य हि सम्प्रति नवैव सर्गा लभ्यन्ते।

## ६३. वामनभट्टबाणः

वत्सगोत्रीयस्य कोमटीयज्वनः पुत्रो विद्यारण्यस्य शिष्यो वामनभट्टबाणः त्रिंशत्सर्गात्मक रघुनाथचरिताख्यं महाकाव्य प्रणीतवान्। स हि अदक्या नृपस्य पेद्दुकोमटीवेमभूपालस्य (१४६०–१४७७ वै०) सभाकविरासीत्। तेनाऽस्य स्थितिकालः १४३०–१४८० मितवैक्रमाब्दानभितोऽनुमितः।

रघुनाथचरिताख्ये महाकाव्ये रामस्य चरितं निपुणं चित्रितमस्ति।

अस्यैव नलकथामाश्रित्य प्रणीतं नलाभ्युदयनामकं महाकाव्यमपि लभ्यते। अस्मिन् हि सम्प्रति अष्टावेव सर्गा उपलभ्यन्ते।

असौ हि हर्षचरितकृतो बाणभट्टात्सर्वथा भिन्न एवेति समालोचकाना-माशयः।

## ६४. जोनराजः

१५०७ मितवैक्रमाब्दमभितः स्थितिमता जोनराजेन राजतरङ्गिणी-नामकं महाकाव्यमैतिहासिकं प्रणीय कल्हणस्य राजतरङ्गिण्यामेकं पदमग्रे सारितवान्।

कल्हणस्य राजतरङ्गिणी जयसिंहपर्यन्तामेव परम्परां वर्णयति। जोन-

राजेन जयसिंहादारभ्य सुल्तान जैन-ए-अबिदिन संज्ञकराजपर्यन्ता परम्परा चित्रिता।

६५. श्रीधरः

जोनराजशिष्येण श्रीधरेण १५३० मितवैक्रमाब्दमभितः स्थितिमता जैन-राजतरङ्गिणीं प्रणीय राजतरङ्गिणीपरम्पराऽग्रे सारिता। अनेन हि १५२५ मितवैक्रमाब्दपर्यन्ता परम्परा चित्रिता।

६६. प्राज्यभट्टः

जोनराजशिष्येण प्राज्यभट्टेन १६४० मितवैक्रमाब्दमभितः स्थितिमता राजावलिपताकासंज्ञकमैतिहासिकग्रन्थं प्रणीयैतिहासिककाव्यपरम्परायामेकं पदमग्रे चालितम्। अत्र हि अकबरविजयपर्यन्ता कथा चित्रिताऽस्ति।

६७. भानुदत्तः

गणपत्याख्यपुत्रेण मैथिलेन भानुदत्तेन १३१०–१४०० मितवैक्रमाब्दान्त-रालवर्तिनाऽनेके ग्रन्थाः प्रणीताः सन्ति ? येषु गीतगौरीपतिनामकं महाकाव्यं प्रसिद्धमस्ति। अत्र हि गीतगोविन्दस्य प्रभावः स्पष्टमेव लक्ष्यते तेनानेन वैक्रम-त्रयोदशशतकपरवर्तिना भाव्यम्। तथैव १४२० मितवैक्रमाब्दाभ्यर्णवर्तिना शाङ्र्गधरेणास्य श्लोका उद्धृता इति तस्य १३००–१४०० मितवैक्रमाब्दान्त-राले स्थितिकालः। अस्य रसमञ्जरी, कुमारभार्गवीयं, अलङ्कारतिलकं शृङ्गारदीपिका च महाकाव्येतरग्रन्थाः।

६८ मल्लिनाथः

रघुवंश-कुमारसम्भव-मेघदूत-किरातार्जुनीय-शिशुपालवध-नैषधादिग्रन्थानां व्याख्याता १३६०–१४४० मितवैक्रमाब्दान्तराले स्थितिमत्त्वेनानुमितो मल्लिनाथो रघुवीरचरितं नाम महाकाव्यमपि प्रणीतवानासीदिति ज्ञायते किन्तु ग्रन्थे लेखकत्वेन न कोऽपि समुल्लिखितः। तथापि ग्रन्थोऽयं मल्लिनाथ-प्रणीत इति आफ्रेक्ट्बृहत्सूच्यामुल्लिखितमस्ति।

ग्रन्थेऽस्मिन् सप्तदशसर्गाः सन्ति यत्र हि रामस्य वनगमनादारभ्य राज्या-भिषेकपर्यन्ता घटना वर्णिताऽस्ति। प्रसादमाधुर्यगुणसम्मतमिदं काव्यं स्वजाता-वुत्कृष्टस्थानं निदधाति।

६९. सुकुमारः

१५०७ मितवैक्रमाब्दमभितः स्थितिमता मालावारप्रदेशनिवासिना सुकुमारकविना कृष्णस्य पराक्रमविषये कृष्णविलासं नाम महाकाव्यं प्रणीत-

मस्ति। सम्प्रत्यस्य हि चत्वार एव सर्गा उपलभ्यन्ते। अस्य शैली सरला सरसा च।

**७०. राजनाथो द्वितीयः**

विजयनगरराजाश्रितेन डिण्डिमकविसार्वभौमोपाधिधारिणा द्वितीयराजनाथेन त्रयोदशसर्गात्मकं सालुवाभ्युदयसंज्ञकं महाकाव्यं प्रणीतमस्ति। अस्य हि स्थितिकालः १४८७ मितवैक्रमाब्दमभितोऽनुमितः। अत्र हि साल्वनरसिंहस्य पराक्रमस्तत्पूर्वजचरितञ्च चित्रितमस्ति।

**७१. राजनाथस्तृतीयः**

१४९७ मितवैक्रमाब्दमभितः स्थितिमता द्वितीयराजनाथपौत्रेण तृतीयराजनाथेन विंशतिसर्गात्मकमच्युतरायाभ्युदयं नाम महाकाव्यं प्रणीतमस्ति। अत्र हि विजयनगरस्य राज्ञोऽच्युतरायस्य ( १५८७–१५९९ वै० ) पराक्रमो वर्णितोऽस्ति।

**७२. रामचन्द्रः**

लक्ष्मणभट्टस्यात्मजेन १५९९ मितवैक्रमाब्दमभितः स्थितिमता रामचन्द्रेण द्विसन्धानपद्धतौ रसिकरञ्जनं नाम काव्यं प्रणीतमस्ति। इदं ह्येकतः पठने शृङ्गारिकमर्थं ददाति, अन्यतः पठने तु वैराग्यसम्बद्धमर्थञ्च।

**७३. उत्प्रेक्षावल्लभः**

मालावारनिवासिना उत्प्रेक्षावल्लभकविना प्रणीत भिक्षाटनमहाकाव्यं प्रकाशितमस्ति। काव्येऽस्मिन् एकोनचत्वारिंशत्पद्धतयः ( सर्गाः ) सन्ति। काव्यमिदमपूर्णमेव दृश्यते। अस्य हि सम्भावितस्थितिकालः सम्प्रत्यप्यज्ञातः। समालोचकाः सामान्यतः कविमिमं वैक्रमषोडशशतकोत्तरार्धभवं मन्यन्ते। काव्येऽस्मिन् प्रणेतृत्वेन न कस्यापि नामोल्लिखितं दृश्यते। तत्र शिवभक्तदास इति समुल्लिखितं दृष्ट्वा लेखकस्य नामेति कल्पयन्ति केचित्किन्तु तदपि विशेषणमेव दृश्यते।

**७४. रुद्रकविः**

रुद्रकविना राष्ट्रौढवंशमहाकाव्यं प्रणीतमस्ति। अत्र हि विंशतिः सर्गाः सन्ति। तत्र मयूरगिरेः प्रथमनृपाद् राष्ट्रौढान्नारायणशाह-पर्यन्तो वंशवृक्षो वर्णितोऽस्ति। असौ हि नारायणशाहस्य सभाकविः। तेन तस्य स्थितिकालः १६५३ मितवैक्रमाब्दमभितोऽनुमितः। अयमेव काव्यप्रणयनकालश्च।

**७५. चन्द्रशेखरः**

बुन्दीतरेशसुर्जनाश्रितेन चन्द्रशेखरेण विंशतिसर्गेषु विभक्तं सुर्जनचरित-

महाकाव्यं प्रणीतमस्ति। काव्यमिदं सरसं सुबोधञ्च। अस्य स्थितिकालः १६५० मितवैक्रमाब्दाभ्यर्णेऽनुमितः।

### ७६. चिदम्बरः

विक्रमानन्तर १६६० मिताब्दमभितः स्थितिमता चिदम्बराख्येन विदुषा त्रिसन्धानपद्धत्याश्रितं राघवपाण्डवीययादवीयाख्य-महाकाव्यं प्रणीतमस्ति। अस्य हि प्रत्येकश्लोकस्य त्रयोऽर्था भवन्ति रामपक्षीयः पाण्डवपक्षीयः कृष्ण-पक्षीयश्च। काव्यमिदमतीव क्लिष्टम्।

### ७७. यज्ञनारायणः

गोविन्दस्य पुत्रेण यज्ञनारायणेन १६६० मितवैक्रमाब्दमभितः स्थितिमता तञ्जोरराजरघुनाथाश्रितेन षोडशसर्गेषु विभक्तं रघुनाथभूपविजयं नाम महा-काव्यं प्रणीतमस्ति। अत्र हि रघुनाथस्य जीवनचरितं चित्रितमस्ति। ग्रन्थो-ऽयं साहित्यरत्नाकरनाम्नाऽपि ज्ञायते।

### ७८. अद्वैतः

विक्रमानन्तरं १६६५ मितवर्षाभ्यर्णे स्थितिमता अद्वैताख्येन विदुषा रामलिङ्गामृतं नाम महाकाव्यं प्रणीतमस्ति।

### ७९ राजचूडामणिः

तञ्जोरराजरघुनाथाश्रितेन १६७७ मितवैक्रमाब्दमभितः स्थितिमता रत्नखेटश्रीनिवासपुत्रेण राजचूडामणिनाऽनेकेषु विषयेषु ग्रन्थाः प्रणीताः सन्ति, यत्र दशसर्गात्मकं रुक्मिणीकल्याणाख्यं महाकाव्यमप्यस्ति। अत्र हि कृष्णस्य रुक्मिण्या सह विवाहो वर्णितोऽस्ति सरसया रीत्या।

### ८०. रामभद्राम्बा

१६७७ मितवैक्रमाब्दमभितः स्थितिमत्या तञ्जोरनरेशरघुनाथस्य पत्न्या रामभद्राम्बाख्यया रघुनाथाभ्युदयनामकं द्वादशसर्गात्मकं महाकाव्यं प्रणीत-मस्ति यत्र राज्ञो रघुनाथस्य पराक्रमो वर्णितोऽस्ति।

### ८१. मधुरवाणी

रघुनाथाश्रितया तञ्जोरवासिन्या मधुरवाण्याख्यया कवयित्र्या रामा-यणाख्यं महाकाव्यं प्रणीतमस्ति यत्र चतुर्दशसर्गाः १५०० श्लोकाश्च सन्ति। रघुनाथस्य स्थितिकालः १६७१–१७१९ वैक्रमाब्दान्तरालेऽनुमितः। स एवास्याः कवयित्र्याश्च।

८२. चक्रः

१६८० मितवैक्रमाब्दमभितः स्थितिमतो मधुरायास्तिरुमलनायकाश्रितस्य चक्रकवेः जानकीपरिणयमहाकाव्यं प्रसिद्धम्। अत्र हि अष्टासु सर्गेषु रामस्य सीतया सह विवाहो वर्णितः।

८३. नीलकण्ठः

नीलकण्ठो हि अप्पयदीक्षितस्य भ्रातुः पौत्रः। स हि १६७० मितवैक्रमाब्दे समुत्पन्न आसीत्। असौ हि वेङ्कटेश्वरमखिनः शिष्य आसीत्, मदुरायास्तिरुमलनायकस्य प्रधानमन्त्री। अनेन हि १७०७ मितवैक्रमवर्षाभ्यर्णे साहित्यिकं कार्यं प्रारब्धम्। तस्य सन्त्यनेके ग्रन्थाः यत्र शिवलीलार्णवं गङ्गावतरणञ्च द्वे महाकाव्ये प्रसिद्धे। शिवलीलार्णवे हि सन्ति द्वाविंशतिसर्गाः। अत्र हि हालास्यनाथाख्यस्य चतुःषष्टिक्रीडानां वर्णनमस्ति। गङ्गावतरणे सन्त्यष्टौ सर्गाः। अत्र हि भूतले गङ्गाया अवतरणस्य सुन्दरं वर्णनमस्ति।

८४. वेङ्कटाध्वरी

काञ्चीनिवासिना वेङ्कटाध्वरिणा रामानुजमतानुयायिना १७०७ मितवैक्रमाब्दमभितः स्थितिमता यादवराघवीयसंज्ञकं द्विसन्धानकाव्यं प्रणीतमस्ति यस्य सम्प्रति त्रिंशदेव श्लोका लभ्यन्ते। तस्य ह्यनुप्रासच्छटा निभालनीया।

८५ मेघविजयगणिः

१७२८ मितविक्रमाब्दाभ्यर्णे स्थितिमता जैनेन मेघविजयगणिना नवसर्गेषु विस्तृतं सप्तसन्धानमहाकाव्यं प्रणीतमस्ति। तत्र हि श्लेषेण वृषभनाथ-शान्तिनाथ-पार्श्वनाथ-नेमिनाथ-महावीरस्वामि-कृष्ण-बलदेवानां सप्तानां चरितं चित्रितमस्ति। अस्य हि प्रत्येकं पद्यं सप्तविधमर्थं जनयति तत्तत्परम्।

८६. देवविमलगणिः

१७६० मितवैक्रमाब्दमभितः स्थितिमान् देवविमलगणिर्जैनः हीरसौभाग्यनामकं सप्तदशसर्गात्मकं महाकाव्यं प्रणीतवान्। स हि 'जगद्गुरु' रित्युपाधिना विभूषितः।

८७. रामभद्रः

तञ्जौरराज्यशासकस्य 'शाहजी' इत्येतस्य १७४१–१७६८ मितवैक्रमाब्दान्तराले स्थितिमतः सभापण्डितो रामभद्रः १७६० मितवैक्रमाब्दाभ्यर्णे पतञ्जलिचरितं नाम महाकाव्यं प्रणीतवान्। अत्र हि महावैयाकरणस्य पतञ्जलेश्चरितं चित्रितमस्ति।

८८ हरदत्तः

१७८० मितवैक्रमाब्दाभ्यर्णवर्तिना हरदत्तेन राघवनैषधीयाख्यं द्विसन्धानकाव्यं प्रणीतमासीत्। अत्र हि श्लेषेण रामनलयोश्चरितं चित्रितमस्ति। अस्य हि सम्प्रति द्वावेव सर्गौ लभ्येते।

८९ मोहनः

१८०७ मितवैक्रमाब्दमभितः स्थितिमता मोहनस्वामिना रामचरितं नाम महाकाव्यं प्रणीतमस्ति।

एवमेव अज्ञातस्थितिकालस्य कृष्णदासकविराजस्य गोविन्दलीलामृतं, वस्तुपालस्य (१४ श०) नरनारायणानन्दं, गोविन्दमखिनः (१६श०) हरिवंशसारचरितं, वेङ्कटेश्वरस्य रामचन्द्रोदयम्, शङ्कराराध्यस्य वसवेहाविजयं (१२०७ वै०), सोमनाथस्य पण्डिताराध्यचरितं (१२०७), माधवाचार्यस्य यमकभारतं (१२८२), त्रिविक्रमस्य उषाहरणकाव्यं (१३१७ वै०) माधवस्य नरकासुरविजयं (१४३७ वै०) व्यासतीर्थस्य (१४६० वै०) जयतीर्थविजयं, कृष्णस्य जयतीर्थविजयाब्धिः, सङ्कर्षणस्य जयतीर्थविजयं, श्रीनिवासस्य जयीन्द्रोदयं (१४६० वै०), शङ्करस्य कृष्णविजयं (१४८७ वै०) कृष्णाचार्यस्य भरतचरितं (१४८७ वै०), रामवर्मणो भारतसंग्रहः (१४८७ वै०), शिवसूर्यस्य पाण्डवाभ्युदयं (१५०७ वै०), अज्ञातकर्तृत्वं कुशाभ्युदयं (१५१७ वै०) चतुर्भुजस्य हरिचरितकाव्यं (१५५० वै०), स्वयम्भूनाथस्य (१५९७ वै०) कृष्णविलासः, मृत्युञ्जयस्य प्रद्युम्नोत्तरचरितं, वेङ्कटकृष्णस्य (१७०७ वै०) नाटेशविजयम्, श्रीनिवासस्य (१७१७ वै०) भूवराहविजयं, वरददेशिकस्य लक्ष्मीनारायणचरितं, रघुवरविजयं (१७३७ वै०), भगवन्तस्य (१७४७ वै०) मुकुन्दविलासः, घनश्यामस्य (१७८२ वै०) भगवत्पादचरितं, वेङ्कटेशचरितं, रामपाणिवादस्य (१८८२ वै०), विष्णुविलासं, राघवीयकाव्यं, रामवर्मणः (१८५७ वै०) रामचरितं, केरलवर्मणो (१९१७ वै०) विशाखराजचरितं, परमेश्वरशिवस्य (१९२७ वै०) रामवर्ममहाराजचरितं, अभिनवरामानुजाचार्यस्य (१९३२ वै०) श्रीनिवासमुधाकरं, विधुशेखरस्य (१८५७ वै०) उमापरिणयं, हरिश्चन्द्रचरितं, चण्डमारुताचार्यस्य (१९५७ वै०) अलीनराजकथा, नारायणस्य मौन्दरविजयं (१९५७ वै०), मद्राद्रिरामस्य (१९५७ वै०) श्रीरामविजयं, शङ्करलालस्य (१९५७ वै०) रावजीराजकीर्तिविलासं, बालचरितं, शिवकुमारस्य (१९६७ वै०) यतीन्द्रजीवनचरितं, हेमचन्द्ररायस्य (१९७७ वै०) हैहयविजयं, पाण्डवविजयं, अन्नदाचरणस्य (१९८७ वै०) रामा-

भ्युदयं, महाप्रस्थानं, वटुकनाथस्य ( १९८७ वै० ) सीतास्वयंवरं, गुरुप्रसन्नस्य ( १९८७ वै० ) श्रीरासमहाकाव्यं, नागराजस्य ( १९९७ वै० ) सीतास्वयंवरं, देशभक्तचरितं, भगवदाचार्यस्य भारतपारिजातं, पारिजातापहारं, पारिजातसौरभं ( १९९७–२००७ वै० ), विष्णुदत्तस्य ( २०१५ वै० ) सौलोननीयं, गङ्गाकाव्यं, मेधाव्रतस्य ( २००७ वै० ) दयानन्ददिग्विजयं, रामावतारस्य (२००४ वै०) भारतानुवर्णनं, दिलीपदत्तस्य ( २००६ वै० ) मुनिचरितामृतं, अखिलानन्दस्य ( २००५ वै० ) दयानन्ददिग्विजयं, गङ्गाधरतैलङ्गस्य अलिविलापसंलापः, मथुरानाथस्य ( २००६ वै० ) जयपुरवैभवं, गोविन्दवैभवं, रघुनाथस्य चन्द्रोपालम्भवर्णनं ( २००७ वै० ), मथुराप्रसादस्य प्रतापविजयं, भारतविजयं ( २००७ वै० ), बदरीनाथस्य ( २००८ वै० ) राधापरिणयः, गङ्गाप्रसादस्य भावोदयं, उमापतेः परिजातहरणं, रामस्नेहिनो जानकीचरितामृतम् ( २००७ वै० ), द्विजेन्द्रनाथस्य स्वराज्यविजयम् ( २०१७ वै० ), सत्यव्रतस्य (२०२० वै०) बोधिसत्वचरितं, गुरुगोविन्दसिंहमहाकाव्यं, भण्डारकरोपाह्वत्र्यम्बकशर्मणः स्वामि-विवेकानन्दचरितमहाकाव्यमष्टादशसर्गात्मकम्, रेवाप्रसादस्य ( २०२५ वै० ) सीताचरितं, एवमेव माधवप्रसाददेवकोटाऽऽख्यस्य भारतीवैभवं ( काव्यं ) उमानाथशर्मणो गण्डकीगौरवं, कृष्णप्रसादशर्मणः श्रीरामविलापः ( खण्डकाव्यं ) श्रीकृष्णचरितामृतं ( महाकाव्यं, षट्पञ्चाशतसर्गात्मकं ) नाचिकेतसं, ययातिचरितं, सम्पातिसन्देशः, रोहिणीवल्लभशर्मणोऽभिनवमेघदूतं, नरहरिनाथस्य अन्योक्तिमुक्तावलि, भरतराजशर्मणो महेन्द्रोदय महाकाव्यं ( दशसर्गात्मकं ), छविलालसूरेर्विरक्ततरङ्गिणी ( खण्डकाव्यम् ), लक्ष्मणकवेः कवितानिकषोपलः ( १८५० वै० ), कुलचन्द्रशर्मणो भागवतमञ्जरी, गङ्गागौरव, श्रीकृष्णकर्णामृतं, हरिवरिवस्या, सोमनाथर्मण आदर्शराघवपुष्पाञ्जलिः पूर्णप्रसादब्राह्मणस्य सत्यहरिश्चन्द्रमहाकाव्यं, हरिप्रसादस्य शाहवंशचरितं चेतिप्रभृतिकाव्यग्रन्थत्वेन समालोचकैः स्मृताः ग्रन्थाः केचन ।

**९०. वसन्तत्र्यम्बकः शेवडेः**

वसन्तत्र्यम्बकशेवडे हि साम्प्रतिको महाकविमूर्द्धन्यः । तस्य हि विन्ध्यवासिनीविजयमहाकाव्यं षोडशसर्गात्मकं, शुम्भवधमहाकाव्यं चतुर्दशसर्गात्मकं, स्तवमञ्जूषा च प्रसिद्धग्रन्थाः । शेवडेमहोदयस्य वृत्तिर्हि सरसतायां सरलतायां च कालिदासीयकृतिभिः सह तुलामारोहन्ति । अर्थगौरवे कविरेष भारविमनुसरति, पदसौष्ठवे दण्डिनञ्च । स स्वयमेव कथयति—

शब्दास्त एव हि भवन्ति भवन्ति चार्थास्तेषां परं विजयते रचनाविशेषः ।
यस्यैव दोषगुणभेदकृतो विभाति भेदः स्फुटं जगति दुष्कविसत्कवीनाम् ॥

**उपसंहृतिः**

प्रसिद्ध ऐतिहासिको विचक्षणो वरदराजः कथयति यत् संस्कृतसाहित्यस्याध्ययनेनेदं ज्ञायते यदस्य विकासोऽत्यन्तोन्नतरूपेण समजायतेति । अस्य हि विकासे त्रयः कालविभागा दृष्टिगोचरीभवन्ति—कालिदासपूर्ववर्तिकालः, कालिदाससमकालः, कालिदासोत्तरकालश्च । प्रकारान्तरेण कथने वयमिमं कालविभागं भावप्रधान–भावभाषासमप्रधान–भाषाप्रधानाभिधानेनापि ज्ञातुं शक्नुमः । अथास्य संक्षेपेणात्र विवेचनं क्रियते ।

कालिदासपूर्ववर्तिकाले काव्ये भावस्यैव प्राधान्यमासीत् । तत्र भाषायास्तु गौणत्वेनैव प्रयोगो दृश्यते । तेनैवात्र कवीनां स्वरचनात्मकशक्तेर्विकासाय प्रकाशनाय च सुयोग्योऽवसरः सुलभ आसीत् । वाल्मीकि-व्यास-सुबन्धु-भास-शूद्रकादयोऽस्य कालस्य प्रतिनिधिकवयः ।

द्वितीये हि काले कालिदासतत्समकालाभ्यर्णवर्ति अश्वघोष-कुमारदासादयो हि प्रतिनिधिकवयो मताः । भावस्य भाषायाश्च सन्तुलितविकास एवास्य कालस्य वैशिष्टचम् । कालेऽस्मिन् कवीनां रचनाशक्तिरालङ्कारिकसौन्दर्येण सहैव प्रचलति । सत्यमेवैतद्यत्कालिदासेन यदेव काव्यस्योत्कृष्टस्वरूपमुपस्थापितं भावभाषासन्तुलितविकासपरिणामात्मकं तदश्वघोषे वा कुमारदासे किञ्चिदवनतमिव दृश्यते तथापि नैतस्य तत्र नितान्ताभावः ।

तृतीयो हि कालो द्वितीयकालात्सर्वथा भिन्न एव । कालेऽस्मिन् काव्ये स्वाभाविकत्वापेक्षया कृत्रिमता प्राचुर्येण दृश्यते पूर्वानुकरणञ्च । काव्ये हि स्वाभाविकाभिव्यक्तेः स्थानं प्रतिस्पर्धिभावनया गृहीतम् । तथैव तत्र भावापेक्षया भावुकतायाः प्रवाहापेक्षया कल्पनायाः अनुभूत्यपेक्षया पाण्डित्यप्रदर्शनमेव कृतास्पदं दृश्यते । रचनात्मकप्रवृत्तेर्महत्त्वं न्यूनीकृतं बाह्यरूपस्य प्राधान्यमुदितं यतो विषयस्य गौणतोदिता । तथासाधने भावस्तु नितान्तमेवोपेक्षितः । कविषु न केवलं शाब्दिकचमत्कारप्रदर्शनमेव कौशलप्रदर्शनं सञ्जातं तथा तत्कृते प्रतियोगिताऽपि तेषां सम्पन्ना । लक्षणव्यवहाराय कतिपयेषामेतादृशानां वस्तूनां वर्णनमपि काव्ये समुदितं येषां काव्यवस्तुना सह वस्तुतो न कोऽपि सम्बन्धः सम्भवति नैतावन्मात्रमपि तु काव्यवस्तुकृतेऽनुपयुक्तवस्तूनामपि वर्णनं काव्ये समाविष्टम् । रत्नाकरस्य हरविजयं, मङ्खस्य श्रीकण्ठचरितं, शिवस्वामिनः कप्फणाभ्युदयञ्च प्रवृत्तेरस्य सर्वाधिकपोषकाणि । कविः केवलं शब्दालङ्कारप्रयोग एव नितान्तसंलग्नः सञ्जातः । प्रवृत्तिरेषा भारविनाऽऽरब्धा माघं प्राप्य विकसिता, वासुदेव-शिवस्वामि-वेङ्कटाध्वरिणः प्राप्य मुकुलिता पुष्पिता च । केषुचिद्व्याकरणप्रभावमपि स्पष्टमेवावश्यकता-

धिकमेवोदितं दृश्यते। प्रवृत्तिरेषाऽश्वघोषेण बीजिता भारविणा संवर्धिता। भीमक-भट्टि-हलायुधैस्तु व्याकरणसिद्धये एव काव्यानि प्रणीतानि। यथा यथा काव्यस्य बाह्यरूपात्मकता भावापेक्षया प्रबलतरा सञ्जाता तथा तथा काव्ये कवित्वातिरिक्तान्यविषयस्य पाण्डित्यप्रदर्शनमप्युदितम्। प्रवृत्तिरेषा श्रीहर्षे सर्वाधिकत्वेन दृश्यते। श्लेषमाश्रित्य एकाधिकभावानां सहैव प्रकाशन-प्रवृत्तिरपि समुदिता काव्ये। प्रवृत्तिरेषा धनञ्जयेन प्रारब्धा राघवपाण्डवी-याख्यद्विसन्धानकाव्यप्रणयनेन। कविराजेनैषा संवर्द्धिता। चिदम्बरेण त्रिसन्धानकाव्यं मेघविजयगणिना तु सप्तसन्धानकाव्यमपि प्रणीतम्। अनेन कवित्वसाधनायाः स्थानं बौद्धिकपरिश्रमेण गृहीतम्। तथा साधने विचारा भावाश्च समूलमेव प्रणष्टाः। काव्ये हि विश्वजनीनत्वापेक्षया साम्प्रदायिक-भावानां प्राबल्यमुदितम्। अश्वघोषहेमचन्द्रप्रभृत्युत्कृष्टकोटिकविषयेष्वपि प्रवृत्तिरेषा कृतास्पदा। तथैव कवयो हि स्वाश्रयदातृप्रसादनाय तत्तत्प्रशंसक-काव्यानि रचयितुं प्रवृत्ताः। हेमचन्द्रस्य कुमारपालचरितमस्य परममुदाहरणम्। यद्यपि प्रवृत्तिरेषा परिमलकालिदासोपाधिधारिणा पद्मगुप्तेन 'नवसाहसाङ्क-चरितं' प्रणीय समारब्धा तथापि तदपेक्षयाऽपि पश्चाद्वर्तिकविषु तत्प्रभावो ऽधिकमेव दृश्यते। प्रवृत्तिरेषा तथा प्रवृद्धा यत्पत्न्यपि स्वपतिप्रसादाय तद्यशः-प्रसारणहेतुककाव्यप्रणयनाय प्रावर्तत। रामभद्राम्बायाः रघुनाथाभ्युदयं' प्रसङ्गेऽस्मिन् स्मरणीयं काव्यम्। तथैवेतिहासोऽपि काव्यरूपेणोपस्थापितः कल्हण-जोनराज-श्रीधरादिभिः। काव्ये हि प्राकृतस्य स्थानमपि सुरक्षितं सञ्जातम्। प्रवरसेनस्य सेतुबन्धः, वाक्पतिराजस्य गउडवहो प्रवृत्तेरस्य परमुदाहरणं, हेमचन्द्रस्य कुमारपालचरितञ्च ( चरमा अष्टौ सर्गाः )।

उत्तरदिशि काश्मीरः पूर्वदिशि पाटलीपुत्रं पश्चिमदिशि गुर्जरदेशो दक्षिण-दिशि मालावारश्च संस्कृतकाव्यप्रकर्षाय समभवन्। कार्येऽस्मिन् विदिशाऽपि प्रशस्या यत्र कालिदासेनाभिज्ञानशाकुन्तलसदृशो ग्रन्थः प्रणीतः।

'कवयो वनिता वल्ल्यो न तिष्ठन्ति निराश्रयाः' इति कथनानुसारमेव यावत्पर्यन्तं हि देशे राजानः काव्यमर्मज्ञा आसंस्तावत्पर्यन्तं हि काव्यस्याबाध-रूपेण विकासः समभवत्। तेषां ह्याश्रयेण कवयोऽपि कृतकृत्या आसन्। सन्त्य-नेकानि निदर्शनानि यद्राजाश्रयेणैव कवय कृतकार्या अभवन्। पाणिनेर्हि नन्दी, कात्यायनस्य योगनन्दः, पतञ्जलेः पुष्यमित्रः, सुबन्धोर्बिन्दुसारो वत्सेश्वरश्च, कालिदासस्य विक्रमादित्योपाधिधारी शूद्रकः, अश्वघोषस्य कनिष्कः, भारवे-र्विष्णुवर्धनः, भट्टेः श्रीधरसेनः, बाणस्य श्रीहर्षः, माघस्य श्रीभोजः, वाक्पति-राजस्य भवभूतेश्च यशोवर्मा, रत्नाकरस्यावन्तिवर्मा, हलायुधस्य कृष्णः, पद्म-गुप्तस्य भोजः, मङ्खस्य जयसिंहः, कल्हणस्य जल्हणस्य च सोमपालः, सन्ध्या-

करनन्दिनो रामपालः, हेमचन्द्रस्य कुमारपालः, कविराजस्य कामदेवः, श्रीहर्षस्य विजयचन्द्र-जयचन्द्रौ, चण्डस्य पृथ्वीराजः, अरिसिंहस्य वीरधवलः, वासुदेवस्य कुलशेखरः, अगस्त्यस्य विद्यानाथस्य च प्रतापरुद्रदेवः, यज्ञनारायणस्याच्युतः, नीलकण्ठस्य तिरुमलनायकः, जगन्नाथस्य शाहजहानश्चाश्रयभूता राजान आसन्निति तत्तद्ग्रन्थविलोकनतो ज्ञायते। यदा भारतं विदेशिशासनाधीनं सञ्जातं, विशेषत आङ्ग्लशासनस्य, ततः प्रभृति राजानो हि गतश्रीका अजायन्त सहैव कविपरम्पराऽपि निरुद्धेति। सत्यमेवोक्तम्—

गतास्ते राजानो य इह कृतिनं बिभ्रति कविं
प्रयातास्ते विज्ञा य इह वचसाऽर्चन्ति सुकविम्।
वणिग्द्वाःस्थः कुर्यात्कथमयमहो काव्यममलं
स्मरंस्तान् स्वं निन्दन्निह वसति कश्चिद्गतवयः॥ इति।

अन्ते च—

सा रम्या नगरी महान् स नृपतिः सामन्तचक्रञ्च तत्
पार्श्वे तस्य च सा विदग्धपरिषत्ताश्चन्द्रबिम्बाननाः।
उद्वृत्तः स च राजपुत्रनिवहस्ते वन्दिनस्ताः कथाः
सर्वं यस्य वशादगात् स्मृतिपथं कालाय तस्मै नमः॥

यथाऽऽह पाजकः—

लक्ष्मीपङ्ककलङ्किताः परिमितक्ष्माखण्डपिण्डीभुजो
गर्वग्रन्थिविसंस्थुलैरवयवैर्नेपथ्यकन्थामृतैः ।
एते कीदृश ईश्वराः कुपतयः किं वाऽनया चार्चया
यस्त्रैलोक्यविलक्षणः फलतु नः सत्यं स एवेश्वरः॥ इति।

## ( ख ) खण्डकाव्यानि

**परिचयः**

महाकाव्यस्यैकदेशानुवर्ति खण्डकाव्यं भवति। महाकाव्ये हि एकस्य वा एकाधिकानां नायकस्य नायकानां समग्रमेव जीवनं चित्रितं भवति काव्यसम्बद्धम्। खण्डकाव्ये तु तस्यैकदेश एव चित्रितो भवति। तेन खण्डकाव्यं हि वस्तुतो लघुकाव्यमेव। यत्र हि महाकाव्ये जीवनस्य समग्रताया प्रसारस्तत्र खण्डकाव्ये जीवनस्यैकस्यैव पक्षस्य तन्मयता भवति। तेन हि खण्डकाव्यमाकारेण प्रकारेण च महाकाव्याल्लघुतरं तु भवत्येव। अपि च महाकाव्ये जीवनस्यैकाधिकमपि पक्षं प्रस्तोतुं शक्यते खण्डकाव्ये तु एक एव पक्ष उन्नीयते। अतो विस्तृतकलेवरान्महाकाव्याल्लघुकलेवरं हि खण्डकाव्यं सशक्ततरं

प्रभावितरञ्च भवति। खण्डकाव्येऽत एव महाकाव्यापेक्षया समधिकमेव लालित्यं माधुर्यञ्च भवति।

खण्डकाव्यं हि मुख्यतश्चतुर्विधं दृश्यते शाङ्गारिकं, धार्मिकं, नैतिकं साङ्ग्रहिकञ्च। प्रथमोऽपि भेदः गीति-प्रस्तुति-स्फुटभेदेन विविधः। द्वितीयो हि स्तुतिकाव्यमेव। तृतीयस्तु नीतिपरको वोपदेशपरकः अन्योक्तिरूपश्च। चतुर्थ-भेदस्तु सङ्ग्रहपरकः सुभाषितसङ्ग्रहः कोषश्चास्य भेदौ। यत्र कुत्र तु सर्वेषा-मेव पक्षाणां मिश्रणमपि दृश्यते।

**खण्डकाव्यस्योत्पत्तिः**

यद्यपि लौकिकसाहित्ये खण्डकाव्यस्योद्घाटनं कालिदासेनैव कृतं तथापि नैतावता तस्य तस्मादपि प्राचीनतरत्वं व्याहन्यते। ऋग्वेदादावपि खण्ड-काव्यस्य स्वरूपमुपलभ्यते। कमनीयार्थद्योतकं वाक्यमेव भवति काव्यम्। यत्र हि किञ्चिदपि वाक्यं तथारूपेणोपन्यस्तं भवति, तत्र खण्डकाव्यस्य विषय उत्पद्यते एव। तेन हि वाक्यस्य काव्यत्वेऽन्तस्तत्वमेव हेतुर्न तु बाह्यम्। वाक्यौघो वा एकमेवापि वाक्यं काव्यं भवति यदि तत्कमनीयमर्थं प्रकाशयति। ऋग्वेदादौ सन्ति एतादृशानि वचनानि यानि खलु काव्यत्वं बिभ्रति। यथा हि उषःसूक्तं, विपाशाशुतुद्रीसूक्तं, सुदासविजयसूक्तं, भूमिसूक्तञ्चेत्यादिसूक्तौघे।

हंसराजप्रभृतयः समालोचकाः खण्डकाव्यं पञ्चविधं मन्यन्ते सूक्तमयं भक्तिरसमयमैतिहासिकं रूपकान्तर्गतं सङ्कीर्णञ्च। तेषु हि वेदेषु समुपन्यस्तं सूक्तमयं यथोषःसूक्तम्, भक्तिरसमयं यथोपनिषत्सु बौद्धादिग्रन्थेषु च, ऐतिहासिकं यथा रामायणे महाभारते प्रस्तुतं प्रकृतप्रकृतिवर्णनम्, रूप-कान्तर्गतं यथा रूपकान्तरुपस्थापितपद्यानि, सङ्कीर्णञ्च शृङ्गारप्रधानं मेघ-दूतादिकमिति।

## ( अ ) शाङ्गारिककाव्यानि

शाङ्गारिकगीतिकाव्यमपि दूतकाव्य-प्रस्तुतिकाव्य-मुक्तककाव्यभेदादनेकविधं भवति। तत्र दूतकाव्यं यथा मेघदूतं कालिदासस्य, जिनसेनस्य ( ८७१ वै० ) पार्श्वाभ्युदयः, विक्रमकवेर्नेमिदूतं, धोयीकवेः ( १२२६ वै० ) पवनदूतं, वेदान्तदेशिकस्य ( १३६० वै० ) हंससन्देशः, उद्दण्डकवेः ( १४६० वै० ) कोकिलसन्देशः, वामनभट्टबाणस्य ( १४७७ वै० ) हंससन्देशः, रूपगोस्वा-मिनो हंसदूतं, उद्धवसन्देशः, रामशास्त्रिणः ( १९८० वै० ) मेघप्रतिसन्देशः, पूर्णसरस्वत्याः हंससन्देशः, 'विष्णुत्राता' इत्यस्य ( १६८० वै० ) कोकसन्देशः, वासुदेवस्य (१७८० वै०) भृङ्गसन्देशः, विनयप्रभस्य इन्दुदूतं, ( १३५० वै० )

विष्णुदासस्य मनोदूतं, रामारामस्य मनोदूतं तथा च घटकर्परस्य घटकर्पर-काव्यञ्च ।

प्रस्तुतिकाव्येषु कालिदासस्येत्यभिमतं शृङ्गारतिलकं, कालिदासस्य ऋतु-संहारम्, पुष्पबाणविलासः, राक्षसकवेः राक्षसकाव्यं, अमरुकस्य अमरुशतकं, भर्तृहरेः शृङ्गारशतकं, बिल्हणस्य ( ११३७ वै० ) चौरपञ्चाशिका, जयदेवस्य गीतगोविन्दं ( १२२६ वै० ) रायभट्टस्य ( १५५० वै० ) शृङ्गारकल्लोलश्च प्रसिद्धग्रन्थाः ।

स्फुटपद्यानां तु सङ्ख्या गणनातीतैव । स्फुटपद्यमेव मुक्तकमपीत्युच्यते । अस्य स्वरूपं प्रस्तुतिकाव्येष्वपि दृश्यते ।

## ( आ ) धार्मिककाव्यानि

धार्मिकगीतिकाव्येषु हि कालिदासस्य श्यामलादण्डकं, अश्वघोषस्य गण्डीस्तोत्रगाथा, सिद्धसेनदिवाकरस्य ( ५५० वै० ) कल्याणमन्दिरस्तोत्रं, श्रीहर्षस्य सुप्रभातस्तोत्रं, अष्टमहाश्रीचैत्यस्तोत्रं, बाणस्य ( ६६० वै० ) चण्डीशतकं, मयूरकवेः सूर्यशतकं, मातृतुङ्गस्य भक्तामरस्तोत्रं, सर्वज्ञमित्रस्य स्रग्धरास्तोत्रं, शङ्कराचार्यकृतित्वेन प्रसिद्धानि विविधस्तोत्राणि, सौन्दर्यलहरी, अन्नपूर्णादशकं, अन्नपूर्णाष्टकं, कनकधारास्तवः दक्षिणामूर्त्यष्टकं, रामभुजगस्तोत्रं, लक्ष्मीनृसिंहस्तोत्रं, विष्णुपादादिकेशान्तवर्णनं, शिवभुजगस्तोत्रं, शिवानन्दलहरी, शिवमानसपूजास्तोत्रम्, कुलशेखरस्य मुकुन्दमाला, मूककवेर्मूकपञ्चशती, काश्मीरस्य पुष्पदन्तस्य महिम्नःस्तवः, रत्नाकरस्य वक्रोक्तिपञ्चाशिका, आनन्दवर्धनस्य देवीशतकं, उत्पलदेवस्य स्तोत्रावली, यामुनस्य (१०६० वै०) चतुःश्लोकीस्तोत्ररत्नञ्च, रामानुजस्य शरणागतिगद्यं, वैकुण्ठगद्यं, श्रीरङ्गगद्यं, पञ्चाङ्कस्य पञ्चस्तवः श्रीस्तवोऽतिमानुषस्तवो वरदराजस्तवः सुन्दरबाहुस्तवो वैकुण्ठस्तवश्च, पराशरभट्टस्य श्रीरङ्गराजस्तवः, श्रीगुणरत्नकोशः, जयदेवस्य गङ्गास्तवः, गीतगोविन्दञ्च, कृष्णलीलाशुकस्य कृष्णकर्णामृतं, मध्वाचार्यस्य द्वादशस्तोत्रम्, वेदान्तदेशिकस्य पादुकासहस्रं, गरुडदण्डकं, रघुवीरगद्यं, अच्युतशतकं, अप्पयदीक्षितस्य ( १६११ वि० ) वरदराजस्तवः, नारायणभट्टस्य नारायणीयम्, मधुसूदनस्य आनन्दमन्दाकिनी, रूपगोस्वामिनो गन्धर्वप्रार्थनाष्टकं, मुकुन्दमुक्तावली, जगन्नाथस्य ( १६४७—१७२२ वै० ) सुधालहरी, अमृतलहरी, लक्ष्मीलहरी, करुणालहरी, गङ्गालहरी च । नीलकण्ठदीक्षितस्य आनन्दसागरस्तवः, शिवोत्कर्षमञ्जरी, वेङ्कटाध्वरिणः ( १७०७ वै० ) लक्ष्मीसहस्रम्, रामभद्रस्य रामबाणस्तवः, अद्भुतसीताराम-

स्तोत्रं, नारायणतीर्थस्य कृष्णलीलातरङ्गिणी, लोकमणिदाहालस्य सूर्यमहिम्नः स्तोत्रं देवीमहिम्नः स्तोत्रञ्च प्रसिद्धा ग्रन्थाः।

## ( इ ) नीतिकाव्यानि

### १. नीत्युपदेशपरककाव्यानि

नीतिपरककाव्येषु चाणक्यशतकं, सुन्दरपाण्डचस्य नीतिद्विषष्टिका, शान्तिदेवस्य बोधिचर्यावतारः, शिक्षासमुच्चयः, सूत्रसमुच्चयश्च, भर्तृहरेर्नीतिशतकं, वैराग्यशतकं, शङ्कराचार्यस्य मोहमुद्गरः, दामोदरगुप्तस्य कुट्टिनीमतं ( शम्भलीमतम् ), अमितगतेः सुभाषितरत्नसन्दोहः, धर्मपरीक्षा, क्षेमेन्द्रस्य चारुचर्या, चतुर्वर्गसङ्ग्रहः, सेव्यसेवकोपदेशः, समयमातृका, कलाविलासः, दर्पदलनं, हेमचन्द्रस्य योगशास्त्रं, जल्हणस्य मुग्धोपदेशः, शिल्हणस्य शान्तिशतकं, सोमप्रभस्य श्रृङ्गारवैराग्यतरङ्गिणी, वेदान्तदेशिकस्य सुभाषितनीवी, वैराग्यपञ्चकम्, कुसुमदेवस्य दृष्टान्तशतकं, द्याद्विवेदस्य नीतिमञ्जरी, जगन्नाथस्य भामिनीविलासः, नीलकण्ठस्य कलिविडम्बनं, सभारञ्जनशतकं, शान्तिविलासः, वैराग्यशतकम्, गुमानिकवेः उपदेशशतकम्, वेङ्कटाध्वरिणः सुभाषितकौस्तुभश्च।

### २. अन्योक्तिकाव्यानि

भल्लटस्य ( ९४७ वै० ) भल्लटशतकं, शम्भुकवेः ( ११४७ वै० ) अन्योक्तिमुक्तालता, जगन्नाथस्य भामिनीविलासः, नीलकण्ठस्य अन्योक्तिशतकं ( अन्योपदेशशतकं वा ), वीरेश्वरस्य अन्योक्तिशतकं च।

## ( ई ) साङ्ग्रहिककाव्यानि

### १. सुभाषितकाव्यानि

सातवाहनस्य गाथासप्तशती, अज्ञातसङ्ग्रहीतृकः कवीन्द्रवचनसमुच्चयः, सोमेश्वरस्य अभिलषितार्थचिन्तामणिः, गोवर्धनस्य आर्यासप्तशती, श्रीधरदासस्य सदुक्तिकर्णामृतं, जल्हणस्य सूक्तिमुक्तावली, कलिङ्गरायसूर्यस्य सूक्तिरत्नहारः, सायणस्य सुभाषितसुधानिधिः, शार्ङ्गधरस्य ( १४२० वै० ) शार्ङ्गधरपद्धतिः, सकलकीर्तेः सुभाषितावली, पोतयार्यस्य प्रसङ्गरत्नावलिः, श्रीधरस्य सुभाषितावलिः, वल्लभदेवस्य सुभाषितावलिः, रूपगोस्वामिनः पद्यावलिः, पेड्डभट्टस्य सूक्तिवारिधिः, हरिकवेः सुभाषितहारावलिः, शम्भुकवबुंधभूषणं, वाटलिकस्य भारतीयसूक्तिसंङ्ग्रहः, हरिभास्करस्य पद्यामृततरङ्गिणी, शिवदत्तस्य सुभाषितरत्नभाण्डागारश्च।

२. कोशग्रन्थाः

यास्कस्य निरुक्तम् ( निघण्टुभागः ) व्याडेः उत्पलिनी, कात्यस्य नाममाला, भागुरेस्त्रिकाण्डकोषः, अज्ञातकर्तृका रत्नमाला, अमरदत्तस्य अमरमाला, वाचस्पतेः शब्दार्णवः, धन्वन्तरेर्वैद्यकनिघण्टुः, क्षपणकस्य अनेकार्थध्वनिमञ्जरी, अनेकार्थमञ्जरी, अमरसिंहस्य अमरकोषः ( नामलिङ्गानुशासनं नाम ), शाश्वतस्य अनेकार्थसमुच्चयः, धनञ्जयस्य नाममाला, पुरुषोत्तमदेवस्य त्रिकाण्डशेषः, हारावलिः, वर्णदेशना, हलायुधस्य अभिधानरत्नमाला, यादवप्रकाशस्य वैजयन्तीकोशः, महेश्वरस्य विश्वप्रकाशकोषः, अजयपालस्य नानार्थसङ्ग्रहः, मेदिनिकरस्य मेदिनीकोषः, मङ्खस्य अनेकार्थकोषः, हेमचन्द्रस्य अभिधानचिन्तामणिः, अनेकार्थसङ्ग्रहः, निघण्टुकोषः, देशीनाममाला च, केशवस्वामिनो नानार्णवसंक्षेपः, केशवस्य कल्पद्रुकोषः, शाहस्य शाहरत्नसमन्वयकोषः, हर्षकीर्तेः शारदीयाभिधानमाला च। एवमेव शब्दकल्पद्रुमः, सुखानन्दनाथस्य शब्दार्थचिन्तामणिः, तारानाथतर्कवाचस्पतेः वाचस्पत्यम्, तारानाथस्य शब्दस्तोममहानिधिः, रायबोथलिंकयोः संस्कृतकोषः, वामनसदाशिवस्य संस्कृतकोषः, रामावतारस्य वाङ्मयार्णवः, विद्वन्मण्डलसम्पादितो बृहद्वैदिकशब्दकोषः, द्वारकाप्रसादस्य संस्कृतशब्दार्थकौस्तुभः, लोकमणिदाहालस्य मणिसंस्कृतकोषश्च।

( क ) शाङ्गारिकगीतिकाव्यानि

शाङ्गारिकगीतिकाव्यं हि प्रायः शृङ्गारवर्णनपरमेव। यद्यपि तत्र सम्भवन्तीतरे प्रसङ्गागता विषया अपि तथापि तस्य मुख्यं प्रयोजनं तु शृङ्गारजन्यानन्द एव। शाङ्गारिकं हि गीतिकाव्यं दूतकाव्य-प्रस्तुतिकाव्य-स्फुटकाव्यभेदेन त्रिविधं दृश्यते।

( अ ) दूतकाव्यानि

संस्कृतसाहित्ये दूतकाव्यपरम्पराऽतिप्राचीना। काव्यशास्त्रस्याद्याचार्यो भामहो निर्दिशति—

अयुक्तिमद्यथा दूता जलभृन्मारुतेन्दवः।
तथा भ्रमरहारीतचक्रवाकशुकादयः॥
अवाचोऽयुक्तवाचश्च दूरदेशविचारिणः।
कथं दूत्यं प्रपद्येरन् इति युक्त्या न युज्यते॥ इति।

पुराकाले हि अद्यतनीनपत्रप्रेषणादिव्यवस्था नैवासीत्। तेन हि दूरदेशस्था वियोगिनः स्वावस्थाद्योतकं सन्देशं मेघ-वायु-चन्द्र-काक-शुक-पारा-

वतादिभ्यः कथयित्वाऽपि सन्तोषं कुर्वन्ति स्म । न केवलं काव्येऽपि तु लोकेऽपि पारावतदौत्यघटना काकसन्देशहारिता च कर्णपरम्परया श्रूयते एव । लोकगीतेष्वपि एतादृशं वृत्तं बहुशो दृश्यते । इदमेव लोकवृत्तं काव्ये कवयो वदन्ति चमत्कारिण्या वाण्या । प्रकरणेऽस्मिन् वैदिकमन्त्रा अपि साक्षिणो भवन्ति । अप्रतिरथसूक्ते वायुः अगसैनिकत्वेन प्रयुक्तोऽस्ति । यथोक्तं तत्र—

'असौ या सेना मरुतः परेषामभ्येति न ओजसा स्पर्धमाना ।
तां गूहत तमसाऽपव्रतेन यथाऽमी अन्योऽन्यं न जानन् ॥' इति ।

वायुरिन्द्रस्य दूत इति सर्वत्र प्रसिद्धिः । परम्परामिमामनुसरन्ति कवयः काव्येषु कमनीयत्वेन । रामायणें हि हनुमान् रामेण दौत्ये नियुक्त इति दृश्यते तथैव रावणेन शुकः । कुमारसम्भवेऽग्निर्दौत्येन देवैः प्रहितो रुद्रस्य पार्श्वं गच्छति । महाभारते स्वयमेव श्रीकृष्णः पाण्डवानां दौत्यं करोति । इत्थं प्रचलितामेव परम्परामाश्रित्य तत्र—

"यदि चोत्कण्ठया यत्तदुन्मत्त इव भासते ।
तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते ॥"

इति भामहीयकथनमनुसरन् कालिदासो मेघदूतं नाम गीतिकाव्यं प्रणयति । ततश्च प्रवर्तते लौकिकदूतकाव्यपरम्परा । मेघदूतमिन्दुदूतं मनोदूतं पवनदूतं हंसदूतं पिकदूतमित्यादिकाव्यानि कविभिः प्रणीतानि ।

### १. कालिदासः : मेघदूतम्

कालिदासस्य उज्जयिनीविशेषपक्षपातिनो मेघदूतं नाम गीतिकाव्यं स्वप्रकृत्यन्यकाव्यानि नितान्तमतिशेते । कथं मेघो हि निश्चेतनो दौत्ये प्रयुक्त इत्याकाङ्क्षानिवारणाय सः प्रथममेव कथयति—

"धूमज्योतिः सलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥ २ ॥ इति ।

मेघदूतं हि काव्यं पूर्वोत्तरभागयोर्विभक्तम् । पूर्वभागे मिता उत्तर भागे मिता इति कृत्वा समष्टचा १२१ मितश्लोकाः सन्त्यत्र । किन्तु सङ्ख्यैषा नैव निर्विवादा । मल्लिनाथेन १२१ मिताः, पूरणसरस्वतिना ११० मिता, वल्लभदेवेन १११ मिताः, दक्षिणावर्तनाथेन ११० मिताः, भरतसेनेन ११४ मिताः श्लोका अस्य व्याख्याता दृश्यन्ते ।

काव्यमिदं कालिदासस्य मनोज्ञतमा कृतिर्यद्धि कविना स्वीयैर्हार्दिकभावैः पूरितम् । एतद्धि कवेर्मानवहृदयगतभावानां समग्राध्ययनस्य साक्षि-

त्वेनास्ति । अत्र हि मानवहृदयं प्राकृतिकवस्तुना सह सम्बद्धं तथा कल्पितं यत्र न लेशमात्रमपि शङ्कावसरः । परिष्कृतवाचा कमनीयत्वेन गुम्फितोऽयं ग्रन्थो न कस्य सहृदयस्यामोदायैव भवति । काव्येऽस्मिन् व्यवहृता मन्दाक्रान्ता क्षेमेन्द्रेणेत्थं प्रशस्यते—

सुयशा कालिदासस्य मन्दाक्रान्ता विराजते ।
सदश्वदमकस्येव काम्बोजतुरगाङ्गना ॥ इति ।

( सुवृत्ततिलके ३।३४ ) ।

कुबेरस्य वर्षभोग्येन शापेन रामगिरिं परिव्राजितो यक्षः प्रावृट्काले गिरिशिखरं मेघाच्छन्नं दृष्ट्वा कान्तास्मृत्या विह्वलश्चेतनाचेतनेषु प्रकृतिकृपणः सन् प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी मेघद्वारेण प्रियायै सन्देशं हारयिष्यंस्तं सम्पूज्य नवैः पुष्पैः कथयितुमुपक्रमते । तत्कथने प्रथमं स मार्गनिर्देशनं करोति येन मेघेन गन्तव्यम् । तत्क्रमे क्रमेण माल-आम्रकूट-नर्मदा-दशार्ण-विदिशा-वेत्रवती-नीलगिरि-निर्विन्ध्या-सिन्धु- अवन्ति - विशाला - उज्जयिनी । शिप्रा-गम्भीरा-देवगिरि-चर्मण्वती-दशपुर-ब्रह्मावर्त-कुरुक्षेत्र-सरस्वती-कनखल-गङ्गानदी-हिमालय- क्रौञ्चरन्ध्र - कैलाश - मानससरोवर - अलकाश्च निर्दिष्टाः ।

उत्तरभागे यक्षोऽलकां वर्णयति परिचाययति च स्वगेहं स्वप्रेयस्याः परिचयनिमित्तकलक्षणान्यपि कथयति । ततश्च कथयति सन्देशम् । सन्देशे स प्रथमं स्वीयां विरहजनितावस्थां निर्वर्ण्य तदनु स कथयति यत्सा नैवोद्विग्ना भवितुमर्हति । तत आरभ्य चतुर्मासानन्तरं तयोः संयोगोऽवश्यम्भावी । सोऽपि तच्चिन्तयैव कथमपि कृच्छ्रादेव दिनानि यापयन्नस्ति । सुखदुःखचक्रं तु सततं भ्रमणशीलमेवेति ।

इदं विचिन्तयन्ति समालोचका यन्मेघदूतस्याधारेणावश्यमेव कवेः स्वकीयजीवनेन सह सम्बद्धेन भाव्यम् । तदनुसारेण नितान्तमसम्बद्धे विषये न कोऽपि तथा भावमग्नो भवति । प्रियतमाया वियोगेन यदा कश्चिद्भावमग्नो भवति तदैव तथा कश्चिदपि विचिन्तयितुं प्रभवति । वियोगस्य तथाविधकाष्ठा, भावानामुत्कटता प्रेम्णस्तन्मयता च यन्मेघदूते दृश्यते तेनावश्यमेवानुभूतेन भाव्यम् । इदमपि निश्चेतुं शक्यते यत्तदा कालिदास उज्जयिनीतः विप्रकृष्टदेशे वसन्नासीत् । प्रेम्ण इयमेवोपनिषद् यत्संयोगापेक्षया विप्रयोग एव तस्य प्राकर्ष्यं वर्धते । उक्तमेव धर्मकीर्तिना—

'सङ्गमविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्याः ।
सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥ इति ।

यक्षोऽपि सर्वत्र प्रियामयमेव पश्यति। तस्य हि—

'त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥' (२।४७)

इति कथनेन को नाम सहृदयो न भावार्द्रहृदयो भवति। कथ्यते हि तदा कालिदासः केनाऽपि कार्येण उज्जयिनीतो दूरदेशे राज्ञा प्रेषितः सम्भवति, सम्भवति च कुन्तलेषु। तदा हि प्रावृषि प्रियाविरहेण तप्तहृदयः स उज्जयिनी-स्थितां स्वां प्रियां विचिन्त्य काव्यमिदं कृतवानित्यपि। केचिदस्य बीजं रामायणे विचिन्वन्ती। यथाऽऽह मल्लिनाथोऽपि—'सीतां प्रति रामस्य हनूमत्सन्देश मनसि निधाय मेघसन्देशं कविः कृतवानिति आहुः।' इति। ब्रह्मवैवर्तपुराणे आषाढकृष्णस्य योगिन्येकादशीव्रतप्रसङ्गे कुबेरस्य यक्षं प्रति वर्षभोग्यस्य शापस्योल्लेखो दृश्यते, किन्तु कालिदासब्रह्मवैवर्तपुराणयोः पौर्वापर्यं सम्प्रत्यपि अनिर्णीतमेव। सम्भवति कविना मानवेतरदूत्यकल्पना महाभारतस्य नलोपाख्याने हंसदूत्याद्गृहीतमपि भवेत्किन्तु काव्यस्वरूपं कवेर्नितान्तमेव मौकिलमविच्छिन्नञ्च। स कथयति स्वयमेव—

'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः।
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे॥' इति। (१।३)

तेन हि वयं तु मेघदूतस्य बीजमपि कालिदासे एव पश्यामः। स हि अन्योक्त्या स्वस्यैव भावातिरेकमुद्गिरति इत्यपि मन्यामहे वयम्। इदमपि सम्भवति यत्स काव्यप्रणयनकाले कुन्तलेष्वासीत्। यतो हि—

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति॥

इति कथनं कथं नाम परकीयं वा परोपदिष्टं सम्भवति। कवेरत्र या प्रकृत्या सह तादात्म्यानुभूतिर्वर्णिता साऽपि तथैव सङ्केतयति। स केन चेतसा कथितवानिदम्—

काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम्।

तस्य वर्णननैपुण्यं कन्नाम नाकर्षति। यथा हि—

त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः॥ इति।

केचिदत्र मेघं कामं महाकालं तन्नियन्तारं यक्षमात्मानं तत्प्रेयसीं परमात्मानं कल्पयित्वा अक्षरब्रह्मसाक्षात्कार एव कवेरत्राभिप्राय इत्यपि विचिन्तयन्ति। वयं तु तत्कोमलया मानवभावनया सह पण्डितैः कृतं महान्तमन्यायमेव मन्यामहे। सर्वत्र दर्शनस्य परुषं बीजं पश्यन्त एते पण्डिता नैव सहृदयकथनार्हाः। मेघदूतं हि केवलं मानवचेतसोः कमनीयो विलासो न तु दर्शनभारवाहोऽपि। अत्र तु कविः स्वमन्तर्भावं काव्ये प्रकटयति कामं कश्चिदत्र किमपि पश्यतु।

काव्यस्यास्य सन्ति पञ्चाशदधिकाष्टीकाः। तासु मल्लिनाथस्य प्राचीनासु शेषराजरेग्मीमहोदयस्य नवीनासु प्रसिद्धा।

कालिदासस्य रसकवेः स्थितिकालमादाय पण्डिता नैकमत्यं भजन्ते। विषयेऽस्मिन् प्राधान्येन समालोचकाश्चतुर्धा विभक्ताः सन्ति—विक्रमानन्तरसप्तमशतकवादिनः, विक्रमानन्तरचतुर्थशतकवादिनः, विक्रमसमकालवादिनः, विक्रमपूर्वकालवादिनश्च। तेषु हि प्रथमपक्षधराः रघुवंशचतुर्थसर्गगतं रघुकृतं हूणविजयं यशोवर्मणा कृतेन हूणविजयेन सह सन्तुल्य कालिदासं हि ६०१ मितवैक्रमाब्दानन्तरभवं मन्यन्ते। तेषु हि फर्ग्युसनोऽग्रणीः। तदनुसारं हि तत्कालीनेनोज्जयिनीनरेशेन श्रीहर्षविक्रमादित्येन संवत्सरं नवीनं प्रवर्त्य प्राचीनतासिद्धये ६०० वर्षपूर्वमवसारितमिति। किन्तु मतमिदं निर्मूलं निकृष्टतमश्च। ततोऽपि पूर्वमेव मालववर्षगणना यत्र तत्राभिलेखेषु दृश्यते। कालिदासाश्रयत्वेन सम्मतो हि विक्रमादित्यो मालवगणाध्यक्ष एवेत्यपि स्पष्टमेव। कुमारगुप्ते पृथिवीं प्रशासति···मालवानां गणस्थित्या याते शतचतुष्टये। त्रिणवत्यधिकेऽब्दानामृतौ सेव्यघनस्तने॥' इति बन्धुवर्मणो मन्दसारस्थितात् शिलाभिलेखाद्वत्सभट्टिप्रणीताज्ज्ञायते। अपरञ्च, द्वितीयस्य पुलकेशिनः ऐहोलाभिलेखे कालिदासो भारविपूर्ववर्ती ख्यातयशस्कश्च कथितः। तस्याभिलेखस्य कालस्तत्रैव···"षटसु पञ्चशतासु च। समासु समतीतासु शकानामपि भूभुजाम्॥३४॥" इति दत्तः। स च कालः ६४१ मितवैक्रमाब्दसमो भवति, यतो हि मालवाब्दगणनातः १३५ वर्षानन्तरमेव शकाब्दगणना प्रारब्धा। यदि हि कालिदासः श्रीहर्षसभासद्भवेत्तदा कथं तस्य तदा ख्यातयशस्कत्वम्। तेन हि कथनमिदमन्तरीक्षभवनमेव। ये हि खलु कालिदासं वैक्रमचतुर्थशतकीनं मन्यन्ते तेऽपि तथ्यमिदं विस्मरन्ति वोपेक्षन्ते यत्समुद्रगुप्तः स्वकीये कृष्णचरिते कालिदासमश्वघोषादपि पूर्ववर्तित्वेन स्मरति। तत्कथं नाम स तत्पौत्रस्य स्कन्दगुप्तस्य समकालिको भवेत्। अपरञ्च, कालिदासः पाण्डचोऽयमंसार्पितलम्बहार इति पाण्डचराज्यस्यावस्थितिं स्मरति, तथैव साकेतं सर्वसम्प्रभुराज्यत्वेन। किन्तु गुप्तकाले उभयोरेव स्थितिर्विपरीता दृश्यते। साकेतस्तु

मगधसाम्राज्यस्य प्रान्त एवासीत्तदा। एवमेव पाण्ड्यस्यापि। यथा च रघुकृतो हूणविजयप्रश्नस्तत्र तु स्पष्टमेव निर्दिष्टं यद्रघुणा भारताद्बहिरेव गत्वा हूणविजयः कृत इति 'पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना' इति कथनात्सिध्यति। इदमितिहाससिद्धं यत्ख्रीस्तपूर्वद्वितीयशतकमभितो हूणाः पामीरस्य पूर्वोत्तरप्रदेशे सङ्गठिता आसन्निति। कालिदासोऽपि तत्रैव तेषामवस्थितिं वर्णयति। ५७५ मितवैक्रमाब्दमभितस्तु हूणा भारतभूमावेवोपस्थिता आसन्। नैतावन्मात्रमपि तु मालविकाग्निमित्रेण अग्निमित्रपुत्रेण वसुरातेन अनुसिन्धु हूणाः पराजिता इत्यपि स स्मरति। तेन कालिदासस्तदाऽऽसीद्यदा हूणा हि भारतमुख्यभूमौ नैव प्रविष्टा आसन्। स्थितिरियं विक्रमसमकालीनमेव सम्भवति। ये हि खलु कालिदासीयं भारतं गुप्तकाले एव सम्भवि मन्यन्ते तेऽपि कपोलकल्पनाशीला एव, यतो हि शुङ्गकाले भारतस्य यादृशी समृद्धिरासीत्सा नैव कदापि जातेति भारतेतिहास एव साक्षी। स हि स्पष्टमेव पुष्यमित्रस्याश्वमेधं स्मरति, स्मरति पुष्यमित्रं तत्प्राचीनपदेन सेनापतिना इति स्पष्टमेव तस्मान्नातिपरवर्तित्वं तस्य सिध्यति। अतो हि द्वितीयमतसमर्थका अपि परास्ताः। ये हि तृतीयमतसमर्थकास्ते तथ्यस्य सन्निधिं स्पृशन्ति। वस्तुतः कालिदासो हि विक्रमसमकालिको वा तस्मान्नातिपूववर्ती। समुद्रगुप्तो हि तमश्वघोषपूर्ववर्तिनं मन्यते, मन्यते च शूद्रकस्य राज्ञः सभापण्डितत्वं तस्य। मृच्छकटिकाज्ज्ञायते यच्छूद्रको हि दशदिनसहितं शताब्दं सक्रियं जीवनं व्यत्याय्य पुत्रे राज्यं निवेश्य तपोवनं गतः ( अग्निं प्रविष्टः ) इति। केचिदत्रापि 'अग्नि प्रविष्टः' इत्यस्य वह्निप्रवेशेनात्मानं घातितवानिति दुरुह्य न कोऽपि स्वनिधनमुद्घोषयितुं समर्थं इति मत्वा तच्छ्लोकमेव प्रक्षिप्तं वा प्रकरणमेवेतरकविप्रणीतमपि मन्यन्ते। किन्तु न तदभीष्टं ग्रन्थे। 'अग्नि प्रविष्टः' इत्यस्यार्थस्तु राजदण्डं त्यक्त्वाऽग्निं जग्राह इत्येव। इमामेव कथां कालिदासो विक्रमोर्वशीये स्मरति—'रम्भे, उपनीयतां स्वयं महेन्द्रेण सम्भृतः कुमारस्यायुषो यौवराज्याभिषेकः' इति कथनेन। अपरञ्च कालिदासः परमशैव आसीद्गुप्तमहीपतयस्तु परमभागवताः। शूद्रकस्तु परमशैव एव 'ज्ञात्वा शर्वप्रसादात्' इति कथनेन। समुद्रगुप्तो हि शूद्रको हि शकान् जित्वा विक्रमादित्योपाधिं धारितवानिति कथयति कृष्णचरिते। ऐतिहासिका हि शूद्रकस्य २७ वर्षपूर्वं स्थितिं मन्यन्ते भाण्डारकरप्रमुखाः। स्कन्दपुराणेऽपि शूद्रकविक्रमादित्ययोः २७ वर्षमितकालपौर्वापर्यं कथितम्। तेन हि तयोरेकव्यक्तित्वमपि न तथा विरुद्धम्। अमरकोषटीकायां क्षीरस्वामी—

"'विक्रमादित्यः साहसाङ्कः शशाङ्ककः।
शूद्रकस्त्वग्निमित्रो वा हालः स्याच्छालिवाहनः॥

इति विक्रमादित्यशूद्रकौ पृथक्पृथगेव स्मरति।

सत्यपि तथा कालिदासः प्रथमं शूद्रकस्य पश्चाच्च विक्रमस्यापि राजकविः सम्भवत्येव। यदि हि कालिदासो गुप्तकालीनः स्यात्तदा हि सः पाटलिपुत्रं 'नेत्रोत्सवं पुष्पपुराङ्गनानां' इत्येतावदेव नैव स्मरेत्। यथा ह्युज्जयिनी वर्णिता तथैव पुष्पपुरमपि चित्रितं भवेत्।

एतावता विचारेणैतदेव सिध्यति यदग्निमित्रस्थितिकाल एव कालिदास-स्थितिकालस्य पूर्वसीमा विक्रमादित्यस्थितिकालस्य एव तस्य स्थितिकाल-स्यावरसीमा। एतावत्तु निश्चितमेव यत्सूर्यवंश्यनृपाणां चरितगायकः कथमपि चन्द्रवंश्यनृपाणामाश्रये स्थितो नैव सम्भवति। तस्य कथमपि सूर्यवंश्यानामेव आश्रयग्रहणं सिध्यति। केचिद्धि कालिदासमश्वघोषपरवर्तिनं मन्यन्ते, किन्तु ते नैव विचारयन्ति यत्कालिदासयशोलुब्धेन हि अश्वघोषेण काव्यार्थं संस्कृत-माश्रितं प्राकृतं विहायेति। विक्रमादित्यस्य महेन्द्रादित्यतनयस्य परमारवंश्यस्य सूर्यवंशीयत्वेन शैवत्वेन च तस्य कालिदासाश्रयत्वं चन्द्रवंश्यवैष्णवमता-नुयायिगुप्तवंश्यनृपापेक्षया प्रामाणिकम्।

पश्चाद्वर्तिसाहित्ये मेघदूतस्य प्रभावः स्पष्टमेव लक्ष्यते। एतदनुकृत्य बहवो हि काव्यग्रन्थाः प्रणीताः। तदनुकरणमपि द्विविधं दृश्यते रूपानुकरणं भावानु-करणञ्च। रूपानुकरणे हि मेघदूतगतपद्यानामेकां वा एकाधिकां पङ्क्तिं गृहीत्वाऽत्रशिष्टभागः स्वकीयपद्येन पूर्यते। जिनसेनस्य पार्श्वाभ्युदयः, विक्रम-कवेर्नेमिदूतश्चास्योदाहरणम्। भावानुकरणे हि भावमात्रमनुक्रियते न तु शब्दावल्यपि। पवनदूतप्रभृतयोऽस्योदाहरणानि।

**२. घटकर्परः : घटकर्परकाव्यम्**

अज्ञातविशेषपरिचयस्य घटकर्पराख्यस्य कृतित्वेन सम्मतं यत्र कुत्र तु कालिदासस्यैव कृतित्वेनापि गृहीतं घटकर्पराख्यं काव्यं मेघदूतस्य भावानु-करणेन प्रणीतं तद्विपरीतकाव्यम्। अत्र हि काचित्सद्यःपरिणीता किन्तु दैवा-द्विप्रकृष्टस्थपतिका युवतिः स्वं प्रियं मेघद्वारैव सन्देशं प्रेषयति। अत्र हि केवलं द्वाविंशच्छ्लोकाः। प्रतिश्लोकमत्र यमकस्य चमत्कारः। उक्तश्च तत्र स्वयमेव कविना—

आलम्ब्य चाम्बुतृषितः करकोशपेयं भावानुरक्तवनितासुरतैः शपेयम्।
जीयेय येन कविना यमकेन तेन तस्मै वहेयमुदकं घटख-(क)-र्परेण॥ इति।

कवेरस्यैतिह्यं न मनागपि ज्ञातम्। एतावदेवोच्यते तद्विषये यत्स विक्रमा-दित्यस्य नवरत्नेष्वेक आसीत्।

ग्रन्थस्यास्य सन्त्यष्टाधिकाष्टीका यासु महामाहेश्वराभिनवगुप्तप्रणीता-

प्येका कुलकवृत्तिसंज्ञिता। कथ्यते यत्स हि काव्यमिदं कालिदासप्रणीतमेव मन्यते। निभाल्यतामस्य यमकच्छटा—

'किं कृपाऽपि नास्ति कान्तया पाण्डुगण्डपतितालकान्तया।
शोकसागरेऽद्य पातितां त्वद्गुणस्मरणमेव याति ताम्॥' इत्यादौ।

प्रसङ्गेऽस्मिन् रामशास्त्रिणः मेघप्रतिसन्देशनामकं काव्यमपि स्मर्तव्यं यद्धि मेघदूतमनुकृत्य तत्पूरकत्वेनोपन्यस्तमस्ति। अत्र हि यक्षी यक्षसन्देशं श्रुत्वा मेघद्वारेव स्वसन्देशमपि तं प्रेषयति। कवेः कल्पनाशक्तिर्निभमालनीया दृश्यते।

### ३. धोयी कवीन्द्रः : पवनदूतम्

धोयी कविः लक्ष्मणसेनाऽऽख्यस्य वङ्गेशस्य सभाकविरासीत्। तं हि जयदेवो गीतगोविन्दे 'श्रुतिधरो धोयी कविक्ष्मापतिः' (१।४) इति स्मरति। लक्ष्मणसेनो हि १२२६ मितवैक्रमाब्दाभ्यर्णे अङ्गभुवं शशासेति तदाश्रितस्य धोयिनः तन्निकटवर्त्येव स्थितिकालः ११९०–१२६० मितवैक्रमान्तरालगः। काव्येऽस्मिन् काचिद्गन्धर्वकन्या लक्ष्मणसेनं पवनद्वारेण प्रणयसन्देशं प्रेषयति।

### ४. वेदान्तदेशिकः : हंससन्देशः

काञ्चीपुरीनिवासी १३२५–१४२६ मितवैक्रमाब्दान्तरालस्थितिमान् वेदान्तदेशिको हंससन्देशसंज्ञकं दूतकाव्यं प्रणीतवान्। अत्र हि हनुमत्कथित-सीतावृत्तान्तो रामस्तां हंसद्वारा सन्देशं प्रेषयति। अत्र हि कतिपयेषां दाक्षिणात्यतीर्थस्थलानामपि वर्णनं लभ्यते। काव्येऽस्मिन् ११० पद्यानि सन्ति। प्रत्येकमेवास्य पद्यं मेघदूतपद्येन सह संवदते भावभाषाप्रस्तुतीकरणदृष्ट्या। ग्रन्थस्यास्य सन्ति बह्व्यष्टीकाः।

### ५. उद्दण्डः : कोकिलसन्देशः

१४६० मितवैक्रमाब्दमभितः स्थितिमता तामिलाभिजनेन मालावार-निवासिना केनचिदुद्दण्डाख्येन कविना मेघदूतं हि भावभाषादिभिरनुकृत्य कोकिलसन्देशनामकं काव्यं प्रणीतमस्ति, यत्र हि प्रेमी प्रेमिकायै कोकिलद्वारेण सन्देशं प्रेषयति।

## (आ) प्रस्तुतिकाव्यम्

प्रस्तुतिकाव्यस्येदमेव लक्षणं यदत्र कश्चिदपि विषयः प्रबन्धरूपेण प्रस्तूयते किन्तु स्वरूपेण महाकाव्यलक्षणं नैव सङ्गृह्णाति। कानिचित्प्रस्तुतिकाव्यान्यत्र प्रस्तूयन्ते।

### १. ऋतुसंहारम्

ऋतुसंहार नाम काव्यं षड्ऋतुवर्णनपरम्। अत्र हि ग्रीष्मत आरभ्य वसन्तपर्यन्तं क्रमेण षड्ऋतवो वर्णिताः सन्ति। अत्र सन्ति षडध्यायाः प्रत्यध्यायमेकर्तुवर्णनञ्च। अत्र हि समष्टौ १४४ पद्यानि सन्ति। निरूप्यतामस्य शैली—

प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाहक्षतवारिसञ्चयः।
दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालोऽयमुपागतः प्रिये॥ १।१॥

अस्य कर्तृत्वमादाय पण्डिता वैमत्यं भजन्ते। केचिद्धि मल्लिनाथस्य—

मल्लिनाथः कविः सोऽयं मन्दात्मानुजिघृक्षया।
व्याचष्टे कालिदासीयं काव्यत्रयमनाकुलम्॥

इत्युक्तिमनुसृत्य ऋतुसंहारं कालिदासस्य कृतिं न मन्यन्ते। ते हि कथयन्ति यन्मल्लिनाथसदृशैरुच्चस्तरीयटीकाकृद्भिरस्य टीका नैव प्रणीता, नैव च साहित्यशास्त्रिभिरस्यैकमपि पद्यं कुत्रापि समुद्धृतम्। तेन नासौ कालिदासस्य कृतिरिति। अपरे कथयन्ति यत्सत्यपि तथा भावभाषादिदृष्ट्यैषा कृतिः कालिदासीयैव। इतरग्रन्थापेक्षया ग्रन्थस्यास्य सरलतया टीकाकृद्भिर्नैवैष टीकितः। साहित्यशास्त्रिणस्तु सरलग्रन्थेभ्य उद्धरणं कदापि नैव गृह्णन्ति। सन्त्यत्रैतादृशानि लक्षणानि यैरिदं कालिदासीयमेव सूचयन्ति। किन्तु सन्त्यन्येऽपि ग्रन्था एतादृशानि चिह्नानि सन्ति किन्तु ते कालिदासस्य नैव। अपरञ्च ग्रन्थेऽस्मिन्–'सोऽयं वो विपरीतरीतु वितनुर्भद्रं वसन्तान्वितः' (६।२८) इत्यत्र यदप्रचलितरूपप्रयोगः कृतः तादृशः प्रयोगः कालिदासस्यान्यासु कृतिषु नैवोपलभ्यते। तेन नासौ कालिदासस्य कृतिः। यद्येषा कालिदासस्यैव तर्हि स्यात्कस्यचिदपरस्य कालिदासाख्यस्य कवेरिति विदुषां संहृतिः।

### २. शृङ्गारतिलकम्

शृङ्गारतिलकं नाम एकत्रिंशच्छ्लोकात्मिका कृतिः। अत्र हि शृङ्गारस्य विविधरूपाणां सजीवं चित्रणमुपलभ्यते। अस्य हि कतिपयं वैशिष्ट्यं ह्यस्य कालिदासकृतित्वं समर्थयति। दिङ्मात्रमुदाहरणं यथा—

'इन्दीवरेण नयनं मुखमम्बुजेन कुन्देन दन्तमधरं नवपल्लवेन।
अङ्गानि चम्पकदलैः स विधाय धाता कान्ते कथं घटितवानुपलेन चेतः॥'

'झटिति प्रविश गेहे मा बहिस्तिष्ठ कान्ते ग्रहणसमयबेला वर्तते शीतरश्मेः।
तव मुखमकलङ्कं वीक्ष्य नूनं स राहुर्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय॥'

'इयं व्याधायते बाला भ्रूरस्याः कार्मुकायते।
कटाक्षाश्च शरायन्ते मनो मे हरिणायते॥'

'कस्तूरीवरपत्रभङ्गनिकरो भ्रष्टो न गण्डस्थले
नो लुप्तं तव चन्दनं स्तनतटे धौतं न नेत्राञ्जनम् ।
रागो न स्खलितस्तवाधरपुटे ताम्बूलसंवर्धितः
किं रुष्टाऽसि गजेन्द्रमत्तगमने किं वा शिशुस्ते पतिः ।।'

काव्येऽस्मिन् त्रयोविंशत्पद्यानि लभ्यन्ते सम्प्रति । पण्डितेषु कृतिरियं कालिदासस्यैवेति प्रसिद्धिः, किन्तु न किमपि तत्र प्रमाणम् तथापि अत्रत्या प्रसादगुणसम्पन्नता स्वाभाविकी चोक्तिश्च तथा समर्थयत्यपि । कालिदासस्येतरस्य वाऽपि किं न स्यात्कृतिरियं प्रसादमनोहरा कस्यचिदपि रससिद्धस्यैव कवेरेव ।

### ३. राक्षसकाव्यम्

राक्षसकाव्ये हि विंशतिश्लोकाः सन्ति यत्र प्रमोदवनस्य सजीवं वर्णनमस्ति यत्र हि कश्चित्प्रेमी प्रेमिकया सह विहरन्नस्ति । कृतिरेषाऽपि कालिदासस्यैवेति पण्डितेषु प्रसिद्धिः, किन्तु न किमपि तथात्वे प्रमाणम् । यत्र यत्र हि प्रसादमनोहरत्वं रसवत्त्वञ्च तत्र तत्र कालिदासच्छायां पश्यन्ति रथबद्धघोटका इव पण्डिताः । अस्य हि स्थितिर्न तथोत्कृष्टा ययाऽस्य कालिदासप्रणीतत्वं सिध्यति । अत्र हि अनुप्रासच्छटा कामं निभालनीया विद्यते ।

### ४. पुष्पबाणविलासः

षड्विंशतिपद्यात्मकं काव्यमिदमपि शृङ्गारवर्णनपरम् । कतिपये विचक्षणाः काव्यमिदमपि कालिदासप्रणीतं मन्यन्ते ।

### ५. अमरुशतकम्

प्रस्तुतिकाव्येऽमरुशतकं नृपायते खलु । अमरुककवेः कृतिरिति ख्याते काव्येऽस्मिन् सन्ति शतानि पद्यानि । अत्र हि शृङ्गारस्य विविधरूपाणां यथार्थं सजीवञ्च वर्णनं लभ्यते । अस्य हि चत्वारि संस्करणानि दृश्यन्ते, येषु हि एकपञ्चाशच्छ्लोका एव साम्यं बिभ्रति ।

कोऽसौ वैदर्भीविलासो रससिद्धो भावभाषासमन्वयवादी भावसिद्धिपक्षधरः कविरित्यपेक्षायामुच्यते असौ हि अमरुक एव यस्मिन् सर्वाण्यपि विशेषणानि शालन्ते । कविरसौ कदाऽऽसीदित्यपेक्षायां पण्डिता नैकमत्यं भजन्ते । केचिद्धि तं कालिदाससमकालीनं मन्यन्ते । ते हि अमरसिंहस्य अमरुकवेश्चैक्यं वाञ्छन्ति । अपरे तु वैक्रमसप्तमभवमपि मन्यन्ते । केचित्तु तं विक्रमशालिवाहनयोरन्तरालसमयवर्तिनमपि । ते हि स्वस्वपक्षसमर्थनाय येन केनाप्युपायेन प्रमाणानि सङ्गृह्णन्ति ।

८६० मितवैक्रमाब्दमभितो हि स्थितिमान् वामनस्तं स्मरति तथैव ९०७ मितवैक्रमाब्दमभितः स्थितिमताऽऽनन्दवर्धनेन हि कविरसौ भूरिशः प्रशस्यते, इति तस्य वैक्रमाष्टमशतकपूर्ववर्तित्वं तु सिध्यत्येव। तं हि बाणभट्टो नैव स्मरतीति केचित्तस्य स्थितिकालस्य पूर्वसीमत्वेन बाणभट्टस्थितिकालं गृह्णन्ति। वयन्तु तं कालिदाससमकालीनसमर्थने एव तत्पराः। तत्रास्माकमियं युक्तिः—

सामान्यतः स्थितिकालनिर्णये बाह्यप्रमाणापेक्षयाऽऽभ्यन्तरमेव प्रमाणं प्रबलतरं भवति। यावद्धि बाणभट्टेन नैव स्मृतः कविरसौ इत्युच्यते तत्तु बाणाधीनमेव। स तु कुमारदासं भारविमपि न स्मरति। स हि यदेव जानाति वा तन्मतौ समुल्लेखनीयत्वं यस्य सिध्यति तस्यैवोल्लेखस्तस्य काव्ये सम्भवति। तेन नेदं प्रबलं प्रमाणं यस्य कस्यापि कालसीमायाः। यथा चाभ्यन्तरप्रमाणानां प्रश्नोऽस्ति स तु अमरुककविमाचार्ययुगीनमेव सङ्केतयति। भारविना हि आचार्ययुगं समाप्य पण्डितयुगः प्रारब्धः। आचार्ययुगपर्यन्तं भाषापेक्षया भावस्यैव प्राधान्यमासीत्। तत्कालीनं हि काव्यं सरसमधुरं प्रसादमनोहरं प्रकृतिदर्पणश्चासीत्। अमरुशतके सन्ति तादृशानि लक्षणानि स्पष्टमेव। तत्र हि विचक्षणत्वस्य नास्ति लेशोऽपि। स तु प्रकृतिकविः। स हि सरसया किन्तु सरलयैव भाषया शृङ्गारस्य विविधपक्षान् प्रस्तौति। यदि हि स भारव्यनन्तरवर्त्यभविष्यत्तदा तस्य काव्येऽपि पाण्डित्यप्रदर्शनपरायणताऽपि तथैवावर्त्स्यत्। किन्तु यथार्थतस्तु न तथा। न हि तत्र पाण्डित्यप्रदर्शनक्षुधानापि चालङ्कृतशैलीपियासा। भावप्रधानमिदं प्रकृतिसमनुकूलञ्च सरसं काव्यमवश्यमेव कालिदाससमकालीनं भवितुमर्हति। यथा हि—

'सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतमत्पयोधरयुगं धत्ते सखेदा वयम्।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम्॥' (३४)।

'बाले, नाथ, विमुञ्च मानिनि रुषं, रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।
तत्किं रोदिषि गद्गदेन वचसा, कस्याग्रतो रुद्यते,
नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते॥' (५७)

इत्थमेव—

'मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं दधान ऋजुतां दूरे कुरु प्रेयसि।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति॥'

एतादृशानि पद्यानि यदि कालिदाससमकालीनानि न भवन्ति तदा किं माघसमकालीनानि सम्भवन्ति ? सम्भवतः कदाऽपि नैव । यद्यपि कानिचित्पद्यानि श्लेषमयान्यपि दृश्यन्ते 'क्षिप्तो हस्तावलग्नः' इत्यादौ, किन्तु तत्रापि नैव चित्रमयताऽपि तु सरसतैव 'कामीवार्द्रापराधः' इति स्पष्टमेव प्रतिपादनेन । अपरञ्च, ग्रन्थस्यास्य यथार्थताऽपि नैव निश्चिता यतो हि अस्य चतुर्षु संस्करणेषु केवलं एकपञ्चाशत्पद्यानि एव संवदन्तेऽपराणि तु प्रतिसंस्करणं भिद्यन्त एव । तेन पद्यानां मौलिकत्वप्रक्षिप्तत्वप्रश्नोऽप्यनिर्णीत एव तिष्ठति । तेन केषुचित्पद्येषु प्रक्षिप्तताऽपि सम्भवति यत्र पण्डितयुगस्य चिह्नानि सम्भवेयुरपि । तेन हि कविरसौ मूलतो भावपक्षधरो दृश्यते । तस्य काव्यमात्मप्रकाशनमेव न तु पाण्डित्यप्रदर्शनम् । अतोऽसौ अश्वघोषादपि पूर्ववर्ती सिध्यति । तथैव विक्रमनवरत्नेषु पठितोऽमरसिंह एव अमरुकः सम्भवतीत्यपि नैव शुष्कस्तर्कः । अमरसिंहस्य नामलिङ्गानुशासनमेव सम्प्रति लभ्यते ग्रन्थरूपेण किन्तु स हि—

प्रयोगव्युत्पत्तौ प्रतिपदविशेषार्थकथने
प्रसक्तौ गाम्भीर्ये रसवति च काव्यार्थघटने ।
अगम्यायामन्यैर्दिशि परिणतेरर्थवचसो-
र्मतञ्चेदस्माकं कविरमरसिंहो विजयते ॥ ( सदुक्ति० ५।२७।२ )

इत्यत्र 'रसवति च काव्यार्थघटने' इति यदुक्तं किं तदमरुकशतके नैव घटते ? सम्भवतः प्रत्यक्षरमेव । यदि नाम कथ्यते तत्कालेन कवलितमिति तदोष्ठविलास एव भवेत्प्रमाणाभावात् । इदमपि विचार्यतां यद्यान्यपि स्त्रीणां नामानि अमरकोषे दत्तानि योषिदबलायोषाप्रभृतीनि तेषां सर्वेषामेवोदाहरणमत्र काव्ये लभ्यते । यथा 'प्रस्थानं बलयैः कृतमि'त्यत्र साऽबला, 'क्षिप्तो हस्तावलग्न' इत्यत्र प्रतीयदर्शिनी, 'बाले नाथ' इत्यत्र भामिनी, 'मुग्धे मुग्धतयेव' इत्यत्र रामा इत्यादि ।

कविरसौ काश्मीर इति श्रुतिपरम्परा । कथ्यते हि मण्डनमिश्रपत्न्या शारदया कामकलाविवादे पराजिताः शङ्करभगवत्पादाः मृतस्य अमरुनामकस्य राज्ञः शरीरं प्रविश्य यदेव कामसुखमनुभूतवन्तस्तत्सर्वमेवात्र चित्रितमिति । यद्यपि कथनेऽस्मिन्नास्ति सत्यस्य लेशोऽपि तथाप्यनेन कवेः कवित्वोत्कर्षस्तु सिध्यत्येव । राजशेखरस्त्वमुं विशालायां परीक्षितं कथयति । यथोक्तम्—

'इह कालिदासभर्तृमेण्ठावत्रामररूपसूरभारवयः ।
हरिचन्द्रचन्द्रगुप्तौ परीक्षिताविह विशालायाम् ॥' इति ।

अत्रोक्त अमरः किममरसिंह उताहो अमरुक अथवा तयोरन्य एव ? यदि

अमरसिंहः कोषकारोऽत्र गृहीतस्तदा किं कोषस्य परीक्षा सञ्जाता ? सम्भवतो नैव । तर्हि किं तस्य काव्यान्तरमासीत् । सति तथा तदानन्दवर्धनेन वामनेन वा पृथगेव स्मृतं स्याद्यतो हि रसवत्काव्यम् । तर्हि कोऽसौ अवश्यमेव अमरुकः अमरसिंहस्य प्रेम्णा रूपान्तरितं नाम भाषणे । अतोऽमरुकस्यापि उज्जयिनी-समीपवर्तिप्रदेशवास्तव्यत्वं सिध्यति कालिदासस्यैव । स हि कालिदासस्य सह-कर्मा कविः कामं स काश्मीरेषु वा कुन्तलेषु जातः । सोऽपि कालिदास इव परमशैवः ।

अमरुकस्य हि प्रत्येकं पद्यं कविभिरालोचकैश्चात्मसात्कृतं दृश्यते । ध्वनि-प्रस्थापनपरमाचार्यं आनन्दवर्धनः कथयति 'मुक्तकेषु हि प्रबन्धेष्विव रसबन्धा-भिनिवेशिनः कवयो दृश्यन्ते । तथा ह्यमरुकस्य कवेर्मुक्तकाः शृङ्गारस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव ।' इति । तथैवोक्तम्—

'अमरुककवेरेकः श्लोकः प्रबन्धशतायते' इति ।

अर्जुनदेवः कथयति—

'अमरुककवित्वडमरुकनादेन विनिह्नुता न सञ्चरन्ति ।
शृङ्गारभणितयोऽन्या धन्यानां श्रवणयुगलेषु ॥' इति ।

ग्रन्थस्यास्य सन्त्यनेकाष्टीकास्तासु अर्जुनदेववर्मणो रसिकसञ्जीवनी ( १२९० मितवैक्रमाब्दमभितः प्रणीता ), वेमभूपालकृता शृङ्गारदीपिका ( १४२५ मितवैक्रमाब्दमभितः प्रणीता ) च प्रसिद्धाः । नायिकावर्णनपरे इमे व्याख्ये । रविचन्द्रस्य तु वेदान्तव्याख्यानपरा व्याख्या कृत्रिमा पाण्डित्य-प्रदर्शिका च । अस्य ह्याधुनिकच्छात्रानुकूला टीकाऽऽवश्यकी ।

प्रसङ्गेऽस्मिन्निदमप्यवधेयं यद्भर्तृहरिर्हि रतिमङ्गनाञ्च हेयत्वेन वर्णयति परन्तु अमरुकस्तु तदेव जीवनसार्थक्याय अपरिहार्यत्वेन वर्णयति । रतिर्वाङ्गना न केवलं मनुष्यजीवनस्योपादानविशेषौ अपि तु समवायिविशेषौ एवेति अमरु-कस्य दृष्टिः । तेनापि अमरुकस्य भर्तृहरेः पूर्ववर्तित्वं सिध्यति । यतो हि सा दृष्टिः प्राकृतिकयुगे एव सम्भवति न तु कृत्रिमयुगे ।

## ६. शृङ्गारशतकम्

शृङ्गारशतकं हि भर्तृहरेः कृतित्वेन प्रसिद्धं प्रस्तुतिकाव्यम् । अनिश्चितै-तिह्योऽयमप्येकः कविः । बहवो हि ग्रन्था भर्तृहरिप्रणीतत्वेन गृहीता सन्ति । वाक्यपदीयं, वाक्यपदीयस्य ब्रह्मकाण्डस्य टीका, पातञ्जलमहाभाष्यस्य व्याख्या, अष्टाध्याय्या भागवृत्तिः, रावणवधकाव्यं, नीतिशतकं, शृङ्गारशतकं वैराग्यशतकमन्यान्यग्रन्थाश्च भर्तृहरिप्रणीता इत्युच्यन्ते । तेषु हि वाक्यपदीयं तु प्रसिद्धमेव तत्कृतित्वेन एवमेव तस्य टीका च । तेन हि महाभाष्यस्य

व्याख्या दीपिकाख्याऽऽसीदिति कैयटस्य 'तथापि हरिबद्धेन सारेण ग्रन्थसेतुना' इति प्रदीपवचनाज्ज्ञायते। तस्याः पूर्वतनो भागस्तु प्रकाशितोऽपि वर्तते। अष्टाध्याय्या वृत्तिरपि भागवृत्तिसङ्कलननाम्ना प्रकाशिता दृश्यते। रावणवधकाव्यस्य प्रणेता भट्टिः भर्तृहरिरेव नान्य इति 'इति भर्तृकाव्यटीकायां जयमङ्गलायाम्' इति मुग्धबोधिनीकारवचनात्, 'महान्तः कवयः सन्तु महान्तः पण्डितास्तथा। महाकविर्महाविद्वानेको भर्तृहरिर्मतः' ॥ इति परम्पराश्लोकात् चानुमीयते। शतकत्रयी तु तत्कृतित्वेन सर्वत्र सुभाषितावल्यादिषु गृहीतैव। अथ कोऽसावित्यपेक्षायां केचित्तं विक्रमादित्यस्य भ्रातरं मन्यन्ते। यथोक्तं—

ब्राह्मण्यामभवद्वराहमिहिरो ज्योतिर्विदामग्रणी
राजा भर्तृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत्।
वैश्यायां हरिचन्द्रवैद्यतिलकौ जातश्च शङ्कुः कृती
शूद्रायामपरः षडेव शवरस्वामिद्विजस्यात्मजाः॥ इति।

कथानकान्तरानुसारेण चन्द्रगुप्ताख्यब्राह्मणस्य चतस्रो भार्या आसन्। तासु हि ब्राह्मण्यां वररुचिः, क्षत्रियायां विक्रमार्कः, वैश्यायां भट्टिः, शूद्रायां भर्तृहरिश्च सञ्जाता इति। एवमेव 'श्रीमद्गोविन्ददीक्षितसूनुविक्रमावरजभट्टिमहाकविविरचिते महाकाव्ये' इत्येकत्र 'वलभीवास्तव्यस्य श्रीस्वामिसूनोर्भट्टिमहाब्राह्मणस्य महावैयाकरणस्य कृतौ' इत्यप्यन्यत्र लिखितमपि दृश्यते। केचिदमुं काश्मीरं मन्यन्ते, परे उज्जयिनीवासिनं, अन्ये तु वलभीवासिनमपि कथयन्ति। विन्ध्याचलपार्श्वे चुनारप्रदेशे भर्तृहरेर्दुर्गत्वेन प्रसिद्धमेकं जीर्णदुर्गमपि नयनपथमायाति। तद्धि भागीरथ्या दक्षिणतटे विद्यते। तेन हि भर्तृहरेः परिचयः सम्प्रत्यपि चित्रविचित्रकथाविहारभूमिरेव। केचित्कथयन्ति ह्यसौ ब्राह्मण आसीदपरे तं क्षत्रियं कस्यापि देशस्य शासकमपि मन्यन्ते। केचित्तं शूद्राजातमपि। भर्तृहरिप्रणीतत्वेन ख्यातानां ग्रन्थानां प्रणेता किमेक एव उताहो एकाधिका भर्तृहरय आसन्नित्यपि पक्षो निर्णेतव्य एव। न किमपि ज्ञायतेऽस्य विषये। केचिदिमं नृपविक्रमार्कस्य भ्रातरं मन्यन्ते विक्रमादित्यपूर्वकालभवम्। परे तु इयं वैक्रमसप्तमशतकभवमपि मन्यन्ते। केचिदिमं बौद्धं मन्यन्ते, केचित्तु शैवमपि। इत्सिङ्गकथनानुसारेण कश्चिद्भर्तृहरिनामा कश्चिद्वैयाकरणः ६५१ ( ७०८ वै० ) पञ्चत्वं गत इति ज्ञायते। केचित्तु तं भामहपूर्ववर्तिनमपि मन्यन्ते। यद्यपि विषयोऽत्र नैव निर्णेतुं शक्यः स्पष्टप्रमाणाभावात्तथापि वयमित्थं विचिन्तयामः—

महाभाष्यव्याख्याता भर्तृहरिर्विक्रमभ्राता भर्तृहरिः पतञ्जलिशिष्यो वा तच्छिष्यशिष्यः। वाक्यपदीयस्य प्रणेता तस्य ब्रह्मकाण्डस्य व्याख्याता भर्तृहरिर्विक्रमानन्तरतृतीयशतकभवो वसुरातशिष्यः। भागवृत्तिकृद्भर्तृहरि-

क्रमानन्तर ७०० मितवर्षमभितः स्थितिमान्। भट्टिकाव्यस्य प्रणेताऽपर एव भट्टिनामा न तु भर्तृहरिः। शतकत्रय्याः प्रणेता पूर्वोक्तेभ्यो विलक्षणः सम्भवतः ६३२-७०७ मितवैक्रमाब्दान्तरालवर्ती।

शतकत्रय्यां शृङ्गारशतकमाद्यं हि शतकम्। अत्र हि रतिर्मानवजीवनस्योपादानविशेषत्वेन वर्णिता। शतकेऽस्मिन् सन्ति एकाधिकशतपद्यानि। कवेः शैली प्रसादमाधुर्यप्रोता। अस्य हि प्रत्येकं पद्यं स्वस्मिन्नेव पूर्णम्। अत्र हि भाषाभावयोर्मञ्जुलः समन्वयः। अत्र कवित्वं पाण्डित्यञ्च एकीभूय स्थिते दृश्येते। यथा हि—

स्मितेन भावेन च लज्जया भिया पराङ्मुखैरर्धकटाक्षवीक्षणैः।
वचोभिरीर्ष्याकलहेन लीलया समस्तभावैः खलु बन्धनं स्त्रियः॥ (८)
नामृतं न विषं किञ्चिदेकां मुक्त्वा नितम्बिनीम्।
सैवामृतलता रक्ता विरक्ता विषवल्लरी॥ (२४)

इत्यादि। शतकस्यास्य सन्ति बह्व्यष्टीकाः।

## ७. चौरपञ्चाशिका

चौरपञ्चाशिका हि महाकवेर्विल्हणस्य कृतिः। कवेरस्य समयः ११३७ मितवैक्रमाब्दमभितः। कश्चित्कविर्हि नृपसुतायामासक्तो गुप्तरूपेण तया सह रमते। सुतामुपभुक्तां ज्ञात्वा राजा तं मृत्युदण्डेन दण्डनायादिशति। कविरपि मरणात्पूर्वं तामेव स्मृत्वा अकारप्रारब्धपञ्चाशीतिश्लोकग्रथिते काव्यं प्रणयति दर्शयति च तं राज्ञेऽन्तिमेच्छारूपेण। राजा च तद्दृष्ट्वा परमप्रीतस्तं बन्धनान्मोचयित्वा तस्मै सत्कृत्य सुतां प्रयच्छति।

विप्रलम्भशृङ्गारप्राकर्ष्यप्रोतं काव्यमिदं भावभाषयोर्मंजुलसमन्वयस्योत्कृष्टमुदाहरणम्। निभाल्यतामस्य कमनीयत्वम्—

अद्यापि तां कनककेसरदामगौरीं फुल्लारविन्दनयनां तनुरोमराजीम्।
सुप्तोत्थितां मदनविह्वलितालसाङ्गीं विद्यां प्रमादगलितामिव चिन्तयामि॥
अद्यापि तां प्रणयिनीं मृगशावकाक्षीं
पीयूषवर्णकुचकुम्भयुगं वहन्तीम्।
पश्याम्यहं यदि पुनर्दिवसावसाने
स्वर्गापवर्गवरराज्यसुखं त्यजामि॥

काव्यस्यास्य मर्मस्पर्शिता पाषाणमपि द्रवयति।

## ८. गीतगोविन्दम्

गीतगोविन्दं हि जयदेवस्य कृतिः। जयदेवो हि वङ्गनरेशस्य लक्ष्मणसेनस्य सभापण्डित आसीत्। तस्य च स्थितिकालः १२२६ मितवैक्रमाब्दमभितः।

तेन जयदेवोऽपि १२००–१२८० मितवैक्रमाब्दानभितः स्थितिमान्। उत्कलस्य बिन्दुबिल्वग्रामे तस्य जन्म कथ्यते। अद्यापि तत्र तत्पुण्यस्मृतौ प्रतिवर्षं समारोह आयुज्यते गीयन्ते च गीतगोविन्दपद्यानि।

गीतगोविन्दं १२ सर्गेषु विभक्तं गीतिकाव्यम्। अत्र हि नायकस्याचरणानुसारेणाध्यायनाम अक्लेशकेशवः, मुग्धमधुसूदनः इत्यादिः। अत्र राधाकृष्णयोः प्राञ्जलं प्रेम वर्णितमस्ति। इदमष्टपदीसंज्ञयाऽपि ज्ञायते। अत्र सङ्गीतगानवर्णनभाषणानां सुन्दरसमन्वयो दृश्यते। कथ्यते हि कृष्णो ब्रह्म राधिका तु जीवात्मा। तेन ह्यत्र ब्रह्मजीवात्मनो नायकनायिकासम्बन्धोऽत्र कल्पितः। शृङ्गारात्मकगीतिकाव्येष्विदं नृपायते।

ग्रन्थस्यास्य सन्ति बह्व्ष्टीकाः। कथ्यते हि यदि अननूद्यता खलु उत्कृष्टकाव्यस्य लक्षणं तर्हि तद्गीतगोविन्दमेव। निभाल्यतामस्य भावगाम्भीर्यं भाषामञ्जुलतां च। यथा हि—

'श्रितकमलाकुचमण्डल धृतकुण्डल ए।
कलितललितवनमाल जय जयदेव हरे'॥
'उरसि मुरारेरुपहितहारे घन इव तरलविलोके।
तडिदिव पीते रतिविपरीते रजसि सुकृतविमोके॥'

९. शृङ्गारकल्लोलः

शृङ्गारकल्लोलो हि रामभट्टस्य कृतिः। रामभट्टस्य समयः १६६० मितवैक्रमाब्दमभितोऽनुमितः।

( ई ) स्फुटकाव्यानि

स्फुटकाव्येषु सर्वाण्यपि मुक्तकानि समाविष्टानि भवन्ति। तेन नाऽस्य गणना सम्भवा। सामान्यतः प्रबन्धासम्बद्धकाव्यमेव स्फुटकाव्यम्।

( ख ) धार्मिकगीतिकाव्यानि

धार्मिकगीतिकाव्यानामपि सुदीर्घा पङ्क्तिर्विद्यते। सर्वाण्यपि स्तोत्राण्यस्मिन् समाविष्टानि भवन्ति। शार्ङ्गारिकगीतिकाव्यापेक्षया धार्मिकगीतिकाव्यानां प्रभावोऽधिकतरो जनमानसे। एतानि हि भक्त्युद्बोधनेन भावविशोधनाय समर्थानि भवन्ति। एतानि हि बुद्धेर्वैशद्याय कल्पन्ते। काव्यानीमानि प्रायः पद्यमयानि कानिचित्तु गद्यमयान्यपि। एतेषां ह्युत्पत्तिरपि अनादिरेव दृश्यते। ऋग्वेदस्य 'अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्।' इत्यारभ्य प्रवर्तितेयं काव्यपरम्परा साम्प्रतिकयुगेऽपि तथैव

विलसन्ती दृश्यते। समग्रमेव वैदिकसाहित्यं सङ्गीतमयं दृश्यते। अथाऽत्रोपस्थाप्यन्ते कानिचिदेव धार्मिकगीतिकाव्यानि स्तुतिकाव्यत्वेन सम्मतानि।

**१. श्यामलादण्डकम्**

स्तुतिकाव्यमिदं कालिदासप्रणीतत्वेन सम्मतम्। अत्र हि श्यामा देवी स्तुताऽस्ति।

**२. गण्डिस्तोत्रगाथा**

अश्वघोषस्य कृतावस्यां धार्मिकसंवादो दर्शितः।

**३. कल्याणमन्दिरस्तोत्रम्**

सिद्धसेनदिवाकर-( ५६० वै० )-प्रणीते स्तोत्रेऽस्मिन् जैनतीर्थङ्कराणां स्तुतिर्विद्यते।

**४. चण्डीशतकम्**

बाणभट्ट-( ६६० वै० )-प्रणीते स्तोत्रेऽस्मिन् भगवती चण्डी शतमितैः पद्यैः स्तुताऽस्ति।

**५. सूर्यशतकम्**

मयूराख्येन ( ६३०–७०० वै० ) कविना प्रणीते स्तोत्रेऽस्मिन् भगवान् सहस्ररश्मिः सादरं स्तुतोऽस्ति शतमितपद्यैः। कथ्यते हि मयूरो बाणभट्टस्य श्वसुरो वा ज्येष्ठश्यालक आसीत्। स ह्येकदा पुत्र्या वा भगिन्या गृहं गत आसीत्। बहिः स्थितः स रात्रौ दम्पत्योः प्रणयकलहं श्रुतवान्। तामनुलालयता बाणेनोक्तं तत्र—

गतप्राया रात्रिः कृशतनु शशी शीर्यत इव
प्रदीपोऽयं निद्रावशमुपगतो घूर्णित इव।
प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो

इति। प्रयतमानोऽपि बाणश्चतुर्थं चरणं नैव पूरयितुमशकत्। तदेव पुनः पुनः कथयन्नेव स्थितः। एतच्छ्रुत्वोद्बुद्धभावो मयूरः कुत्रास्मीति विस्मृत्य चतुर्थं चरणमित्थमुक्तवान्—

'कुचप्रत्यासक्त्या हृदयमपि ते चण्डि कठिनम्॥'

इति। प्रणयकलहविघ्नाज्जातमन्युर्बाणपत्नी स क इत्यविचिन्त्यैव तं 'कुष्ठाक्रान्तो भव' इति शशापेति एका परम्परा। अपरजनश्रुत्यनुसारं तु प्रणयकलहविघ्नेन जातमन्युर्बाणो बहिरागत्य तं 'कुष्ठाक्रान्तो भव' इति शशाप। निरर्थकशापेन क्रुद्धः सोऽपि बाणं 'क्षयरोगाक्रान्तो भव' इति शशाप। ततश्च जातपश्चात्तापौ तौ परस्परमाशिषा संयोजयामासुः। अथ च कुण्ठा-

क्रान्तो मयूरः सूर्यशतकं प्रणीय तत्प्रसादान्मुक्तरोगो बभूव, बाणश्च चण्डीशतकं निर्मायेति।

काव्यस्यास्य सन्त्येकादशाधिकाष्टीकाः। तासु वल्लभदेवकृता सूर्यानुवादिनी प्राचीनतमा।

### ६. सौन्दर्यलहरी

शङ्कराचार्यस्य ६८९ मितवैक्रमाब्दमभितः स्थितिमानित्यनुमितस्य सौन्दर्यलहरी स्तोत्रकाननेन पुष्पायते। स्तोत्रमिदं शाक्तपरम्परापोषकं शङ्करश्च ब्रह्मसूत्रभाष्ये शाक्तागमस्य प्रामाणिकत्वं खण्डयतीति ग्रन्थस्यास्य तत्कर्तृकत्वं ससन्देहमिति केचिद्वदन्ति। धार्मिकगीतिकाव्येष्वस्य काव्यस्य महत्त्वपूर्णं स्थानम्।

### ७. त्रिपुरामहिम्नः स्तोत्रम्

स्तोत्रमिदमपि शङ्कराचार्यकृतित्वेन प्रसिद्धम्। अत्र हि दशमहाविद्यास्वेका त्रिपुरा स्तुताऽस्ति।

### ८. मुकुन्दमाला

वैष्णवेषु लोकप्रियमिदं गीतिकाव्यं कुलशेखरप्रणीतम्। कुलशेखरो हि विक्रमस्याष्टमशतके केरलान् शासति स्म। केचिद्वासुदेवमस्यैव सभाकविं कथयन्ति। काव्यस्यास्य शैली परिष्कृता प्राञ्जला च।

### ९. पञ्चशती

मूककवे कृतित्वेन ख्यातमिदं काव्यं रचनासौष्ठवेऽद्वितीयम्। अत्र हि पञ्चशतमितश्लोकैर्देवी स्तूयते। कविरसौ शङ्कराचार्यसमकालीन इति पण्डिता वदन्ति। असौ काञ्चीनिवासी।

### १०. शिवमहिम्नः स्तोत्रम्

पुष्पदन्तप्रणीतमिदं शिवमहिम्नः स्तोत्रं स्तोत्रराजत्वेन प्रसिद्धम्। अत्र भगवान् शिवः सर्वतोभावेन स्तुतोऽस्ति। पुष्पदन्तस्य स्थानस्थितिकालादि सम्प्रत्यपि अज्ञातमेव। केचिदमुं काश्मीरं वैक्रमनवमशतकभवं मन्यन्ते। केचित्तु कविममुं विक्रमादपि सुदूर पूर्ववर्तिनमामनन्ति। श्लोकाश्चास्य श्रुतिकल्पा इति केषाञ्चिन्मतम्। परिष्कृतशैल्यां भावगाम्भीर्येण प्रणीतमिदं काव्यं सर्वत्र संस्तुतम्। अत्र वृत्तं शिखरिणी अन्त्यभागे वृत्तान्तरमपि। निभाल्यतामस्य काव्यच्छटा—

"मधुस्फीता वाचः परमममृतं निर्मितवतः-
स्तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम्।

मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन् पुरमथनबुद्धिर्व्यवसिता ॥"
"असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी !
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति ।"

काव्यस्यास्य मधुसूदनप्रणीता हरिहरपक्षीया टीका प्रसिद्धा। तथैव लोकमणिदाहालस्य हरपक्षीया टीका च बालाख्या ।

११ वक्रोक्तिपञ्चाशिका

इयं हि रत्नाकरस्य कवेः कृतिः । वक्रोक्तिप्रदर्शकं काव्यमिदं गौरीशिव-संवादात्मकम् । निभाल्यतामस्य काव्यसुषमाम् ।

"त्वं हालाहलमृत्करोषि मनसो मूर्च्छां ममालिङ्गितो
हालां नैव बिभर्मि नैव च हलं मुग्धे कथं हालिकः ।
सत्य हालिकतैव ते समुचिता सक्तस्य गोवाहने
वक्रोक्त्येति जितो हिमाद्रिसुतया स्मेरी हरः पातु वः ।"

रत्नाकरो हि ८५०-९४० मितवैक्रमाब्दानभितः स्थितिमानिति तु अवन्तिवर्मणः समकालिकत्वेन ज्ञायते ।

१२. देवीशतकम्

आनन्दवर्धनस्य ( ९०७ वै० ) कृतिरियं काव्यात्मकतया नितान्त-मेवोत्कृष्टम् । अत्र शब्दालङ्काराणां छटा दर्शनीयाऽस्ति ।

१३. स्तोत्ररत्नम्

विष्णुस्तुतिसम्बद्धं पञ्चषष्टिमितश्लोकात्मकं काव्यमिदं यामुनाचार्यस्य कृतित्वेन प्रसिद्धम् । इदं हि भावानामनुभूतेरुत्कृष्टतया सर्वोत्कृष्टं मतम् । अस्यैव चतुःश्लोकी अपि प्रसिद्धा लक्ष्मीस्तवनपरा चतुःश्लोकात्मिका । यामुनाचार्यस्य स्थितिकालो हि १०७० मितवैक्रमाब्दमभितोऽनुमितः ।

१४. गद्यत्रयम्

रामानुजप्रणीते गद्यत्रये शरणागति-वैकुण्ठ-श्रीरङ्गाख्यानि त्रीणि गद्यानि सन्ति । अस्य हि कालः १०७२-११८२ मितवैक्रमाब्दान्तराले ।

१५. पञ्चस्तवः

श्रीवत्साङ्कस्य पञ्चस्तवः उत्कृष्टतमः स्तुतिकाव्येषु गण्यते । अत्र हि श्री-अतिमानुष-वरदराज-सुन्दरबाहु-वैकुण्ठस्तवाः सन्ति ।

१६. कृष्णकर्णामृतम्

कृष्णलीलांशुकाख्यस्य बिल्वमङ्गलस्य कृतित्वेन ख्यातमिदं काव्यं त्रिषु विभागेषु विभक्तम् । अत्र हि सन्ति ३१० सङ्ख्याकश्लोकाः । चैतन्यान्दोलनस्योत्पत्तौ विकासे चास्य महान् प्रभावः ।

१७. पादुकासहस्रम्

पादुकासहस्रं हि वेदान्तदेशिकस्य ( १३२५-१४२६ वै० ) कृतिः । तस्य हि सन्ति पञ्चविंशतिमितानि गीतिकाव्यानि । पादुकासहस्रे हि सहस्रश्लोकैः रामपादुका स्तुताऽस्ति । रचनादृष्टया काव्यमिदं सर्वोत्कृष्टमतीव सरसम् । अस्य अच्युतशतकमपि तथैव ।

१८. वरदराजस्तवः

अप्पयदीक्षितस्य ( १६११-१६८३ वै० ) काञ्चीनिवासिनो वरदराजस्तवोऽपि काव्यस्यौत्कर्षमावहति । अत्र हि शतं पद्यानि सन्ति । अस्योपरि ग्रन्थकर्तुरेव स्वोपज्ञा टीकाऽपि वर्तते ।

१९. नारायणीयम्

केरलवास्तव्यो नारायणभट्टोऽस्य प्रणेता प्रणयनकालश्च १६४२ मितवैक्रमाब्दः । नारायणीयं हि भागवतस्य सङ्क्षेपः । अत्र हि द्वादशस्कन्धाः १०३६ श्लोकाश्च । ग्रन्थोऽयं मालावारादिप्रदेशे बहु मतः ।

२० आनन्दमन्दाकिनी

मधुसूदनस्य ( १६५० वै० ) कृतित्वेन ख्यातमिदं काव्य श्रीकृष्णस्य नखशिखवर्णनपरम् ।

२१. गङ्गालहरी

पण्डितराजस्य जगन्नाथस्य ( १६४७-१७२२ वै० ) गङ्गालहरी गङ्गायाः स्तवनपरा । सन्त्यत्र ५२ श्लोकाः । अस्यैवं सुधालहरी सूर्यस्तुतिपरा ३० श्लोकात्मिका, यमुनास्तवपरा दशश्लोकात्मिका अमृतलहरी, अन्वर्थनाम्नी एकचत्वारिंशच्छ्लोकनिबद्धा लक्ष्मीलहरी, विष्णस्तवनपरा ४३ पद्यात्मिका करुणालहरी च । काव्यानीमानि भावभाषादृष्टया उत्कृष्टानि ।

२२. आनन्दसागरस्तवः

नीलकण्ठदीक्षितस्य ( १७०७ वै० ) आनन्दसागरस्तवः पार्वतीस्तवनपरः । अस्यैव शिवोत्कर्षमञ्जरी च । उभेऽपि काव्ये भावभाषादिदृष्टया उत्कृष्टे ।

### २३. लक्ष्मीसहस्रम्

वेङ्कटाध्वरिणः ( १७०७ वै० ) कृतित्वेन प्रसिद्धेऽस्मिन् काव्ये लक्ष्मीः विष्णुश्च स्तूयेते। अत्र हि सहस्रं पद्यानि सन्ति। कवेः कल्पनाऽतीवोत्कृष्टा। अतीवकठिनमिदं काव्यं प्रयत्नसाध्यमपि सरसमेव।

### २४. देवीमहिम्नः स्तोत्रम्

लोकमणिदाहालस्य कृतित्वेन ख्यातमिदं काव्यं चत्वारिंशत्पद्यात्मकम्। काव्येऽस्मिन् देव्याः सर्वतोमुखी महिमा वर्णिताऽस्ति शिखरिणीवृत्ते। अस्यैव सूर्यमहिम्नः स्तोत्रमपि तथैव।

धार्मिकगीतिकाव्यानामिदं तु केवलमेकदेशमात्रमेव। सन्त्यनेकानि शतकानि, विविधानि महिम्नः स्तोत्राणि, अनेकानि पञ्चकानि, अष्टकानि, दशकानि, पञ्चाशतानि, सहस्रकाणि च येषां सङ्ख्याऽपि ग्रहीतुं नैव शक्या किमुत वर्णनम्। तानि हि तत्र तत्र स्तोत्ररत्नाकरप्रभृतिसङ्ग्रहग्रन्थेषु द्रष्टव्यानि।

## ( ग ) नीतिकाव्यानि

### ( अ ) नीत्युपदेशकाव्यानि

नीतिपरकाव्यं हि अनुभवसिद्धतथ्ये समाधृतं भवति। सामान्यतः तानि आचारसम्बद्धविषयं वर्णयन्ति। तथैवोपदेशात्मककाव्यानि उपदेशपराणि। किन्त्वेतयोर्मार्गविभेदो न सुकरो यतो हि एकस्मिन्नपरस्य सन्निवेशोऽपरिहार्यः।

नीतिपरकाणां वोपदेशपरकाणाञ्च काव्यानामतिप्राचीनकालादेवास्तित्वमासीत्। एतेषां हि विकासे धर्मस्य दर्शनस्य च सुस्पष्टः प्रभावो लक्ष्यते। पुनःपुनर्जन्ममरणकष्टाज्जीवात्मनो मुक्त्यर्थं सत्यान्वेषणेच्छा समुद्भूता। प्रसङ्गेऽस्मिन् सुखदुःखयोरध्ययनं विहितं जीवने तयोः स्थानञ्च निर्धारितम्। सद्गुणदुर्गुणयोर्मूल्यमपि निर्धारितम्। जीवनस्य भव्यत्वमभव्यत्वञ्चावधारितम्। भव्याभव्यजनस्य लक्षणमपि पठितम्। सदाचारदुराचारविषयाश्च निर्धारिताः। एते एव विषया एतादृशे काव्ये सन्निवेशिताः। एतानि काव्यानि मानवजीवनस्य सर्वतो विकासाय प्रयतन्ते खलु। मनुष्येण सफलजीवनयापनाय किं कर्तव्यमिति विषय उपदेशपरककाव्यानाम्। एतादृशानि काव्यान्यपि कानिचिद्धर्मसम्बद्धानि अन्यानि कानिचिदर्थपराणि, कानिचित्तु कामपराणि, इतराणि मोक्षपराण्यपि। किन्तु सर्वत्र सर्वेषामेव समष्टित्वमपि नैव खण्डितम्। धर्माविरुद्धेनार्थोपार्जनमर्थाविरुद्धेन कामोपभोग एव तत्र तत्र वर्णितः। एवमेव सर्वाविरुद्धेन मोक्षसिद्धिश्च। सज्जनपूजा, दुष्टनिन्दा, न्यायः

शीलमार्जवं सत्यं धर्मश्चेषां नित्यसन्देशः। काव्यानीमानि सदाचारे एव बलं ददति।

गीतिकाव्यमिव नीतिकाव्यमपि बहुविधम्। एषामधिकांशो भागः पद्यमयो यत्र कुत्र गद्यमयश्च। एकस्माच्छ्लोकादारभ्य बहूनां श्लोकानामपि तत्र संस्थितिः।

वेदेषु ब्राह्मणग्रन्थेषूपनिषत्सु पुराणेषु रामायणे महाभारते च सन्त्येतादृशानि काव्यानि सङ्ग्रहीभूय स्थितानि। ऋग्वेद उपदिशति—

'अक्षैर्मा दीव्यः कृषिमित्कृषस्व'
'इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय कदाचन।'
'इहैव स्तं मा वियौष्टं विश्वमायुर्व्यश्नुतम्।
क्रीडन्तौ पुत्रपौत्रीभिर्मोदमानौ स्वके गृहे।'

एतादृशानां काव्यानां सङ्ग्रहरूपेणोपस्थितः सर्वप्रथमो ग्रन्थश्चाणक्यशतकमेव। अथैतेषां सङ्क्षेपेण परिचय उपस्थाप्यते।

### १. चाणक्यशतकम्

चाणक्यशतकं हि चाणक्यनाम्ना विदुषा प्रणीतत्वेन ख्यातेऽस्मिन्नीतिकाव्ये सन्ति ३४० मिताः श्लोकाः। अत्र हि सामान्येन आचारविषयकपक्षस्य समावेशः। यथाऽनुमीयते ग्रन्थस्यास्य सङ्ग्रहीता कश्चिदपर एव कविर्न तु चाणक्यः। सैव स्थितिः राजनीतिसमुच्चयस्य वृद्धचाणक्यस्य च।

### २ नीतिद्विषष्टिका

एषा हि सुन्दरपाण्ड्यस्य कृतिः। सुन्दरपाण्ड्यो हि मधुराया निवासी कथितः। तस्य स्थितिकालः ५६० मितवैक्रमाब्दमभितोऽनुमितः कैश्चित्। अरिकेसरिराजशासनेष्वयं पाण्ड्यराज्यव्यवस्थापको मतः। यदि तथा तदा त्वस्य स्थितिकालो नृपविक्रमार्कादपि पूर्ववर्ती सम्पद्यते। कालिदाससमये एव पाण्ड्यानां ख्यातिरासीत्। अत्र हि ११६ मिताः श्लोकाः सन्ति नीतिनिर्देशकाः। यथा हि—

सह वसतामप्यसतां जलरुहजलवद्भवत्यसंश्लेषः।
दूरेऽपि सतां वसतां प्रीतिः कुमुदेन्दुवद्भवति॥

अन्त्ये च कथितमस्ति—

इमां काञ्चनपीठस्थां समेत्य कवयो भुवि।
आर्यां सुन्दरपाण्ड्यस्य स्नापयन्ति वधूमिव॥

एतदतिरिक्तमपि तस्यासन्नन्ये ग्रन्थाः किन्तु सम्प्रति ते नैव लभ्यन्ते।

जनाश्रयः ( ६६० वै० ) छन्दोविचिते सुन्दरपाण्ड्यस्य एकां पङ्क्तिमुद्धरति एवमेव कुमारिलः शङ्कराचार्यश्च ।

३. बोधिचर्यावतारः

शान्तिदेवस्य ( ६५८ वै० ) कृतित्वेन ख्याते काव्येऽस्मिन् बोधिसत्त्वकर्तव्यानि निरूपितानि सन्ति । अत्र हि मनुष्यमात्रेण सह प्रेमभावो निर्दिष्टः । शिक्षासमुच्चयः सूत्रसमुचयश्चास्यैव ग्रन्थौ पूर्वापेक्षयाऽल्पमहत्त्वौ ।

४. नीतिशतकम्, वैराग्यशतकम्

भर्तृहरेः शतकत्रयेषु द्वितीयमिदं नीतिशतकम् । अत्र हि जीवनोपयोगिनीतयः सङ्कलिताः सन्ति । तृतीय वैराग्यशतकमपि अस्यैव कृतिः । उभयोरेव प्रत्येकं शतं पद्यानामस्ति । नीतिशतके हि नीति-रीति-सदाचार-धैर्य-शौर्यसाहसौदार्य-परोपकाराद्यनेकविषयाः सप्रपञ्चं निरूपिताः एकाधिकशतश्लोकेषु । यथा हि—

मनसि वचसि काये पुण्यपीयूषपूर्णाः
त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥

वैराग्यशतकं तु कवेः सर्वस्वमेव । तत्र स सांसारिकबन्धनमोक्षाय वैराग्याश्रयणमुपदिशति । यथा हि—

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम् ।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥

क्वचिद्वीणावाद्यं क्वचिदपि च हाहेति रुदितं
क्वचिद् विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः ।
क्वचिद्रामा रम्या क्वचिदपि गलत्कुष्ठवपुषो
न जाने संसारः किममृतमयः किं विषमयः ॥

शतकत्रयमालक्ष्य समालोचकाः कथयन्ति यत्काव्यप्रतिभायाः दार्शनिकतया सह यादृशोऽनन्यः प्रसङ्गोऽत्र दृश्यते न तथा क्वचिदप्यन्यत्रेति । पश्यतां तस्य वैलक्षण्यम्—

महीं रम्या शय्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः।
शरच्चन्द्रो दीपो विरतिवनितासङ्गमुदितः
सुखी शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥ इत्यादि।

### ५. मोहमुद्गरः

शङ्कराचार्यस्य कृतित्वेन ख्यातं काव्यमिदं सांसारिकविषयं त्यक्त्वा मायाजालच्छेदनाय मार्गमुपदिशति। सन्त्यन्येऽपि शङ्कराचार्यकृतित्वेन सम्मता ग्रन्था यत्र हि दार्शनिको भावः स्पष्टमेव व्यज्यते।

### ६. कुट्टिनीमतम्

कुट्टिनीमतं हि दामोदरगुप्तस्य कृतिः। कविरसौ काश्मीरस्य जयापीडस्य ( ८३६-८७० वै० ) राजसभासत्। यथोक्तं राजतरङ्गिण्याम्—

तं दामोदरगुप्ताख्यं कुट्टनीमतकारिणम्।
कविं कविं बलिरिव धूर्यं धीसचिवं व्यधात् ॥

ग्रन्थेऽस्मिन् ९७० श्लोकाः सम्प्रति लभ्यन्ते। ग्रन्थोऽयमपूर्ण एवं। इदं हि शम्भलीमतमित्यप्युच्यते। अत्र वेश्यानां कृते शिक्षासहिता सङ्कलिताऽस्ति। कथं हि वेश्या पुरुषं मोहयेत्कथं वा ततोऽधिकमर्जयेदित्यत्र सप्रपञ्चं निरूपितम्। अस्य हि बहवः श्लोकाः सुभाषितग्रन्थेषु समुद्धृता दृश्यन्ते। क्षेमेन्द्रः कविकण्ठाभरणे मम्मटश्च काव्यप्रकाशे कुट्टिनीमतश्लोकानुद्धरतः।

अस्य काव्यसरणिः स्वगौरवं पुष्णाति वर्णनाचातुर्या। यथा हि—

'अपसारय घनसारं कुरु हारं दूर एव किं कमलैः।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥'
'आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म।
स्वाधीनता च पुंसां महदैश्वर्यं विनाऽप्यर्थैः ॥'

### ७. सुभाषितरत्नसन्दोहः

काव्यमिदं कविवरस्यामितगतिनाम्ना ख्यातस्य। इदं हि १०५१ मितवैक्रमाब्दे प्रणीतमासीत्। अस्यैवापरो ग्रन्थो धर्मपरीक्षनाम। प्रथमे ३२ मिताअध्याया यत्र जैनसाधूनामाचारव्यवहारविषया उपदिष्टाः। द्वितीये सनातनधर्मापेक्षया जैनधर्मस्योत्कर्षः प्रतिपादितः सप्रपञ्चम्।

### ८. चारुचर्या, चतुर्वर्गसङ्ग्रहः, सेव्यसेवकोपदेशः, समयमातृका, कलाविलासः, दर्पदलनम्

क्षेमेन्द्रो हि काश्मीरजन्मा महाकविः ११०७ मितवैक्रमाब्दाभ्यर्णे स्थिति-

मान् नीतिविषयकाणि उपदेशपराणि काव्यान्यपि प्रणीतवानासीत्। अस्य हि चारुचर्या शतपद्यात्मिका सद्व्यवहारनिमित्तकनियमानां सोदाहरप्रतिपादिका। चतुर्वर्गसङ्ग्रहे जीवनोद्देश्यभूतानां धर्मार्थकाममोक्षाणां सिद्धेरुपायः प्रदर्शितः। सेव्यसेवकोपदेशे एकषष्टिमितश्लोकाः सन्ति यत्र स्वामिसेवकाभ्यामुभाभ्यामेव व्यङ्ग्यात्मकध्वन्या उपदेशः प्रदत्तोऽस्ति। निरूप्यतामस्य कथननैपुण्यम्—

'भूमिशायी निराहारः शीतवातातपक्षतः।
मुनिव्रतोऽपि नरकक्लेशमश्नाति सेवकः॥' इत्यादि।

अस्य समयमातृकाऽष्टास्वध्यायेषु विभक्ता। तत्र साङ्गोपाङ्गं वेश्याप्रपञ्चं वर्णितमस्ति। एवमेव कलाविलासे दशाध्यायाः सन्ति, यत्र आजीविकाया विविधानि साधनानि वर्णितानि सन्ति। सहैवात्र मनुष्यकृतानां छलप्रपञ्चानां च वर्णनं लभ्यते। दर्पदलने सन्ति सप्ताध्यायाः। अत्र हि दर्पस्य दूषणं प्रतिपाद्य तन्निराकरणाय सोदाहरणमुपदेशो ग्रथितः। यथोक्तं तत्र—

'कुलं वित्तं श्रुतं रूपं शौर्यं दानं तपस्तथा।
प्राधान्येन मनुष्याणां सप्तैते मदहेतवः॥' इति।

## ९. योगशास्त्रम्

योगशास्त्रं हि हेमचन्द्राचार्यस्य (११४५–१२२९ वै०) कृतिः। अत्र हि जैनसाधूनां तपोविधयो जैनानां कर्तव्याणि च निरूपितानि।

## १०. मुग्धोपदेशः

काश्मीरजनुषा १२०७ मितवैक्रमाब्दमभितः स्थितिमता जल्हणाख्येन विदुषा प्रणीते काव्येऽस्मिन् वेश्यानां छलप्रपञ्चं निरूप्य ततो मोक्षोपायोऽपि वर्णितः।

## ११. शान्तिशतकम्

शान्तिशतकं हि शिल्हणस्य (१२६२ वै०) काश्मीरस्य कृतिः। भर्तृहरेः शतकत्रयीपद्धत्या प्रणीतमिदं काव्यं मानसिकशान्त्युपायान् निर्दिश्य तत्साधनायोपदिशति। सदुक्तिकर्णामृतेऽस्योद्धरणानि दृश्यन्ते।

## १२. शृङ्गारवैराग्यतरङ्गिणी

इदं हि सोमप्रभस्य (१३३३ वै०) कृतिः। अत्र हि स्त्रीसंसर्गसम्भविदोषानुद्घाटय वैराग्यस्य प्रशंसा कृताऽस्ति।

## १३. सुभाषितनीवी, वैराग्यपञ्चकम्

भर्तृहरेरेव नीतिशतकपद्धत्यां प्रणीतमिदं काव्यं वेदान्तदेशिकस्य (१३२५–

१४२६ वै० ) कृतिः। अत्र हि द्वादश पद्धतयः १४५ सुभाषितश्लोकाश्च सन्ति। तस्यैव वैराग्यपञ्चके स्वानुभूतवैराग्यस्य रहस्योद्घाटनं कृतमस्ति।

**१४. दृष्टान्तशतकम्**

कुसुमदेवाऽऽख्येन विदुषा ( १५०० वैक्रमाब्दपूर्वम् ) दृष्टान्तशतकं प्रणीतम्। अत्र हि जीवनसाफल्यायावश्यका आदर्शाः सदृष्टान्तं निरूपिताः। वल्लभदेवः ( १५५५ वै० ) ग्रन्थमिमं स्मरति।

**१५. नीतिमञ्जरी**

द्याद्विवेदाख्येन विदुषा १५५१ मितवैक्रमाब्दे प्रणीतायां नीतिमञ्जर्यां नीतिविषयः सप्रपञ्चं निरूपितोऽस्ति। स हि वेदादिभ्योऽपि उदाहरणं गृह्णाति।

**१६. भामिनीविलासः**

पण्डितराजजगन्नाथ-( १६४७-१७२२ वै० )-प्रणीते भामिनीविलासे सन्ति चत्वारो विलासा। तत्र प्रथमो हि अन्योक्तिविलासो यत्र एकाधिकशतश्लोकाः सन्ति। द्वितीयस्तु शृङ्गारविलासो यत्र शतं श्लोकाः सन्ति। तृतीयो हि करुणविलासो यत्र १९ श्लोकाः सन्ति। चतुर्थस्तु शान्तरसविलासो यत्र सन्ति द्वात्रिंशच्छ्लोकाः। श्लोका इमे भावेनौजसा च आप्लाविताः सन्ति। ग्रन्थेऽस्मिन् कविर्जीवात्मानं शान्तरसावलम्बनाय सन्दिशति।

**१७. कलिविडम्बनम्, सभारञ्जनशतकम्, शान्तिविलासः, वैराग्यशतकम्,**

काव्यानीमानि नीलकण्ठदीक्षितप्रणीतानि। स हि १७०७ मितवैक्रमाब्दमभितः स्थितिमान्। कलिविडम्बने कलियुगघटनोपरि व्यङ्ग्यप्रधानं काव्यम्। यथा हि—

'यत्र भार्यागिरो वेदा यत्र धर्मोऽर्थसाधनम्।
यत्र स्वप्रतिभा मानं तस्मै श्रीकलये नमः॥'

इत्यादि। सभारञ्जनशतके हि सभासद्रञ्जनोपाया वर्णिताः सन्ति। निभाल्यतामत्र व्यङ्ग्योक्तिः—

'जानाते यन्न चन्द्रार्कौ जानते यन्न योगिनः।
जानीते यन्न भर्गोऽपि तज्जानाति कविः स्वयम्॥' इति।

शान्तिविलासे हि ५१ मितश्लोकाः सन्ति। अत्र मानसिक शान्तेर्लाभः सप्रपञ्चं निरूपितः। वैराग्यशतके हि वैराग्येन सम्भवी लाभो वर्णितः।

**१८. उपदेशशतकम्**

गुमानिकवेः कूर्माचलीयस्य उपदेशशतके मानवजीवनसम्बद्धोपदेशपराः शतमितश्लोकाः सन्ति। कवेरस्य समयः वैक्रमाष्टादशशतकपूर्वार्द्धोऽनुमितः।

### १९. सुभाषितकौस्तुभः

वेङ्कटाध्वरिणः ( १७०७ वै० ) सुभाषितकौस्तुभो हि व्यवहारोपयोगिनीतीनामेव सङ्ग्रहः ।

एतानि अन्यान्यानि च नीत्युपदेशपरकाव्यानि सन्ति नयनपथमनागतान्यपि वा दृष्ट्वाऽप्युपेक्षितानि । तान्यपि क्रमशोऽन्वेष्टव्यानि सन्ति ।

## ( आ ) अन्योक्तिकाव्यानि

तादृशं काव्यमन्योक्तिकाव्यं भवति यत्र जीवनसम्बद्धतथ्यमन्यमिषेणाप्रत्यक्षतया कथ्यते । एतदेव अन्यापदेशकाव्यमित्यप्युच्यते । संस्कृतवाङ्मये एतादृशानामपि काव्यानां नास्त्यभावः । अथाऽत्र कानिचिदन्योक्तिकाव्यान्युपस्थाप्यन्ते ।

### १. भल्लटशतकम्

भल्लटशतकं हि अन्योक्तिपरम्परायाः प्रथमं काव्यम् । अस्य प्रणेता भल्लटाख्यः कविः । स हि काश्मीरस्य शङ्करवर्मणः ( ९४३–९५९ वै० ) राजकविरासीत् । तेन तस्य कालः ९१०–९८० मितवैक्रमाब्दान्तरालेऽनुमितः । सरलया रीत्या रसवत्त्वेन प्रणीतस्यास्य काव्यस्य सन्त्यनेके श्लोकाः सङ्ग्रहग्रन्थादौ समुद्धृताः । निरूप्यतामस्य प्रासादिकीं शैलीम्—

'विशालं शाल्मल्या नयनसुभगं वीक्ष्य कुसुमं
शुकस्याभूद्बुद्धिः फलमपि भवेदस्य सदृशम् ।
इति ध्यात्वोपास्तं फलमपि च दैवात्परिणतं
विपाके तूलोऽन्तः सपदि मरुता सोऽप्यपहृतः ॥'
'रज्ज्वा दिशः प्रवितता सलिलं विषेण
पाशैर्मही हुतभुजा ज्वलिता वनान्ताः ।
व्याधाः पदान्यनुसरन्ति गृहीतचापाः
कं देशमाश्रयतु यूथपतिर्मृगाणाम् ॥' इत्यादि ।

### २. अन्योक्तिमुक्तालता

काश्मीरस्य हर्षस्य राज्ञः ( ११४६–११५८ वै० ) सभाकविना ११२०–१२०० मितवैक्रमाब्दान्तरालस्थितिमता शम्भुकविना अन्योक्तिमुक्तालताख्यं काव्यं प्रणीतमस्ति । अत्र ह्यन्योक्तिपद्धत्या प्रणीताः १०८ मिताः श्लोकाः सन्ति ।

### ३. भामिनीविलासः, अन्यापदेशशतकम्

पण्डितराजजगन्नाथप्रणीतस्य भामिनीविलासस्य प्रथमो विलासः अन्यापदेशशतकाख्यः। अत्र हि १०१ मिताः श्लोकाः सन्ति। यथा हि—

'नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम्।
शाखिनोऽन्ये विराजन्ते छिद्यन्ते चन्दनद्रुमाः ॥'
'किं खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा ते।
सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानाम् ॥'

इत्यादि। जगन्नाथो हि तैलङ्गब्राह्मणः १६४७–१७२२ मितवैक्रमाब्दानभितः स्थितिमान्।

### ४. अन्यापदेशशतकम्

नीलकण्ठदीक्षितेन प्रणीतं हि अन्योक्तिशतकमेतद्विधकाव्येषु नितान्तमुत्कृष्टतमम्। एतद्धि कवेः प्रतिभायाः निदर्शनमेव।

वीरेश्वरस्य अन्योक्तिशतकमपि तत्स्तरीयमेव।

एतान्यन्यान्यपि अन्यापदेशकाव्यानि विलसन्ति संस्कृतवाङ्मये। कश्चिद्धि प्रबुद्धः पिता पण्डितमपि कापथगामिनं सुतं शिशासुरित्थं कथयति —

'शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी स्वच्छता।
किं ब्रूमः शुचितां भवन्ति शुचय स्पर्शेन यस्यापरे ॥
... ... ... ... ... ...... ...त्वं जीवनं जीविनाम्।
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥' इति।

अन्योक्तेर्न केवलं काव्येऽपि तु सामान्यव्यवहारेऽपि महानुपयोगो दृश्यते। ग्रामीणप्रहेलिकादावपि अन्योक्तेः प्राधान्यं दृश्यते। यथा हि—

'ददाति माता दुहिताऽऽददाति।'

इत्येतस्यार्थः कुम्भान्निःसृतं जलं कमण्डलौ पततीति।

## (घ) साङ्ग्रहिककाव्यानि

साङ्ग्रहिककाव्यानि हि परप्रणीतकाव्यादिभ्यः सुभाषितादीन्यादाय वा शब्दान् गृहीत्वा सम्पादितानि भवन्ति। तानि हि खलु द्विविधानि सुभाषितसङ्ग्रहाः कोषग्रन्थाश्च।

### (अ) सुभाषितसङ्ग्रहाः

सुभाषितसङ्ग्रहे हि विविधकविविरचितश्लोकानां विषयक्रमेण सङ्ग्रहः कृतो भवति। तादृशा हि श्लोकाः काव्यग्रन्थेभ्यो गीतिकाव्येभ्यः सामान्यसङ्ग्रहेभ्यश्च गृहीता भवन्ति। तादृशोद्धरणे कतिपयेषां कवीनां तत्प्रणीतग्रन्थानाञ्च नामान्यपि स्मृतानि भवन्ति। यद्यपि कतिपये तादृशाः श्लोकाः

सम्प्रति समुपलब्धसंस्करणेषु नैवोपलभ्यन्ते तथापि एभ्यः कविग्रन्थादीनां परिचयान्वेषणाय विशेषतः कालनिर्धारणाय सौकर्यं किमपि सञ्जायत एव। सातवाहनस्य गाथासप्तशती, एषु प्रथमो ग्रन्थः। अथैतेषां संक्षेपेण परिचयोऽत्र प्रस्तूयते।

**१. गाथासप्तशती**

गाथासप्तशती हि हालकविना सङ्ग्रहिता इति प्रसिद्धिः। किन्तु बाण-भट्टस्तु कृतिमिमां सातवाहनस्येति मन्यते। यथा कथयति सः—

'अविनाशिनमग्राम्यमकरोत्सातवाहनः ।
विशुद्धजातिभिः कोशं रत्नैरिव सुभाषितैः ॥' इति।

अत्र हि सन्ति महाराष्ट्रीलिखिताः सप्तशतश्लोकाः, श्लोका इमे शृङ्गार-सम्बद्धाः। तत्र प्रवरसेन-मायुराज-हालप्रभृतिकवीनां श्लोकाः गृहीताः सन्ति। सातवाहनो हि शालिवाहन एव। सातवाहनो हि आन्ध्रमृत्यनृपाणां पारिवा-रिकं नाम। सातवाहनराजानो हि महाराष्ट्रे षोडशमितवैक्रमवर्षादारभ्य २७५ मितवैक्रमवर्षपर्यन्तं सत्तासीना आसन्। वंशेऽस्मिन् हालो नाम राजाप्या-सीत्, यो हि विक्रमसमकालीन आसीत्। गाथासप्तशत्यां हालस्यापि सन्ति केचन श्लोकाः उद्धृताः। तेन ग्रन्थस्यास्य सङ्ग्रहो हि वैक्रमद्वितीयशतकपूर्वार्द्धे सम्पन्नः सम्भवति। अनेनैव शालिवाहनेन प्रवर्तितः शक्रयुगो १३५ मितवैक्रम-वत्सरादारब्धो भवति प्रचलितोऽस्ति च शाकेनाम्ना। प्रायशः ज्योतिषग्रन्थेषु अस्य प्रयोगो दृश्यते। शिलालेखेष्वपि 'शकानामपि भूभुजाम्' इत्युक्तं दृश्यते।

**२. कवीन्द्रवचनसमुच्चयः**

अयं हि संस्कृतश्लोकानां प्रथमः सङ्ग्रहः। अत्र हि राजशेखर (९५७ वै०) पर्यन्तानां कवीनां श्लोकाः सङ्गृहीताः सन्ति। तथैवास्य वैक्रमद्वादश-शतकोत्तरार्धे नेपालीभाषायामनुवादः कृतो लभ्यते। तेनैवास्य सङ्ग्रहकालो वैक्रमैकादशशतकमभितोऽनुमीयते। सङ्ग्रहेऽस्मिन् ५२५ श्लोकाः समुद्धृताः सन्ति। अत्र ग्रन्थकारनाम तु नैव गृहीतो दृश्यते।

**३. मानसोल्लासः**

मानसोल्लासश्चालुक्यवंश्यस्य सोमेश्वरभूपस्य (११८८ वै०) कृतिः। अयमेव अभिलषितार्थचिन्तामणिरित्यप्युच्यते। यद्यप्ययं नैव सुभाषितानामेव सङ्ग्रहोऽपि तु निखिलानामेव ज्ञानविभागानामयं सङ्ग्रहः। अत्र हि सर्वोऽपि विषय उपस्थापितो दृश्यते।

### ४. आर्यासप्तशती

कृतिरेषा गोवर्धनस्य बङ्गभूपलक्ष्मणसेनसभाकवेः १२२६ मितवैक्रमाब्दमभितः स्थितिमतः। अत्र हि वर्णक्रमेण आर्याच्छन्दोनिबद्धाः शृङ्गारसम्बद्धा सप्तशतमितश्लोकाः सन्ति।

### ५. सदुक्तिकर्णामृतम्

वटुदासात्मजेन श्रीधरदासेन १२६२ मितवैक्रमाब्दमभितः सङ्ग्रहितेऽस्मिन् ग्रन्थे ४४६ कवीनां २३६८ श्लोकाः समुद्धृताः सन्ति।

### ६. सूक्तिमुक्तावली

यादवराजस्य कृष्णाख्यस्य (१३०४–१३१७ वै०) मन्त्रिणा जल्हणेन १३१४ मितवैक्रमाब्दे सङ्ग्रहितेऽस्मिन् ग्रन्थे २४३ कवीनां २७९० मितश्लोकाः समुद्धृताः सन्ति।

### ७. सूक्तिरत्नहारः

सूक्तिरत्नहारः कलिङ्गरायसूर्यस्य कृतिः। अस्य सङ्ग्रहकालः वैक्रमचतुर्दशशतकोत्तरार्द्धोऽनुमितः।

### ८. सुभाषितसुधानिधिः

१४०७ मितवैक्रमाब्दपर्यन्तं जीवितेन सायणाचार्येण विजयनगरराज्यमन्त्रिणा सङ्ग्रहितेऽस्मिन् ग्रन्थे सर्वेषामेव प्रसिद्धकवीनामुद्धरणानि दत्तानि सन्ति।

### ९. शाङ्र्गधरपद्धतिः

दामोदराख्यस्य सुतेन १४२० मितवैक्रमाब्दमभितः स्थितिमता शाङ्र्गधरेण सङ्ग्रहितेऽस्मिन् ग्रन्थे १६३ विभागेषु २६४ कवीनां ४६८९ श्लोकाः समुद्धृताः सन्ति। सन्ति तस्यापि स्वप्रणीतश्लोकास्तत्र समावेशिताः।

### १०. सुभाषितावलिः

ग्रन्थोऽयं सकलकीर्तिकवेः। इदं नैव ज्ञातं यत्स स एव जैनविद्वान् सकलकीर्तियः १५०७ मितवैक्रमाब्दपर्यन्त्यं जीवित आसीद्वा नेति।

### ११. प्रसङ्गरत्नावलिः

पोतवार्यस्य कृतिरियं १५२३ मितवैक्रमाब्दे प्रणीता। अत्र विभिन्नविषयकश्लोकानां सङ्ग्रहः कृतोऽस्ति।

**१२. सुभाषितावलिः**

जोनराजस्य शिष्येण श्रीधरेण १५३७ मितवैक्रमाब्दे सङ्ग्रहिते ग्रन्थेऽस्मिन् ३८० तोऽप्यधिककवीनां श्लोकाः समुद्धृताः सन्ति ।

**१३. सुभाषितावलिः**

१५३० मितवैक्रमाब्दमभितः स्थितिमता वल्लभदेवेन सङ्ग्रहिते ग्रन्थेऽस्मिन् १०१ विभागाः सन्ति, यत्र ३५० कवीनां ३५२७ श्लोकाः समुद्धृताः सन्ति ।

**१४. पद्यावली**

कृष्णचैतन्यशिष्येण रूपगोस्वामिना १५६० मितवैक्रमाब्दमभितः स्थितिमता प्रणीतेऽस्मिन् ग्रन्थे कृष्णस्तवनपराः १२५ कवीनां ३८६ श्लोकाः समुद्धृताः सन्ति ।

**१५. सूक्तिवारिधिः**

१५६० मितवैक्रमाब्दाभ्यर्णवर्तिना पेड्डभट्टेन सङ्ग्रहितोऽयं ग्रन्थः सूक्तिसरिदेव ।

**१६. सुभाषितहारावली**

१७६० मितवैक्रमाब्दमभितः स्थितिमतो हरिकवेरस्यां कृतौ पूर्ववर्तीनां समकालीनानाञ्च कवीनां श्लोकाः समुद्धृताः सन्ति । तत्र पण्डितराजजगन्नाथप्रणीतश्लोका अपि दृश्यन्ते ।

**१७. बुधभूषणम्**

शिवाजीपुत्रेण शम्भुना १७४७ मितवैक्रमाब्दमभितः सङ्ग्रहिते ग्रन्थेऽस्मिन् त्रिषु भागेषु ८८३ श्लोका सन्ति ।

**१८. पद्यामृततरङ्गिणी**

अज्ञातस्थितिकालस्य हरिभास्करस्य कृतावस्यां सन्ति विविधानि सरसपद्यानि सङ्कलितानि ।

**१९. सुभाषितरत्नभाण्डागारः**

ग्रन्थोऽयं शिवदत्तेन सङ्कलितः । अत्र हि सर्वेऽपि कवयः समुद्धृता विषयानुसारेण । ग्रन्थेऽस्मिन् एकादशसहस्रश्लोकाः १६०० लोकोक्तयश्च सन्ति सङ्कलिताः । अस्य प्रणयनकालः २००९ मितवैक्रमाब्दः ।

**२०. सूक्तिमुक्तावली**

ग्रन्थोऽयं नरेन्द्रदेवसङ्कलितः। अस्य च प्रणयनकालो वैक्रमैकविंशतिशतकपूर्वार्द्धः।

**२१. संस्कृतसूक्तिरत्नाकरः**

रामजी उपाध्यायेन २०२५ मितवैक्रमाब्दे सम्पादितेऽस्मिन् ग्रन्थे सन्ति १२६२ सुभाषितानि।

एतदतिरिक्तं जर्मनदेशीयविपश्चिता वाटलिकाख्येन ८००० सङ्ख्याकपद्यानां सङ्कलनं कृत्वा जर्मनभाषायां गद्यमयमनुवादञ्च विरचय्य 'इण्डिशे स्प्रुखे' नाम्ना ग्रन्थरत्नं प्रकाशितमस्ति।

**( आ ) कोषग्रन्थाः**

कोषाः सामान्यतो द्विविधाः नानार्थककोषाः पर्यायवाचककोषाश्च। नानार्थककोषेषु एकस्य शब्दस्य एकाधिका अर्था उपस्थाप्यन्ते पर्यायवाचककोषे एकस्यैवार्थस्य वाचकशब्दा निर्दिश्यन्ते। केषुचित्कोषेषु उभय्येव गतिरपि दृश्यते। तत्र हि परिशिष्टरूपेण नानार्थकोषोऽपि प्रस्तूयते। विषयेऽस्मिन् वयं पृथगेव निरूपयिष्यामः।

## ( ग ) काव्यसमीक्षणम्

सामान्यतः काव्यवस्तुनश्चतस्र आश्रयभूमयः पुराणानि, इतिहासः, जनश्रुतिः, कविकल्पना च। यानि खलु पौराणिकीं कथामाश्रित्य प्रणीतानि तानि पौराणिककाव्यानि, यानि च ऐतिहासिकाधारेण प्रणीतानि तानि ऐतिहासिकानि, यानि च जनश्रुत्याधारेण विरचितानि तानि जनश्रुतिकाव्यानि, यानि च कविकल्पनोद्भूतवस्त्वाधारेण प्रणीतानि तानि काल्पनिकानि काव्यानि भवन्ति। यद्यपि पौराणिकादौ काव्येऽपि कल्पनायाः प्राधान्यं भवत्येव तथापि गणनैषा कथावस्तुमात्राश्रया। तानि च पुनः समालोचकैः स्वरूपतः देवकाव्य-यमककाव्य-श्लेषकाव्यादिभेदेनापि बहुशो भेदितानि।

पौराणिकानि खलु काव्यानि पाणिनेर्जाम्बवतीविजयः, व्याडेः बालचरितं, कात्यायनस्य स्वर्गारोहणं, पतञ्जलेर्महानन्दमयं, कालिदासस्य रघुवंशः कुमारसम्भवं च, कुमारदासस्य जानकीहरणं, भारवेः किरातार्जुनीयं, बाणस्य हर्षचरितं, भट्टिकवेः रावणवधं, माघस्य शिशुपालवधं, श्रीहर्षस्य नैषधीयचरितञ्चेतिप्रभृतीनि।

ऐतिहासिककाव्येषु हि वाक्पतिराजस्य गौडवधं ( गउडवहो ) शिवस्वामिनः कप्फणाभ्युदयः, पद्मगुप्तस्य नवसाहसाङ्कचरितं, बिल्हणस्य विक्रमाङ्क-

देवचरितं, कल्हणस्य राजतरङ्गिणी, जल्हणस्य सोमपालविजयः, हेमचन्द्रस्य कुमारपालचरितं, सोमेश्वरस्य कीर्तिकौमुदीकाव्यं, अरिसिंहस्य सुकृतकीर्तनं, बालचन्द्रस्य वसन्तविलासः, नयनचन्द्रस्य हम्मीरमहाकाव्यं, चन्द्रशेखरस्य सुर्जनचरितं, राजनाथस्य अच्युतराजाभ्युदयं, गङ्गादेव्या मधुराविजयं, वीरकम्परायचरितञ्च, सन्ध्याकरनन्दिनो रामपालचरितं, चण्डकवेः पृथ्वीराजविजयं, शम्भुकवेः राजेन्द्रकर्णपूरः, सर्वानन्दस्य जगडूचरितं, राजनाथस्य सालुवाभ्युदयं, रुद्रकवेः राष्ट्रौढवंशमहाकाव्यम्, यज्ञनारायणस्य रघुनाथभूपविजयः, परमेश्वरशिवद्विजस्य श्रीरामवर्ममहाराजचरितं, शङ्करलालस्य रावजीराजकीर्तिविलासः, नागराजस्य भारतीयदेशभक्तचरितं, दिलीपदत्तस्य मुनिचरितामृतं, मथुरानाथस्य जयपुरवैभवं, मथुराप्रसादस्य प्रतापविजयम्, द्विजेन्द्रनाथस्य स्वराज्यविजयम्, सत्यव्रतस्य गोविन्दसिंहमहाकाव्यं चेत्यादीनि सन्ति प्रसिद्धानि समुल्लेखनीयानि ।

जनश्रुतिमूलककाव्येषु प्रायो गद्यसाहित्यमेव दृश्यते । तेषु सुबन्धोर्वासवदत्ता, बाणस्य कादम्बरी, दण्डिनो दशकुमारचरितञ्चेत्यादीनि प्रसिद्धानि । एवमेव गुणाढ्यस्य बृहत्कथा, सोमेश्वरस्य कथासरित्सागरः, क्षेमेन्द्रस्य बृहत्कथामञ्जरी च ।

कल्पनामूलकेषु मेघदूत-ऋतुसंहारप्रभृतीनि लघुकाव्यान्येव दृश्यन्ते ।

एवमेव देवकाव्येषु स्वाभीष्टदेवयशो वर्ण्यते पुण्यलोभेन, एतादृशेषु काव्येषु उत्प्रेक्षावल्लभस्य भिक्षाटनकाव्यं, नीलकण्ठस्य शिवलीलार्णवः, जयरथस्य हरचरितचिन्तामणिः, लोलिम्बराजस्य हरिविलासकाव्यं, वेदान्तदेशिकस्य यादवाभ्युदयं, चेतिप्रभृतीनि काव्यानि गृहीतानि । अत्रेदमवधेयं यद्देवमहिमवर्णनपराण्यपि काव्यानि यदि कवित्वप्रदर्शनपराणि तदा तानि नैव देवकाव्यानि भवन्ति यथा शिशुपालवधम् । पुण्यलोभेन प्रणीतान्येव देवकाव्ये समावेशितव्यानीति ।

यमकप्रधानानि यमककाव्यानि । तानि च यथा घटकर्परस्य घटकर्परकाव्यं, नीतिवर्मणः कीचकवधकाव्यं, वासुदेवाख्यस्य नलोदयकाव्यञ्चेत्यादीनि । यद्यपि यमकं तु रघुवंशादावपि विद्यते किन्तु यमकप्रदर्शनायैव प्रणीतानि काव्यान्येवात्र प्रकरणे गृह्यन्ते ।

श्लेषप्रधानकाव्यानि यथा धनञ्जयस्य राघवपाण्डवीयं ( ९८० वै० ), सन्ध्याकरनन्दिनो रामपालचरितं ( ११८० वै० ), कविराजस्य राघवपाण्डवीयं ( १२०० वै० ), रामचन्द्रस्य रसिकरञ्जनं (१५९९ वै०), चिदम्बरस्य यादवीयराघवपाण्डवीयं ( १६६० वै० ), वेङ्कटाध्वरिणो यादवराघवीयं ( १७०७ वै० ), मेघविजयगणेः सप्तसन्धानमहाकाव्यं ( १७२७ वै० ), हर-

दत्तस्य राघवनैषधीयं ( १७६० वै० ), विद्यामाधवस्य पार्वतीरुक्मिणीयञ्चेत्यादीनि। दैवज्ञसूर्यस्य रामकृष्णविलोमकाव्यमपि तथैव श्लेषप्रधानम्।

काव्यान्येतानि महाकाव्यखण्डकाव्यप्रकरणे यथावसरं निरूपितान्येव तत्र तत्र द्रष्टव्यानि।

## ( घ ) गद्यकाव्यम्

किं गद्यमित्यपेक्षायां दण्डी कथयति—'अपादपटसन्तानो गद्यम्' इति। वस्तुतस्तु पदानां वृत्तापेक्षया प्रयोगो यत्र तत्पद्यं यत्र तु स्वातन्त्र्येण प्रयोगस्तद्गद्यं भवति।

गद्यं नाम भाषायाः प्राकृतिकं स्वरूपं तद्विपरीतं पद्यं तस्य निर्मितं रूपम्। यथा गद्यते तद् गद्यम्, यथा अहं पुस्तकं पठामीति। एतद्धि अनियतवर्णावसानं भवति। पद्यं तु नियतवर्णावसानं पादबद्धमेव। यदि हि काकतालीयन्यायेन कदाचिद् गद्येऽपि लयात्मकता उत्पद्यते तदापि गद्यं तु गद्यमेव तत्र बुद्धिविलासजन्यताभावात् यथा 'देवौ गृहं जग्मतुः'। इदं हि यथैव गद्ये तथैव पद्येऽपि। यथा—

'कार्यं निश्चितमासमाप्य मुदितौ देवौ गृहं जग्मतुः'। अस्यैव गद्यरूपं भवति—'निश्चितं कार्यं आसमाप्य मुदितौ देवौ गृहं जग्मतुः' इति। किन्त्वनेनैतन्नावधेयं यदन्वयाभाव एव पदानां गद्यमिति। गद्यपद्ययोर्विभदेकतत्त्वं तु बुद्धिविलास एव। यत्र हि भाषायाः स्वाभाविकी गतिस्तद् गद्यमेव यत्र च श्रमप्रदत्ता गतिस्तदेव पद्यमिति।

गद्यं हि पद्यस्य व्याख्यात्मकं रूपमिति ये हि वदन्ति तत्तेषां बुद्धिविभ्रम एव। वस्तुतस्तु गद्यादेव पद्यसम्भवः। विचिन्त्यतामस्य सारम्। कविर्यदेवानुभवति तदेव प्रथमं चेतसि मथ्नाति। तावत्पर्यन्तं तस्यानुभवस्य गद्यमयं रूपमेव भवति। न कोऽपि पद्ये विचिन्तयति कामं स कालिदासस्य गुरुदेवः किं न स्यात्। यदा हि तद्बहिर्निष्क्रामयति तदापि तस्य गद्यमयं रूपमेव भवति। पश्चाच्च कविस्तत् पद्ये निबध्नाति, पदैः सह सुचिरं क्रीडित्वा। तेन परापश्यन्ती-मध्यमावस्थायां वाचः स्वरूपे गद्यमयमेव भवति मौलिकम्। वैखर्या अपि प्रथमचरणे तु तथैव भवति चरमचरणे एव पद्यमयं सम्भवति यदि वक्ता विचक्षणश्चेत्। तेन न हि गद्यं पद्यकाव्याल्लोककथामाध्यमेन विकसितं यथा हि पण्डितम्मन्याः कथयितुं चेष्टन्ते, नैव च संस्कृतं गद्यं ग्रीकगद्यात्प्रभावितं यथा कथ्यते। वस्तुतस्तु यदा हि भारतीयगद्यं स्वकीये सर्वोत्कृष्टसाहित्योद्याने 'ऋतञ्च सत्यञ्चाभिद्ध्यात्तपसोऽध्यजायत। ततो रात्र्यजायत। ततः समुद्रोऽर्णवः। समुद्रादर्णवादधि संवत्सरोऽजायत' स हि वाच ऋग्वेदं

भगवोऽध्येमि' इत्यादि रूपेण विहरति स्म तदा ग्रीकपद्यं हि मेषपुच्छेऽपि संलग्नं नासीत्किमुत कविलेखन्याम्। यथार्थंतात्वेतावत्येव यत्साहित्यस्य मौलिकं रूपं तु गद्यमयमेव पद्यं तु पश्चात्प्रभावातिशयेच्छया वा कण्ठस्थीकरण-सौकर्याय प्रवर्तितं श्रमेण।

संस्कृतगद्यसाहित्यं पद्यसाहित्यादपि प्राचीनतरम्। उक्तमेव पुराणेषु 'एक एव यजुर्वेदो व्यस्यते द्वापरादिषु' इति। यजुर्नाम अनियतवर्णावसानवागेव। यजुर्भ्यं एव ऋगजायत। ऋङ्नाम नियतवर्णावसाना वाक्। न केवलं यजुर्वेदस्य मौलिकं रूपमपि तु समग्रमेव बाह्मणसाहित्यमारण्यकमुपनिषत्तत्त्वश्च गद्य एव विद्यते। सूत्रमपि गद्यस्यैव संक्षिप्तं रूपं न तु पद्यस्य।

गद्यसाहित्यस्य प्रारम्भिकं रूपं भाषितभाषया निकामं संवदते स्म। पश्चा-द्वर्तिनि काले पद्ये इव गद्येऽपि कृत्रिमता समुदिता, ओजोभूयस्त्वमेव गद्यस्य साहित्यत्वे प्रमाणं सञ्जातम्। तथापि गद्ये स्वाभाविकता नैवास्तङ्गता। गद्यसाहित्यस्य द्वितीयं रूपं सम्भवतः सुबन्धुना प्रारम्भितम्। तस्य हि कृति-र्वासवदत्ता समुद्रगुप्तस्य कृष्णचरितप्रमाणेन कथयितु शक्यते यन्मागधस्य बिम्बसारस्य ( वा बिन्दुसारस्य ) काले प्रणीताऽऽसीत्। यथोक्तं तत्र राज-कविवर्णनप्रसङ्गे यत्सुबन्धुर्हि प्रथमं बिन्दुसारस्य मागधस्य सभापण्डित आसीत्। तत्रैव तेन 'वासवदत्ता'ख्यग्रन्थः प्राणायि। तच्च बिन्दुसारः पठितुं नाशकत्। तेन तस्य सरलीकरणाय कविः प्रार्थितः। किन्तु मौलिकताभङ्ग-भिया कविस्तन्नाङ्गीकृतवान्। तेन रुष्टो बिन्दुसारस्तं राज्यादेव निस्क्राम-यत्। अपमानितश्च कविर्विन्ध्यपथेन कौशाम्बीं प्राप्तः। तत्र च स वत्सशेना-हीनरेण सत्कृतस्तत्रैवावात्सीत्। तत्कवित्वप्रभावितो वत्सेशस्तस्मै स्वीयां भगिनीमपि प्रादादिति। सुबन्धुप्रारम्भिता गद्यकाव्यपरम्परा आढयराज-हरिचन्द्र-गुणाढच-बाणभट्ट-दण्डि - धनपाल - वादीभसिंह-अगस्त्य - वामनभट्ट-अनन्त-अम्बिकादत्त-विश्वेश्वर-क्षमाराव-रामशरणप्रभृतिभिर्विचक्षणैः प्रति-पालिता संवर्धिताऽऽवश्यकतानुसारेण रूपान्तरिता च साम्प्रतिकञ्च प्राप्ता-ऽस्ति। इत्थं हि गद्यकाव्यस्यापि पञ्चशताधिकद्विसहस्रवत्सराधिकं दीर्घकालं यात्रा प्रसिध्यति। गद्यकाव्यं हि द्विविधं कथा-आख्यायिका चेति। तत्र कथा हि कविकल्पितवस्तुपात्रादिविषया यथा बृहत्कथा। आख्यायिका तु ऐतिहा-सिकवृत्ताधारा। कथा हि स्वयं नायेकन वाऽन्येनापि कथिता भवति यदा आख्यायिका तु स्वयं नायकेनैव कथिता भवति। आख्यायिका उच्छवासाख्येषु विभागेषु विभक्ता भवति। तत्र वक्त्रापरवक्त्रवृत्तप्रणोतपद्यान्यपि भवन्ति किन्तु कथायां नैव। कथायां हि कन्याहरण-सङ्ग्राम-विप्रलम्भ-सूर्योदय-

चन्द्रोदयप्रभृतिविषयाणां सुविस्तृतं वर्णनं भवति आख्यायिकायां नैव। संस्कृत-गद्यकाव्ये यथासम्भवमेतेषां नियमानां पालनं कृतमेव दृश्यते। दण्डी कथयति यत्कथाख्यायिकयोर्नैव तथा महत्त्वदर्शितो भेदः सम्भवति। ते हि गद्यकाव्यस्य द्वे संज्ञे एवेति। कोषकारस्त्वेवमाह—'प्रबन्धकल्पना कथा' ( अमरकोषः १।५।५ ) 'आख्यायिकोपलब्धार्था' ( तत्रैव १।५।६ ) अथाऽत्र केषाञ्चित्प्रमुख-गद्यकाव्यानां संक्षिप्तपरिचयोऽत्र प्रस्तूयते।

**१. सुबन्धुः : वासवदत्ता**

वासवदत्ता हि सुबन्धुप्रणीतं गद्यकाव्यमिति सर्वैरेव स्वीक्रियते। किन्तु सुबन्धुस्थितिकालमादय पण्डिता वैमत्यं भजन्ते। केचित्त बाणप्रभावितमत एव बाणपरवर्तिनं मन्यन्ते केचित्तु बाणमेव सुबन्ध्वनुगामिनं मत्वा सुबन्धुं बाणपूर्ववर्तिनं मन्यन्ते। प्रथमपक्षधराणामग्रणीर्हि कृष्णमाचार्यमहोदयो यदा द्वितीयपक्षधराणां काणेमहाभागः। उभावेव महाशयौ स्वं स्वं पक्षं दृढतया प्रस्तुतः। किन्तु प्रमाणपरिधौ प्रथमपक्षधरा अवरत्वमाप्नुवन्ति। वस्तुतस्तु सुबन्धोर्बाणपूर्ववर्तित्वे स्वयं बाण एव प्रमाणं किमुतान्ये। स हर्षचरिते स्वय-मेव कथयति—

कवीनामागलद्दर्पो नूनं वासवदत्तया।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्॥

पतञ्जलिरपि भाष्यकारो वासवदत्ताऽऽख्यकाव्यं स्मरति ( महाभाष्ये ४।३।८७ )। यथोक्तं तत्र—

'अधिकृते ग्रन्थे—बहुलं लुग्वक्तव्यः। वासवदत्ता सुमनोत्तरा न च भवति भैमरथी' इति।

समुद्रगुप्तः स्वीये कृष्णचरितमहाकाव्ये राजकविवर्णनप्रसङ्गे स्मरति सुबन्धुं तस्य कृतिं वासवदत्ताञ्च। तत्रोक्तम्—

जयत्ययं पूर्णकलः कविकीर्तिसुधाकरः।
अकलङ्को रसाम्भोधिमुद्वर्तयति यः सदा॥

व्याहारसौष्ठवमुदाररसं महार्घं यन्नाटकं सुरभि गर्भितनाटकञ्च।
तद्वत्सराजचरितं मृदुभावहारि कृत्वा सुबन्धुरभवत्कृतिनां वरेण्यः॥

बिन्दुसारस्य नृपतेः स बभूव महाकविः।
किन्तु सेहे न तद्गर्वं तिरश्चक्रे च तां सभाम्॥
उरगाभे नृपे तस्मिन् क्रुद्धे बन्धयितुं कविम्।
सरस्वती मुमोचाय तं देशं सोऽत्यजत्सदा।

विद्वाञ्जयी वत्सराजो दृष्ट्वा वैदुष्यमुत्तमम् ।
पञ्चग्रामान् ददौ तस्मै निजां भगिनिकां तथा ॥'

एवमेव अवन्तिसुन्दरीकथायां दण्डी कथयति—

सुबन्धुः किल निष्क्रान्तो बिन्दुसारस्य बन्धनात् ।
तस्यैव हृदयं बध्वा वत्सराजो................ ॥ ६ ॥

अनेन सिध्यति यत्सुबन्धुर्हि मगधेशस्य बिन्दुसारस्य सभापण्डित आसीत् । बिन्दुसारो हि चन्द्रगुप्तमौर्यस्य पुत्रः अशोकस्य पिता च । बिन्दुसारस्य समयस्तेन विक्रमपूर्वतृतीयशतकमभितो ( २४१-२१६ ) दृश्यते । समुद्रगुप्तकथनानुसारेण सुवन्धोरपराऽपि कृतिरासीद् वत्सराजचरितं नाम नाटकम् । यद्यपि निश्चयेन तु नैव वक्तुं शक्यते तथापि एतदनुमीयते यत्पतञ्जलिना आख्यायिकारूपेण स्मृता वाणभट्टेन श्रुता ( 'गतया कर्णगोचरम्' इति कथनात्सम्भवति ग्रन्थोऽयं वाणेनापि श्रुत एव स्यान्न तु दृष्टः ) वासवदत्ता सुबन्धोरेव कृतिः सम्भवति । यदा हि बाणभट्टसमयेऽपि ग्रन्थोऽयं दुर्लभ आसीत्तदाऽस्य मौलिकं रूपं कीदृशमासीदिति तु नैव निश्चयेन वक्तुं शक्यते । सम्भवति बाणपश्चाद्वर्तिना केनाऽपि कविना ग्रन्थस्य काचित्प्रतिर्लब्धा कानिचिदंशानि प्रक्षिप्यापि संस्कृता प्राचीनकविनाम्नैव प्रचारिताऽपि । तेन हि तत्र—

'मुधेवेन्दुमती महिष्यप्यजानुरागिणी बभूव'
'विफलमेव दुष्यन्तस्य कृतेर्दुर्वाससः शापमनुबभूव शकुन्तला'

इति कालिदासीयकृतिस्मारकानि ।

'सदा रामाश्रितैर्महावीरचरितैरिव नारीकेलिधरैः' इति

'हृदयं विलिखितमिव उत्कीर्णमिव प्रत्युप्तमिव कीलितमिव वज्रलेपघटितमिव...मर्मान्तरस्थितमिव......कन्दर्पकेतुं मन्यमाना ।'

इति च भवभूतिग्रन्थस्मारकानि ।

'न्यायस्थितिमिवोद्योतकरस्वरूपा'

इति न्यायवार्तिककर्तुरुद्योतकरस्य स्मारकानि ।

'बौद्धसङ्गतिमिवालङ्कारभूषिताम्'

इति धर्मकीर्तिस्मारकानि च वचनानि प्रक्षिप्तानि सम्भवन्ति । तथ्यमिदं तत्रत्ये—

सरस्वतीदत्तवरप्रसादश्चक्रे सुबन्धुः सुजनैकबन्धुः ।
प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिर्निबन्धम् ॥ १३ ॥

इति पद्ये लिट्लकारप्रयोगेणापि परिपुष्यते । नावश्यमेव कविरात्मानं कृते लिटं प्रयुनक्ति । एतद्विषया परम्परा लोकादृता—

'रघूणामन्वयं वक्ष्ये····' ( कालिदासः ), 'वाग्देवतायाः साम्मुख्यमाधत्ते' ( विश्वनाथः ), 'परामृशति' ( मम्मटः ), 'ग्रथितं रक्तिलगोमिसूनुनेदम्' ( भामहः ), 'तेन ब्रूमः सहृदयसमः प्रीतये' (ध्वन्यालोककारिकाकारः)। तेन हि पद्येऽत्र लिटः प्रयोगोऽवश्यमेवास्य प्रक्षिप्तत्वं साधयति। यदि हि सुबन्धुनेदं स्वयमुक्तमभविष्यत्तदा 'चक्रे' इत्यस्य 'अकरोत्' इत्यस्य वा 'कुर्वे' इत्यस्यापि प्रयोगः कृतोऽभविष्यत्। यथा—

'सरस्वतीदत्तवरप्रसादोऽकरोत्सुबन्धुः'। वा
'सरस्वतीदत्तवरप्रसादः कुर्वे सुबन्धुः'।

इति कथनेऽपि न काऽपि हानिः।

यदि हि साम्प्रतिकस्वरूपमेव वासवदत्ताया मौलिकं रूपं मन्यते तदा तु सुबन्धोः समयो भवभूतेरपि पश्चाद्वर्ती सिध्यति। भवभूतिर्हि यशोवर्मणः कान्यकुब्जेश्वरस्य सभापण्डित आसीदिति—

कविवाक्पतिराजश्रीभवभूत्यादिसेवितः।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम्॥

इति राजतरङ्गिणीकारस्य ( ४।१४४ ) वचनाज्ज्ञायते। जयापीडललितादित्यसमकालिकत्वाद्यशोवर्मणः कालोऽपि ७५०-७९० मितवैक्रमाब्दान्तरालवर्ती। यशोवर्मण एव सभापण्डितः 'गउडवहो' इति ख्यातस्य प्राकृतकाव्यस्य प्रणेता वाक्पतिराजः—

'सौबन्धवे अबंधम्मि हारिअन्दे अ आणन्दो'

इति सुबन्धुकृतिं स्मरति किन्तु बाणस्य नामापि नैव गृह्णाति। यदि हि सुबन्धुः बाणपरवर्ती वा बाणात्किञ्चिदेव पूर्ववर्त्यपि मन्यते तदाऽपि तस्य वाक्पतिराजसमये तादृशी ख्यातिर्नैव सम्भवति। यतो हि बाणस्य समयः ७०७ मितवैक्रमाब्दमभितो मतः। तत्पश्चात्कालवर्तिना हि न्यूनतममपि ७२५ मितवैक्रमाब्दमभितस्तु भाव्यमेव। यदि सुबन्धुर्हि बाणात्किञ्चिन्मात्र पूर्ववर्ती मन्यतेऽपि, यथा कतिपयैः समालोचकैः रामचन्द्रप्रभृतिभिरनुमितो यत्सुबन्धोः कालः ख्रीष्टीयषष्ठशतकं सम्भवति इति तदापि बाणातिरेकिणी ख्यातिस्तावन्मात्रकाले न सम्भवति। तेन हि सुबन्धुना बाणभट्टात्तु सुदूरपूर्ववर्तिना भाव्यमेव। अथ च सुबन्धुना—

'सारसवत्ता विहता नवका विलसन्ति चरति नो कङ्कः।
सरसीव कीर्तिशेषं गतवती भुवि विक्रमादित्ये॥'

इति कथनेन यो विक्रमादित्यः स्मृतः स तु यशोवर्मा एवेति यन्मन्यते यथा रामचन्द्रादिभिः समालोचकैरप्यनुमतं तदापि तस्य वाक्पतिराजसमकालिकत्व-

मेव सिध्यति यद्धि सुतरामितिहासेन सहान्याय एव। यदि तथा मन्यते तदा 'धिया निबद्धेयमतिद्वयी कथा' इत्यत्र के हि कथे स्मर्येते। अपरञ्च, राजतरङ्गिणीकारसाक्ष्येनैतज्ज्ञायते यत्संवत्सरप्रवर्तकविक्रमादित्यात्पूर्वमपि कश्चिदपर एव विक्रमादित्योऽपि सिंहासनारूढ आसीद्येन खलु प्रतापादित्यः काश्मीरसिंहासने प्रतिष्ठापितः। स च कालक्रमगणनया विन्दुसारादपि पूर्ववर्ती भवति। राजतरङ्गिणीवचनं निभाल्यतामत्र—

'अथ प्रतापादित्याऽऽख्यस्तैरानीय दिगन्तरात्।
विक्रमादित्यभूभर्तुर्ज्ञातिरत्राभ्यसिच्यत॥ (२।५)
शकारिर्विक्रमादित्य इति स भ्रममाश्रितैः।
अन्यैरत्रान्यथालेखि विसंवादकदर्थितम्॥' (२।६)

मातृगुप्तस्य सभाकविर्भर्तृमेण्ठो यद्विषये—

'वक्रोक्त्या मेण्ठराजस्य वहन्त्या सृणिरूपताम्।
आबिद्धा इव धुन्वन्ति मूर्धानं कविकुञ्जराः॥' इति

बाणेनोक्तं तथैव—

'तत्त्वस्पृशस्ते कवयः पुराणाः श्रीभर्तृमेण्ठप्रमुखा जयन्ति।
निर्स्त्रिशधारासदृशेन येषां वैदर्भमार्गेण गिरः प्रवृत्ताः॥'

इति परिमलकालिदासेनोक्तमस्ति। तेन हि सुबन्धोर्भर्तृमेण्ठात्पूर्वकालिकत्वं सिध्यति यो हि कालो बिन्दुसारकालेन सह संवादी। अथ च निभाल्यतामधस्तनकथनान्यपि—

यथा कविराजो राघवपाण्डवीये—

'सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा॥'

यथा वा मङ्खकः श्रीकण्ठचरिते—

'मेण्ठे स्वद्विरदाधिरोहिणि वशं याते सुबन्धौ विधेः।
शान्ते हन्त च भारवौ विघटिते बाणे विवादस्पृशः॥' (२।५३)

इत्यादावन्यत्रापि सुबन्धुर्बाणपूर्ववर्तित्वेन मेण्ठपरवर्तित्वेन च स्मृतः। एवमेव—

'सुबन्धौ भक्तिर्नः क इह रघुकारे न रमते
धृतिर्दाक्षीपुत्रे हरति हरिचन्द्रोऽपि हृदयम्।
विशुद्धोक्तिः शूरः प्रकृतिसुभगा भारविगिर-
स्तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते॥'

इत्यत्रापि सुबन्धुः सर्वप्रथमत्वेन स्मृतः॥

अथ च यदि सुबन्धुर्नापि बिन्दुसारसमकालिकस्तथापि स नैव रुद्रदाम्नोऽवरकालिकोऽपि । यतो हि रुद्रदाम्नः स्थितिकालो विक्रमानन्तर २०७ मितवत्सरमभितः । तस्य समये समुत्कीर्णशिलालेखे गद्य-पद्योभयविधकाव्यानामवस्थितिर्वर्णिताऽस्ति । यथोक्तम्—

१४. स्फुटवधुमधुरचित्तकान्तशब्दसमयोदारालङ्कृतगद्यपद्यकाव्यविधानप्रवीणेन प्रमाणमानोन्मानस्वरगतिवर्णसारसत्वादिभिः ।

१५. परमलक्षणव्यञ्जनैरुपेतकान्तमूर्तिना स्वयमधिगतमहाक्षत्रपनाम्ना नरेन्द्रकन्यास्वयंवरानेकप्राप्तदाम्ना महाक्षत्रपेण रुद्रदाम्ना······इत्यादि ।

स्पष्टमेव यदनेन कश्चित्स्वपूर्ववर्तिगद्यकविरपि सङ्केतितो दृश्यते । तादृशः कविः कः सम्भवति ? सम्भवतः सुबन्धुरेव नान्यः । गौतमीपुत्रस्य नासिकशिलालेखेऽपि काव्यात्मकं गद्यं दृश्यते । यथा—

३. दिवसकरकरविबोधितकमलविमलसदिसवदनसतिसमुदतोयपीतवाहनसपरिपूर्णमंडलससिरीक···

४. वियदसनसवरवारणविकमचारुविकमसभुजगपतिभोगपीनवाटविपुलदीर्घमुदरभुजस··· इत्यादि ।

यदि हि तथ्यमिममुपेक्ष्य सुबन्धोः स्थितिकालः सप्तमशतकमभितो मन्यते तदा एतत्पूर्वकालिकः कश्चिदपर एव गद्यकविरवश्यमेवोन्नेयः । स को भवितुमर्हति ? सुबन्धुरेव । तेन हि यदि नापि सुबन्धुर्बिन्दुसारसमकालिकस्तदापि शालिवाहनान्न कदाऽप्यर्वाचीनः सः ।

वासवदत्ता हि सुबन्धोः कृतिः । अत्र हि वासवदत्ताकन्दर्पकेतोः प्रेमकथोपवर्णिताऽस्ति । कन्दर्पकेतुर्हि स्वप्ने कुसुमपुरराजकन्यां वासवदत्तां स्वप्ने पश्यति । तत्सौन्दर्याकृष्टश्च तदन्वेषणाय मकरन्देन सह चलति । देशान्तरं परिभ्रमन् स विन्ध्याचलं प्राप्नोति । तदेव हि कुसुमपुरराजपुत्री वासवदत्ताऽपि स्वप्ने कन्दर्पकेतुं दृष्ट्वा तद्रूपाकृष्टहृदया तदन्वेषणाय शारिकां प्रेषयति । विन्ध्याटव्यां शुकसारिकासंवादं श्रुत्वा कन्दर्पकेतुर्वासवदत्ताविषयं जानाति गच्छति च तं देशम् । तया सह मिलनानन्तरं तौ मायाश्वमाशुगमारुह्य चलतस्ततः । विन्ध्याटवीं प्राप्य तौ विश्राम्यतः । तत्र निद्रावशं कन्दर्पकेतुं विहाय वासवदत्ता वनेक्षणाय कियन्मात्रदूरं गता सती किरातैरारुद्धा भवति । तत्प्राप्त्यै किरातसमूहे परस्परं विवदमाने वासवदत्ताऽवसरं लब्ध्वा पलायते प्रविशति स्त्रीनिषिद्धं मुनेराश्रमम् । तत्र प्रविशन्ती एव सा शिलायां परिणता भवति । प्रबुद्धः कन्दर्पकेतुर्वासवदत्ताऽन्वेषणाय प्रयतते । अन्ते च तामेव शिलां स्पृशति । तत्स्पर्शमात्रेण वासवदत्ता पुनः स्वकीयं पूर्वशरीरं प्राप्नोति । मकरन्दोऽपि तत्रैवागच्छति । ततस्ते स्वपुरं गत्वा सुखं तिष्ठन्ति ।

इत्थं हि कविकल्पितवृत्तोऽयं ग्रन्थः संयोगान्तत्वेन समाप्नोति।

सुबन्धुर्हि सिद्धहस्तः कविः। स हि वक्रोक्तिकथने श्लेषे च सर्वातिशायित्वेन सम्मतः। तमेवाधिकृत्येदमुक्तं 'श्लेषे केचन' इति। कथ्यते हि ग्रन्थेनानेन कवीनां कवित्वदर्पः शीतलायते। तस्य हि अनुप्रासश्लेषोपमाद्यलङ्कारच्छटा प्रशस्या। यथा—

'अभूदभूतपूर्वः सर्वोर्वीपतिचक्रचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणिः नृसिंह इव दर्शितहिरण्यकशिपुक्षेत्रदानविस्मयः कृष्ण इव कृतवसुदेवतर्पणो नारायण इव सौकर्यसमासादितधरणीमण्डलः कंसारातिरिव जनितयशोदानन्दसमृद्धिः............इत्यादि।'

तस्य विरोधाभासच्छटाऽपि नितान्तमेव हृद्या। यथा—

'विद्याधरोऽपि सुमनाः धृतराष्ट्रोऽपि गुणप्रियः क्षमानुगतोऽपि सुधर्माश्रितः बृहन्नलानुभावोऽपि अन्तः सरलः महिषीसम्भवोऽपि वृषोत्पाद्यः तरलोऽपि महानायको राजा चिन्तामणिर्नाम।'

अस्य यमकप्रयोगोऽपि तथैव सुरम्यः। यथा—

'राजसेनरहितो राजसेन रहितो ध्रुवम्। विशारदा विशारदाभ्रविशदा विशदात्मनीनमहिमा, महिमानरक्षणक्षमा क्षमातिलक! धीरताधीरताभूतता भूततावचसि, साहसेन! साहसेन कमलाकमलापराजिता पराजिता...इत्यादि।'

अस्यैव क्लिष्टवाक्यविन्यासो यथा—

'कुररखरनखशिखरखण्डितपृथुरोमाविलमविरलशकुलशल्कजलनकुलोच्चारं क्रोष्टृकुलोत्सृष्टविकटकर्कटकर्षरपरम्परापरिगतोपान्तं... " इत्यादि।

अस्य श्लेषसौन्दर्यं यथा—

'अस्मिन् संसारे केन किं वा न कृतम्। तथा हि गुरुदारग्रहणं द्विजराजोऽकरोत् पुरूरवा ब्राह्मणधनतृष्णया विननाश। नहुषः परकलत्रदोहदी महाभुजङ्ग आसीत्। ययातिर्विहितब्राह्मणीपाणिग्रहणः पपात। सुद्युम्नः स्त्रीमय इवाभवत्। सोमकस्य विख्याता जन्तुवधनिर्घृणता। पुरुकुत्सः कुत्स आसीत्। कुवलयाश्वोऽश्वतरकन्यामपि जहार। नृगः कृकलासतामगमत्। नलं कलिरभिभूतवान्। संवरणो मित्रदुहितरि विक्लवतामगमत्। दशरथ इष्टरामोन्मादेन मृत्युमवाप। कार्तवीर्यो गोब्राह्मणपीडया पञ्चत्वमवाप्सीत्। युधिष्ठिरः समरशिरसि सत्यमुत्ससर्ज। शान्तनुरतिव्यसनाद्वने विललाप। इत्थं नास्त्यकलङ्कः कोऽपि.....इत्यादि।'

अस्य हि समासे स्वरमाधुर्यमनुप्रासे मधुरसङ्गीतं सुस्फीतो लोकोत्तरो रसोल्लासः कस्य न प्रशस्यः। एभिरेव वैशिष्ट्यैः प्रसन्नो वामनभट्टबाणः संस्तौति—

'प्रतिकविभेदनबाणः कवितातरुगहनविहरणमयूरः ।
सहृदयलोकसुबन्धुर्जयति श्रीभट्टबाणकविराजः ॥' इति ।

न केवलमन्य एव किन्तु स्वयमेव कविरपि कथयति—

'सरस्वतीदत्तवरप्रसादाच्चक्रे सुबन्धुः सुजनैकबन्धुः ।
प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिर्निबन्धम् ॥'

वस्तुत एव प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिः कविरसौ न केवलं गद्यकाव्येऽपि तु पद्यरचनायामपि तथैव कुशलः । यथा हि—

'भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य ।
वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्द्योतः ॥'

तथैव हि—

'पश्योदञ्चदवाञ्चवञ्चितवपुः पश्चार्द्धपूर्वार्द्धभाक्
स्तब्धोत्तानितपृष्ठनिष्ठितमनाग् भुग्नाग्रलाङ्गूलभृत् ।
दंष्ट्राकोटिविशङ्कटास्यकुहरः कुर्वन् शटामुत्कटा-
मुत्कर्णः कुरुते क्रमं करिपतौ क्रूराकृतिः केसरी ॥'

सन्तुलनीयं पद्यमिदं कालिदासीयपद्येनानेन—

'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमूर्व्यां प्रयाति ॥'

एतादृशैरेव गुणैर्बाणः कथामिमामतिद्वयीष्वेकां मन्यते । दण्डी च 'ओजः-समासभूयस्त्वमेतद् गद्यस्य जीवितम्' इति ।

गद्यकाव्यप्रवर्तकोऽयं कविर्यत्रकुत्रश्लेषलोभेन कथावस्तु विच्छिनत्यपि, यथार्थरसाभिव्यक्तिमपि न तथाद्रियते, उल्लङ्घयति चौचित्यसीमामपि, भावावेशान् न्यक्कृत्यापि शब्दाडम्बरजालमातनोति तथापि तावतैव नास्य कौशलं विहतं दृश्यते। अस्य हि तादृशश्लेषप्रियतां विलोक्यैव महासमालोचक आनन्दवर्धनः कथयति—

'दृश्यन्ते च कवयोऽलङ्कारनिबन्धनैकरसा अनपेक्षितरसाः प्रबन्धेषु' इति ।

कामं न स्यादत्र दण्डिनः पदलालित्यं, नैव च बाणस्य सरसस्वारस्य-प्रभावस्तथापि सुबन्धोर्हि विलक्षणा स्वरमाधुरी, अपूर्वा च वर्णनचातुरी, प्रखरपदप्रयोगप्रावीण्यञ्च तं सदैव कवीनामग्रणीं कल्पयन्ति । साधूक्तं द्विजेन्द्र-नाथेन मूर्द्धन्यसमालोचकेन—

गद्यवाङ्मयस्याद्यः प्रवर्तकः क इत्यपेक्षायामुच्यते यत्स महाकविः सुबन्धुरेव नान्यः । तस्यैवोच्छिष्टं निखिलं संस्कृतगद्यसाहित्यम् । सत्यमेवोक्तं—

'सुबन्धौ भक्तिर्नः' इति।

सुबन्धुमनुसृत्यैवोदेति बाणभट्टः।

## २. गुणाढ्यः : बृहत्कथा

बाणेन 'अतिद्वयी कथा' इति स्मृतयोः कथयोर्मध्येऽपरा गुणाढ्यस्य बृहत्कथा। यद्यपि गुणाढ्यस्य बृहत्कथा मूलतः पैशाचीभाषायामासीत्तेनास्या मौलिकं रूपं कीदृशमासीदिति तु न कोऽपि वक्तुं समर्थस्तथापि बृहत्कथा-मञ्जरी-कथासरित्सागरादिबलाद्विषयेऽस्मिन् किञ्चिदुत्प्रेक्षितुं शक्यते। इदमपि कथ्यते यदस्य पूर्वे षड्भागास्तु विनष्टाः। उपलब्धस्तु सप्तमो भाग एव। बाणः हर्षचरिते कथयति—

'समुद्दीपितकन्दर्पा कृतगौरीप्रसाधना।
हरलीलेव नो कस्य विस्मयाय बृहत्कथा॥ १७॥'

एवमेव सोड्ढलः—

'कविर्गुणाढ्यः स च येन सृष्टा बृहत्कथा प्रीतिकरी जनानाम्।
या संविधानेषु सुसन्धिबन्धैर्निपीड्यमानेव रसं प्रसूते॥'

कथ्यते हि गुणाढ्यः प्रतिष्ठानपुरस्य राज्ञः सातवाहनस्य सभापण्डित आसीत्। स हि व्याकरणशिक्षणावधौ शर्ववर्मणा कातन्त्रव्याकरणकारेण पराजितः संस्कृतं प्राकृतश्चोभयीं वाचं समुत्सृज्य पैशाचीमाश्रित्य बृहत्कथां कृतवानिति। सातवाहनस्य समयो विक्रमानन्तरप्रथमद्वितीयशतकान्तराले मतः। तेन गुणाढ्यस्यापि स्थितिः कालेनैवामुना संवादिता भाव्यमिति समालोचकाः। शकसंवत्सरप्रवर्तकः शालिवाहन एव सातवाहनः स्मृतोऽत्र पुरावृत्तविद्भिः।

एतन्निश्चयेन वक्तुमशक्यं यद्बृहत्कथा हि गद्यमयी किं वा पद्यमयी आसी-दिति। कथासरित्सागरानुसारेण तु रचनैषा पद्यमयी दृश्यते यद्यपि तेन नैव स्पष्टमुक्तम्। कथितं तत्र—

'तथैव च गुणाढ्येन पैशाच्या भाषया तया।
निबद्धा सप्तभिर्वर्षैर्ग्रन्थलक्षाणि सप्त सा॥' (१।८।२)

इति। किन्तु बुधस्वामिनो बृहत्कथाश्लोकसङ्ग्रहादिमनुमीयते यद्ग्रन्थोऽयं गद्यमयः आसीदन्यथा 'श्लोकसङ्ग्रह' इति कथनं निरर्थकमेव स्यादिति। अनेनेदं ध्वन्यते यद्बृहत्कथाया बुधस्वामिना श्लोकबद्धरूपेण सङ्ग्रहः कृत इति, न तु मूलग्रन्थगतपद्यानां सङ्ग्रह इति। बृहती या कथा तस्याः श्लोके सङ्ग्रह इत्यस्याशयः।

बृहत्कथायां हि काणभूतिकथिताः सप्तकथा निबद्धा आसन्। किन्तु तासु

षट्कथास्तु आदावेव प्रणष्टा अन्तिमा एव नरवाहनकथाऽवशिष्टा इति कथासरित्सागरतो ज्ञायते ।

बृहत्कथामाश्रित्य त्रयो ग्रन्थाः प्रणीता दृश्यन्ते, नेपालदेश्यस्य बुधस्वामिनः बृहत्कथाश्लोकसङ्ग्रहः, काश्मीरस्य क्षेमेन्द्रस्य बृहत्कथामञ्जरी, काश्मीरस्यैव सोमदेवस्य कथासरित्सागरश्च ।

### ३. बाणभट्टः : हर्षचरितं, कादम्बरी

श्लेषघटनात्मक-शब्दगुम्फन-रस-अलङ्कार-सदर्थ-कथावर्णनेषु सिद्धहस्तत्वात्पञ्चाननविशेषणमण्डितो बाणभट्टः एकस्मिन्नेव सुबन्धु-भर्तृमेण्ठ-कालिदास-भारवि-गुणाढ्याश्रयः स्मृतः । अर्थात् तस्य कृतौ सुबन्धोरिव श्लेषघटना, कालिदासस्येव रसपाकः, भर्तृमेण्ठस्येवालङ्कारसिद्धिः, भारवेरिवार्थगौरवं, गुणाढ्यस्येव कथावर्णनञ्च लभ्यते । एतादृशगुणगरिममण्डितस्य महाकवेरस्य द्वे कृती लभ्येते हर्षचरितं कादम्बरी च ।

कविरसौ स्थाण्वीश्वरेशस्य श्रीहर्षस्य सभापण्डित आसीदिति तस्य हि हर्षचरिते—

'तथापि नृपतेर्भक्त्या भीतो निर्वहणाकुलः ।
करोम्याख्यायिकाम्भोधौ जिह्वाप्लवनचापलम् ।। १९ ।।'

इति कथनतो ज्ञायते । स्थाण्वीश्वरेशः श्रीहर्षः ६६३ मितवैक्रमाब्दे राज्येऽभिषिक्तः ७०५ मितवैक्रमाब्दे तनुं त्यक्तवान् । तं हि ६८६ मितवैक्रमाब्दतः ७०२ मितवैक्रमाब्दं यावता भारतं पर्यटन् चीनयात्री हुवेनसङ्गः ( ह्वेनसांगः ) बहुशः स्मरति । तत्सभापण्डितो हि बाणः पञ्चविंशतिवर्षवयस्कः ६७० मितवैक्रमाब्दमभितो हर्षस्य सभायां प्रविष्ट आसीदिति तस्य ६४५ मितवैक्रमाब्दे जन्म कथ्यते । हर्षनिधनानन्तरमपि बाणो जीवित एवाऽसीत् व्यत्यापयच्च शेषजीवनं स्वकीये एव प्रीतिकूटग्रामे । तस्य हर्षचरितं कादम्बरी चोभौ ग्रन्थावपूर्णाविव दृश्येते । तेन हि बाणोऽपि हर्षनिधनानन्तरं बहुकालं नैव जीवित आसीत् । अतो हि स ७१५ मितवैक्रमाब्दमभितस्तनुं तत्याजेत्यनुमीयते । इत्थं हि स सप्ततिवर्षमितायुषमुपभुक्तवान् । कादम्बर्या उत्तरभागस्य प्रणेता बाणसुतो भूषणभट्टः ( यत्र तत्र पुलिनभट्टनाम्नाऽपि स्मृतः ) सखेदं स्मरति—

'याते दिवं पितरि तद्वचसैव सार्द्धं विच्छेदमाप भुवि यस्तु कथाप्रबन्धः ।
दुःखं सतां तदसमाप्तिकृतं विलोक्य प्रारब्ध एष स मया न कवित्वदर्पात् ।।'

इति । कथ्यते हि चतुर्दशवर्षवयस्को बाणः पितृशोकमवाप । पितर्युपरते स हि वयस्यैः सहेतस्ततो बभ्राम । पश्चात्कृतोद्वाहः पुनः स्वस्थो बभूव । स हि

सर्वास्वेव विद्यासु पारङ्गतस्त्वासीदेव। भ्रमणानुभवेन च तस्मिन् प्रौढता समायोजिता। हर्षानुजः कृष्णो बाणं नैकटयेन जानाति स्म किन्तु श्रुततदीर्ष्यापरवचनः श्रीहर्षस्तु प्रथमं तं नाङ्गीचकार किन्तु पश्चाज्ज्ञातयथार्थस्तं सभाध्यक्षे न्ययोजयत्।

संस्कृतप्राचीनकविषु बाण एवैतादृशो यस्य स्थितिकालः सुस्पष्टः। तं हि वामनाचार्यः (८७० वै०) स्वीयायां काव्यालङ्कारसूत्रवृत्तौ, आनन्दवर्धनः ( ९०७ वै० ) ध्वन्यालोके, धनिको हि ( १०६० वै० ) दशरूपकावलोके, भोजः ( १०८० वै० ) सरस्वतीकण्ठाभरणे, क्षेमेन्द्रः ( १११० वै० ), रुय्यकः ( १११० वै० ) बहुश उद्धरन्ति।

हर्षचरितं हि अष्टासूच्छ्वासेषु विभक्ता आख्यायिका। तत्र प्रथमद्वितीयोच्छ्वासयोर्वंशवर्णनं, तृतीये हर्षपूर्वजपुरुषस्य पुष्पभूतेर्वर्णनं, चतुर्थे हि प्रभाकरवर्धनस्य शौर्यवर्णनं, राज्यवर्धन-हर्षवर्धनयोर्जन्म, राज्यश्रियो जन्म, तस्या ग्रहवर्मणा सह विवाहश्च। पञ्चमे राज्यवर्धनस्य हूणविजयार्थं प्रस्थानं प्रभाकरवर्धनस्य निधनश्च। षष्ठे राज्यवर्धनस्य प्रत्यागमनं, मालवनरशेन ग्रहवर्मणो हत्या, राज्यश्रियाः निरोधः, राज्यवर्धनेन मालवराजपराजयः, गौडशेने शशाङ्केन राज्यवर्धनस्यच्छलेन वधः, सप्तमे हर्षस्य गौडनरेशवधाय प्रस्थानं, राज्यश्रिया विन्ध्याटव्यां पलायनं तदन्वेषणाय हर्षस्य प्रयासः, अष्टमे राज्यश्रिया अन्वेषण तया सह हर्षस्य प्रत्यागमनश्च। ग्रन्थस्यास्यापूर्णता स्पष्टरूपेण द्योतते। सम्भवति हर्षनिधनानन्तरं कविरेतदन्तरकथानिबन्धने मन्दादरोऽभूत्।

ग्रन्थस्य भूमिकाभागे व्यास-सुबन्धु-भट्टारहरिचन्द्र-सातवाहन-प्रवरसेन-भास-कालिदास-गुणाढ्य-आढ्यराजाख्याः कवयः सादरं स्मृता दृश्यन्ते।

हर्षचरितमधिकृत्य टीकाद्वयं प्रथितमस्ति प्राचीनं रुय्यकप्रणीता हर्षचरितवार्तिका, शङ्करकविप्रणीता सङ्केताख्या च।

कादम्वरी हि कवेश्चरमा कृतिः। ग्रन्थोऽयं कथामयः कल्पितेतिवृत्तत्वात्। यद्यपि कथेयं कथासरित्सागरवर्णितया सुमनसः कथया सह संवदते। तेन ह्यस्याः बीजं बृहत्कथात एव गृहीतं प्रतिभाति। तथापि कवेः कल्पनामौलिकताऽव्याहतैव।

विशालायाः पालकस्य राज्ञः शूद्रकस्य सभायां कदाचिदेका चाण्डालकन्या वैशम्पायननामकं पिञ्जरस्थं शुकमानीय समर्पयति। स च शुको मनुष्यवाचा सुखोपविष्टं राजानमात्मकथां श्रावयति। कथान्ते च स्मृतपूर्वजन्मवृत्तान्तो राजा पूर्वजन्मदेहं प्राप्नोति शुकश्च। कथैषा जन्मत्रयवृत्तान्तानुवर्तिनी। अत्र हि कथैव कथान्तरमुङ्क्रामयति।

शुकः स्ववृत्तान्तं श्रावयन् कथयति यत्स हि यदा जातस्तदैव मातोपरता। पिता च किञ्चित्कालानन्तरं वृद्धलुब्धकेन केनापि हृतः। स तु वृक्षादधः पतितः कथञ्चित् धृतजीवितः केनाऽपि मुनिना दयया जाबाल्याश्रमं प्रापितः। जाबालिस्तत्पूर्वजन्मवृत्तान्तं तत्र श्रावितवानित्थम्। उज्जयिन्यां हि तारापीडो नाम राजाऽऽसीत्। तस्य हि पत्न्यां विलासवत्यां चन्द्रापीडो नाम कुमारः समुत्पन्नः। तदैव तन्मन्त्रिणः शुकनासस्यापि वैशम्पायननामा पुत्रो जातः। शिक्षानन्तरं शुकनासेन बहूपदिष्टः कुमारो यौवराज्येऽभिषिक्तः इन्द्रायुधनामकमश्वमारुह्य मित्रेण सेविकया पत्रलेखया सह दिग्विजयार्थं निर्गतः। तत्र क्रमे स महाश्वेतां ददर्श। महाश्वेता स्वाशक्तपुण्डरीकवृत्तान्तं श्रावयित्वा तं कादम्बरीवृत्तान्तमपि अकथयत्, कादम्बरी चन्द्रापीडौ परस्परमनुरक्तावभूताम्। एतदन्तराले पितुराज्ञया चन्द्रापीड उज्जयिनीं प्रत्यागतः, वैशम्पायनस्तु महाश्वेतासमीपे पत्रलेखा च कादम्बरीपार्श्वे स्थिता। पश्चाच्च पत्रलेखा प्रत्यागत्य कादम्बरीविरहावस्थां न्यवेदयत्।

बाणेन हि कथायां एतावानेव भागो गुम्फितः। तदनन्तरवर्त्तिनी तु कथा तत्तनयेन भूषणभट्टेन गुम्फिता। बाणप्रणीतभागः कथायाः पूर्वार्द्धः स्मृतः, भूषणभट्टगुम्फितश्चोत्तरभागः।

कादम्बर्या विरहव्यथां पत्रलेखातः श्रुत्वा तदाकृष्टमनाश्चन्द्रापीडस्तया सह पुनस्तत्रागतः। तत्र स महाश्वेताशापेन वैशम्पायनं शुकभूतं श्रुत्वा विरहातुरस्तत्रैव प्राणांस्तत्याज। तन्मृतशरीरमालिङ्ग्य म्रियमाणां कादम्बरीं भविष्यत्समागमसन्देशेन नभोवाणी मरणान्निवारयायास। सरसि इन्द्रायुधोऽप्यगाहत। ततश्च कपिञ्जलो वहिरागत्य सर्वं रहस्यं श्रावयति।

कादम्बरीमधिकृत्य सन्त्यनेकाः प्राचीना अर्वाचीनाश्च टीकाः। तासु हि भानुचन्द्रसिद्धचन्द्रकृता, मयूरेश्वरप्रणीता टीका, जीवानन्दनिर्मिता टीका, हरिदाससिद्धान्तवागीशकृता कल्पलताभिधा, कृष्णमोहनठक्कुरविरचिता चन्द्रकलाऽऽख्या, शेषराजशर्मरेग्मीप्रणीता चन्द्रकलाख्या च प्रसिद्धाष्टीकाः।

यद्यपि बाणस्योभे एव कृती सर्वातिशायिनी तथापि तयोः कादम्बरी प्रशस्यतरा। कादम्बर्याः पात्रचित्रणं, रसपरिपाको वस्तुविन्यासश्च 'बाणोच्छिष्टं जगत्सर्वम्' इत्युक्तिं चरितार्थयन्ति। हर्षचरितस्यापूर्णत्वे हर्षस्य निधनमेव ( ७०५ वै० ) हेतुः, कादम्बर्याश्चापूर्णत्वे कवेरेव निधनं ( ७१५ वै० ) हेतुः। उभेऽपि काव्ये पाञ्चालीरीत्यां गुम्फिते व्यञ्जना-प्राधान्ये वक्रोक्तिपूर्णे च।

हर्षचरितस्य चारुरचनाचातुरी कमनीयपदविलासो मनोहारिचित्रणञ्च सर्वानिवानन्दयति। रसधारां प्रवाहयन्ती कवेः सुमधारा वाग्धाराऽत्र विस्मयावहैव। अत्र हि श्लेषविरोधाभासोपमोत्प्रेक्षाद्यलङ्काराणां वैचित्र्यं हि कवेरुत्क-

र्षताबोधनायालम् । अस्य याथार्थ्यमतिक्रममाणा वर्णना सर्वानेवाश्चर्यमुग्धान् करोति । बाणस्य हि प्रतिभा यमेव रसमादातुमिच्छति तस्य हि पूर्णपरिपाकमेवातारयति ।

कादम्बरी तु हर्षचरितादपि विस्मयावहा । अत्र तु कविना किम्मात्रमवशेषितं चमत्कारसाधनाय । कवेरलौकिकं काव्यकौशलमत्र स्पष्टमेव प्रतिभाति । तेनैवोच्यते 'कादम्बरीसुधापानाद् बुभुक्षाऽपि प्रशाम्यति' इति । साधूक्तं भूषणभट्टेन—

'कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयम्'

इति । बाणो नितान्तमेव प्रतिभासम्पन्नः कविः । तेन हि कथासाहित्ये युग एव प्रवर्तितो नवः । तस्य हि वर्णनानैपुण्यं नितान्तमेव श्लाघ्यम् । स हि अलङ्कृतकृत्रिमपद्धतिमनुसरति बहुशः । स स्वयमेव कथयति—

नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम् ॥'

इति । वस्तुतो हि तस्य काव्ये ईदृशमेव वैशिष्टचमस्ति । तस्य हि कथा, यथा स एव कथयति, 'रसेन शय्यां स्वयमभ्युपागताऽभिनवा वधूरिव मनोहारिणी हृद्या च विद्यते ।' बाणस्य बुद्धिः सर्वतोगामिनी नवनवोन्मेषशालिनी दृश्यते । अत एव स सुधोत्पादी सागरः कथितः । स हि न केवलं वर्णनानिपुणोऽपि तु सूक्ष्मदर्शी दक्षश्चित्रकारश्च । घटनायाः सजीवोपस्थापनं तु तस्य वामहस्तविलास एव । यद्यपि स काव्ये उपमा-रूपक-उत्प्रेक्षा-विरोधादीनां शाफल्येन प्रयोग्रं कृतवान्, तथापि परिसङ्ख्या तस्य विलासिन्येव । विषयानुसारमेव तस्य शैली नृत्यति दीर्घसमासवती स्वल्पसमासा समासरहिताऽपि । वर्णनापरायणोऽपि स कदापि काव्यौचित्यं नैवोल्लङ्घयति । तस्य हि गद्ये काव्यस्याविहता गतिर्विद्यते । यद्यपि बाणो यथा गद्ये न तथा पद्ये इति कथ्यते तयापि तस्य लेखनी तु उभय एव मार्गे समानेनैव वेगेन धावति ।

यद्यपि बाणस्य कृतौ क्लिष्टता, अलङ्कारभारः, समूहबद्धविशेषणदुरूहवाक्यानि, असाधारणपदावली, अप्रचलितप्रयोगश्चेति प्रभृतिदोषा अपि प्रदर्श्यन्ते तथापि यद्ययं दोषः स युगस्यैव न तु कवेः । तदा हि तादृश्येव रचना प्रशस्याऽऽसीत् ।

स्यादपि स्वल्पा त्रुटिर्यत्र कुत्र तथापि कवेरस्य समग्रमेव संस्कृतसाहित्यं सदैवाधमर्णितं दृश्यते ।

हर्षचरितकादम्बर्यतिरिक्तमपि कवेरस्य चण्डीशतकं, शिवाष्टकं, मुकुटताडितकं (रूपकं) शारदचन्द्रिका (नाटिका), पार्वतीपरिणयः (नाटकम्)

च कृतित्वेन गृह्यन्ते। तत्र चण्डीशतकं तु सम्प्रत्यपि लभ्यते यत्र हि शतश्लोकैर्देवी स्तुताऽस्ति। शिवाष्टकमपि तस्य शैवमतावलम्बित्वान्नैव विरुध्यते। मुकुटताडितकं तु भोजेन शृङ्गारप्रकाशे गुणविनयगणिना नलचम्पूव्याख्याने स्मृतं समुद्धृतञ्च दृश्यते। शारदचन्द्रिकां तु शारदातनयो भावप्रकाशने--

'कल्पितं भट्टबाणेन यथा शारदचन्द्रिका।
दिव्येन मर्त्यस्य वधः काव्यस्यावश्यभावतः ॥'

इति स्मरति। उभयोरेव लिपिबद्धरूपं सम्प्रति नैवोपलभ्यते। पार्वतीपरिणयस्यापि बाणकर्तृकत्वे सन्देह एव समालोचकानाम्। वस्तुतस्तु ग्रन्थोऽयं बाणभट्टप्रणीतत्वेन नावभासते इति संस्कृतकविजीविते स्पष्टीकृतम्। वयमपि तथैव मन्यामहे। अत्र हि यदेवानौचित्यं यथा पित्रा दुहितुः स्तनद्वयगतरोमराजिवर्णनं तन्न कथमपि व्यवस्थितमर्यादस्य बाणस्य लेखनीतो निःसरति। परमेऽपि तारुण्ये न कदापि बाणस्तथा वर्णयितुमग्रे सरति यथा हि तत्र पार्वतीविषये हिमवद्वाक्यम्--

'आभोगशालिकुचकुड्मलमायताक्ष्याः
वक्षोऽवकाशमभिवाञ्छति सन्निरोद्धुम्।
अप्यस्तिनास्तिवचसा विषयेऽवलग्ने
तन्वी समुल्लसति काचन रोमरेखा ॥'

सत्यमेवोच्यते बाणस्य हर्षचरितं कविमार्गप्रदर्शकं यद्यपीदं स्वयमपि रामीलसौमिलयोः शूद्रकविजयमनुसरति तथैव कादम्बरी तु साहित्यसर्वस्वमेव काममेतत्कथावस्तुनि गुणाढ्यस्याधमर्णमेव स्यात्। सत्यमुक्तम्--

'वागीश्वरं हन्त भजेऽभिनन्दमर्थेश्वरं वाक्पतिराजमीडे।
रसेश्वरं स्तौमि च कालिदासं बाणं तु सर्वेश्वरमानतोऽस्मि ॥'

एवमेव--

'सहर्षचरिता शश्वद् धृतकादम्बरीस्यदा।
बाणस्य वाण्यनार्येव स्वच्छन्दा चरति क्षितौ ॥' इति।

बाणभट्टस्य कादम्बरीमाश्रित्य ग्रन्थद्वयं प्रणीतं दृश्यते--मञ्जुनाथस्य कादम्बरीसारः गौडाभिनन्दस्य ( ९३७ वै० ) कादम्बरीकथासारश्च।

**४. दण्डीः : दशकुमारचरितम्, अवन्तिसुन्दरीकथा**

दण्डिनोऽपि स्थितिकालः सन्दिग्ध एव सम्प्रत्यपि। अत्र हि समालोचकाः सुबन्धु-बाण-दण्डिनः, बाणदण्डिसुबन्धवः, सुबन्धु-दण्डि-बाणाश्चेति त्रिविधक्रमसमर्थका दृश्यन्ते। वयं तु प्रथममेव पक्षमाश्रित्य प्रचलिताः स्मः तथा प्रतीतेः। दण्डी हि संस्कृतसाहित्ये मूर्तिमत्काव्यमेव। कथ्यते हि--

'जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् ।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥' इति ।

कमनीयशब्दप्रयोगे परमप्रवीणोऽसौ कविः कदा वा कुत्रासीदिति सम्प्रत्यपि नैव स्पष्टमभिधातुं शक्यते । एतावदेव ज्ञायते यत्स दाक्षिणात्यः । बाणभट्टो हि तं न स्मरतीति तस्य स्थितिकालस्य पूर्वसीमा, अभिनवगुप्तस्तं लोचने स्मरतीति तस्यापरसीमा । दण्डिनः कृतित्वेन सन्त्यनेके ग्रन्थाः प्रसिद्धाः । यथा—

१. दशकुमारचरितं गद्यकाव्यं कथारूपम्
२. काव्यादर्शः—लक्षणग्रन्थः
३. अवन्तिसुन्दरीकथा—गद्यकाव्यम्
४. छन्दोविचितिः
५. कलापरिच्छेदः
६. द्विसन्धानकाव्यम्

७. वातमन्दिरम् ? केचिदत्र मृच्छकटिकं गृह्णन्ति किन्तु वातमन्दिरमेव तत् । तेष्वपि त्रयो नितान्तं ख्याताः—दशकुमारचरितं, काव्यादर्शः, अवन्ति सुन्दरीकथा ( सम्भवतः ) । दशकुमारे हि यादृशी भौगोलिकी स्थितिर्वर्णिता ऽस्ति तदनुसारेण तु दण्डी प्रभाकरवर्धनसमकालिको दृश्यते । तदनुसारेण तस्य बाणपूर्ववर्तित्वं सिध्यति अपि च गद्यकाव्यस्य प्रथमप्रयोक्तृत्वञ्च । किन्त्वेतन्न तथा प्रामाणिकं यतो हि कवयः श्रुतं वा कल्पितमप्यर्थं लीलया वर्णयन्ति यथा नैषधीयचरिते दमयन्तीस्वयंवरसभायां सप्तानामेव द्वीपानां राज्ञां विशेषतो जम्बूद्वीपस्य अवन्ति-गौड-मथुरा-काशी-अयोध्या-पाण्ड्य-महेन्द्र-काञ्ची-नेपाल-मलय-मिथिला-कामरूप-उत्कल-कीकटमहीपतीनामुपस्थितिवर्णनम् । अपरञ्च हर्षनिर्वाणानन्तरमपि भारतस्य दशा तथैव सञ्जाताऽऽसीद्या प्रभाकरवर्धनसमये आसीत् । काव्यादर्शे हि दण्डी—

'इति साक्षात्कृते देवे राज्ञो यद्राजवर्मणः ।
प्रीतिप्रकाशनं तच्च प्रेय इत्यवगम्यताम् ॥' ( २।२७९ ) इति ।

राजवर्माणं स्वाश्रयदातृत्वेन स्मरति । ऐतिहासिकैः खलु राजवर्मा इति ७४७-७८२ मितवैक्रमाब्दान्तराले काञ्चीं शासत्पल्लवराजो नरसिंहवर्मा गृह्यते । सति तथा, दण्डिनोऽपि तत्सभाकवित्वेन वा तत्समकालिकत्वेन ७३०-८०० मितवैक्रमाब्दकालः स्थितिकालत्वेन मन्यते ।

अवन्तिसुन्दरीकथाऽनुसारेण दण्डी हि दामोदराऽऽख्यस्य प्रपौत्र आसीत् दामोदरस्य चतुर्षु सुतेषु कनिष्ठस्य वीरदत्तस्य सुत आसीद् दण्डी । तस्य

माता गौरी। कथ्यते हि दामोदरो हि भारविरेव किंवा भारवेरन्तरङ्गसुहृदासीत्। स हि विष्णुवर्धनाख्यस्य सिंहविष्णोः काञ्चीनरेशस्य सभापण्डित आसीत्। दामोदरस्य पुत्रो वीरेश्वरदत्तोऽपि सिंहविष्णुसुतस्य महेन्द्रवर्मणः सभापण्डित आसीत्। तथैव तत्सुतो दण्डी हि महेन्द्रवर्मणः सुतस्य नरसिंहवर्मणस्तत्सुतस्य राजवर्मणश्च सभाध्यक्ष आसीत्। नरसिंहवर्मणः स्थितिकालः ७४७-७८२ मितवैक्रमाब्दानभितः। एवमेव अवन्तिसुन्दरीकथायाम्

'भिन्नतीक्ष्णमुखेनाऽपि चित्रं बाणेन निर्व्यथः।
व्याहारेषु जहौ लीलां न मयूर............ ॥'

इति बाणो मयूरश्च कविः स्मृतौ दृश्येते। अनेन अवन्तिसुन्दरीकथायां वर्णितायाः कादम्बर्याः वर्णनस्य बाणवर्णितकादम्बरीवर्णनेन सह साजात्येनापि दण्डिनो बाणपरवर्तित्वं सिध्यति। बाणो हि ७१५ मितवैक्रमाब्दे तनुं तत्याजेति पूर्वमेवोक्तम्। तदनन्तरवर्तित्वेन दण्डिनः ७३०-८०० मितवैक्रमाब्दकालः स्थितिकालत्वेन सम्मत एव। दण्डिनो हि प्रासादिकगुणगुम्फितां सरलां भाषां विलोक्य केचित्तं वाणपूर्ववर्तिनमेव मन्यन्ते। तेषां मते सति तस्य बाणपरवर्तित्वे तस्य भाषयाऽपि वाणप्रवर्तितशैल्या प्रभावितया भाव्यं स्यान्न हि भाषयाऽपि तथा प्रतीयत इति। किन्तु नेदं युक्तियुक्तं प्रमाणं यतो हि बाणपश्चाद्वर्तिनः सर्वे बाणमेवानुकुर्वन्तीति नैव राजाज्ञा कुत्रापि। कवेस्तु स्वकीयं वैशिष्ट्यं भवति। कमनीयपदावल्येव दण्डिनो वैशिष्टयम्।

कल्पितेऽपि प्रमाणबाहुल्ये दण्डिनो यथार्थतः स्थितिकालस्तु ७००-८५० मितवैक्रमाब्दान्तराले एव। तेन हि ७५० मितवैक्रमाब्दपश्चाद्वर्तिना तु न कदापि भाव्य यतो हि ७५० मितवैक्रमाब्दानभितः स्थितिमती विज्जका तं स्पष्टमेव स्मरति।

'नीलोत्पलदलश्यामां विज्जकां मामजानता।
वृथैव दण्डिना प्रोक्ता सर्वशुक्ला सरस्वती ॥' इति।

विज्जका हि द्वितीयपुलकेशिनः पुत्रस्य चन्द्रादित्यस्य पट्टराज्ञी विजयभट्टारिकैव नान्या।

दशकुमारचरितं हि दण्डिनः प्रथितं गद्यकाव्यम्। अस्य पूर्वपीठिका, दशकुमारचरितं, उत्तरपीठिका चेति त्रयो भागाः। तत्रापि केचित्तु भाषागतभङ्गीमुद्दिश्य केवलं चरितभागमेव दण्डिप्रणीतं मन्यन्से। तदनुसारेण यथा हि चरितभागस्य कमनीयपदा प्रसादगुणगुम्फिता मधुरमधुरा च भाषा न तथा पूर्वोत्तरपीठिकयोरिति। किन्तु कथनमेतन्न युक्तियुक्तम्। भाषाभङ्गी हि विषयानुबन्धिनी कवेस्तात्कालिकमनोवृत्यनुगा च। तेन हि एक एव कविरपि विविधभाषाभङ्गीमनुतिष्ठतीति नाश्चर्यं विषयाद्यनुसारेण।

दशानां हि कुमाराणामतिपौरुषपराक्रमवर्णनमेवाऽस्य ग्रन्थस्य विषयः। मगधेशकुमारस्य राजवाहनस्य तन्मित्राणां नवानां देशविदेशाटनानुभवानां मनोहारि वर्णनमत्र दृश्यते।

वस्तुत एव दण्डी कविः। नासौ केवलं विद्वानेव। तस्य हि कल्पना उदात्ता बहुमुखी च। नास्य प्रबन्धः सुबन्धोरिव प्रत्यक्षरश्लेषमयो नापि च बाणस्येव रुचिरस्वरवर्णपदानि। अस्य तु पदानि प्रसादमधुराणि ललित-ललितानि भावगर्भितानि च। समालोचका आमनन्ति यत् स्पष्टता, भव्य-भावसमभिव्यक्तिः कोमलकल्पनाकमनीयता, विचारवैशद्यञ्चास्य कृतिगतं वैशिष्ट्यम्। कविरसौ अनुप्रासमयपदविन्यासे एव रमते। तेनैवोक्तं भवेत्—

'दण्डिनः पदलालित्यम्' इति।

अस्य पात्राणां सजीवता रोचिष्णुहास्यविलासः हृदयङ्गमा व्यङ्ग्यभङ्गी, च सर्वेषां कृते प्ररोचकाः। यथा हि—

'कुमारा माराभिरामा रामास्तपौरुषा रुषा भस्मीकृतारयो रयोपहसित-समीरणा रणाभियानेनाभ्युदयाशंसं राजानमकार्षुः।'

निभाल्यतामस्य कवित्वकमनीयताऽत्र—

'सुभग कुसुमसुकुमारं जगदनवद्यं विलोक्य ते रूपम्।
मम मानसमभिलषतित्वं चित्तं कुरु तथा मृदुलम्॥' इति।

एवमेवास्य वर्णनकौशलस्योदाहरणं यथा—

'तत्र चकोरलोचनावचितपल्लवकुसुमनिकुरम्बं महीरुहसमूहं शरदिन्दुमुख्या मन्मथसमाराधनस्थानञ्च नताङ्गीपदपङ्क्तिचिह्नितं शीतलसैकततलञ्च सुदतीमुक्तमुक्तं माधवीलतामण्डपान्तरपल्लवतल्पं च विलोकयन् ललनातिलक-विलोकनवेलाजनितशेषाणि स्मारं स्मारं मन्दमारुतकम्पितानि नवचूतपल्ल-वानि मदनाग्निशिखा इव चकितो दर्शं दर्शं मनोजकर्णेजपानामिव कोकिल-कोरमधुकराणां क्वणितानि श्रावं श्रावं मारविकारेण क्वचिदप्यवस्थातुम-सहिष्णुः परिबभ्राम।' इत्यादि।

सत्यमेवोक्तमेकेन समालोचकेन यद्दण्डिनो दशकुमारचरिते नानाविधा रोमाञ्चकारिघटनाः सन्ति। ग्रन्थस्यास्य मुख्यो रसस्तु वीर एव किन्तु प्राधान्य-मद्भुतस्यापि।

दशकुमारचरितस्य सन्त्यनेके टीकाग्रन्थाः। अस्य पूर्वपीठिकायाः पद-दीपिकाऽभिधा टीका लभ्यते प्राचीना, नवीना च शेषराजशर्मणश्चन्द्रकला-ऽऽख्या। मध्यभागस्य हि पदचन्द्रिका कवीन्द्राचार्यसरस्वतीकृता, शिवराम-प्रणीता भूषणाऽऽख्या, लघुदीपिका च भानुचन्द्रकृता टीकाः। उत्तरपीठिकाया

न काऽपि टीका लभ्यते। पूर्वपीठिकाया मध्यभागस्य च ताराचरणभट्टाचार्य-प्रणीता बालविबोधिनी नाम्नी टीकाऽपि दृश्यते।

अवन्तिसुन्दरीकथा हि दण्डिनोऽपरा कृतिः। ग्रन्थोऽयमपि हर्षचरितमिव कतिपयैः पद्यैरारभ्यते। अत्रापि वाल्मीकि-व्यास-सुबन्धु-गुणाढ्य-शूद्रक-भास-प्रवरसेन-कालिदास-नारायण-बाण-मयूराख्यानां कवीनां नामग्रहणं कृतमस्ति। तत्र कतिपयपद्यानां मध्यभागः खण्डितोऽपि दृश्यते। ततश्च गद्येन ग्रन्थारम्भः कृतोऽस्ति। अत्र हि बाणस्य कादम्बरी पुनरुक्तेव दृश्यते भाषाभाववर्ण्य-विषयादिदृष्ट्या।

दण्डिना 'ओजःसमासभूयस्त्वं गद्यस्य जीवितमिति' यदुक्तं तदवन्ति-सुन्दरीकथायामेव चरितार्थं भवति न तु दशकुमारचरिते।

कलापरिच्छेदो हि काव्यादर्शस्यैवाग्रिमो भागो न तु स्वतन्त्रग्रन्थः। एवमेव छन्दोविचितिरपि। यथोक्तं काव्यादर्शे—

'इत्थं कलाचतुःषष्ठिविरोधः साधु नीयताम्।
तस्याः कलापरिच्छेदे रूपमाविर्भविष्यति॥ (३।१७१)।'
'पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा।
छन्दोविचित्यां सकलस्तत्प्रपञ्चो निदर्शितः॥ (१।११,१२)।'

दण्डिनो द्विसन्धानकाव्यमित्थं भोजराजेन शृङ्गारप्रकाशे स्मृतम्।

'द्वितीयस्य (द्विसन्धानप्रकारस्य) उदाहरणं यथा दण्डिनो धनञ्जयस्य द्विसन्धानप्रबन्धौ' (एकादशतमेऽध्याये)।

### ५. धनपालः : तिलकमञ्जरी

गद्यकाव्यप्रसङ्गे धनपालस्य तिलकमञ्जरी समालोचकैः स्मृता। कविरसौ धारानरेशस्य मुञ्जस्य सभासदासीदिति तिलकमञ्जर्या एव साक्ष्येण ज्ञायते। स हि सर्वदेवस्य पुत्र आसीत्। १०३० मितवैक्रमाब्दमभितः प्रणीतेऽस्मिन् ग्रन्थे राजपुत्र्या तिलकाया राजपुत्रेण समरकेतुना सह प्रेमप्रपञ्चो वर्णितः। ग्रन्थस्य भूमिकाभागे हर्षचरित इव वाल्मीकिव्यासप्रवरसेनजीवदेवकालिदासबाणसमरादित्यभद्रकीर्तिमाघभारविभवभूतिवाक्पतिराजशेखर-प्रभृतिकवयः स्मृता कविना। तथैव तत्र बृहत्कथा तरङ्गवती चेति द्वौ ग्रन्थावपि स्मृतौ। समालोचका ग्रन्थेऽस्मिन् स्पष्टमेव बाणच्छायां पश्यन्ति।

### ६. ओडयदेवः : गद्यचिन्तामणिः

विक्रमानन्तरत्रयोदशशतकमभितः स्थितिमता वादीभसिंहापराभिधानेन ओडयदेवेन गद्यचिन्तामणिसंज्ञकं काव्यं प्रणीतमस्ति। तत्र हि राजपुत्रस्य

जीवनधरस्य चरितं चित्रितमस्ति। अस्यैव कवेः क्षत्रचूडामणिनामकं काव्यमप्यस्ति।

एवमेव अगस्त्यस्य (१३८० वै०) कृष्णचरितं, वामनभट्टबाणस्य (१४८० वै०) वेमभूपालचरितं वीरनारायणचरिताख्यं, अनन्तशर्मणः (१७०७ वै०) मुद्राराक्षसपूर्वसङ्कथानकं, विश्वेश्वरपाण्डेयस्य (१७५० वै०) मन्दारमञ्जरी, अम्बिकादत्तव्यासस्य (१९१५-१९५७ वै०) शिवराजविजय., क्षमायाः (१९५७ वै०) कथामुक्तावली, रामशरणस्य (१९६२ वै०) कौमुदीकथाकल्लोलिनी, देवविजयगणिनो रामचरितं (१६५३ वै०), नृसिंहस्य अभिनवकादम्बरी, कृष्णपण्डितस्य रत्नावली, राजगोपालस्य (१९४९ वै०) शैवालिनी, कुमुदिनी, विलासकुमारी, सङ्गरः, कल्याणरामस्य कनकलता, कृष्णमाचार्यस्य मन्दारवती, अलवार-आयङ्गरस्य जयन्तिका, श्रीशैलस्य मेनका, नरसिंहाचार्यस्य सौदामिनी, मेधाव्रतस्य कुमुदिनीचन्द्रं, वामनकृष्णस्य तिलकचरितं, बदरीनाथस्य गुणेश्वरचरितं चेतिप्रभृति गद्यकाव्यानि प्रथितानि स्मृतानि च सन्ति।

७. विश्वेश्वरपाण्डेयः : मन्दारमञ्जरी

दण्डिपरवर्तिषु गद्यकाव्येषु विश्वेश्वरस्य मन्दारमञ्जरी स्वप्रकारककाव्यान्यतिशेते। विश्वेश्वरो हि कर्तृपुरस्य कूर्माचलस्थस्य अलमोड़ाप्रदेशस्य पाटियाग्रामस्य निवासी आसीत्। पिताऽस्य लक्ष्मीधरो भारद्वाजसगोत्रीयः। अस्य सन्त्यनेके ग्रन्थाः प्रकाशिता अप्रकाशिताश्च। प्रकाशितेषु वैयाकरणसिद्धान्तसुधानिधिः, अलङ्कारकौस्तुभः, रसचन्द्रिका, आर्यासप्तशती, अलङ्कारप्रदीपः, अलङ्कारमुक्तावली, कवीन्द्रकर्णाभरणं, रोमावलीशतकं, मन्दारमञ्जरी चेति नव ज्ञाताः।

स हि वैयाकरणसिद्धान्तसुधानिधौ भट्टोजिदीक्षितं प्रौढमनोरमां शब्दकौस्तुभञ्च स्मरति। तेनाऽसौ निश्चयेन भट्टोजिपरवर्तीति ज्ञायते। सहैव स हरिदीक्षितं शब्दरत्नञ्च नैव स्मरतीति तस्य हरिदीक्षितपूर्ववर्तित्वं वा समकालिकत्वं सिध्यति। अपरञ्च, रसमञ्जर्याष्टीकायामन्ते तदात्मजस्य जयकृष्णस्य विषये—

'दिग्गुणर्तुशशलाञ्छनयुक्ते शालवाहनशके जयकृष्णः।
श्रावणीयसितपक्षदशम्यां निर्मितिं पितुरिमां विलिलेख॥'

इति कथनादपि विश्वेश्वरस्य हि १६३८ मितशककालादर्थात् १७७३ मितवैक्रमाब्दात्पूर्वमेवास्तित्वं सिध्यति। तथ्यमेवेदं कवीन्द्रकर्णाभरणस्य पादसूच्यामपि तथैव निदिशति यद्विश्वेश्वरपण्डितः [illegible]शतक-

प्रथमपादे लक्ष्मीधरपण्डिताज्जन्म लेभे। अनेन स्वायुषो दशमवर्षप्रभृति ग्रन्थ-निर्माणमारब्धं चत्वारिंशद्वर्षदेशीयश्च परलोकं जगामेति। अनेनान्येनाऽपि प्रमाणेनैतदेव सिध्यति यदसौ कविः १७२०-१६६० मितवैक्रमाब्दानभितः स्थितिमानिति। युधिष्ठिरमीमांसकस्त्वस्य स्थितिकालं १६००-१६५० मित-वैक्रमाब्दान्तरालगतं मन्यते।

मन्दारमञ्जरी हि गद्यकाव्येष्वन्यतमं प्रशस्यतमं काव्यम्। अत्र हि प्राच्यां दिशि स्थितस्य कुसुमपुरस्य राज्ञो राजशेखरस्य सुतस्य चित्रभानो-र्मन्दारमञ्जर्याश्च प्रेम वर्णितमस्ति। प्रसङ्गतः कुसुमपुरवर्णनं, नायकनृपवर्णनं, शासनसौभाग्यं, प्रतापवर्णनं, कुमारशिक्षणवर्णनं, मन्दारमञ्जरीसमागमश्च वर्णिता वैशद्येन। ग्रन्थोऽयं चित्रभानुमन्दारमञ्जरीपरस्परवर्णनानुरागवर्णन-पर्यन्तमेव प्रणीतोऽत एवापूर्ण एव दृश्यते। सम्भवति कवेरसामयिकनिधनेनास्य पूर्णता व्यवहिता। ग्रन्थस्यास्य तारादत्तपन्ताख्येन विदुषा १९९५ मित-वैक्रमाब्दे कुसुमाभिधाख्या टीका प्रणीताऽस्ति।

समालोचकाः कथयन्ति यद्ग्रन्थोऽयं बाणस्य कादम्बर्या विषयशैलीप्रस्तुती-करणदृष्ट्या नितान्तमेव प्रभावितो दृश्यते। अस्य हि नगरवर्णनं कादम्बर्या उज्जयिनीवर्णनात्, मन्त्रिगुणाः शुकनासवर्णनात्, कुमारशिक्षणवर्णनं चन्द्रा-पीडशिक्षावर्णनात्, शुकनासोपदेशाच्च, मन्दारमञ्जरीवर्णनं कादम्बरी-वर्णनाच्च प्रभावितं दृश्यते। किन्तु बाणकृतौ यादृशी कल्पनाशक्तिः सहृदयता संवेदनात्मकता च विद्यते सा विश्वेश्वरकृतौ न दृश्यते। अत्रापि कादम्बर्या-मिव कथाभ्यन्तरे उपकथायाः समावेशेन जटिलता विलसति। अस्य हि भाषा प्रौढा, अलङ्कृता परिष्कृता च। अत्र हि प्रतिपदं श्लेषस्य, रूपकस्य, उत्प्रेक्षा-याः, विरोधाभासस्य, परिसङ्ख्यायाश्च प्रयोगे कवेः शास्त्रीयपाण्डित्यं विल-सित दृश्यते। भावस्य भाषायाश्च सुन्दरः समन्वयो दृश्यतेऽत्र। अत्रालङ्कार-योजनाऽपि दर्शनीया। वर्णनञ्चास्य व्यापकं सर्वाङ्गीणञ्च। दृश्यते कविरसौ कादम्बरीमपि अधरीकर्तुं प्रयतते। किन्तु सन्त्यत्र कतिपयन्यूनता यासु ग्रन्थस्या-पूर्णता, कलापक्षस्य प्राधान्यं, पाण्डित्यप्रदर्शनलोभेन कथाविस्तारस्य गौणत्वं, कथायां प्रवाहस्य नितान्तमभावः, भावपक्षस्य न्यूनता, केवलं रूढेरेवाश्रयणं न तु व्यवहारस्य, रसपरिपोषणे न तथा ध्यानञ्च समुल्लेखनीयाः सन्ति, यत्कृते कवेरभिलाषो न तथा फलीभूतो दृश्यते। किन्तु नैतावतैवैतदवधेयं यद्ग्रन्थोऽयं निष्प्रयोजन इति। सन्त्यत्र मनोरमकाव्यात्मकवर्णनान्यपि यत्कृते काव्यमिदं सफलतायाः परां कोटिमारोहति। तस्य वर्णनचातुर्या दिङ्मात्र-मुदाहरण यथा—

'वैयाकरणत्वादेव [illegible] बृहस्पतिरिव त्रिभुवगुरुः, भार्गव

इव कविपदवाच्यः, उद्गातेव सामप्रयोगाभिज्ञः, साङ्ख्यमिवाभ्युपगत-पुरुषभेदः ।'

'तस्य च सरस्वतीवाश्रितचतुरानना, श्रीरिव प्रोल्लसितपद्मकरा, गौरीव भूभृद्वरोत्पन्ना, देवसेनेन बहुलापत्यार्हा, पौलोमीवानुभूतशतमखा, लोपामुद्रेव कान्तागस्त्यानवक्षोभवा, रतिरिव पञ्चबाणसञ्चरणभूमिः, सीतेवानधिगतयोनि-सङ्करा, अरुन्धतीवाविर्भूतरूपशक्तिः, लङ्केन्द्रदयितेव मन्दोदरी, तारेव प्राप्त-सुग्रीवा, द्रौपदीव लब्धवेदिमध्या, रेणुकेव रामाभ्यर्हिता, संज्ञेव स्वप्रतिनिधी-कृतस्त्र्यन्तरा, छायेव संज्ञानुरूपा, सत्यवतीवोल्लसितव्यासचित्राङ्गदा, अम्बा-लिकेवाश्रितधृतराष्ट्रा, शकुन्तलेव सदाशुभरता, देवयानीव काव्यजन्मभूमिः, सन्ध्यावलीवाधिगतरुक्माङ्गदा, विनतेवारुणजनिरसज्ञा, रुक्मिणीव मन्मथ-जननी, प्रभावतीव रतिकान्तानुरक्ता, उषेव प्रियन्निरुद्धा, सुभद्रेव जिष्णु-दयिता, उत्तरेव परीक्षितिलब्धपूर्वभागा, रोहिणीव चन्द्रसुन्दरमुखी महादेवी मलयवती नामाऽऽसीत् ।'

ग्रन्थस्यास्य केनचित् विश्वेश्वरशिष्येणोत्तरभागः पूरित आसीदिति श्रूयते ।

**८. कृष्णपण्डितः : रत्नावली**

१८४०-१९०० मितवैक्रमाब्दान्तराले स्थितिमतो धर्माधिकारिवंश्यस्य श्रीकृष्णपण्डितस्य रत्नावली आधुनिकगद्यकाव्येषु नृपायते । अत्र हि भगवतो रत्नेश्वरस्य प्रसादेन रत्नावल्या गन्धर्वकुमार्या रत्नचूडाख्येन नागराजकुमारेण सह परिणयो वर्णितः । सर्वैरेव काव्यगुणैः समलङ्कृतोऽयं ग्रन्थः सर्वदा मौलिकः अस्य हि दीर्घसमासवन्ति वाक्यानि बाणमेव स्मारयन्ति, श्लेषप्रयोग-बहुलता च सुबन्धुं, पदलालित्यञ्च दण्डिनम् । दिङ्मात्रं निदर्शनं यथा—

'अस्ति स्वस्तिसमस्तस्थिरास्थलीविस्तृतमस्तकसंस्तुतप्रस्तारप्रशस्तिस्तो-माऽर्हदिवं वर्धमानाऽपूर्वपूर्वैहिकजन्यर्जितधर्मार्थकामनिर्वाणसम्पूर्णसर्ववर्णा-श्रमधर्मकर्मप्रसितत्वखर्वगर्वखर्वीकृतसुपर्वदर्पोर्वीसुपर्वादिपर्वितैः ... ... ... ... वाराणसी नाम ।' ( त्रिषु पृष्टेषु विस्तृतमिदं वाक्यम् )। रत्नावलीवर्णनं यथा—

'तस्य सुविनया तनया लावण्यवतीष्वग्रगण्या जितचन्दिरमुखारविन्दा स्तवकस्तनी मृणालकोमलबाहुलता तन्वी तनुमध्याऽधरीकृतबिम्बाधरा मीना-भिमानमोचनलोचना विकलीकृतकोकिलालापा सर्वगान्धर्वनिपुणा गुणरत्न-गञ्जानुपमेयरूपातिशया मूर्तेव रत्नाकरकन्यका बभूव रत्नावली नाम ।'

'या च सन्ध्येव विविधरागरत्नाम्बरा कवितेवालङ्कारमण्डिता तरुशाखेव

रुचिरवयोभूषिता कलावत्यपि नकलावती गन्धर्व्यपि नगन्धर्वी । यस्याश्चञ्चलत्वं नयनयोर्न चेतसि, मन्थरत्वं पादयोर्न बुद्धौ, कार्श्यं बलग्ने न वपुषि, मौग्ध्यं शिशुक्रीडने न विद्यासु ।'

स्वरूपेण स्वल्पमपि पूर्णं काव्यमिदं सुखान्तम् ।

## ९. अम्बिकादत्तव्यासः : शिवराजविजयः

१९१५-१९५७ मितवैक्रमाब्दान्तरालवर्तिना जयपुराभिजनेन पाटलिपुत्रवास्तव्येन अम्बिकादत्तव्यासेन सन्त्यनेके ग्रन्थाः प्रणीता येषु शिवराजविजयं नाम गद्यमहाकाव्यं प्रसिद्धमस्ति ।

शिवराजविजयं हि ऐतिहासिकवृत्ताश्रितत्वादाख्यायिकारूपं गद्यकाव्यम् । अत्र हि द्वादशनिःश्वासेषु शिवाजीवीरस्य साहसिकं कार्यं वर्णितमस्ति । शिवाजीवीरो हि १६७४ मितवैक्रमाब्दे जातो महाराष्ट्रवीरः १७३१ मितवैक्रमाब्देऽभिषिक्तः १७३७ मितवैक्रमाब्दे निधनं गतः । तेन हि १७०३ मितवैक्रमाब्दत आरभ्य आजीवनमेव महाराष्ट्रस्य मुगलशासनान्मुक्तये सङ्घर्षः कृतः । स हि सामान्यजनतः स्वबाहुवीर्येण महाराष्ट्रसम्राट् सञ्जातः । तस्यैव चरितं ग्रन्थेऽस्मिन् सुनिपुणं वर्णितमस्ति । कथ्यते ह्यस्मिन् वङ्गीयोपन्यासग्रन्थस्य प्रभावो दृश्यते किन्तु कथा त्वैतिहासिकी सर्वसामान्यैव । वस्तुतः कविरत्र नवीनां शैलीमप्युन्नयति तेनैष भ्रमः समुत्पन्नः । ग्रन्थेऽस्मिन् वीरो हि मुख्यो रसः, वैदर्भीरीतिः, प्रासादिकी मधुरा च शैली । अस्य वर्णनशैल्या दिङ्मात्रमुदाहरणं यथा—

'एष भगवान् मणिराकाशमण्डलस्य चक्रवर्ती खेचरचक्रस्य कुण्डलमाखण्डलदिशः दीपको ब्रह्माण्डभाण्डस्य प्रेयान् पुण्डरीकपटलस्य शोकविमोकः कोकलोकस्य अवलम्बो रोलम्बकदम्बस्य, सूत्रधारः सर्वव्यवहारस्य इनश्च दिनस्य ।'

## १०. रामशरणः : कौमुदीकथाकल्लोलिनी

१९६२ मितवैक्रमाब्दे लब्धजनुः रामशरणः संस्कृतगद्यकाव्याकाशस्यान्तिमनक्षत्रम् । यद्यपि तदनन्तरमपि गद्यकाव्यकानि प्रणीतानि तु दृश्यन्ते तथापि कौमुदीकथाकल्लोलिनीसमकक्षा रचना नैव नयनपथमायाताऽस्ति अद्यपर्यन्तमपि । अत्र हि उदयनपुत्रस्य नरवाहनदत्तस्य जन्मत आरभ्य गान्धर्वाभिषेकपर्यन्ता कथा वर्णिताऽस्ति । शास्त्रकाव्यपरम्पराया अपि पालकेऽस्मिन् काव्ये कथामाध्यमेन व्याकरणप्रयोगा अपि शिक्षिता भट्टिकाव्ये इव । तेन हि काव्यमिदं कवित्व-पण्डितत्वयोः सुन्दरं सङ्गमस्थलम् ।

इत्थं हि सुबन्धुन आरभ्य रामशरणपर्यन्त संस्कृतगद्यकाव्यस्य द्विसहस्राधिकवर्षव्यापिनी ( विक्रमपूर्वं २२३ मितवर्षादारभ्य विक्रमानन्तर १९९८ मितवर्षपर्यन्तं ) अविच्छिन्ना सततं विकासशीला च प्रवर्तिता दृश्यते। सत्यमेवोच्यते।

सुबन्धुर्बाणभट्टश्च दण्डी चातिरथा इमे।
धनपालादयस्त्वन्ये गद्यकाव्ये महारथाः॥ इति।

## ( ङ ) चम्पूकाव्यानि

गद्यपद्योभयस्वरूपं काव्यं चम्पूसंज्ञकम्। चम्पूकाव्ये सामान्यकथनं तु गद्येनैव कथ्यते किन्तु विशेषकथनाय पद्यमाश्रियते। काव्यप्रकारोऽयं बहुशः प्रचलितः सम्मानितश्च दृश्यते विद्वत्समाजे।

सामान्यतस्तु गद्यकाव्येऽपि यत्रतत्र पद्यानामपि समावेशस्तु भवत्येव। यथा वासवदत्ता-हर्षचरित-कादम्बरी-दशकुमारचरितप्रभृतिग्रन्थेषु। तथापि तेषां हि चम्पूकाव्ये गणना नैव कृताऽस्ति। अनेनेदमवधेयं यत्केवलं गद्यपद्यमयरचना नैव चम्पूकाव्यत्वमाप्नोति किन्तु तत्र गद्यपद्यभागयोः समानभागोऽप्यावश्यकः। यत्र हि गद्यं पद्यञ्च यथावश्यकं समानभागव्याप्यत्वेन प्रयुक्तं तदेव काव्यं चम्पूरिति।

काव्यप्रकारोऽयं कदा वा केन प्रारब्ध इति तु नैव ज्ञातमधुनाऽपि किन्त्वेतावत्तु निश्चितमेवं यदसौ विक्रमपूर्वकालेऽपि लब्धप्रचार आसीत्। प्रथमं ह्यस्य रूपं स्मरति आद्यकाव्यशास्त्राचार्यो भामहः। ततश्च रुद्रदाम्नो गिरिनाराभिलेखेऽनेकेषु गुप्तकालीनाभिलेखेषु चास्य स्वरूपमुच्यते। दण्डी तु—

'गद्यपद्यमयी काचिच्चम्पूरित्यभिधीयते' ( १।३१ )

इति नामत एव स्मरति काव्यभेदमिमम्। तथापि चम्पूकाव्यस्य स्वतन्त्रग्रन्थरूपेण त्रिविक्रमभट्टस्य नलचम्पूरेव प्रथममुदेति। ततश्च सोमप्रभसूरेः यशस्तिलकचम्पूः, हरिश्चचन्द्रस्य जीवन्धरचम्पूः, भोजस्य रामायणचम्पूश्च केचन प्राचीनाश्चम्पूग्रन्थाः। एवमेव भागवतं महाभारतञ्चाश्रित्याऽप्यनेके चम्पूग्रन्थाः प्रणीताः सन्ति। एवमेव वरदाम्बिकापरिणयचम्पूः, नीलकण्ठविजयचम्पूः, विश्वगुणादर्शचम्पूः, मुक्ताचरित्रचम्पूः, आनन्दवृन्दावनचम्पूः, गोपालचम्पूः, आनन्दकन्दचम्पूः, चितचम्पूः, अवन्तिसुन्दरीकथाचम्पूः, पारिजातहरणचम्पूः, उषापरिणयचम्पूः, गजेन्द्रचम्पूः, भरतेश्वराभ्युदयचम्पूः, पुरुदेवचम्पूः, अमोघराघवचम्पूः, यतिराजविजयचम्पूः, विरूपाक्षवसन्तोत्सवचम्पूः, रुक्मिणीपरिणयचम्पूः, आचार्यविजयचम्पूः, वेङ्कटेशचम्पूः, धर्मविजयचम्पूः, शङ्करचेतोविलासचम्पूः, गङ्गावतरणचम्पूः, रामचन्द्रचम्पूः, आनन्दचम्पूः

सुदर्शनचम्पूः, सिन्देविजयविलासचम्पूः, द्रौपदीपरिणयचम्पूः, नवरत्नावलीय चैवमाद्याः सन्ति प्रकाशिता अप्रकाशिताश्च सार्धद्विशताधिकाश्चम्पूग्रन्थाः।

अथैतेषु कतिपयेषां चम्पूग्रन्थानां परिचयोऽत्रोपस्थाप्यते ।

**१. त्रिविक्रमभट्टः : नलचम्पूः**

अद्यावधि ज्ञातेषु हि चम्पूकाव्येषु त्रिविक्रमभट्टस्य नलचम्पूरेव प्रथमत्वेन गृह्यते । त्रिविक्रमो हि शाण्डिल्यगोत्रस्य श्रीधराऽऽख्यस्य पौत्रो देवादित्यस्य पुत्रः ९७२ मितवैक्रमाब्दमभितः स्थितिमान् । स हि बाणभट्टं स्मरति—

'शश्वद्बाणद्वितीयेन नमदाकारधारिणा ।
धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः ।। ( १।१४ )'

इति कथनेन । बाणभट्टस्य समयः श्रीहर्षसभाकवित्वेन ६५०-७१५ मितवैक्रमाब्दानभितो मतः । तेन ह्ययमेव कालस्त्रिविक्रमस्य पूर्वसीमा स्थितिकालस्य । एवमेव विक्रमैकादशशतकोत्तरार्द्धभवो भोजो नलचम्पूं स्मरतीतीयमेव तस्य स्थितिकालस्यावरसीमा । तथैव स हि राष्ट्रकूटवंशीयस्य तृतीयेन्द्रराजस्य समये आसीदिति—

'श्रीत्रिविक्रमभट्टेन नेमादित्यस्य सूनुना ।
कृता शस्ता प्रशस्तेयमिन्द्रराजाङ्घ्रिसेविना ।।'

इति कथनाज्ज्ञायते । कथनमिदं ९७२ मितवैक्रमाब्दे समुट्टङ्किताभिलेखे विद्यते । तेन हि ९७२ मितवैक्रमाब्दमभितस्तस्य स्थितिकाल इति । केचित्तु-

'कैलाशायितमद्रिभिर्विटपिभिः श्वेतातपत्रायितं
मृत्पङ्केन दधीयितं जलनिधौ दुग्धायितं वारिभिः ।
मुक्ताहारलतायितं व्रततिभिः शङ्खायितं श्रीफलैः
श्वेतद्वीपजनायितं जनपदैर्जाते शशाङ्कोदये ।।' ( ७।२८ )

एवमेव—

'मदनमिति युवानं यौवराज्येऽभिषिञ्चन्
कृतकुमुदविकासो भासयन् दिङ्मुखानि ।
इमममृततरङ्गैः प्लावयञ्जीवलोकं
गगनमवजगाहे मन्दमन्दं मृगाङ्कः ।।' ( ७।२७ )

इति कथनेन श्लेषबलात्कमपि शशाङ्कसंज्ञितं नृपं स्मरतीति तर्कयन्ति। तदनुसारेण हि कवेरस्य शशाङ्कसमकालिकत्वं सिध्यति । शशाङ्को वै हर्षसमकालिकस्तत्प्रतिद्वन्द्वी गौडनरेशो वैक्रमसप्तमशतकोत्तरार्द्धस्थितिमान् । किन्तु कथनमिदं न तथा युक्तियुक्तं यतस्तथा सति तस्य बाणपूर्ववर्तित्वं सिध्यति यद्धि तस्यैव 'शश्वद्बाणद्वितीयेन नमदाकार धारिणा' इति कथनस्य (१-१४)

विरोधः सञ्जायते। श्रीहर्षेण शशाङ्कवधानन्तरमेव बाणस्तत्सभायां प्रविष्ट आसीत्।

नलचम्पूर्हि दमयन्तीकथाप्युच्यते। ग्रन्थोऽयं सप्तोच्छ्वासेषु विभक्तोऽस्ति यत्र हि आर्यावर्तवर्णनमारभ्य नलदमयन्तीपरिणयपर्यन्ता कथा वर्णिताऽस्ति। कथ्यते ह्येकदाऽस्य पिता कार्यवशाद्दूरदेशं गत आसीत्। तदैव कश्चिदपरः पण्डितस्तं तत्रागत्य शास्त्रार्थाय समाहूतवान्। स तु भीतभीतः सरस्वतीमस्तौषीत्। साऽपि तत्पितृप्रत्यागमनपर्यन्तं तज्जिह्वावासं स्वीकृतवती। ततः शास्त्रार्थे तं पण्डितं पराजित्य गृहं प्रत्यागत्य ग्रन्थमिमं लिखितुमारब्धवान्। एतदन्तरे हि तत्पिता प्रत्यागतो गृहम्। ततो भारती तं त्यक्तवती येन ग्रन्थोऽपूर्ण एव संवृत्तः।

ग्रन्थेऽस्मिन्नर्थालङ्कारापेक्षया शब्दालङ्कारस्यैव प्राधान्यं दृश्यते। तथाऽप्यस्य सरसा रमणीयार्था चमत्कारपूर्णा च। यथोक्तम्—

प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविलक्षणाः।
भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः॥

वस्तुतस्तु तस्य कृतिरपि सदूषणाऽपि निर्दोषा सखराऽपि सुकोमला विद्यते रामायणो कथेव। श्लेषस्य दुर्बोधत्वं स्वीकुर्वन् कविः स्वयमेव कथयति—

वाचः काठिन्यमायान्ति भङ्गश्लेषविशेषतः।
नोद्वेगस्तत्र कर्तव्यो यस्मान्नैको रसः कवेः॥ (१।१६) इति।

अस्य हि यमकच्छटा निभालनीया दृश्यते यथा—

धृतकदम्वकदम्बकनिष्पतन्नवपरागपरागममन्थराः।
हृततुषारतुषारतिरागिणां प्रियतमा मरुतो मरुतो वधूः॥ (१।४३)

इत्यादि। स हि भावनिबन्धनेऽपि पटुर्दृश्यते। भर्तृहरेर्हि—

'व्यतिसंजति पदार्थानन्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः॥'

इति कथनम्—

भवति हृदयहारी क्वापि कस्यापि कश्चित्
न खलु गुणविशेषः प्रेमबन्धप्रयोगे।
किसलयति वनान्ते कोकिलालापरम्ये
विकसति न वसन्ते मालती कोऽत्र हेतुः॥ (७।४७)।

इत्यनुवदति भावतः। तस्य हि वर्णनाचातुर्यं यथा—

'भानासः कुसुमायुधस्य शबरीमङ्केतलीलागृहाः

पुष्पामोदमिलन्मधुव्रतवधूझङ्कारुद्धाध्वगाः ।
सुस्निग्धाः प्रियबान्धवा इव दृशो दूरीभवन्तश्चिरात्
कस्यैते न वहन्ति हन्त हृदयं विन्ध्याचलस्य द्रुमाः ॥'

इत्थं हि तस्य काव्ये शृङ्गारस्य सुन्दरः परिपाको वर्णनस्य माधुर्यं कल्पनाया मनोज्ञता श्लेषच्छटा च समन्विता दृश्यन्ते ।

समालोचकैस्त्रिविक्रमस्य कतिचित् त्रुटयोऽपि इङ्गिताः सन्ति । यासु पाण्डित्यप्रदर्शनार्थं कथावस्त्वनपेक्षा, रसपरिपाकापेक्षया शाब्दक्रीडायाः प्राधान्यं, कलाप्राबल्येन भावपक्षस्योपेक्षा, कथाविकासे गतिशीलतायाः स्वाभाविकसञ्चाराभावः, श्लेषपरिसङ्ख्यादीनां श्रमसाध्यता, कथाया अकाण्डे एव विच्छित्तिरित्यादि ।

नलचम्पूमधिकृत्य सन्ति प्रसिद्धाः अनेकाष्टीकाः यासु चण्डपालकृता विषमपदप्रकाशा गुणविनयगणिकृता वृत्तिः ( १६५० वै० ) दामोदरी टीका, नागदेवी, बृहट्टीका, विवृतिटीका नन्दकिशोरस्य भावबोधिनी च ज्ञाताः काश्चन प्राचीनाः शेषराजशर्मणश्चन्द्रकला च नवीनासु ज्ञाता ।

अस्यैव ग्रन्थान्तरं मदालसाचम्पूः । अयमेव कुवलयाश्वचरितसंज्ञकोऽपि । काव्यमिदं कुवलयाश्वमदालसयोः प्रेमकथावर्णनपरम् नलचम्प्वपेक्षया ग्रन्थोऽयं न्यूनश्रेणीकः । तथापि काव्यस्यास्य सुन्दरता रसवत्ता च प्रशस्या विद्यते । ग्रन्थस्यास्यैका टीका लभ्यते कस्यापि । ग्रन्थोऽयं कवेः प्रथमैव कृतिर्दृश्यते । कथानकञ्चास्य मार्कण्डेयपुराणाद् गृहीतं प्रतिभाति ।

## २. हरिचन्द्रः : जीवन्धरचम्पूः

हरिचन्द्राख्यः कश्चिज्जैनजीवन्धराख्यस्य मुनेश्चरितमाश्रित्य जीवन्धरनामकचम्पूग्रन्थं प्रणीतवान् । ग्रन्थोऽयं गुणभद्रेण हि ९०७ मितवैक्रमाब्दमभितः सङ्कलितमुत्तरपुराणमुपजीवति । तेनास्य प्रणयनकालो वैक्रमदशमशतकोत्तरार्द्धमभितोऽनुमितः । एवन्तु स्पष्टमेव यदसौ भट्टारहरिचन्द्राद्, यं हि बाणभट्टोऽपि सादरं स्मरति, भिन्न एव किन्तु सम्प्रत्यपि नैतत्स्पष्टं यदसौ हि शर्मधर्माभ्युदयकाव्यस्य प्रणेता एव वा तद्भिन्न इति । असौ हि माघं बाणभट्टञ्च सुस्पष्टमेवानुकरोति भावभाषादिकमधिकृत्य ।

## ३. सोमदेवः : यशस्तिलकचम्पूः

नेमिदेवस्य शिष्येण सोमदेवाख्येन विदुषा यशस्तिलकनामा चम्पूग्रन्थः प्रणीतोऽस्ति । अत्र सन्ति अष्टावुश्वासाः । स हि राष्ट्रकूटस्य राज्ञः कृष्णदेवराजापराभिधानस्य तृतीयकृष्णस्य सभामण्डिल आसीत् । तेन हि ग्रन्थस्यास्य प्रणयनकालः १०१६ मितवैक्रमाब्दमभितोऽनुमितः ।

ग्रन्थेऽस्मिन् यशोधरस्य राज्ञः सुदत्तमुनेरुपदेशेन जैनमतावलम्बनवृत्तान्तो वर्णितोऽस्ति। अत्रापि कादम्बर्यामिव कथान्तरे कथा कथिताऽस्ति। अत्र हि भारवि-भवभूति-भर्तृहरि-मेण्ठ-गुणाढ्य-भास-कालिदास-बाण-मयूर-नारायण-माघ-राजशेखरप्रभृतिकवयः स्तुताः सन्ति प्रारम्भिकपद्येषु। ग्रन्थोऽयं यशोधर्मराजचरितसंज्ञयाऽपि ज्ञायते। केचिदमुमेव कविं सोमप्रभसूरिनाम्नाऽपि गृह्णन्ति।

**४. भोजदेवः : चम्पूरामायणम्**

चम्पूरामायणं हि चम्पूग्रन्थेषु सर्वोत्कृष्टकाव्यम्। अस्य प्रणेता १०६२-१११ मितवैक्रमाब्दानभितः स्थितिमान् परमारवंशीयो धारानगरीशो भोजः स्मृतः किन्तु ग्रन्थे न कुत्रापि प्रणेतृनाम दत्तमस्ति। तथैव प्रतिकाण्डपुष्पिकावाक्ये 'इति श्रीविदर्भराजविरचिते चम्पूरामायणे' इत्युल्लिखितं दृश्यते। ग्रन्थस्यास्य प्रणेता भोजाऽऽख्य इति तु 'भोजेन तेन रचितामपि पूरयिष्यन्' इति युद्धकाण्डगतलक्ष्मणभट्टपद्याज्ज्ञायते। किन्तु कोऽसौ भोजः कतमोऽयमिति तु सम्प्रत्यपि अनिर्णीतमेव, ग्रन्थपुष्पिकावाक्यात्तु अस्य प्रणेत्ता कश्चिद्विदर्भराजो दृश्यते। विदर्भेषु राजानो हि भोजशब्देन व्यपदिश्यन्ते प्राचीनकालादेव। यथा 'भोजेन दूतो राघवे विसृष्टः' इति रघुवंशेऽपि। धारानगरीशः परमारवंशीयः सिन्धुराजपुत्रोऽपि भोजशब्देन व्यपदिश्यते। भारतीया हि परम्परा तु धारानगरीशभोजमेव ग्रन्थस्यास्य प्रणेतृत्वेन गृह्णाति। अपरञ्च, भोजप्रबन्धादावपि स एव विद्वन्मूर्धन्यत्वेन गृहीतोऽस्ति। सम्भवति केनापि लिपिकारेण भोजं हि वैदर्भं मत्वा तथाविधं पुष्पिकावाक्यं पश्चात्संयोजितं स्यात्। ग्रन्थगौरवदृष्ट्या त्वयं ग्रन्थो धारानरेशस्यैव भवितुमर्हति। ग्रन्थस्यास्याद्यानि पञ्च काण्डानि भोजप्रणीतानि युद्धकाण्डं तु लक्ष्मणभट्टनाम्ना विदुषा प्रणीय पूरितम्। तथैव वेङ्कटराजाख्येन कविना उत्तरकाण्डमपि विरच्य पूरितमिति कथ्यते।

ग्रन्थेऽस्मिन् वैदर्भी रीतिः सर्वातिशयित्वेन विलसति। वर्णनेऽत्र प्रयुक्ता कल्पना नितान्तोच्चकोटिका। अत्र हि अनुप्रासस्योपमायाश्च वैचित्र्यं कुमारदासं स्मारयति। अस्योत्प्रेक्षाऽपि निभालनीया। दिङ्मात्रमुदाहरणं यथा—

'सीता पुरा गगनचारिभिरप्यदृष्टा मा भूदियं सकलमानवनेत्रपात्रम्।
इत्याकलय्य नियतं पिदधे विधाता बाष्पोदयेन नयनानि शरीरभाजाम्॥'
(२।३३)

'इति विविधरसाभिः कौशिकव्याहृताभिः
श्रुतिपथमधुराभिः पावनाभिः कथाभिः।

गलितगहनकृच्छ्रं गच्छतोर्दाशरथ्योः
समकुचदिव सद्यस्तादृशं मार्गदैर्घ्यम् ॥' ( ११४७ )

'राजन्, भवतः कुमारेण विनयाभिरामेण रामेण शरासनमित्रण सौमित्रिमात्रपरिजनेन क्रियमाणक्रतुरक्षो रक्षोदुरितमुत्तीर्य कृतावभृथो भवितुमभिलषामीति'।

## ५. अभिनवकालिदासः : भागवतचम्पूः

अभिनवकालिदासाख्येन केनचित्कविना सम्भवतः ११०० वैक्रमाब्दमभितः स्थितिमता भागवती कथा षट्सु स्तवकेषु विभज्य वर्णिताऽस्ति। सन्ति बहवो हि कवयो नाम्नैतेन ख्यातास्तेन कतमोऽस्य ग्रन्थस्य प्रणेतेति नैव निश्चितं सम्प्रत्यपि।

## ६. सोड्ढलः : उदयसुन्दरीकथा

विक्रमानन्तरैकादशशतकोत्तरार्द्धभवस्य सोड्ढलस्य कवेः उदयसुन्दरीकथाऽपि गद्यपद्यसमप्राधान्येन चम्पूत्वं भजते। अत्र हि अष्टावुच्छ्वासाः सन्ति यत्र नागराजकुमार्या उदयसुन्दर्याः प्रतिष्ठाननरेशेन मलयवाहनेन सह परिणयो वर्णितः। अत्रापि हर्षचरित इव वाल्मीकि-व्यास-वाक्पतिराज-मायुराज-विशाखदेव-गुणाढ्य - भर्तृमेण्ठ-कालिदास-बाण - भवभूति-अभिनन्द-मायावर-कुमारदास-भासप्रभृतयः कवयः चित्तराजनागार्जुन-मुम्मुनिराज-कोङ्कणनरेश-वत्सराजप्रभृतयोऽपि स्मृतास्तथैव लाटमहीपश्चालुक्य आश्रयदातृत्वेनोल्लिखितः। यथा हि—

'वागीश्वरं हन्त भजेऽभिनन्दमर्थेश्वरं वाक्पतिराजमीडे।
रसेश्वरं स्तौमि च कालिदासं बाणं तु सर्वेश्वरमानतोऽस्मि ॥'
'बाणस्य हर्षचरिते निशितामुदीक्ष्य।
शक्तिं न केऽत्र कवितास्वमदं त्यजन्ति ॥'

सोड्ढलो हि पदे पदे बाणमनुसरति। तथाप्यस्य शैली मौलिकी सरसा च विद्यते। असौ हि क्षक्-झम्पप्रभृतिनितान्ताप्रचलितशब्दानपि प्रयुनक्ति। ग्रन्थस्य प्रथमाध्याये कवेरात्मकथा दत्तास्ति।

## ७. सोमेश्वरदेवः : कीर्तिकौमुदी

१२९७ मितवैक्रमाब्दमभितः स्थितिमतः सोमेश्वरदेवस्य कीर्तिकौमुदी अपि चम्पूकाव्येष्वेका। अत्र हि वीरधवलस्य मन्त्रिणो वस्तुपालस्य चरितं चित्रितमस्ति।

## ८. वासुदेवरथः : गङ्गावंशानुकीर्तनम्

कलिङ्गशासकस्य गङ्गावंशस्येतिहाससम्बद्धश्चम्पूग्रन्थोऽयं वासुदेवरथप्रणीतः। अस्य प्रणयनकालः १४७७ मितवैक्रमाब्दमभितोऽनुमितः।

## ९. अनन्तभट्टः : भारतचम्पूः

अनन्तभट्टप्रणीतभारतचम्पूर्महाभारतमाश्रित्य प्रणीतो द्वादशस्तबकेषु विभक्तो ग्रन्थः। एवं हि १६६० मितवैक्रमाब्दमभितः स्थितिमान् नारायणभट्टः स्मरतीति तस्य स्थितिकालः १५५० मितवैक्रमाब्दमभितोऽनुमितः। अस्यैव भागवतचम्पूरपि श्रूयते। अस्योपरि नारायणसूरेष्टीका लभ्यते मुद्रिता। अस्य हि ग्रन्थाद्यपद्ये—

'दिगन्तरलुठत्कीर्तिरनन्तकविकुञ्जरः ।
प्राणैस्तुल्यं सरस्वत्याः प्राणैषीच्चम्पूभारतम् ॥' ( १२।३३ )

इति लिखितमस्ति। वस्तुतः कवेरस्य श्लेषचमत्कारो निभालनीयो दृश्यते। यथा हि—

'नवतरुणिमलक्ष्मीनन्दनीयं शरीरं
कुरुवृषभसुतानां कुर्वती नेत्रपात्रम्।
मुनिततिरिति मेने मोहनाय त्रिलोक्याः
स्वविशिख इव कामः सोऽपि किं पञ्चधाऽभूत् ॥' (१।६७) इत्यादि।

## १०. रामानुराजाचार्यः : रामानुजचम्पूः

सरसशैल्यां प्रणीतेऽस्मिन् ग्रन्थे विशिष्टाद्वैतमतप्रवर्तकस्य रामानुजस्य जीवनचरितं वर्णितमस्ति। अस्य प्रणयनकालः १६६० मितवैक्रमाब्दमभितोऽनुमितः।

## ११ तिरुमलाम्बाः : वरदाम्बिकापरिणयचम्पूः

तिरुमलाम्बायाः वरदाम्बिकापरिणयचम्पूश्चम्पूकाव्येषु भावभाषादिदृष्टचा नृपायते खलु। अत्र हि अच्युतरायस्य वरदाम्बिकायाश्च प्रणयपरिणयौ मनोहारिण्या शैल्या वर्णितौ स्तः।

कवीयत्र्यसौ १५८६ मितवैक्रमाब्देऽभिषिक्तस्य राज्ञोऽच्युतरायस्यैव धर्मपत्न्यासीत्। अतोऽस्याः स्थितिकालः १५१०-१५५० मितवैक्रमाब्दानभितोऽनुमितः।

ग्रन्थोऽयं भङ्गश्लेषेऽसाधारणः। निभाल्यतामस्य वर्णनासौष्ठवम्—

तदनु धरणिपालो धावता चेतसाऽग्रे
सरभसमिव कृष्टः सरभगौर्याः प्रविश्य।

तडित इव घनौघे तत्र तत्र स्फुरन्तीः
परित इह पुरन्ध्रीः पर्यटन्तीरपश्यत् ॥ (१०२)।

एवमेव नारायणभट्टेन (१६६० वै०) द्रौपदीस्वयंवरकथामधिकृत्य पाञ्चालीस्वयंवरचम्पूः श्लेषजालमुक्ता दृश्यते। समरपुञ्जप्रणीते यात्राबन्धे नवाश्वासाः सन्ति। अत्र हि सर्वाण्यपि तीर्थानि वर्णितानि सन्ति मुख्यानि। ग्रन्थोऽयं १६८० मितवैक्रमाब्दमभितः प्रणीतोऽनुमीयते। १६८० मितवैक्रमाब्दमभितः स्थितिमता मित्रमिश्रेण भङ्गश्लेषमाधृत्य आनन्दकन्दचम्पूः स्वकीयैः वैशिष्टचैः प्रसिद्धोऽस्ति। असौ हि कृष्णस्य बाल्यकालकथामनुजीवति।

चिदम्बरस्य (१६७० वै०) भागवतचम्पूः, शेषकृष्णस्य (१६६० वै०) पारिजातहरणचम्पूः, नीलकण्ठस्य नीलकण्ठविजयचम्पूः (१६९७ वै०) यो हि पञ्चसु अध्यायेषु विभक्तं यत्र शिवस्य पराक्रमो वक्रोक्तिपूर्णभाषायां वर्णितः, राजचूडामणेः (१६५७ वै०) भारतचम्पूः, चक्रकवेः (१७०७ वै०) द्रौपदीपरिणयचम्पूः, वेङ्कटाध्वरिणः विश्वगुणादर्शचम्पूः, वरदाभ्युदयचम्पूः, उत्तरचम्पूः, श्रीनिवासचम्पूश्च कतिपये प्रसिद्धचम्पूग्रन्थाः।

## १२. वेङ्कटाध्वरीः : विश्वगुणादर्शचम्पूः

चम्पूकाव्यजगति वेङ्कटाध्वरिणः स्थानमतीव महत्त्वपूर्णम्। तस्य सन्ति चत्वारश्चम्पूग्रन्था येषु विश्वगुणादर्शचम्पूरादर्शग्रन्थरूपेण गृहीतोऽस्ति।

कविरसौ स्वपरिचयमित्थं प्रस्तौति—

'अस्तोकाध्वरकर्तुरप्पयगुरोरस्यैव विद्वन्मणेः।
पुत्रः श्रीरघुनाथदीक्षितकविः पूर्णो गुणैरेधते ॥ २ ॥
तत्सुतस्तर्कवेदान्ततन्त्रव्याकृतिचिन्तकः।
व्यक्तं विश्वगुणादर्शं विधत्ते वेङ्कटाध्वरी ॥ ३ ॥

अनेनैतत्सिध्यति यदसौ अप्पयदीक्षितस्य पौत्र आसीदिति। तेनाऽस्य समयः १७०७ मितवैक्रमाब्दमभितो मतः। स कथयति—

'पद्यं यद्यपि विद्यते बहुसतां हृद्यं विगद्यं न तद्
गद्यं च प्रतिपद्यते न विजहत्पद्यं बुधास्वाद्यताम्।
आदत्ते हि तयोः प्रयोग उभयोरामोदभूमोदयं
सङ्गः कस्य हि न स्वदेत मनसे माध्वीकमृद्वीकयोः ॥ ४ ॥

ग्रन्थस्य कथावस्तु पृष्ठभूमिश्चेत्थं—

विश्वावलोकस्पृहया कदाचिद्विमानमारुह्य समानवेषम्।
कृशानुविश्वावसुनामधेयं गन्धर्वयुग्मं गगने चचार ॥ ५ ॥

तौ हि क्रमशः सूर्यलोक-भूलोके, भूलोके अयोध्या-गङ्गानदी-काशीसमुद्र-

जगन्नाथक्षेत्र-गुर्जरदेश - यमुनानदी-महाराष्ट्र-आन्ध्रप्रदेश-कर्णाटकदेश-वेङ्कट-गिरि-वन-घटिकाचल-दीक्षारण्य-रामानुज-चन्नपट्टण (मद्रास)-काञ्ची-श्रीमद्वे-दान्तदेशिकाचार्य-कामासिकानगरवासि - नृसिंह-त्रिविक्रम-कामाक्षीदेवी-एका-म्रेश्वर-क्षीरनदी-वाहानदी-तुण्डीरमण्डल - चञ्जीपुरी-यज्ञवाराह-कावेरी-रङ्ग-नगरी-जम्बूकेश्वर-चोलदेश-शाङ्गंपाणि-राजगोपाल-सेतु-ताम्रपर्णी - शठकोप-मुनि-वेदान्ति-ज्योतिषिक-भिषक्कवि-तार्किक-मीमांसक-वैयाकरण-वैदिक-राज-सेवक-दिव्यक्षेत्र-प्रभृतीनां वर्णनं सुनिपुणं कृतमस्ति। कविवर्णनं यथा—

'माघश्चौरो मयूरो मुररिपुरपरो भारविः सारविद्यः
श्रीहर्षः कालिदासः कविरथ भवभूत्याह्वयो भोजराजः।
श्रीदण्डी डिण्डिमाख्यः श्रुतिमुकुटगुरुर्भल्लटो भट्टबाणः
ख्याताश्चान्ये सुबन्ध्वादय इह कृतिभिर्विश्वमाह्लादयन्ति ॥'

इति। ( ५४९ )

संवादरूपेण प्रणीतोऽयं ग्रन्थो गुणदोषविवेचनपरः।

वरदाभ्युदयेऽनेन काञ्चीस्थदेवतानां महत्त्वं वर्णितमस्ति। उत्तरचम्प्वां रामायणस्योत्तरकाण्डगता कथोपवर्णिताऽस्ति। श्रीनिवासचम्प्वां दशाध्यायाः सन्ति यत्र तिरुमलयस्थितदेवतानां वर्णनं दृश्यते।

एवमेव बाणेश्वरस्य चित्तचम्पूग्रन्थे राज्ञश्चित्रसेनस्य जीवनं चित्रितमस्ति यो हि १८०१ मितवैक्रमाब्दे मृतः। कवेरस्य समयो वैक्रमैकोनविंशतिशतक-पूर्वार्द्धमभितः।

कृष्णाख्येन कविना मन्दारमरन्दचम्पूः प्रणीताऽस्ति। अस्य स्थितिकालः सम्प्रत्यपि नैव निर्णीतः।

द्वितीयसर्कोजीतिख्यातस्य तञ्जोरनृपस्य कुमारसम्भवचम्पूः ( १८७५ वै० )।

अज्ञातकर्तृका सर्वदेवविलासचम्पूर्मद्रदेशस्य तात्कालिकीमवस्थां वर्णयति। षडाश्वासात्मकोऽयं ग्रन्थोऽपूर्ण एव दृश्यते।

वर्तमानकाले शिवप्रसादद्विवेदिना, नवरत्नावलीयमिति चम्पूग्रन्थः प्रणीतोऽस्ति। अत्र रवनत्नानि सन्ति। तुलसीदासजीवनसम्बद्धकथाऽत्र वर्णिता। ग्रन्थोऽयं २०४० मितवैक्रमाब्दे प्रकाशितः।

इत्थं हि रामायणाश्रिताः, महाभारताश्रिताः, भागवताश्रिताश्च सन्त्यनेके शताधिकाश्चम्पूग्रन्थाः येषां विवरणमत्र विस्तरभिया नैवोपस्थाप्यते। भगवताश्रितचम्पूषु चिदम्बरस्य, रामभद्रस्य, राजनाथस्य च भागवतचम्पूः, केशव-भट्टस्य नृसिंहचम्पूः, दैवज्ञसूर्यस्य नृसिंहचम्पूः, सङ्कर्षणस्य नृसिंहचम्पूः, शेष-

कृष्णस्य पारिजातहरणञ्च। महाभारताश्रितचम्पूषु अनन्तभट्टस्य भारत-चम्पूः प्रसिद्धा।

संस्कृतजगति प्रसिद्धाश्चम्पूकारा यथा कालक्रमानुसारेण—

'त्रिविक्रमश्च सोमश्च हरिचन्द्रस्तथैव च।
भोजश्च सोड्ढलश्चैव राज्ञी तिरुमलाह्वया॥
नारायणस्तथा चासन् वेङ्कटाध्वरिसूरयः।
शङ्करोऽपि च विख्याताश्चम्पूकाव्यविधायकाः॥' इति।

## ( च ) आख्यानसाहित्यम्

संस्कृतजगति आख्यानसाहित्यमपि शाखान्तरवद्विकसितं समृद्धञ्च दृश्यते। आसमन्तात् ख्यायतेऽसाविति आख्यानं, तेन यद्धि लोके सर्वतः कथ्यते तदेवाख्यानं कथा वा। आख्यानस्य हि बृहत्तमो भागः काल्पनिको भवति तत्र हि कुत्रचित्तु कुतूहलं, क्वचित्तु घटनावैचित्र्यं, क्वचित्तु हास्यविनोदः, क्वचिदुपदेशोऽथ क्वचित्तु रसवत्काव्यस्य छटाऽपि दृश्यते। समुदितदृष्टचाऽऽख्यानसाहित्यं हि मानवचिन्तनस्य नितान्तविकसितं रूपम्।

तच्चाख्यानसाहित्यं द्विविधं नीतिकथा लोककथा चेति। यदेव सदुपदेशेन सति प्रवृत्त्यर्थमसतो निवृत्त्यर्थञ्च कथ्यते तन्नीतिकथाया रूपम्। रोचकाख्यानमाध्यमेन पुरुषार्थसाधनोपायकथनमेवास्योद्देश्यम्। अत्र हि प्राधान्येन सदाचाराः राजनीतिर्व्यावहारिकज्ञानञ्च निरूपणीयविषयाः। तद्विपरीतं लोककथायाः प्रयोजनं तु मनोरञ्जनमेव। मनुष्यसम्पादितकृत्यस्यातिरञ्जनरूपेण कथनमेव लोककथाया लक्षणम्।

आख्यानसाहित्यस्य प्राचीनत्वमियत्तया तु नैव वक्तुं शक्यते, किन्त्वेतावत्तु निश्चितमेव यदिदं सर्वेष्वपि काव्यभेदेषु प्राचीनतमम्। ऋग्वेदादावपि नीतिकथायाः स्वरूपं यत्र कुत्र लभ्यते। ऋग्वेदस्य दशममण्डलस्य १०८ मितसूक्ते सरमायाः पणिनाञ्च संवादो लभ्यते, यत्र सरमा पणिनो धनदानाय उपदिशति। नीतिकथायाः स्वरूपमिदं ब्राह्मणग्रन्थेषूपनिषत्सु च लभ्यते। छान्दोग्योपनिषदि ( १।२२।१,२ ) पशूनामन्नार्थं सङ्गठनं श्रूयते। तत्रैव वृषभो हंसो मद्गुश्च जाबालं सत्यकामं ब्रह्मविद्यामुपदिशन्ति। महाभारते तु एतादृश्यः कथा यत्र तत्र लभ्यन्ते। केवलं शान्तिपर्वण्येव द्वादश नीतिकथा लभ्यन्ते। पातञ्जलेऽपि महाभाष्ये कथानकानामुल्लेखो दृश्यते अहिनकुलं काकोलूकीयमित्यादि। जातककथास्वपि कथायास्तथैव रूपं लभ्यते।

## ( अ ) नीतिकथा

सामान्यतो नीतिकथा द्वयोर्भागयोर्विभक्ता दृश्यते, पशुपक्ष्याश्रिता मनुष्याश्रिता च। प्रथमायां हि पशुपक्षिमाध्यमेन सदाचार-राजनीति-व्यवहारादीनां ज्ञानमुपदिश्यते, द्वितीयायां मानवमाध्यमेनैव। पञ्चतन्त्रं हितोपदेशश्च प्रथमभेदस्य निदर्शनानि, पुरुषपरीक्षा च द्वितीयभेदस्य। अथैतेषां संक्षिप्तः परिचयोऽत्रोपस्थाप्यते।

### १. पञ्चतन्त्रम्

पञ्चतन्त्रं हि विष्णुशर्मसङ्गृहीतं नीतिकाव्यम्। किन्तु कोऽसौ विष्णुशर्मा कश्चास्य कालः, इति सम्प्रत्यपि नैव ज्ञातं सम्यक्। पञ्चतन्त्रे हि कथामुखं, मित्रभेदम्, मित्रप्राप्तिकं, लब्धप्रणाशं, काकोलूकीयम्, अपरीक्षितकारकञ्चेति षट् प्रकरणानि सन्ति। तेषु हि मित्रभेदादिकं तु विष्णुशर्मसङ्गृहीतं सम्भवति किन्तु कथामुखं तु न तथा प्रतिभाति। कथामुखे कथितं यद् दक्षिणदिशास्थ-महिलारोप्यनगरस्य राज्ञोऽमरशक्तेः पुत्रान् त्रीनध्यापयितुं विष्णुशर्मणा ग्रन्थोऽयं प्रणीत इति। किन्तु हितोपदेशस्य प्रस्ताविकाभागे तु कथितमस्ति यद्भागीरथीतीरस्थस्य पाटलिपुत्रनगरस्य राज्ञः सुदर्शनाख्यस्य त्रीनेव पुत्रानध्यापयितुं विष्णुशर्मा ग्रन्थमिमं प्रणीतवानिति। अनेन कथनभेदेन तथैव—'तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं काव्यम्' इति कथने लिट्लकारप्रयोगेण च सिध्यति यदयं भागः केनाऽपि विष्णुशर्मपश्चाद्वर्तिना प्रणीय संयोजितमिति। तेन हि प्रस्तावनाभागतस्त्वेतावदेव सिध्यति यदसौ ग्रन्थो विष्णुशर्माख्येन विदुषा संग्रहीत इति। न ततोऽधिकम्। विष्णुशर्मणो देशविषये द्वैमत्यं दृश्यते। पञ्चतन्त्रकथामुखकारस्तं दाक्षिणात्यमरशक्त्याख्यस्य महिलारोप्यराज्ञः सभाकविं मन्यते किन्तु हितोपदेशस्य प्रणेता नारायणस्तु तं पाटलिपुत्रवासिनः राज्ञः सुदर्शनस्य सभासदं मन्यते। विवादेऽस्मिन् नारायणस्य पक्ष एव सत्यस्य निकटं स्पृशन्निव दृश्यते। यतो हि ग्रन्थस्यास्यावस्थितिं तत्र प्रमाणयति पतञ्जलिरपि काकोलूकीयशब्दग्रहणेन। कथ्यते गुणाढ्योऽपि पञ्चतन्त्रमनुवदतीति। असौ हि विष्णुशर्मा विष्णुगुप्त एव चाणक्यापराभिधः इति बहूनां मतम्। सम्भवति बिन्दुसाराध्यापनाय चाणक्येनैव ग्रन्थोऽयं प्रथमं सङ्कलितः स्यात् तदेव पश्चात्परिवर्धितः संस्कृतश्च। यच्च 'चाणक्याय च विदुष नमोऽस्तु' इत्युक्तं तस्य पश्चात्प्रक्षिप्तत्वं तु स्पष्टमेव कथामुखभागवर्तित्वात्। न हि स्वयमेव कविरात्मानं लिटा निर्दिशति। स्यादपि नैव वा, पञ्चतन्त्रस्य अस्तित्वं विक्रमपूर्वमासीदिति सर्वथा सत्यमेव।

पञ्चतन्त्रस्य हि सन्ति सप्ताधिकानि संस्करणानि येषु हि परस्परं स्वल्पं वा बह्वप्यन्तरमस्ति। तानि च यथा—

१. **तन्त्राख्यायिका**—संस्करणमिदं काश्मीरेषु शारदालिप्यामुपलब्धम्। अत्र हि पञ्चतन्त्रस्य मूलरूपं सुरक्षितमस्त्यधिकमितरसंस्करणापेक्षया। अस्य प्रणयनं वैक्रमप्रथमशतके मतं समालोचकैः। अत्रापि काश्चित्कथाः संवर्द्धिता दृश्यन्ते।

२. **सरलपञ्चतन्त्रम्**—संस्करणमिदं केनचिज्जैनसाधुना ११६० मितवैक्रमाब्दमभितः सङ्ग्रहीतम्। संस्करणमिदं सर्वाधिकत्वेन प्रचलितम्। ब्यूलरकीलहार्नमहोदयाभ्यां प्रकाशितमिदम्।

३. **पञ्चाख्यानकम्**—पूर्णभद्रसम्पादितमिदं १२२६ मितवैक्रमाब्दमभितः प्रस्तुतम्। अत्र हि एकविंशतिः कथा नवीना अपि सङ्कलिताः।

४. **दाक्षिणात्यसंस्करणम्**—इदं हि स्वयमपि पञ्चसु संस्करणेषु समुपलभ्यम्। अत्र पञ्चतन्त्रीयाः कथाः संक्षिप्य प्रस्तुताः।

५. **नैपालसंस्करणम्**—इदं हि केवलं पद्यात्मकमेकं गद्यभागसहितञ्चापरमपि लभ्यते। इदं हि नेवारीभाषायां रूपान्तरितमपि दृश्यते।

६. **हितोपदेशः**—नारायणाख्येन विदुषा किञ्चित्परिवर्तितं हि पञ्चतन्त्रमेवदेम्।

७. **पाश्चात्यसंस्करणम्**—सम्भवतः संस्करणमेवेदं गुणाढ्येन प्रयुक्तं यस्य रूपं सम्प्रति कथासरित्सागरादौ लभ्यते।

८. **पह्लविसंस्करणम्**—अनोशेरवानाख्यशासकस्य शासनकाले ( ५८८–६३६ वै० ) 'बुर्जोई' इत्याख्येन पह्लवीभाषायां पञ्चतन्त्रस्य उत्तरपश्चिमसंस्करणस्य रूपान्तरं कृतम्। ततोऽपि पश्चात् सीरियाभाषायां 'कलिलग दमनग' नाम्ना बूदमहाशयप्रयासेन, ततोऽपि अरबीभाषायां 'अब्दुल-इब्नुल-मोकफ्फा' नाम्ना विचक्षणेन 'कबील-व-दिम्न' इति नाम्ना ग्रन्थस्यास्य रूपान्तरं कृतम्। अरबीसंस्करणतोऽस्य यवनभाषायां ततश्च इटली-जर्मनी-लैटिनप्रभृतिभाषासु रूपान्तराणि सञ्जातानि। अनेन ग्रन्थस्यास्य करकटदमनकनाम्नाऽपि प्रसिद्धिर्दृश्यते।

अस्य भाषा नितान्तप्राञ्जला विद्यते वाक्यविन्यासश्चास्य सरसः सरलश्च। कथामुखेनात्र सदाचार-राजनीति-लोकव्यवहाराणामुपदेशः कृतोऽस्ति। कथाच्छलेन बालानामुपकाराय प्रणीतोऽयं ग्रन्थः स्वकीयप्रयत्ने सफलो दृश्यते। अत्र व्यवहारोपयोगी निखिलो विषयः सुनिबद्धो दृश्यते।

अत्रापि कथामनु उपकथा प्रवर्तते। पञ्चसु तन्त्रेषु सन्त्येतादृशा ६९ मिता उपकथाः। अत्र कथा प्रायो गद्ये नीतिवाक्यानि तु पद्ये सन्ति निबद्धानि। ग्रन्थोऽयं यथा बालानामुपकारकस्तथैव वृद्धानामपि। विश्वस्यैव प्रमुखभाषासु रूपान्तरितो ग्रन्थोऽयं संस्कृतसाहित्यभण्डारस्यामूल्यं हीरकमेव।

## २. हितोपदेशः

हितोपदेशोऽपि पञ्चतन्त्रस्यैव नवीनं संस्करणम्। ग्रन्थोऽयं नारायणाख्येन विदुषा सङ्कलित इति कथ्यते। यथोक्तं ग्रन्थावसानवाक्ये—

'प्रालेयाद्रेः सुतायाः प्रणयनिवसतिश्चन्द्रमौलिः स याव-
द्यावल्लक्ष्मीर्मुरारेर्जलद इव तडिन्मानसे विस्फुरन्ती।
यावत्स्वर्णाचलोऽयं दवदहनसमो यस्य सूर्यः स्फुलिङ्ग-
स्तावन्नारायणेन प्रचरतु रचितः सङ्ग्रहोऽयं कथानाम्॥ १४०॥

तथैव—

श्रीमान् धवलचन्द्रोऽसौ जीयान्माण्डलिको रिपून्।
येनायं सङ्ग्रहो यत्नाल्लेखयित्वा प्रचारितः॥ १४१॥

अनेन हि ग्रन्थोऽयं नारायणविदुषा धवलचन्द्रशासनकाले प्रणीत इत्यवगम्यते, किन्तु कोऽसौ धवलचन्द्र इति नाधुनापि सम्यग्ज्ञायते। केचिद्धि धवलचन्द्रं कञ्चिद् बङ्गनृपं मन्यन्ते। अस्य च स्थितिकालः वैक्रमद्वादशशतकमभितोऽनुमितः।

हितोपदेशे सन्ति चत्वारि प्रकरणानि मित्रलाभ-मित्रभेद-विग्रह-सन्धिनामकानि। तेषु हि त्रीणि प्रकरणानि तु पञ्चतन्त्रस्यैव परिवर्धितरूपाणि किन्तु चतुर्थं तु प्रकरणं नारायणकवेः स्वकृतिरेव। सन्त्यत्र त्रिचत्वारिंशत्कथाः सङ्गृहीताः, यासु पञ्चविंशतिस्तु पञ्चतन्त्रमेवानुजीवन्ति शेषाः ग्रन्थान्तरेभ्यः। कविः स्वयमेव कथयति—

मित्रलाभः सुहृद्भेदो विग्रहः सन्धिरेव च।
पञ्चतन्त्रात्तथान्यस्माद् ग्रन्थादाकृष्य लिख्यते। (९) इति।

अत्र हि पञ्चतन्त्रापेक्षया पद्यानां बाहुल्यं दृश्यते। ग्रन्थोऽयं शुकसप्ततिं वेतालपञ्चविंशतिं कामन्दकीयं नीतिशास्त्रञ्चोपजीवति। ग्रन्थस्यास्यैका हस्तलिपिः १४३० मितवैक्रमाब्दे लिखिता लब्धेति ततः पूर्वमेवास्य प्रणयनकालोऽवगम्यते।

## ३. विद्यापतिः : पुरुषपरीक्षा

विद्यापतिनाम्ना मैथिलपण्डितेन मनुष्यपात्रमालम्ब्य पञ्चतन्त्रशैल्यां पुरुषपरीक्षानामको ग्रन्थः प्रणीतोऽस्ति। पण्डितोऽयं १४६५ मितवैक्रमाब्दम-

भितः स्थितिमतो राज्ञः शिवसिंहस्य सभापण्डित आसीत् । यथोक्तं ग्रन्थस्यावसानपद्ये—

तस्य श्रीशिवसिंहदेवनृपतेर्विज्ञप्रियस्याज्ञया ।
ग्रन्थं ग्रन्थिलदण्डनीतिविषये विद्यापतिर्व्यातनोत् ।। इति ।

ग्रन्थेऽस्मिन् सन्ति चत्वारिंशत्कथाः सङ्गृहीताः । पुरुषपात्रप्रयोग एवास्य वैशिष्ट्यम् । अस्य भाषा क्लिष्टाऽपि सरसा दृश्यते ।

**४. बल्लालः : भोजप्रबन्धः**

बल्लालकवेर्भोजप्रबन्धोऽपि प्रसङ्गेऽस्मिन् स्मर्तव्यः । कोऽसौ बल्लालकविरित्यपेक्षायां केचित्तं बङ्गराजं बल्लालसेनं मन्यन्ते किन्तु कथनमिदं न युक्तियुक्तं प्रतिभाति । सति तथा आनन्दकविना बल्लालचरितेऽस्योल्लेखः कृतो भवेत् । अपरञ्च, बल्लालसेनप्रणीतेऽद्भुतसागरेऽप्यस्योल्लेखो भवेत् । किन्तु न तथा । केचिदमुं द्वारसमुद्रस्य राजानं तृतीयबल्लालं मन्यन्ते, तदपि न युक्तं प्रतिभाति, यतो हि भोजप्रबन्धे—

'कलकण्ठं यथा शोभा सहकारे भवेद्गिरः ।
खदिरे वा पलाशे वा किं तथा स्याद्विचारय ।।' ( २८७ )

इति । तथैव—

'कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम्' । ( २८५ ) ।

इति च तथा सति नैव कथितं सम्भवति । तत्र हि भोजावमानितस्य कालिदासस्य बल्लालदेशे गमनं तत्र कालिदासस्य किञ्चित्कालनिवासश्च वर्णितोऽस्ति । किन्तु तत्रापि लिटः प्रयोगेण तस्य सम्भावनां निराक्रियते— 'ततस्तस्मै प्रत्यक्षरं लक्षं ददौ' ( २७६ ) इति । तेन बल्लालाख्यः कश्चित्कविरेव भवेत्, यो हि भोजकीर्तिमाकर्णयित्वा ग्रन्थमेतं प्रणैषीत् । स हि मल्लिनाथं स्मरति न च तदनन्तरवर्तिनं, तेन मल्लिनाथपश्चात्कालवर्तिना भाव्यमिति प्रबलस्तर्कः । स हि तत्रानेकान् कवीन् स्मरति किन्तु नैव श्रीहर्षम् । सन्त्यत्र सप्तसप्ततिमिताः प्रबन्धाः । यद्यपि ग्रन्थोऽयं वातभवनायते कालिदासं मल्लिनाथञ्च एकदैव समुदाय्य तथापि कवेरस्य प्रतिभा तु तदतिरिक्तिण्येव । अस्य हि प्रासादिकी भाषा प्रवाहशीला शैली च नितान्तमेव प्रभावोत्पादिका । सामान्यतोऽस्य प्रणयनकालो वैक्रमषोडशशतकोत्तरार्द्धमभितो मतः ।

एवमेव ४००–४८० मितवैक्रमाब्दान्तरालवर्तित्वेनानुमितस्य आर्यशूरस्य

जातकमाला तथैव जैनकवेः सिद्धर्षेः ( ९६३ वै० ) उपमितिभावप्रपञ्चकथा च प्रसङ्गेऽस्मिन् स्मर्तव्या ।

एवमेव 'नारायण बालकृष्ण गोदबोले' इत्यनेन संस्कृते रूपान्तरिता ईसवनीतिकथाश्चात्रोल्लेख्या दृश्यते । सन्त्यत्र १३५ मिताः कथाः सङ्क्षेपेण सङ्गृहीतास्तात्पर्योल्लेखपुरस्सरम् ।

## ( आ ) लोककथा

लोककथायाः कस्मिन्नपि साहित्ये प्राचीनतमत्वं निर्विवादमेव । लोककथास्तु लेखनीं वा पत्रनपेक्ष्यैव कर्णपरम्परया अनादिकालादेव लोके विचरन्ति । तासु काश्चिदादाय केचित् पण्डिताः कवयितुं प्रभवन्ति । आसां हि लोकरञ्जनमेव चरमं लक्ष्यं स्रोतस्तु वीरगाथादि । वस्तुतो हि लोककथायां कस्यापि वीरस्य चरितं वा कस्यचिद्युगलस्य प्रेमलीला वर्णिता भवति ।

समुपलभ्येषु वा ज्ञातेषु कथाग्रन्थेषु प्रथमो गुणाढ्यस्य बृहत्कथैव । सम्भवति ततः पूर्वमपि एतादृशानां प्रबन्धानां सम्भवः किन्तु ते नास्माकं ज्ञानविषयाः । एवमेवावदानशतकं, जातकमाला, सूत्रालङ्कारः, वेतालपञ्चविंशतिका, सिंहासनद्वात्रिंशिका, शुकशप्ततिः, भोजप्रबन्धः, कथार्णवः, कथाकौतुकम्, माधवानलकथा, पुरुषपरीक्षा च केचित्प्रसिद्धाः कथाग्रन्थाः । अथैतेषां संक्षिप्तः परिचयोऽत्रोपस्थाप्यते ।

### १. गुणाढ्यः : बृहत्कथा

गुणाढ्यस्य बृहत्कथा मलरूपेण पैशाचीभाषायामासीदिति विश्वस्यते । सम्भवति लोककथायाः प्राचीनं स्वरूपं प्राकृतभाषयैव संरक्षितं भवेत् । तेन हि गुणाढ्येन यथा श्रुतं तथैव प्रणिबद्धम् ।

गुणाढ्यस्य विषये कथासरित्सागरे उक्तमस्ति यत्स प्रतिष्ठानपुराधीशस्य सातवाहनस्य शालिवाहनापराभिधस्य सभापण्डित आसीत् । शालिवाहनस्य समयः १३५ मितवैक्रमाब्दमभितो मतः । तेन हि प्रवर्तितः शकयुगः १३५ मितवैक्रमाब्दात् प्रारब्धो दृश्यते । कथ्यते हि सातवाहनः संस्कृतानभिज्ञ आसीत् । एकदा जलक्रीडायां राज्ञ्या 'मोदकैस्ताडय' इत्युक्तः स मोदकानानाय्य तैः प्रहर्तुमारभत । तदा राज्ञ्या सपरिहासं 'मा उदकैः' इति विज्ञप्तो लज्जयाऽवनतः स संस्कृतं जिज्ञासुस्तदर्थं पण्डितानप्रार्थयत् । गुणाढ्येन हि षड्भिर्वर्षैः प्रतिज्ञातं सर्ववर्मणा षड्भिर्मासैरेव कृत्वा प्रदर्शितम् । ततश्च गुणाढ्यः पूर्वप्रतिज्ञानुसारं राजद्वारं संस्कृतं प्राकृतञ्च भाषामुत्सृज्य मौनीं विन्ध्याटवीं प्रविवेश । तत्र स काणभूतेः कथां श्रुत्वा तां पिशाचभाषायां जग्रन्थेति ।

गुणाढ्यस्य बृहत्कथां हि काश्मीराः पद्यमयीं मन्यन्ते दाक्षिणात्यास्तु गद्यमयीम्। वस्तुत एषा गद्यपद्योभयमयी आसीदिति प्रतीयते। ग्रन्थोऽयं बहुभिर्बहुधा प्रशस्तः। ग्रन्थस्यास्य त्रीणि संस्करणानि लभ्यन्ते—बृहत्कथाश्लोकसङ्ग्रहः, बृहत्कथामञ्जरी, कथासरित्सागरश्च।

### (क) बृहत्कथाश्लोकसङ्ग्रहः

नेपालदेशीयेन बुधस्वामिना वैक्रमाष्टमशतकमभितः बृहत्कथाया बृहत्कथाश्लोकसङ्ग्रहनाम्ना सारसंक्षेपः कृतः। ग्रन्थेऽस्मिन् २८ सर्गाः ४५३९ श्लोकाश्च सन्ति। ग्रन्थोऽयमपूर्ण एव दृश्यते। समुपलब्धेनांशेनानुमीयते यदत्र न्यूनतममपि पञ्चविंशतिसहस्रश्लोका आसन्निति। ग्रन्थोऽयं ग्रन्थान्तरापेक्षया मूलस्य नैकट्यं भजते। अत्र हि बृहत्कथाया सारः पद्ये समुद्धृतः।

### (ख) बृहत्कथामञ्जरी

काश्मीरेण हि महाकविना क्षेमेन्द्रेण १०९४ मितवैक्रमाब्दे बृहत्कथायाः सारमादाय बृहत्कथामञ्जरी प्रणीता। अत्र हि १९ अध्यायाः ७५०० सङ्ख्याकश्लोकाः सन्ति। बृहत्कथाश्लोकसङ्ग्रहापेक्षयाऽत्र काश्चिन्नवीना अपि कथाः संयोजिता दृश्यन्ते। ग्रन्थोऽयं नितान्तं संक्षिप्तत्वेन दुर्बोधो लक्ष्यते। मूलग्रन्थे प्रधानपात्रत्वेन गृहीतो नरवाहनोऽत्र गौणत्वं भाजिनोऽस्ति।

### (ग) कथासरित्सागरः

काश्मीरेणैव रामाख्यस्य पुत्रेण सोनदेवेन ११३० मितवैक्रमाब्दाभ्यर्णे बृहत्कथाया एव साररूपेण कथासरित्सागराख्यो ग्रन्थः प्रणीतोऽस्ति। अत्र हि अष्टादश लम्बकाः १२४ तरङ्गा द्वाविंशतिसहस्रश्लोकाश्च सन्ति। ग्रन्थोऽयं बृहत्कथामञ्जर्यपेक्षया सफलो दृश्यते स्वप्रयासे।

## २. अवदानशतकम्

बौद्धसम्प्रदायानुसारिणि ग्रन्थेऽस्मिन् सन्ति शतमिता प्राचीनकथाः समुपस्थापिताः। ग्रन्थोऽयं वीरगाथासङ्कलनमेव। वैक्रमतृतीयशतकोत्तरार्द्धे आसां कथानां चीनीभाषायां रूपान्तरणं कृतमित्यस्य वैक्रमद्वितीयशतकमभितोऽस्य प्रणयनमनुमीयते। ग्रन्थस्यास्य प्रणेता नाद्यापि परिचितः।

ग्रन्थमेवामुमनुसृत्य **'दिव्यावदानं'** नाम ग्रन्थो वैक्रमतृतीयशतके प्रणीतो दृश्यते यस्य हि वैक्रमचतुर्थशतकपूर्वार्द्धे चीनीभाषायां कृतं रूपान्तरं लभ्यते।

एते उभेऽप्यनुसृत्य क्षेमेन्द्रेण ११०७ मितवैक्रमाब्दे अवदानकल्पलता प्रणीता। अत्र हि १०७ सङ्ख्यककथाः सन्ति।

**३. आर्यशूरः : जातकमाला**

विक्रमानन्तर ४०० मिताब्दमभित आर्यशूराख्येन विदुषा जातकमाला प्रणीताऽस्ति यत्र हि बोधिसत्त्वसम्बद्धाः षट्त्रिंशत्कथाः सङ्ग्रहिताः सन्ति। अस्यापि ४९१ मितवैक्रमाब्दे चीनीभाषायां रूपान्तरणं सञ्जातं दृश्यते। ग्रन्थोऽयं गद्यपद्योभयात्मकः काव्यमयश्च।

**४. सूत्रालङ्कारः**

जातकानामवदानानाञ्च सङ्ग्रहरूपेण गद्यपद्योभयात्मकः सूत्रालङ्कार-संज्ञको ग्रन्थः प्रणीतो दृश्यते। अयमेव कल्पनामण्डितमित्यप्युच्यते। अस्य हि प्रणेता कुमारलातो मतः।

**५ वेतालपञ्चविंशतिका**

वेतालपञ्चविंशतिकाया द्वे संस्करणे लभ्यते, एकं वैक्रमद्वादशशतकोत्तरार्द्ध-भवेन शिवदासेन सङ्गृहीतं गद्यपद्योभयात्मक, द्वितीयं तु जम्भलदत्ताख्येन सङ्गृहीतं केवलं गद्यात्मकम्। एतदतिरिक्तं वल्लभदेवाख्येनास्य संक्षिप्तं संस्करणमपि ग्रथितम्। कस्याप्यज्ञातस्य गद्यमयं संस्करणमप्यस्य लभ्यते। अत्र हि सन्ति २५ संख्यकाः कथाः। इमाश्च कथाः प्रतिष्ठाननरेशं विक्रम-सेनस्य पुत्रं त्रिविक्रमसेनं कश्चिद्वेतालः श्रावयति। एता एव कथा बृहत्कथा-मञ्जरीकथासरित्सागरादावपि लभ्यन्ते।

**६. सिंहासनद्वात्रिंशिका**

ग्रन्थोऽयमपि विक्रमादित्यसम्बद्ध एव। अत्र हि द्वात्रिंशकथाः सन्ति। विक्रमादित्यस्य सिंहासनमारोढुकामं भोजं तत्रस्था द्वात्रिंशत्पुत्तलिका एकैकं कथाः कथयन्ति। कथाश्चैता विक्रमादित्यसम्बद्धाः सन्ति। अयमेव ग्रन्थः द्वात्रिंशत्पुत्तलिका वा विक्रमार्कचरितमिति नाम्नाऽपि प्रसिद्धोऽस्ति। वैक्रम-चतुर्दशशतकोत्तरार्द्धे क्षेमङ्करनाम्ना केनाऽपि जैनलेखकेनास्य गद्यरूपान्तरं प्रस्तुतम्। बङ्गेषु हि वररुचिप्रणीतत्वेन ख्यातमस्यान्यरूपमपि लभ्यते। अस्य हि सर्वास्वेव भारतीयभाषासु रूपान्तरं लभ्यत इत्यस्य लोकप्रियत्वे प्रमाणम्।

एतदतिरिक्तं हि अनन्तप्रणीणं वीरचरितं, अज्ञातकर्तृको विक्रमोदयः, पञ्चदण्डच्छत्रप्रबन्धः, शिवदासस्य शालिवाहनकथा, आनन्दस्य माधवानल-कथा च विक्रमविक्रमगायनपराः कथाग्रन्थाः।

**७. शुकसप्ततिः**

अज्ञातकर्तृकप्रणयनकाले शुकसप्ततिग्रन्थे सन्ति सप्ततिसङ्ख्यकाः कथाः प्राचीनाः। कुमार्गं परायणां स्वामिनीं ततो निरोद्धुकामः शुकः प्रतिरात्र-

मेकैकां कथां श्रावयति सप्ततिनिशापर्यन्तमेव। ग्रन्थमिमं हेमचन्द्रोऽपि (११४५-१२२९ वै०) जानाति। तेन ह्यस्य प्रणयनं न्यूनतममपि वैक्रमदशम-शतके सम्पन्नं दृश्यते। अस्य वैक्रमचतुर्दशशतकोत्तरार्द्धे फारसीभाषायां सम्पन्नं रूपान्तरं लभ्यते।

तथैव बल्लालकवेः भोजप्रबन्धोऽपि प्रसङ्गेऽस्मिन्नपि स्मरणीयः। अत्र हि भोजस्योत्कर्षं वर्णितमस्ति। शिवदासस्य कथार्णवे पञ्चत्रिंशन्मिताः कथाः सन्ति। वीरकवेः (१५०८ वै०) कथाकौतुकं पद्यात्मकं पञ्चदशाध्यायेषु विभक्तमस्ति। विद्यापतिकृता पुरुषपरीक्षा च प्रकरणेऽस्मिन्नेकोऽपरः प्रयासः।

इत्थं हि भारतीयमाख्यानसाहित्यं सुनिबद्धं सुसङ्गठितश्च दृश्यते।

## (छ) रूपकसाहित्यम्

संस्कृतसाहित्यजगति साहित्यान्तरमिव रूपकसाहित्यमपि सुसमृद्धं विद्यते। तत्र तस्य हि स्वकीया एव विशिष्टपरम्परा। लोकप्रियतादृष्टया काव्येषु रूपकसाहित्यस्य प्रथमं स्थानम्। तस्य हि त्रयाणामेवाङ्गानां नाट्यनृत्य-नृत्तानां वैदिकयुगात्प्रागेवाप्यस्तित्वमासीदिति वेदसाहित्यत एव सिध्यति। ऋग्वेदे हि उषा—

'अधि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहम्।
ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्युषा आवर्तमः'॥
(१।९२।४)

नर्तकीरूपेण चित्रिताऽस्ति। एवमेव तत्र नाट्यतत्त्वेषु मुख्यतमं कथोपकथनमपि दृश्यते यथा पुरुरवोर्वशीसूक्ते, यमयमीसूक्ते, इन्द्रेन्द्राणीवृषाकपिसंवादे च। कात्यायनश्रौतसूत्रे सोमपानावसरेऽभिनयस्य प्रसङ्गोऽपि आयाति। यथा—'अपोर्णुते दीक्षितः शिरः' (७।८।२५) इति। यजुर्वेदे हि नृत्तगीतयोः कृते जातेरेवोल्लेखो दृश्यते सूतशैलूषादीनाम्। यथा—

'नृत्ताय सूतं गीताय शैलूषं (३०।६)।
शब्दायाडम्बराघातं महसे वीणावादं (३०।१९)।
नर्माय पुंश्चलूं हसाय कारिं (३०।२०)।

इत्थं हि वैदिककाले समुप्तं नाट्यबीजं रामायणकाले समुद्गतं दृश्यते। तदा नाट्यं नृत्तं गानञ्च जीवनस्यानिवार्याङ्गत्वेन गृहीतानि दृश्यन्ते तथैवाभिनयोऽपि। तत्र नटनर्तकादीनां सङ्घस्याप्युल्लेखो दृश्यते। यथा—

'नटनर्तकसङ्घानां गायकानां च गायताम्।
यतः कर्णसुखा वाचः शुश्राव जनता ततः॥' इति।

महाभारते तु रामायणं कौबेररंभाभिसारश्चेति नाटकद्वयस्य नाम्नैवोल्लेखो दृश्यते ( वन० १५।१३ )। हरिवंशे वसुदेवयज्ञप्रसङ्गे भद्राख्यस्य नटस्य नाटचप्रदर्शनं स्मृतमस्ति। पाणिनिरप्यष्टाध्याय्यां शिलालीत्यभिधानस्य विदुषो नटसूत्रं स्मरति ( ४।१।११० ) तथैव कर्मन्दकृशाश्वादीन्नाटचाचार्यांश्च ( ४।३।१११ )।

विनयपिटके रङ्गशालाया उल्लेखो दृश्यते चुल्लवग्गकथाप्रसङ्गे। पातञ्जले महाभाष्येऽपि कंसवध-वालिवधाख्यनाटकद्वयं स्मृतमस्ति। शुङ्गकालात्तु नाटचयुग एव प्रवर्तितो दृश्यते। तत्र भास-सुबन्धु-शूद्रक-सौमिल्ल-कविपुत्र-कालिदास-अश्वघोष-श्रीहर्ष-भवभूति-विशाखदत्त-भट्टनारायण-मुरारि-अनङ्गहर्ष-मायुराज-शक्तिभद्र-दामोदर-राजशेखर-क्षेमीश्वर-दिङ्नाग-क्षेमेन्द्र-बिल्हण-कृष्णमिश्र-यशश्चन्द्र-कनकाचार्य-रामचन्द्र-विशालदेव-सोमदेव-सुभट-जयदेव-मदन-जयसिंह-प्रह्लाद-यशःपाल-शिङ्गभूपाल-मोक्षादित्य-रामभद्र-रविवर्म-बालकवि-हस्तिमल्ल-रुद्रदेव-विद्यानाथ-नरसिंह-विश्वनाथ-विरूपाक्ष-मणिक-उद्दण्ड-वेदान्तदेशिक-वामनभट्टबाण-ब्रह्मसूरि-गङ्गाधर-हरिहर-रूपगोस्वामि-रामदेव-जीवराम-शेषकृष्ण-श्रीनिवास-यज्ञनारायण-लक्ष्मण-विलिनाथ-गोकुलनाथ-शठकोप-ताताचार्य-रामानुज-जगज्ज्योतिर्मल्ल-गुरुराम-राजचूडामणि-नीलकण्ठ-वेङ्कटाध्वरि-रुद्रदास-महादेव-रामभद्र-नल्ला-सामराज-वादिचन्द्र-पद्मसुन्दर-अकबरशाहि-विश्वेश्वर-देवराज-घनश्याम-राजवर्म-विश्वनाथ-देवकवि-भूशुक्लदेव-जगन्नाथ-आराध्य-शङ्कर-जगन्नाथ-कृष्णदत्त-वेङ्कटसुब्रह्मण्य-पेरुसूरि-रामदेव-विट्ठल-मथुरादास-नीलकण्ठ--नरसिंह-लोकनाथ-शङ्कर-रामकृष्ण-माधव-पद्मनाथ-बल्लिशाय-शिवेन्द्र-रामचन्द्र-वैद्यनाथ-पञ्चानन-अम्बिकादत्त-मुकुन्द-युवराज--कृष्णपण्डित--शङ्करलाल--श्रीनिवासाचारी--रामशास्त्रि-काशीनाथ-श्रीनिवासाचारी-जग्गू--वेङ्कटरमण-महालिङ्ग-सुन्दरेश--मूलशङ्कर-मथुराप्रसाद-हरिदास-सुदर्शनपति-पञ्चाननतर्क--क्षमाराव-नीलकण्ठ--प्रभुदत्त-भीमभट्ट-धम्पी-वरदराज-हेवरे-सीतादेवी--तिरुवेङ्कटाचार्य--सुरेन्द्रमोहन--रामनाथ-लीलावल्लभ-सुरेन्द्रमोहन जीवन्यायतीर्थ-खोतनायर-वटुकनाथ-मधुसूदन-सुदर्शन-राघव-कपिलदेव-लोकमणिदाहालाः कतिपये ज्ञाता नाटककाराः।

संस्कृतनाटकसाहित्योत्पत्तिमधिकृत्य पण्डितैर्मतमतान्तराणि प्रवर्तितानि सन्ति। तदनुसारेण अनुकरणप्रवृत्तिरेव नाटकस्य मूलाधारः। अनुकरणप्रवृत्तिस्तु मनुष्यस्य सर्वासु प्रवृत्तिषु मूर्धन्या। विशेषतो बालकेषु प्रवृत्तिरेषा प्रौढापेक्षया विशिष्टतमा। इयमेव प्रवृत्तिः क्रमशोऽभिनयस्य पश्चाच्च नाटचस्य योनिः समुपद्यते। प्रथमतस्तु प्रवृत्तिरेषा वीरपूजायां समूर्ताऽभवत्।

स्वर्गतवीरपुरुषाणां स्मृतौ तान् प्रति सम्मानप्रदर्शनाय समये समये सामूहिकोत्सवाः आयुज्यन्ते स्म। ते हि समाजशब्देन व्यपदिश्यन्ते स्म। तादृशे हि समाजे श्रद्धेयवीरचरितमनुक्रियते स्माभिनयकुशलैः। रामलीला कृष्णलीला चास्यैवोदाहरणेष्वन्यतमाः। तत्र हि प्राकृतिकपरिवर्तनानां मूर्तरूपेणोपस्थापनप्रवृत्तिरपि नाटचोत्पत्तौ सहायिकाऽऽसीत्। सम्भवति पुत्तलिकानृत्यस्याप्यत्र योगदानं महार्घ्यमेवासीत्। इन्द्रध्वजोत्थानप्रभृतिमहोत्सवा अपि नाटचोत्पत्तौ सहकारिकारणानि सम्भवन्ति। वस्तुतस्तु नाटचोत्पत्तेः मनुष्यस्य स्वाभाविकी अनुकरणप्रवृत्तिरेव योनिः। भरताचार्यस्तु नाटचोत्पत्तेरन्यदेव कारणं निर्दिशति। तदनुसारेण हि वैवस्वतमन्वन्तरे त्रेतायुगे प्रथमे लोके सुखदुःखाभिभूतत्वेन ग्राम्यधर्मे प्रवृत्ते तस्य शिक्षणाय सार्ववर्णिकवेदरचनार्थमिन्द्रादिभिः प्रार्थितः पितामह ऋग्वेदात्पाठचं सामभ्यो गीतं यजुर्वेदादभिनयं रसानाथर्वणादादाय वेदोपवेदसम्बद्धं नाटचवेदं प्रणिनाय। ततश्च भरतमुनिस्तस्य प्रयोगाय ब्रह्मणाऽऽदिष्टः। इन्द्रध्वजमहे नान्दीपुरःसरं वेदस्यास्य प्रथमः प्रयोगः कृतः। (नाटचशास्त्रम् १।५६) परमेष्ठिप्रणीतोऽमृतमन्थनो नाम समवकारः नाटचत्वेन प्रथमतोऽभिनीतः, ततश्च द्वितीयतस्त्रिपुरदाहाख्यो डिमो ब्रह्मप्रणीतः। (४।२।२।१०) इति। यद्यपि भरतमते वास्तविकतापेक्षया पौराणिकत्वमेवाधिकं विलसति तथापि एतस्मादेतत्तु सिध्यति यदिन्द्रध्वजोत्सवायोजना हि नाट्यस्य प्रथमतः प्रेरिकेति। नाट्योत्पत्तिविषये रिजवेमहोदयस्य वीरपूजामतं कीथस्य प्राकृतिकपरिवर्तनमतापेक्षया पिशेलस्य पुत्तलिकानृत्यमतापेक्षया कोनोमहोदयस्य च्छायानाटकापेक्षयाऽपि प्रशस्यतरं प्रतिभाति यतो हि तदेव मतं वस्तुतो नाट्याचार्यभरतमतेन सह संवदतेऽपि। अमृतमन्थनं त्रिपुरदाहश्च वीरपूजापरम्पराया एव ग्रन्थविशेषौ।

नाट्यस्य प्रयोजनं हि लोकरञ्जनपूर्वकं धर्मार्थकामशिक्षणम्। उक्तमेव—'त्रिवर्गसाधनं नाट्यम्'। तत्रापि लोकरञ्जनमेव नाट्यस्य मूलभूतमुद्देश्यम्। यथाऽऽह धनञ्जयः—'आनन्दनिःस्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः।' इति। एतद्धि दुःखार्तानां श्रमार्तानां शोकार्तानाञ्च विश्रामजननम्। इदं हि त्रैलोक्यस्यास्य भावानुकीर्तनं सर्वेषामेव विनोदजननञ्च। यथाऽऽह कालिदासो मालविकाग्निमित्रे—

'देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकरव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्॥' इति। (१।४)

अवस्थानुकृतिर्नाट्यं तच्च रसाश्रयम्। अन्यद्भावाश्रयं नृत्यं ताललयाश्रितं नृत्तम्। वस्तु-नेतृ-रसभेदान्नाट्यं दशविधं नाटकप्रकरणभाणव्यायोग-समवकारडिम-ईहामृग-अङ्क-वीथी-प्रहसनभेदात्। वस्तु द्विविधमाधिकारिकं प्रासङ्गिकञ्च। तच्च पुनः प्रसिद्धकल्पितभेदाद् द्विविधम्। नेता चतुर्विधो धीरोदात्तधीरोद्धत-धीरललित-धीरप्रशान्तभेदात्। रसा अष्टौ शृङ्गारवीर-करुणाद्भुतहास्यभयानकवीभत्सरौद्रभेदात्। व्यापाराभावेनाभिनयासम्भवात् नैव शान्तस्य नाट्ये पुष्टिरिति केचित्। रामचन्द्रमते तु तस्यापि पुष्टिरभिनय-सम्भवात्। दृश्यतया हि नाट्यं रूपमित्यप्युच्यते समारोपाद्रूपकमपि। अभिनय एव नाट्यस्य जीवनम्। तच्चतुर्विधं वाचिक-आङ्गिक-आहार्य-सात्त्विक-भेदात्। नटादौ पात्राणां तादात्म्यायत्या नाट्ये सामाजिकानां रसास्वादन-सम्भवः।

अथाऽत्र कतिपयेषां रूपकाणां तत्प्रणेतॄणाञ्च संक्षिप्तः परिचय उपस्थाप्यते।

**१. भासः : नाटकचक्रम्**

भासो हि सम्प्रतिविज्ञातनाटककृत्सु प्राचीनतमो मतः। तस्य हि नाटक-चक्रे विंशत्यधिकनाटकानि सन्ति। इदं नाटकचक्रं प्रथमतो गणपतिशास्त्रिणा १९६६ मितवैक्रमाब्दे प्रकाशितं प्रमाणितश्च तेषां भासकर्तृकत्वम्। तत्र त्रयोदशनाटकान्यासन्।

भासस्य स्थितिकालविषये पण्डिताः सम्प्रत्यपि नैकमत्यं भजन्ते। केचित्त-मुदयनसमकालिकं मन्यन्ते, परे तु तं विक्रमसमकालीनमन्ये तं श्रीहर्षसम-कालीनमपि। ये हि खलु श्रीहर्षसमकालिकं मन्यन्ते ते हि राजशेखरस्य—

'कारणं तु कवित्वस्य न सम्पन्नकुलीनता।
धावकोऽपि हि यद्भासः कवीनामग्रिमोऽभवत्॥'

इति कथनमनुसृत्य धावकभासयोरैक्यं परिकल्प्य 'श्रीहर्षादेर्धावकादीना-मिव धनं' इति मम्मटोक्तिमाधृत्य तथा समर्थयन्ति। किन्तु कल्पनमेतद्वात-भवनमेव। यतो हि धावकस्त्वत्र व्यवसायबोधकपदं न त्वभिधानम्। सम्भवति धावकवंशे कश्चिदपरः कविः श्रीहर्षसभायामप्यासीत्। भासं तु श्रीहर्षस्यैव सभाकविर्बाणभट्टः—

'सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव॥' (हर्षचरिते)

इति लिटः प्रयोगेण स्मरति येन हि बाणात्सुदूरप्राग्वर्तित्वं तस्य व्यज्यते। ये हि खलु भासं विक्रमसमकालिकं मन्यन्ते ते हि हेमचन्द्रस्य—

'सम्प्रति परां काष्ठामारूढेनाऽपि भासेन भूतपूर्वा स्वीयदशा न विस्मृता। यतोऽनेन पूर्वंचरितं घटखर्परेणोदकवहनमेव प्रतिज्ञातम्। प्रतिज्ञाञ्चेमाम-सहमानाः परे कवयः परिहसितुमनसो विक्रमार्कसभ्यमेनं भासं तज्जाति-स्मारकघटखर्परनाम्ना व्यजह्वुः। क्रमेण च स एव व्यपदेशो भासकवेः सुप्रसिद्धः सम्पन्नः।'

इति कविहृदयव्याख्यागतं वचनमाधारीकुर्वन्ति कल्पयन्ति चैनं घटखर्परेण सहैक्यमपि। एतदपि कपोलकल्पनमेव प्रतिभाति यतो हि विक्रमस्यैव सभा-कविः कालिदासस्तं हि—

'प्रथितयशसां भाससौमिल्लकविपुत्रादीनाम्' इति कथनेन (माल-विकाग्निमित्रे) स्वनितान्तपूर्ववर्तित्वेन स्मरति। समुद्रगुप्तो हि स्वकीये कृष्णचरिते मुनिकविवर्णनप्रसङ्गे भासं स्मरति। तथा हि—

भासमानमहाकाव्यः कृतविंशतिनाटकः।
अनेकाङ्कविधाता च मुनिर्भासोऽभवत्कविः॥ २२॥
यस्यामन्दरसा वाचः स्पन्दन्त्यानन्दमुच्चकैः।
अन्येन केन कविना तुल्यता तस्य वर्तताम्॥ २३॥
अन्यः कः कर्तुमशकत्कविर्धर्मार्थकामवित्।
यथा वासवदत्ताख्यं यस्य नाटकमुत्तमम्॥ २४॥
वाल्मीकिवैभवनिदर्शनमादिकाव्यं
रङ्गे निदर्शितभयं सुरसं चकार।
व्यासस्य भारतमगारतया सुदर्शं
कृत्वा च तत्र विविधाः स्वकथा युयोज॥ २५॥
रूपकक्रमसस्यैव कवयोऽन्ये ययुर्बुधाः।
अयश्च नान्वयात्पूर्णं दाक्षीपुत्रपदक्रमम्॥ २६॥
अभिरामाः सुबोधाश्च यस्य वाचो महाकवेः।
रसैरग्नि शमं निन्युस्तस्य किं वर्ण्यतां यशः॥ २७॥ इति।

अनेन भासस्य अग्निवर्णसभाकवित्वं सिध्यतीति केचिदामनन्ति तदपि नैव युक्तियुक्तं प्रतिभाति। तथा सति भासस्य पतञ्जलेरपि परवर्तित्वं सिध्यति किन्तु भासस्तु ऐन्द्रव्याकरणानुयायी निश्चयमेव पाणिनिपूर्ववर्ती किं वा तत्समकालिकस्तु भवितुमर्हत्येव। अपरञ्च, यदि नाम भासो हि विक्रमसम-कालिकः स्यात्तदा हि कालिदास इव स्वसमकालीनं वा पौराणिकं राजानं विहाय किन्निमित्तं निर्मूलवंशीयस्योदयनस्य चरितं चित्रयेत्स्वनाटके। वत्स-भूमिर्हि शिशुनागसमये एव मगधसाम्राज्ये समावेशिताऽऽसीत्।

वस्तुतस्तु भासो हि उदयनसभाकविरिति कपिलदेवस्य मतमेव युक्तियुक्तं दृश्यते। उदयनो हि बुद्धसमकालिकः। तदा हि मगधेषु अजातशत्रोः पुत्रस्य दर्शकस्य शासनमासीत्। केचिद्दर्शकं बिम्बसारज्येष्ठपुत्रमपि मन्यन्ते। कथनेऽस्मिन् निम्नाङ्किता युक्तिरुपस्थाप्यते।

भासो हि स्वप्नवासवदत्ते प्रतिज्ञायौगन्धरायणे च सहस्रानीकस्य पौत्रं शतानीकपुत्रमुदयनं नायकत्वेन वा विषयत्वेन निबध्नाति। तेनाऽस्योदयन-स्थितिकाल एव स्थितिकालस्य पूर्वसीमा।

स हि प्रतिमानाटके बार्हस्पत्यमार्थशास्त्रं माहेश्वरं योगशास्त्रं तथैव मेधातिथेर्न्यायशास्त्रं तु स्मरति किन्तु नैव कौटिलीयमर्थशास्त्रं नैव च पातञ्जलं योगशास्त्रं न च वात्स्यायनीयं कामशास्त्रम्। तद्विपरीतं कौटिल्यः स्वीयेऽर्थशास्त्रे भासस्य प्रतिज्ञायौगन्धरायणे ग्रथितम्—

'नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य मा भून्नरकं स गच्छेद्यो भर्तृपिण्डस्य कृते न युध्येत्' ॥

इति पद्यमक्षरश उद्धरति। पतञ्जलिर्हि भगवान् कंसवधं, बालिवधञ्च नाटकद्वय स्मरति ये हि भासस्य बालचरितस्य अभिषेकनाटकस्य च नामान्तर-मेव। तेन हि भासस्य कौटिल्यात् पतञ्जलेश्च पूर्ववर्तित्वं सिध्यति। कौटिल्यो हि चन्द्रगुप्तस्य बिन्दुसारस्य प्रधानामात्यः। तेन हि कौटिल्यस्य समयः ३००-२१५ मित विक्रमपूर्वकालाब्दान्तरालेऽनुमितः। ( चन्द्रगुप्तस्य २७२-२४१ वि० पू०, बिन्दुसारस्य २४१-२१६ वि० पू० )।

स्वप्नवासवदत्ते उदयनस्य राज्यविवृद्धये प्रयासो वर्णितस्तथैव प्रतिज्ञा-यौगन्धरायणे उदयनस्य पितुः शतानीकस्य पितामहस्य सहस्रानीकश्चोल्लिख-तस्तथैव तस्य हि पारमेष्ठ्यलक्षणञ्च वर्णितमस्ति। यथा हि—

'राजा —देवि ! महासेनशब्दमपि न गणयति, किं सम्बन्धमभिलषति।

देवी—न गणयति ! किं बालः अपण्डितो वा।

राजा—बालः ! नत्वपण्डितः।

देवी—किन्तु खल्वेनमुत्सेकयति।

राजा —उत्सेकयत्येनं प्रकाशराजर्षिनामधेयो वेदाक्षरसमवायप्रविष्टो भारतो वंशः दर्पयत्येनं दायाद्यागतो गान्धर्वो वेदः। विभ्रमयत्येनं वयस्सहजं रूपम्, विस्रम्भयत्येनं कथमप्युत्पन्नोऽस्य पौरानुरागः।'

वर्णनमिदं निश्चितमेव कवेरस्योदयनसभाकवित्वं साधयति। न हि राजान्तराश्रितः कविरमुमित्थं वर्णयेत्। कालिदासेन हि रघूणां वंशस्तथा

वर्णितस्तत्र तु पौराणिकत्वं स्वाश्रयस्य विक्रमस्य राज्ञस्तदन्वयवर्तित्वसाधनञ्च तथावर्णने प्रयोजनम्, कामं रघुवंशस्यापूर्णत्वेन तथा साधितं नैव दृश्यते।

कालिदासेन हि विक्रमसमकालिकेन प्रथितयशस्कत्वेन सम्मतो भासः उदयनसमकालिक इति नैवाविश्वासभूमिः।

भासो हि कतिपयेषां पाणिनीयव्याकरणासम्मतानां शब्दानां 'व्यूढोराः' इत्यादीनां व्यवहारं करोति। पाणिनिमते तु नित्यकपो विधानात् 'व्यूढोरस्कः' एव भवति। स्वयं पाणिनिरपि एतादृशान् स्वव्याकरणासिद्धान् शताधिकाञ्छब्दान् प्रयुनक्ति अष्टाध्याय्याम्। अनेनापि भासस्य पाणिनिपूर्ववर्तित्वं सिध्यति। पाणिनिर्हि धननन्दस्य समसामयिक आसीदिति कथासरित्सागरसाक्ष्येण ज्ञायते। धननन्दस्य कालः २९२-२७२ मितविक्रमपूर्वं मतः। भासस्य भाषितभाषाप्रयोगः, भाषासौष्ठवं, सरला किन्तु सरसा शैली, रसपरिपाकश्च, शब्दाडम्बरशून्यता, कथाप्रवाहश्च सर्वे सम्भूय तं हि पण्डितयुगान्नितान्तपूर्ववर्तिनं सूचयन्ति। तस्य भाषितभाषाप्रयोगो यथा—

'त्वरतां त्वरतां तावदार्याः। अद्यैव किल शोभनं नक्षत्रम्। (स्वप्न०)
एतदिदमिदमेतत्। (स्वप्न०)
धन्या खलु चक्रवाकवधूर्यान्योन्यविरहिता न जीवति।
होमिति करोत्वत्र भवान्। (स्वप्न०)
अभिलषणीया वरगुणाः। (प्रतिज्ञा०)'

दिनान्तवर्णनं यथा—

'खगा वासोपेताः सलिलमवगाढो मुनिजनः
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम्।
परिभ्रष्टो दूराद्रथमपि च संक्षिप्तकिरणो
रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम्' ॥ (स्वप्न० १।१६)

एतैश्चान्यैः प्रमाणैर्भासस्य हि विक्रमपूर्वं ४५० मितवर्षमभितो भासस्य स्थितिकाल इति। अत्रेदमपि चिन्तनीयं यद्भासः प्रतिज्ञायौगन्धरायणे काशिराजस्यानेकशः स्मरति। काशी हि अजातशत्रोः समये एव स्थायिरूपेण मगधसाम्राज्ये सम्मिलिताऽऽसीत्। अत एवापि तस्याजातशत्रोः पूर्ववर्तित्वं सिध्यति। अवन्तिनरेशस्य प्रद्योतस्य महासेनस्याऽप्ययमेव स्थितिकालः।

यत्तु वर्नेटमहोदया मत्तविलासाख्येन ग्रन्थेन सह भासरूपकाणां सम्बन्धमवधार्य भासं वैक्रमाष्टमशतकभवं मन्यते यच्च विण्टरनिजस्टेनकोनोप्रभृतयो भासरूपकगतप्राकृतस्वरूपमाधारीकृत्य भासं कालिदासाश्वघोषयोरन्तराल-

र्वतिनमत एव वैक्रमतृतीयशतकाभ्यर्णभवं मन्यन्ते तत्सर्वं दुर्भाग्यमेव काव्य-जगतः। तथैव भासस्य चारुदत्तं मृच्छकटिकस्य संक्षेपमात्रं मत्वा महामहोपाध्यायो रामावतारशर्मा भासं वैक्रमद्वादशशतकोत्तरार्द्धभवं मन्यते तदस्मानाश्चर्ययति।

तथ्यं तु निहितं गुहायाम् किन्तु पञ्चरात्रस्य महाभारतादावप्यवर्णित-कथा तु भासं ततोऽपि प्राचीनं सूचयन्ति। एकाधिकभासानां कल्पना तु अन्यैव किन्तु प्रतिज्ञायौगन्धरायण-स्वप्नवासवदत्त-पञ्चरात्रप्रभृतिरूपकाणां प्रणेता भासस्तु कथमपि विक्रमपूर्वतृतीयशतकपश्चाद्वर्तीति न सम्भवति।

भासस्य सन्ति विंशत्यधिकरूपकाणि प्रथितानि। तेषु हि कानिचिन्महाभारताश्रितानि कतिचित्तु रामायणाश्रितानि अथान्यानि तु उदयनचरिताश्रितानि ततोऽन्यानि लोककथाश्रितानि च सन्ति। तथैव सन्ति च कानिचित्स्वकल्पितवृत्ताश्रितानि च। तेषु हि—

रामायणमूलकेषु प्रतिमानाटकमभिषेकश्च। महाभारतमूलेषु मध्यम-व्यायोग-दूतघटोत्कच-कर्णभार-ऊरुभङ्ग-दूतवाक्यादीनि। भागवताश्रितं बाल-चरितम्। कल्पितेतिवृत्तं हि दरिद्रचारुदत्तमविमारकञ्च। प्रतिज्ञायौगन्धरायणः स्वप्नवासवदत्ताख्ये उदयनसम्बद्धे। केचित्तु प्रतिज्ञायौगन्धरायण-स्वप्नवासवदत्त-अविमारकाणि वृहत्कथामूलकानि मन्यन्ते तत्कपोलकल्पनैव। तद्विपरीतमेतत्सम्भवति यद्बृहत्कथायामेतेभ्य एव कथा सङ्गृहीता स्यात्। अथैतेषां संक्षेपेण परिचयोऽत्रोपस्थाप्यते।

( क ) **प्रतिज्ञायौगन्धरायणम्**—प्रतिज्ञायौगन्धरायणं हि भासस्य प्रथमा कृति-स्वप्नवासवदत्तस्य पूर्वपीठिका च। अत्र हि वत्सराजस्योदयनस्य वासव-दत्ताहरणवृत्तान्तं वर्णितमस्ति। इदं हि चतुर्ष्वङ्केषु विभक्तम्। नायकोऽस्य यौगन्धरायणो वृत्तफलस्वाम्युदयनः। शत्रुवशीभूतस्योदयनस्य मोक्षाय यौगन्धरायणः प्रतिज्ञानीते करोति च स्वप्रतिज्ञां पूर्णामिति ग्रन्थोऽयमन्वर्थ-नामा। ग्रन्थमेवामुमनुकरोति विशाखदत्तो मुद्राराक्षसे।

( ख ) **स्वप्नवासवदत्तम्**—षष्ठेष्वङ्केषु विभक्तमिदं रूपकं भासस्य सर्वोत्कृष्टा कृतिः। आरुणिनाऽपहृतां वत्सभूमिमुद्दिधीर्षुर्यौगन्धरायणो हि उदयनमन्त्री मगधेशानुकूलनाय तेन सह सम्बन्धाकाङ्क्षया वासवदत्ता दग्धेति मिथ्या प्रचारेण सर्वान् वञ्चयित्वा उदयनस्य मगधराजपुत्र्या पद्मावत्या सह परिणयमारचयति। ततश्च मगधेशसाहाय्येन रूमण्वान् आरुणिं निपात्य उदयनस्य राज्यं पुनः प्रत्यावर्तयति। काले वासवदत्ता च पुनरात्मानं प्रकटी-करोति। दग्धेति मतां वासवदत्तामुदयनः स्वप्ने पश्यतीत्यस्य ग्रन्थस्य स्वप्न-

वासवदत्तमिति नामान्वर्थम्। कृतावस्यां भासः सर्वात्मना स्वमवतारयति। अत्र हि तस्य वर्णनानैपुण्यं स्वाभाविकचित्रणं प्रसङ्गानुकूलभाषाप्रयोगः सरसता सरलता चोदाहरणीयाः सर्वत्र। ग्रन्थमेवामुमनुजीवति रत्नावल्यां श्रीहर्षः। तत्र पद्मावतीस्थाने रत्नावली सागरिकारूपेणोपस्थापिता।

**३. अविमारकम्**—अविमारकं हि षट्स्वङ्केषु विभक्तं रूपकम्। अत्र हि काशीयुवराजस्य सौवीरराजधर्मपुत्रस्याविमारकस्य कुन्तीभोजराजकुमार्या कुरङ्ग्या सह प्रेमलीलोपवर्णिताऽस्ति। अत्र हि न तथा रचनाचमत्कारः प्रतिभाति। सम्भवति भासो हि स्वीयामेव व्यथामत्र प्रकटीकरोति। कृतेरस्या भासप्रणीतत्वापत्तिरपि न तथा युक्तिहीना।

**४. चारुदत्तम्**—चारुदत्तं हि नाटकं चतुर्षु अङ्केषु विस्तारितम्। अत्र हि उज्जयिन्याश्चारुदत्तस्य वसन्तसेनाख्यया वेश्यया सह प्रेमविनिमयो वर्णितोऽस्ति। कृतिरियं स्वजातौ प्रथमा यतो हि राजेतरः कश्चिद्विप्रोऽत्र नायकत्वेनोपस्थापितः। अपूर्णमिदं नाटकं भासस्य चरमा कृतिः। अत्र हि चारुदत्तेन सह वसन्तसेनाया अभिसारनिमित्तकव्यवस्थापर्यन्तैव कथाऽस्ति। तदनुवर्तिना विशालेशेन शूद्रकेन मृच्छकटिकं प्रणीय कथैषा पूरिताऽस्ति।

**५. प्रतिमानाटकम्**—सप्ताङ्के नाटकेऽस्मिन् रामवनगमनपर्यन्ता कथा संक्षेपेणोपवर्णिताऽस्ति।

**६. अभिषेकनाटकम्**- षडङ्कात्मकं हि नाटकमिदं प्रतिमानाटकस्योत्तरार्द्धम्। अत्र हि रामायणे किष्किन्धा—सुन्दरयुद्धकाण्डगता कथा संक्षिप्योपवर्णिताऽस्ति। इदमेव बालिवधसंज्ञयाऽपि व्यपदिश्यते।

**७. बालचरितम्**—बालचरितं हि भागवताश्रितं नाटकम्। इदमेव कंसवधसंज्ञयाऽपि व्यपदिश्यते। अत्र हि कृष्णस्य जन्मत आरभ्य कंसवधपर्यन्ता कथोपवर्णिताऽस्ति।

**८. ऊरुभङ्गम्**—रूपकमिदमेकाङ्कि। अत्र हि दुर्योधनस्योरुभङ्गपर्यन्ता कथोपवर्णिताऽस्ति। सम्भवत इदमेव हि संस्कृतसाहित्ये प्रथमं दुःखान्तनाटकम्।

**९. दूतवाक्यम्**—एकाङ्किनाटकमिदं श्रीकृष्णस्य पाण्डवदौत्यकथासम्बद्धम्।

**१०. पञ्चरात्रम्**—अत्र हि त्रयोऽङ्काः। अत्र हि यज्ञावसाने द्रोणो दक्षिणारूपेण पाण्डवेभ्योऽर्द्धराज्यप्रदानं वृणुते। दुर्योधनोऽपि यजमानः पञ्चरात्राभ्यन्तरे पाण्डवागमने तथाकरणाय प्रतिजानीते। द्रोणस्य प्रयासेन पाण्डवास्तत्रोपतिष्ठति यथाप्रतिश्रुतं हि राज्यार्ध्यं दुर्योधनस्तेभ्यः प्रयच्छति। कथैषा महाभारतकथया सह विवदते।

**११. दूतघटोत्कचम्**—एकाङ्केऽस्मिन् रूपकेऽभिमन्युवधानन्तरं श्रीकृष्णः सन्धिप्रस्तावाय घटोत्कचं दूत्ये नियुनक्ति। सोऽपि धृतराष्ट्रसकाशं गत्वा सर्वं निवेद्य कृतानादरो दुर्योधनेन पुनः प्रत्यागच्छति।

**१२. कर्णभारम्**—एकाङ्के रूपकेऽस्मिन् कर्णस्य ब्राह्मणरूपधारिणे शक्राय कवचकुण्डलदानेन सह सम्बद्धा कथा वर्णिताऽस्ति।

**१३. मध्यमव्यायोगः**—व्यायोगेऽस्मिन् भीमेन घटोत्कचाद् ब्राह्मणपुत्र-रक्षणं भीमस्य हिडिम्बया सह पुनर्मिलनञ्च वर्णितमस्ति। व्यायोगेऽस्मिन्नस्ति लोकमणिदाहालस्य कलाख्या टीका।

एतदतिरिक्तमपि भासस्य कृतित्वेन सप्तान्यानि नाटकान्यपि स्मर्यन्ते येषु वीणावासवदत्ता यज्ञफलञ्चापि। तदतिरिक्तमपि भासस्य कृतित्वेन स्मर्यते महाकाव्यमपि। यथा हि समुद्रगुप्तस्तं भासमानमहाकाव्यः कृतिविंशति-नाटकः। इति स्तौति। बहवो हि श्लोका भासप्रणीता इति यत्रतत्रोद्धृता दृश्यन्ते, येषां हि त्रयोदशे एव रूपके न दृश्यते प्रतिष्ठा। तेनाऽपि भासस्य कृत्यन्तरस्यापि सम्भावनोदेति।

भासनाटकानां हि स्वीयमेव वैशिष्ठ्यं विद्यते येन हि ते इतरकविकृतिभ्यो वेभिद्यन्ते। यथा हि बाणभट्टः स्मरति—

'सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव।' इति।

कथनेनानेन भासरूपकाणां त्रिविधं वैशिष्टचं स्मर्यते यत्रेषामारम्भः सूत्र-धारद्वारैव भवति न तु नान्दीतः, तत्र हि सुविस्तृता कथा वर्ण्यते पात्राणां बाहुल्यञ्च तथैव तत्र पताका विशेषेण विरचिताऽस्ति।

भासरूपकवैलक्षण्यञ्च यथोपसंहृतं समालोचकैः:—

१. भासरूपकाणि हि सूत्रधारकृतारम्भाणि सन्ति। नाटकान्तरे तु प्रथमं नान्दीपाठो दृश्यते तत एव सूत्रधारप्रवेशः।

२. तस्य हि रूपकेषु प्रस्तावनास्थाने 'स्थापना' पदप्रयोगो दृश्यते।

३. भासरूपकेषु सुविस्तृतं कथावस्तु दृश्यते बहुषु पात्रेषु व्याप्तम्। अस्य रूपकाणामुद्देशः कथाविस्तार एव न तु तन्माध्यमेन पाण्डित्यप्रदर्शनम्।

४. अस्य हि रूपकेषु प्ररोचनाया नितान्तमेवाभावः। सा हि प्रस्तावनाया आदिमो भागो यत्र कवेः कृतेश्च परिचयो दीयते यथा रूपकान्तरेषु दृश्यते।

५. अस्य कतिपयेषु विशेषतः प्रतिज्ञायौगन्धरायण-स्वप्नवासवदत्त-पञ्च-रात्रोरुभङ्गप्रतिमाख्येषु प्रारम्भिकं पद्यं मुद्रालङ्कारमण्डितं दृश्यते यत्र हि मुख्यमुख्यपात्राणां नामोल्लेखः कियते। यथा स्वप्नवासवदत्ते—

उदयनवेन्दुसवर्णावासवदत्तावलौ बलस्य त्वाम् ।
पद्मावतीर्णपूर्णौ वसन्तक्रमौ भुजौ पाताम् ।

अत्र हि उदयन-वासवदत्ता-पद्मावती-वसन्तकानां भङ्ग्यन्तरेण नामोल्लेखः । एतादृशं वैशिष्ट्यं नाटकान्तरे प्रायो न लभ्यते ।

६. एषु हि भरतवाक्ये न तथा वैशिष्टचम् । कतिपयेषु तु तस्याभावोऽपि दृश्यते ।

७. अस्य हि नाटकेषु स्थापनाऽतिस्वल्पा प्रायः साऽपि सर्वत्र समानैव 'आर्यमिश्रान् विज्ञापयामि' इत्याद्या ।

८. अस्य हि एकमेव पात्रमेकाधिकनाटकेषु, दृश्यते । यथा प्रतिहारिणी विजया चतुर्षु नाटकेषु, कञ्चुकी बादरायणः प्रतिज्ञायौगन्धरायणे दूत-वाक्ये च ।

९. एषु हि सुवदना दण्डकप्रभृत्यप्रचलितच्छन्दसामपि प्रयोगो दृश्यते प्रायोऽनुष्टुभो बाहुल्यञ्च ।

१०. तस्य कृतिषु व्यङ्ग्यस्य बाहुल्यं बहुधा प्रसर्पति । अत एव सर्वत्र पताकास्थानकप्रयोगो दृश्यते ।

११. अस्य प्रायः सर्वास्वेव कृतिषु भाषिकसमानता रीतिसाम्यञ्च दृश्यते । तथैव तेषु उपमोत्प्रेक्षादीनामलङ्काराणाञ्च सर्वत्र प्रयोगो विलसति सामान्यतः । कथ्यतेह्यस्य रूपकेषु १२७ सङ्ख्याकवाक्यानि सर्वत्र समानानि दृश्यन्ते यथाऽन्विष्टं सुक्थङ्करमहाभागेन ।

१२. अस्य हि कृतिषु अपाणिनीयानामार्षाणाञ्च पदानां प्रयोगबाहुल्यं दृश्यते यथा 'व्यूरोढाः' इत्यादि ।

१३. भासस्य रूपकाणि प्रायः परस्परसम्बद्धानि दृश्यन्ते । यथा स्वप्न-वासवदत्तं प्रतिज्ञायौगन्धरायणस्योत्तरभागः । तथैव अभिषेकनाटकं प्रतिमा-नाटकस्य । एवमेव दूतवाक्य-कर्णभार-ऊरुभङ्गाख्यानि च प्रायः परस्पर-सम्बद्धान्येव ।

सत्यपि तथास्पष्टे भासरूपकवैशिष्टचे सत्यपि तथात्वे बाणप्रभृतीनां साक्ष्येऽपि केचित्समालोचका गणपतिशास्त्रिप्रकाशितत्रयोदशरूपकाणां भास-प्रणेतृत्वं नैव मन्यन्ते । तेषु हि कार्पेमहाभागोऽग्रणीः । किन्तु ते विस्मरन्ति यद्बाणभट्टः सूत्रधारकृतारम्भबहुकथबहुपात्रपताकास्थानकाकीर्णरूपकाणां भासप्रणीतत्वं स्पष्टमेव मन्यते । दण्डी च 'लिम्पतीव तमोऽङ्गानि वर्षती-वाञ्जनं नभः' इति पद्यमुद्धरति भासनाटकगतम् । गौडवधस्य प्रणेता वाक्प-तिराजोऽपि भासं ज्वलनमित्रत्वेन स्मरति । तदधिकं, प्रथमकाव्यशास्त्री

भामहः प्रतिज्ञायौगन्धरायणगतं अनेन मम भ्राताहतः' इत्यादिकथनं 'हतोऽनेन मम भ्राता ममपुत्रः पिता च मे इति श्लोकबद्धमुद्धरति। वामनाचार्यो हि भासस्य सप्तश्लोकास्तत्र तत्रोद्धरति। यथा व्याजोक्त्यलङ्कारनिदर्शने स्वप्नवासवदत्तगतं—शरच्छशाङ्कगौरेण—इति पद्यमेव मन्यानपि। राजशेखरस्तु स्वप्नवासवदत्तं नाम्नैव स्मरति। यथा—

भासनाटकचक्रेऽपि छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः।'

इनि। अभिनवगुप्तपादोऽपि स्वप्नवासवदत्तं स्मरति। भोजराजोऽपि शृङ्गारप्रकाशे स्वप्नवासवदत्तगतं वाक्यमक्षरश उद्धरति। नैतावन्मात्रं कालिदास एव भासं प्रथितयशस्कं नाटककारं मन्यते। कौटिल्योऽपि तस्य प्रतिज्ञायौगन्धरायणगतं 'नवं शरावं' इति पद्यमुद्धरति। सत्स्वपि प्रमाणेष्वेतेषु विद्यमानेषु कश्चिद्धि स्वप्रकर्षसाधनाय भासं द्वादशशतकभवं वा नाटकचक्रं वाक्यारसम्बद्धं च मन्यते तदा किमेवं वक्तव्यमवशिष्यते।

वयमेव सर्वतोभावेन रूपकचक्रमिदं भासप्रणीतं तथा भासस्योदयनसमकालिकत्वमत एव विक्रमपूर्वं चतुर्थशतकभवमपि मन्यामहे।

यानि हि खलु वैशिष्टचानि नाटचस्यावश्यकतत्त्वरूपेण निरूपितानि काव्यविद्भिर्यथा घटनैक्यं तत्सार्थकता, तस्याः ससरम्भा गतिः, कवित्वं चरित्रचित्रणं स्वाभाविकता च तानि हि सन्ति मूर्तीकृतानि भासरूपकेषु। भासस्य कृतौ सर्वत्र विलसति प्रासादिकता। तत्र विकटबन्धक्लिष्टकल्पनाश्लेषभार-समासभूयस्त्वादीनि निकाममेव नैव दृश्यन्ते। तत्र तु नाटचानुरूपा कथा, कथानुरूपा तस्या गतिः, गत्यनुसारं पात्रयोजना, यात्रानुसारिणी भाषा, भाषानुसारिणी अलङ्कारयोजना च दृश्यते बाहुल्येन। कथायाः सादृशः स्वाभाविको विकाशः, पात्राणां तथा कथानुकूलनं विरलमेवान्यत्र दृश्यते।

## २. सुबन्धुः वत्सराजचरितम्

चन्द्रगुप्तसुनस्य विन्दुसारस्य मगधेशस्य सभाकविः काश्मीराभिजनः सुबन्धुः वत्सराजचरिताख्यं नाटकं व्यधादिति समुद्रगुप्तस्य—

व्याहारसौष्ठवमुदाररसं महार्थं
यन्नाटकं सुरभिगर्भितनाटकञ्च।
तद्वत्सराजचरितं मृदुभावहारि
कृत्वा सुबन्धुरभवत्कृतीनां वरेण्यः॥

इति वचनाज्ज्ञायते। सम्प्रति तन्नैवोपलभ्यते किन्तु समुद्रगुप्तेन तदवश्य-

मेव दृष्टं भवति। यतो हि स तद् व्याहारसौष्ठवोदाररसमहार्थं-गर्भित-नाटकादिविशेषणैः स्तौति।

सुबन्धुर्हि बिन्दुसारस्य मगधेश्वरस्य सभाकविरासीदिति।

'बिन्दुसारस्य नृपतेः स बभूव महाकविः।
किन्तु सेहे न तद्गर्वं तिरञ्चक्रे च तां सभाम्॥
उरगामे नृपे तस्मिन् क्रुद्धे बन्धयितुं कविम्।
सरस्वती मोचयामास तं देशं सोऽप्यजत्तदा॥
विद्वान् जयी वत्सराजो दृष्ट्वा वैदुष्यमुत्तमम्।
पञ्चग्रामान् ददौ तस्मै निजां भगिनिकां तथा॥'

इति समुद्रगुप्तकथनात् तथैव—

'सुवन्धुः किल निष्क्रान्तो बिन्दुसारस्य बन्धनात्।
तस्यैव हृदयं बध्वा वत्सराजः ‥ … …'

इति अवन्तिसुन्दरीकथायाभुक्तत्वाच्च ज्ञायते।

एतदनुमीयते यत्सुबन्धुर्मगधेश्वरस्य विन्दुसारस्य सभाकविरासीत्। कवयो हि स्वभावेनैव गुणपक्षपातिनः। तेन हि स्वनाटके सर्वजनप्रिय उदयनो नायकत्वेन वर्णितः। तस्य हि तथाचिन्तने भासस्य रूपकाणि तथैव जनमानसे उदयनस्य स्थानञ्च प्रेरकत्वेनास्तामेव। उदयनस्य लोकप्रियत्वं तु प्रतिज्ञा-यौगन्धरायणे 'विस्रम्भयत्येनं कथमप्युत्पन्नः पौरानुरागः' इति कथनात् कालिदासस्य 'प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्' इति कथनेन च ज्ञायते। ततः पञ्चशतकोत्तरार्द्धभवः कालिदासस्तमित्थं स्मरति चेत्ततोऽपि द्विशतकपूर्ववर्तिना सुबन्धुना स उपवर्णित इति किमाश्चर्यम्। किन्तु राजानो हि प्रकृति कृपणाः स्वभावतः परोत्कर्षं नैव सहन्ते एव। अपरञ्च वत्समगध-योरासीत्प्राचीनो विद्वेषः। मगधेशेन शिशुनागेन वत्सदेशो मगधसाम्राज्ये समावेशित आसीत्। पुनश्च धननन्द समये स स्वाधीनः सञ्जात आसीत्। विन्दुसारो हि तस्य पुनर्मगधेष्वेव विलयने कृतप्रयत्नस्त्वासीदेव। स हि स्वसभाकविना तथा विधेन स्वशत्रुराजकीर्तिवर्णनं विन्दुसारः सोढुं नाशकत् तेन हि स कविर्बन्धने निक्षिप्तः। किन्तु तस्य पत्नी सरस्वती स्वयमपि कव-यित्री कवेर्मर्म जानाति स्म। तेन हि तया कथञ्चिदेव बन्धनान्मोचितः कविः। मुक्तश्च स वत्सानेव जगाम। तत्र हि राज्ञा कृतसत्कारः स सुखमव-सत्कृतदारो व्यरचयच्च तत्रैव वासवदत्ताख्यं प्रथमगद्यमहाकाव्यञ्च। तेन हि २५० मित विक्रमपूर्ववत्सरमभितस्तस्य स्थितिकालः। एतदधिकं तद्विषये न किमपि ज्ञातम्।

३. शूद्रकः मृच्छकटिकम्

भासनाटकचक्रमादाय यथा पण्डितेषु भासप्रणीतत्वं तेषां स्याद्वा न वेति विवादस्तथैव शूद्रकस्य मृच्छकटिकमादायापि। अत्रापि विवादस्य द्वौ पक्षौ स्तः। एकः शूद्रकस्थितिकालसम्बद्धः अपरस्तस्य मृच्छकटिककृत्त्वसम्बद्धः। केचिच्छूद्रकं कल्पितमनुष्यं मन्यन्ते केचिदैतिहासिकं विदिशापतिम्। विषयेऽस्मिन् समुद्रगुप्तः कथयति स्वीये कृष्णचरिते राजकविवर्णनप्रसङ्गे—

पुरन्दरबलो विप्रः शूद्रकः शस्त्रशास्त्रवित्।
धनुर्वेदं चौरशास्त्रं रूपके द्वे तथाऽकरोत्॥
स विपक्षविजेताऽभूच्छास्त्रैः शस्त्रैश्च कीर्तये।
बुद्धिवीर्ये नास्य वरे सौगताश्च प्रसेहिरे॥
स तस्तारारिसैन्यस्य देहखण्डैः रणे महीम्।
धर्माय राज्यं कृतवान् तपस्विव्रतमाचरन्॥
शस्त्रैर्जितमयं राज्यं प्रेम्णाऽकृत निजगृहम्।
एवं ततस्तस्य तदा साम्राज्यं धर्मशासितम्॥
तत्कथां कृतवन्तौ तौ कवीरामिलसौमिलौ।
तस्यैव सदसि स्थित्वा तौ मानं बह्ववाप्नुताम्॥
सतां मतः सोऽश्वमेधं कृतवानुरुविक्रमः।
वत्सरं स्वं शकाञ्जित्वा प्रावर्तयत वैक्रमम्॥
भूयः स मृच्छकटिकं नवाङ्कं व्यधात्।
व्यधात्तस्मिन् स्वचरितं विद्यानयबलोर्जितम्॥
तदार्यंजयकं नाम्ना ख्यातिं विद्वत्स्वविन्दत।
एवं ब्रह्मक्षत्रतेजोराशिरासीत्स शूद्रकः॥
उपवेश्य निजं पुत्रं देवमित्रं निजासने।
वार्धके मुनिवृत्त्यैव नयन् कालं वनं ययौ॥
तस्याभवन्नरपतेः कविराप्तवर्णः
श्रीकालिदास इति योऽप्रतिमप्रभावः।
दुष्यन्तभूपति कथां प्रणयप्रतिष्ठां
रम्याभिनेयं भरितां सरसाश्चकार॥
शाकुन्तलेन स कविर्नाटकेनाप्तवान् यशः।
वस्तुरम्यं दर्शयन्ति त्रीण्यन्यानि लघूनि च॥ (६-१६)।

तथैव अवन्तिसुन्दरीकथायामुक्तं—

शूद्रकेनासकृज्जित्वा स्वच्छया खड्गधारया।
जगद्भूयोऽप्यवष्टब्धं वाचा स्वचरितार्थया॥ (९)

एभिरुद्धरणैः शूद्रकस्य विषये कतिपयानि तथ्यानि स्पष्टीभवन्ति यदसौ वास्तविकः पुरुषो न तु काल्पनिकः। असौ हि स्वबाहुवीर्येणार्जितां भुवं बुभुजे न तु क्रमागतम्। असौ हि विप्र आसीत् अनेन हि शकाञ्जित्वा तानपसार्य वैक्रमः संवत्सरः प्रवर्तितः। अस्य सभायां रामिलः सौमिलः कालिदासश्च कवय आसन्नाश्रिताः। अनेनाश्वमेधोऽपि विहितः। अस्य पुत्रो देवमित्राख्यः। असौ हि विचक्षणोऽप्यासीत्। अनेन हि धनुर्वेदं चौरशास्त्रं, द्वौ रूपकग्रन्थौ तदतिरिक्तं मृच्छकटिकं नाम नवाङ्कं नाटकमपि प्राणायिषत। मृच्छकटिकं हि तस्य निजचरितमेव। ततः प्रभृति तस्य नाम आर्यजयकमपि प्रचलितमभूत्। मृच्छकटिके आर्यकस्य गोपालोपरि विजयो राज्यप्राप्तिश्च तस्य कवेःस्वचरितमेव। तेनाऽपि तथैव म्लेच्छाश्रयं पालकमपाकृत्य स्वयमेव राज्यं शासितमिति। इत्थं हि शस्त्रेण तेन भूमिरवाप्ता स्वचरितार्थया वाचा यशश्च। स हि वार्द्धक्ये पुत्रं देवमित्रं राज्ये संस्थाप्य तपसे वनं प्रविष्टः। उक्तमेव मृच्छकटिके—

ऋग्वेदं सामवेदं गणितमथ कलां वैशिकीं हस्तिशिक्षां
ज्ञात्वा शर्वप्रसादाद् व्यपगततिमिरे चक्षुषी चोपलभ्य।
राजानं वीक्ष्य पुत्रं परमसमुदयेनाश्वमेधेन चेष्ट्वा
लब्ध्वा चायुः शताब्दं दशदिनसहितं शूद्रकोऽग्निं प्रविष्टः॥ (१।४)

अत्र 'अग्निं प्रविष्टः' इत्येतस्य 'आत्मदाहं चकार वा' 'मृतः' इत्याशयं गृहीत्वा केचन पाण्डित्याभिमानिनः 'स्वं निधनं न कोऽप्युद्घोषयितुं प्रभवति' इति समालोच्य काव्यमिदं केनचिच्छूद्रकनाम्ना प्रणीतमिति साधयन्ति। वस्तुतोऽग्निं प्रविष्टः इत्येतस्याशयस्तु वानप्रस्थमगादित्याशयो बोध्यते। 'वार्धक्ये मुनिवृत्त्यैव नयन् कालं वनं ययौ' इति कथयित्वा समुद्रगुप्तोऽपि तथैव समर्थयति। 'विहाय लक्ष्मीपतिलक्ष्मकार्मुकं जटाधरः सन् स जुहाव पावकम्' इति पद्यस्यास्य परमार्थः। बाणभट्टोऽमुं विदिशत्वेन कादम्बर्यां स्मरति। आवन्तिकाख्यः कविः शूद्रकजयं ग्रन्थं प्रणीय आवन्तिकं घोषयति। एतत्तु सुनिश्चितमेव यदसौ दाक्षिणात्याभिजनः। असौ हि वायुपुराणे सिन्धुक इति, मत्स्यपुराणे शिशुक इति, विष्णुपुराणे शिप्रक इति भागवते च अन्ध्रः शूद्रः वृषल इति च नाम्ना व्यपदिष्टः। अनेन हि कण्ववंश्यं सुशर्माणं हत्वा राज्यं हस्तगतमकारि। असौ हि महाशैव आसीत्। तं हि भागवता वृषलं कथयन्तीति किमाश्चर्यम्। स्कन्दपुराणे त्वयं शूद्रक एव कथितः। यथा—

'त्रिषु वर्षसहस्रेषु कलेर्यातेषु पार्थिवः।
शूद्रको नाम वीराणामधिपः सिद्धिमित्तकः॥'

इति । अमरकोषटीकाकृत् क्षीरस्वामी हि शूद्रकं चक्रवर्तिष्वेकं गणयति । यथा—

'……विक्रमादित्यः साहसाङ्कः शकान्तकः ।
शूद्रकश्चाग्निमित्रो वा हालः स्याच्छालिवाहनः ॥'

इति । तथैव वाक्यपदीयस्य स्वोपज्ञटीकायां भर्तृहरिरपि शूद्रकं स्मरातीत्थं—'लोकेऽपि राजपुरुष इत्युक्ते कस्य राज्ञः शूद्रकस्येति ।' एवं सदाश्रयोऽपि काव्यादर्शटीकायां—सदाश्रयं—हर्षशूद्रकोदयनादिसत्पुरुषतमाश्रयम् इति तं स्मरति वामनाचार्योऽपि तं स्मरति । यथा—

'शूद्रकादिरचितेषु प्रबन्धेषु अस्य भूयान् प्रपञ्चो दृश्यते । इति ।

यदि तथा, कालिदासः शूद्रकसभाकविसौमिल्लं स्मरति तदाश्रयभूतं शूद्रकं कथं न स्मरतीत्यपेक्षायां कथ्यते यत्कालिदासस्तत्र प्रसिद्धान् नाटककारानेत्र स्मरति । मृच्छकटिकं तु शूद्रकस्य चरमा कृतिरर्थाद् राज्यत्यागानन्तरमेव तेन प्रणीनमिदम् । सा कृतिः कालिदासस्य नैव नयनपथमागता भवेदथवा मालविकाग्निमित्रस्य रचना मृच्छकटिकरचनाया प्रागेव सञ्जाता । कथ्यते हि शूद्रकस्य स्थितिकालो विक्रमयुगारम्भात्सप्तविंशतिवर्षमितपूर्वकाल एव । तस्य च शूद्रक इति नाम यथाऽशोकस्य देवानां प्रिय इति । यदेव प्रचलितं तदेव तेनापि धारितम् । वस्तुतस्तु तस्य नाम शिमुक इति केषाञ्चिन्मतम् । पिशेलमहाभागो दण्डिनमस्य प्रणेतारं मन्यते तस्य काव्यादर्शे 'लिम्पतीव तमोऽङ्गानि'…इति पद्यस्य दर्शनात् । किन्तु तन्नैव युक्तियुक्तं प्रतिभाति यतो हि तथा सति प्रस्तावनायां शूद्रकविषयकचर्चा किंकृता सम्भवति । लेवी महाभागस्तु मृच्छकटिकं कस्याप्यन्यस्य कवेः कृतिं शूद्रकनाम्ना ख्यातां मन्यते किन्तु स तथाकरणे कारणं तु नैव प्रस्तोतुं प्रभवति । कीथमहोदयस्तु शूद्रकमेव काल्पनिकं मन्यते किन्तु एतत्सम्भवति यत्तेन समुद्रगुप्तस्य कृष्णचरिते तस्योल्लेखो नैव दृष्टः स्यात् । स हि नितान्तमेवैतिहासिको राजा भासानन्तरवर्ती कालिदाससमकालीनश्च । नेरूरकरमहाशयस्तु मृच्छकटिकमपिभासस्यैव कृतिं मन्यते चारुदत्तस्योत्तरार्द्धत्वेन । तर्कोऽयं तर्कान्तरापेक्षया मननीयं प्रतिभाति यतो हि भास उदयनसभाकविरिति तु पूर्वं प्रतिपादितमेव । मृच्छकटिके समुल्लिखितौ पालकार्यकौ प्रद्योतस्यावन्तिकस्य वंश्यौ । प्रद्योतस्य गोपालपालकाविति द्वौ सुतौ । पालको हि गोपालं घातयित्वा प्रद्योतानन्तरं राज्यमपहरति । गोपालकसुत आर्यकः पितृवधप्रतिशोधाय प्रयतमानः पालकपुरुषैः गृहीतः कारागारे सबन्धनं निक्षिप्यते । आर्यकः कथञ्चित्ततः पलायित्वा वहिरागत्य पालकं हत्वा राज्यं गृह्णाति । उदयनस्य विवाहकाले एव प्रद्योतो-

ऽतिवृद्ध आसीत्। तेन सम्भवति भाससमये एव सा घटना घटिता भवेत्। अपरञ्च, भासस्य प्रतिज्ञायौगन्धरायणस्वप्नवासवदत्ते, प्रतिभानाटकाभिषेकनाटके चान्योन्यस्य पूर्वापरभागौ दृश्येते। तथैव चारुदत्तस्योत्तरार्द्धत्वेनेदमपि प्रणीतं सम्भवति। किन्तु तत्र शूद्रकस्योल्लेखस्य सङ्गतिर्नैव तिष्ठति। यदि हि नाटकमुख्यभागो भासप्रणीतः प्रस्तावनाभागश्च पश्चादन्येन तथा संयोजित इति कथ्यते चेदपि तन्न युक्तियुक्तं प्रतिभाति। समुद्रगुप्तो हि स्पष्टमेव शूद्रकस्यास्तित्वं तस्य मृच्छकटिकस्य कर्तृत्वञ्च स्मरति।

मृच्छकटिके हि वैदिकधर्मेण सह बौद्धधर्मोऽपि सादरमादृतो दृश्यते। तत्र बौद्धभिक्षोः संवाहकस्योपस्थितिस्तथैव सूचयति। एतद्धि विक्रमसमकालकालमभित एव सम्भवति। राजतन्त्रस्य दौर्बल्यञ्च तस्मिन्नेव युगे आसीत्। अपरश्च ग्रन्थोऽयं भरतप्रणीतप्राकृतप्रयोगनियमं दृढतयानुकरोति तथैवायं वररुचेः प्राकृतव्याकरणंप्रणयनाय दृढाधारश्च। भासो हि न तु भरतप्रणीतनाट्यनियमाननुयाति नैवं च तत्कृतप्राकृतप्रयोगनियमं पालयति। तेन हि मृच्छकटिकं भासादनन्तरकालवर्तिनाटकं सिध्यति।

मृच्छकटिके हि सन्ति दशाङ्काः। समुद्रगुप्तस्तु नवाङ्कमिदं कथयति। सम्भवति अङ्कगणनाभ्रमो वा द्वयोरङ्कयोरेकाङ्कगणनं वा। अत्र हि चारुदत्तवसन्तसेनयोः प्रणयः पूर्वभागे चरमभागे च तयोर्मिलनं वर्णितमस्ति। चारुदत्तस्य पुत्रो रोहितको मृन्निर्मितशकटेन क्रीडितुं नैव वाञ्छति स्पृहयति च हैमशकटेन क्रीडनाय। वसन्तसेना तन्निमित्तं स्वान्याभूषणानि तस्मै प्रयच्छति यानि हि पश्चाच्चारुदत्तस्य विपत्तिनिमित्तानि भवन्ति। शकारो वसन्तसेनायै स्पृहयति राजश्यालः किन्तु सा तमपाकरोति। सोऽप्यभिमानवशात्तां गले निगृह्णाति। मृतप्रायां तां पर्णैराच्छाद्य न्यायालयं गत्वा चारुदत्तेन दरिद्रेण धननिमित्तं वसन्तसेना हतेति चारुदत्तमभियुनक्ति। चारुदत्तो हि मृत्युदण्डेन दण्ड्यते। एतस्मिन्नेवान्तरे वसन्तसेना संवाहककृतोपचारेण पुनरुज्जीविता चारुदत्तं तथाकारितं श्रुत्वा तमनुधावति। तदैवार्थकोऽपिचारुदत्तमित्रं पालकमतिकर्माणं हत्वा स्वयमेव राजा भवति उद्घोषयति च चारुदत्तस्य मोक्षम्। ततश्च कृतपरिणयौ वसन्तसेना चारुदत्तौ सुखेन तिष्ठतः।

मृच्छकटिकस्य शैली सरला सरसा च। तत्र हि रुद्रदामशिलालेखे दृश्यमाना क्लिष्टता मनागपि नैवालोच्यते। भाषाभावादिदृष्टच्येदं प्रकरणं भाससामीप्यमेव भजते पश्चाद्वर्तिकाव्यापेक्षया। शूद्रको हि न केवलं नाटककारोऽपितु सिद्धहस्तः कविश्च। अस्य प्रकरणे नाटकीयता कवित्वञ्चोभे एव स्पष्टतया प्रतिभासेते। स हि वैदर्भरीतेः कविः। दृश्यतामस्य काव्यच्छटा—

मूढे निरन्तरपयोधरया ममैव कान्तः सहाभिरमते यदि किं तवात्र।
मा गर्जितैरिति मुहुर्विनिवारयन्ती मार्गं रुणद्धि
कुपितेव निशा सपत्नी। (५।१५)।

तस्य हि वर्षर्तोर्वर्णनं भासस्य सन्ध्यासमयवर्णनेन सह नितान्तमेव साम्यं भजते। यथा—

गता नाशं तारा उपकृतमसाधाविव जने
वियुक्ताः कान्तेन स्त्रिय इव न राजन्ति ककुभः।
प्रकामान्तस्तप्तं त्रिदशपतिशस्त्रस्य शिखिना
द्रवीभूतं मन्ये वतति जलरूपेण गगनम्॥'

प्राकृतस्य सप्त भेदा अत्र प्रयुक्ता दृश्यन्ते। ते च शौरसेनी अवन्तिका-प्राच्या-मागधी-शकारी-चाण्डाली-ढक्कीतिसंज्ञिताः। अत्रत्यं हि सामाजिकं राजनैतिकञ्च चित्रणं वस्तुतो विलक्षणमेव। मृच्छकटिकं हि तादात्यसामाजिक-स्थितेरुपहास एव राजनैतिकास्थिरताया उन्नयनञ्च।

एतदतिरिक्तं शूद्रकस्य पद्मप्राभृतकभाणोऽपि कृतित्वे कथितः किन्तु ग्रन्थोऽयं सम्प्रति नैवोपलभ्यः।

### ४. कालिदासः मालविकाग्निमित्रम् अभिज्ञानशाकुन्तलं विक्रमोर्वशीयञ्च

कालिदासनामश्रवणेनैव रसिकानामन्तस्करणं द्रवतीति कथनेनैव लेशमात्रमप्यत्युक्तिः। काल्या दासोऽयं सर्वानेव सहृदयान् दासीकरोति सरसवचनैः। अस्य हि प्रथितानि त्रीणि रूपकाणि मालविकाग्निमित्रं विक्रमोर्वशीयमभिज्ञानशाकुन्तलञ्च।

महाकवेरस्य देशकालविषये पण्डिता नैकमत्यं भजन्ते। स्वयञ्च तेन न कुत्रापि तद्विषये किञ्चिन्मात्रमपि सङ्केतितम्। तस्य ग्रन्थानामाभ्यन्तरपरीक्षणेऽपि विषयेऽस्मिन्न कोऽपि प्रकाश उदेति। रूपकव्यतिरिक्तं ह्यस्य सन्ति चत्वारः काव्यग्रन्थाः कुमारसम्भव—रघुवंशमेघदूत ऋतुसहाराभिधाः। किन्तु ते सर्वेऽपि कवेरस्य देशकालविषये स्वं स्वं मृदङ्गं वादयन्ति स्वाभिमते एव ताले। कुमारसम्भवस्य कविर्गन्धमादनस्य कोणे कोणे भ्रमति येन तस्य तत्प्रान्तवासिना सिध्यति। न हि अन्यदेशीयस्तथा वर्णयितुं प्रभवति। यद्यपि कवयः क्रान्तदर्शिनस्तेषां तथापि क्रान्तदर्शिताऽपि न तथा यथार्थमाकलयितुं प्रभवति। रघुवंशकारस्तु मगधेष्वेव रमते 'कामं नृपाः सन्तु सदृशोऽन्ये राजन्वतीमाहुरनेन भूमिम्' इति कथनात्। स हि रघोर्दिग्विजयवर्णनेऽपि मगधान् नैव स्पृशति येन हि तस्य तद्देशीयता सिध्यति। ऋतुसंहारकृत्तु विन्ध्येष्वेव रमते। तेन वर्णित ऋतुस्वभावा विन्ध्ये एव सम्भवति न तु हिमवत्पार्श्वे। स

हिं वैन्ध्यवनं नाम्नापि स्मरति। मेघदूतस्य प्रणेता उज्जयिनीं प्राणाधिकां मन्यते 'वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तरस्याम्' इति कथनेन। तथैव मालविकाग्निमित्रकृत्कविरात्मानं विशालापक्षपातिनं दर्शयति। स हि पुष्यमित्रं सेनापतिनाम्ना जानाति। तस्याश्वमेधश्च स्मरति स्मरति च अग्निमित्रपुत्रेण वसुमित्रेण सिन्धुनिवासियवनध्वंसञ्च। विक्रमोर्वशीये स हि महेन्द्रादित्यराजधानीं मालवां पूजयति। अभिज्ञानशाकुन्तले कविरात्मानं मालिनीतटे एव प्रापयति। स हि तत्रत्यां भूमिं नेत्रसाक्ष्येणेव वर्णयति। विसङ्गत्यामस्यां कतमो देशः कालिदासस्येति वक्तुं नैव पार्यते। तस्य हि ग्रन्थेषु सामान्यमेतावदेव यत्स शैव आसीदद्वैतमतसमर्थकश्च। तस्य हि सर्वेऽपि ग्रन्थाः केनाऽप्युपायेन पर्वतप्रदेशं स्पृशन्त्येव। एतदाधारेणैतदनुमीयते यत्कालिदासस्य जन्म कश्मीरेभ्य आरभ्य भूतस्थानपर्यन्तं यत्र कुत्रापि पर्वतीयप्रदेशे समभवद्विशेषतस्तत्रापि केदारखण्डे यतः स हि भागीरथीमेव समधिकं वर्णयति। ततश्च स अग्निमित्र-शूद्रक-विक्रमादित्य सभामपस्थितो दृश्यते। एतेषां हि स्थितिकालस्य पूर्वापरवर्तित्वं प्रसिद्धमेव। तत्रापि कालिदासोऽग्निमित्रसभाकविरासीदिति मतं न तथोपयुक्तं प्रतिभाति यतो हि जीवितेऽग्निमित्रे कदापि नाटकस्य नायकतां स नैव स्वीकुर्यात्सम्राड् हि सः। सम्भवति तद्वंशीयस्य कस्यचिद्राज्ञस्तेन सभासत्त्वं स्वीकृतं स्यात्। तथा सत्यपि तस्य विक्रमसभासत्त्वं नैव सिध्यति। अन्तिमशुङ्गवंश्यस्य नृपतेर्विक्रमादित्यस्य समये सामान्यतोऽपि सप्तषष्टिमितवत्सराणामन्तरम्। शूद्रकस्य स्थितिकालोऽपि विक्रमकालात्सप्तविंशतिवर्षपूर्वमतः। तावदेव सम्भवति यत्कालिदासः प्रथमयौवने शूद्रकं संसेव्य उत्तरयौवने विक्रममाश्रितवानिति। रचनाप्रौढीदृष्ट्या तदपि न सम्भवति। यतो हि निश्चयमेवाभिज्ञानशाकुन्तलं तस्य चरमाकृतिर्मालविकाग्निमित्रं प्रथमा। तेन हि शाकुन्तलात्पूर्वमेव विक्रमोर्वशीयस्य रचना भवितुमर्हति विषयप्रस्तावनादृष्ट्या। अतोऽस्य तत्वं निहितं गुहायाम्। तेन हि महाजनो येन गतः सपन्था। महाजनास्त्वत्र चतुर्धा विभक्ता विक्रमानन्तरषष्ठशतकोत्तरार्द्धवादिनः वैक्रमचतुर्थशतकवादिनस्तथैव विक्रमसमकालवादिने विक्रमपूर्वकालवादिनश्च। षष्ठशतकोत्तरार्द्धवादिनो हि यशोवर्माणं वा श्रीहर्षं विक्रमशकप्रवर्तकं तथा च कालिदासं तत्सभाकविं मन्यन्ते। किन्तु मतमिदं वातभवनमेव यतो हि ततः पूर्वमपि मालवगणस्थितिवर्षगणना प्रचलिता दृश्यते। समुद्रगुप्तो हि कालिदासं प्राचीनकवित्वेन स्मरतीति चतुर्थशतकवादिमतमपि तथैवाग्राह्यम्। अपरश्च महाशैवोऽयं वैष्णवभक्तानां सभाकविरासीदित्यपि नैव सुसङ्गतम्। तथैव स हि पाण्ड्यनृपं स्मरति। विक्रमानन्तरप्रथमशतके एव पाण्ड्यदेशः शत्रुस्तद्भुत आसीत्। विक्रमसमकालिकवादिमतं तथ्यस्य

नैकट्यमालम्बते यथाकथञ्चित्। वस्तुतस्तु कालिदासस्य शूद्रकसभाकवित्वमेव सुसङ्गतं दृश्यते तथैव समुद्रगुप्तोऽपि सङ्केतयति स्वीये कृष्णचरिते। स हि रघुवशे रघोर्हूणोपरि विजय वर्णयति किन्तु रघुणा ये हूणाः पराजितास्ते भारताद्बहिरेवासन्। पारसिकविजयानन्तरं रघुर्हूणान् व्यजैषीत्। तेन हि हूणानामवस्थितिस्तदा पामीरपार्श्ववर्तिनी दृश्यते। विक्रमपूर्वद्वितीयशतकमभितो हि हूणा स्तत्रासन्निति पुरावृत्तविदो वदन्ति। तांश्च शूद्रकः विजित्य वैक्रमशकं प्रावर्तयदिति समुद्रगुप्तस्य कृष्णचरिताज्ज्ञायते। पाण्ड्यानामवस्थितिर्हूणानां पश्चिमोत्तरप्रान्तवासित्वं, क्षत्रियकन्यानां स्वयंवरविधिरुपनर्मदप्रदेशे द्वैराज्यपद्धतिश्च कालिदासं विक्रमशकप्राग्वर्तिनं साधयन्ति।

अथाऽस्य रूपकाणां संक्षिप्तिः परिचयोऽत्रोपस्थाप्यते।

(क) **मालविकाग्निमित्रम्** नाटकमिदं कालिदासस्य प्रथमकृतित्वेन प्रसिद्धम्। अत्र सन्ति पञ्चाङ्काः। ग्रन्थेऽस्मिन् शुङ्गवंश्यो युवराजः अग्निमित्रो नायको धीरोदात्तप्रकृतिको धीरललितत्वगुणसम्पन्नो नायिका च तथैव मालविकाऽऽख्या विदर्भराजकन्या। निश्चितसम्बन्धो माधवसेनो वैदर्भः स्वभगिनीं मालविकामादाय विदिशां गच्छन्मार्गे यज्ञसेनेन गृहीतो बन्धने निक्षिप्तश्च। सम्भ्रमे प्रणष्टा मालविका वीरसेनेन नर्मदादुर्गरक्षकेण धारिणीनिमित्तं विदिशां प्रेषिता भवति। महामहिषी धारिणी तां नायकतो यथाशक्ति परिहरति किन्तु स तां पश्यति भवतश्चोभौ परस्परानुरक्तौ। मिलने बाधकरूपेण धारिणीं मालविकां बन्धने निक्षिपति किन्तु सर्पदंशच्छलेन विदूषकस्तां मोचयति। एतस्मिन्नन्तरे सैनिकहस्तक्षेपेण माधवसेनः कारागाराद्विमुच्यते स्थाप्यते च विदर्भेषु माधवसेनयज्ञसेनयोर्द्वैराज्यम्। प्राप्तपरिचया धारिणी मालविकया सहाग्निमित्रस्य परिणयमनुमन्यते। ततश्च कृतविवाहो नायकः सह प्रेयस्या सुखमेधते इति नाटकस्यास्याधिकारिकवृत्तम्। अत्र हि मुख्यो रसः शृङ्गारोः वीरश्चाङ्गम्। वस्तुतस्तु रूपकमिदं नाटिकाकोटिकं किन्तु पञ्चाङ्कप्रणीतत्वान्नाटकत्वेन गृहीतम्।

असौ हि कालिदासस्य प्रथमा कृतिः। अत्र हि कविरनन्तरप्रणीतनाटकापेक्षया न तथा सिद्धहस्तस्तथापि कालिदासस्तु कालिदास एव। तस्य रचनासौष्ठवं सरसपदावली चात्रापि तथैव यथेतरनाटकेषु तस्य। अस्य हि कवित्वं, घटनासंयोजनं पात्रोपस्थापनादिकञ्च प्रशंसनीयं प्रभावि च। कविः स्वयमेव कथयति यत्सत्स्वपि भाससौमिल्लकविपुत्रादिप्रणीतेषु रूपकेषु रूपकमिदमपि ग्राह्यमेव यतो हि—

पुराणमित्येव न साधु सर्वं न चापिकाव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः। (१२)

नाटकस्य ग्राह्यतामादाय स कथयति—

देवानामिदमामनन्ति मुनयः शान्तं ऋतुं चाक्षुषं
रुद्रेणेदमुमाकरव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाटचं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम् ॥ (१।४)।

कथनेऽस्मिन् कविर्भरतप्रणीतनाटचशास्त्रमक्षरशोऽनुसरति। अत्र हि नाटचाचार्ययोर्हरदत्तगणदासयोरन्योन्यस्पर्द्धा साधु चित्रिता। सुशिक्षकत्वमधिकृत्य कविः कथयति—

'क्लिष्टा क्रिया कस्यचिदात्मसंस्था सङ्क्रान्तिरन्यस्य विशेषयुक्ता।
यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव। (१-१६)

अस्य हि प्रसादशिला माधुर्यंगुणमण्डिता भाषा कमपि रसिकं रसयितुं समर्था।

(ख) **विक्रमोर्वशीयम्**—रचनाकोटिदृष्टचा रूपकमिदं मालविकाग्निमित्राभिज्ञानशाकुन्तलयोर्मध्यवर्ति। अत्र हि अप्सरस उर्वश्या सह पुरूरवसः प्रेमलीला वर्णिताऽस्ति। लक्षणदृष्टचेदं त्रोटकम्। अत्रापि पञ्चैवाङ्का। कथानकमिदं ऋग्वेदादौ पुराणेषु चोपवर्णितं पुरूरवस उर्वश्याश्च प्रणयसम्बन्धं कविकल्पनया नवीनत्वेनोद्भाव्य प्रस्तुतम्। मेघविद्युद्रूपयोरुभयोः परस्पराश्रयनैवास्य शाङ्गरिकः पक्षः। पुरूरव हि विक्रमो विक्रम्य राक्षसोपद्धृतामुर्वशीं मोचयति। अन्योन्यविलोकने हि तयोश्चेतस्यनुराग उद्भवति। पुरूरवसः स्मृत्या भ्रष्टगतिरुर्वशी भरतेन भूतलस्पर्शाय शप्ता भवति पुत्रदर्शनेन शापान्तश्च निश्चीयते। पश्चाच्च शक्रप्रसादेन तयोराजीवनं मिलनं सुनिश्चितं भवति। त्रोटकमिदमन्वर्थसंज्ञम्। ग्रन्थेऽस्मिन् कविः सौन्दर्यवर्णने परमं कौशलं दर्शयति। उर्वशीमादाय स कथयति—

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
श्रृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोरममिदं रूपं पुराणो मुनिः। (१।१०)

इति। उर्वशीवियोगे नायकस्य व्यामोह इत्थं वर्णितः—

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येव सा
दोषाणां प्रशमाय नः श्रुतमदो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मशाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुबेहि कः खलु युवा धन्योऽधरं वास्यति।'

कवेरस्य व्यतिरेकच्छटेत्थम्—

आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः।
उपमानस्याऽपि सखे प्रत्युपमानं वपुस्तस्याः॥ (२।३)।

स हि सम्भोगावस्थानुकूल्यं विरहावस्थाप्रातिकूल्यञ्चैकत्रैव वर्णयति सुनिपुणम्। यथा—

पादास्त एव शशिनः सुखयन्ति गात्रं
बाणास्त एव मदनस्य मनोऽनुकूलाः।
संरम्भरूक्षमिव सुन्दरि यद्यदासीत्
त्वत्सङ्गमेन मम तत्तदिवानुनीतम्॥ (३।२०)।

इति ग्रन्थेऽस्मिन्काटचवेमटीका प्रसिद्धा।

## (ग) अभिज्ञानशाकुन्तलम्

अभिज्ञानशाकुन्तलं तु न केवलं संस्कृतसाहित्यस्यैवापितु विश्वसाहित्यस्यैव मुकुटायते रचनासौष्ठवदृष्टचा। मृगयाविहारी पौरवो हि दुष्यन्तो मालिनीतटस्थितं कण्वाश्रमं प्राप्नोति। तत्र स शकुन्तलां दृष्ट्वा भृशं तस्यामनुरक्तः कण्वस्योपस्थितानेव तां गान्धर्वेण विधिना परिणीय ताञ्चोपभुज्य कृतप्रतिज्ञस्तन्नयनाय राजधानीं प्रति निवर्तते। एतस्मिन्नन्तरे शून्यहृदयां शकुन्तलामात्मानमुपोक्षितवतीं मत्वा दुर्वासा यथेच्छागतस्तां प्रियो विस्मरतीति शपति। सखिभ्यां प्रसादितश्च स प्रणयचिह्नदर्शनाच्छापान्तमपि निर्दिशति। तीर्थयात्रातः प्रत्यागतः कण्वः सुतां दुष्यन्ततेजोधारिणीं ज्ञात्वा तां ग्रहीतुः सकाशं प्रेषयति। राजा तु शापप्रभावात्कृतप्रयत्नोऽपि नैव परिचिनोतितामत एव तिरस्करोति। एतस्मिन्नन्तरे काचिदप्सरोवरा तां मारीचाश्रमं प्रापयति। तत्रैव सा तनयं सूयते। आत्रान्तराले धीवरात्प्राप्ताङ्गुलीयको राजा तां स्मरति भवति तद्विरहेण व्यामुग्धः। शक्रसाहाय्याय दिवं गत्वा प्रत्यागतः स मारीचाश्रममवतीर्णो बालकं सिंहशिशुना क्रीडन्तं पश्यति। तत्रैव भवति च तयोः पुनर्मिलनं शकुन्तलादुष्यन्तयोः।

कथानकमिदं महाभारतादावपि दृश्यते किन्तु तत्र नास्ति सजीवत्वं कथायाम्। कालिदासेन तामेव नीरसां कथामादाय स्वप्रतिभया तां नवत्वेन परिकल्प्य सन्निवेशिनाऽस्ति सा। पुराणेषु शकुन्तला प्रौढा युवतिदृश्यते। सा हि स्वयमेव सूचितस्वजन्मवृत्तान्ता तत्तनय एव युवराजो भविष्यतीति संविदि दुष्यन्तस्य पत्नीत्वं स्वीकरोति। कण्वाश्रमे एव सा तनयं सूते। षड्वर्षवयस्कं तमादाय सा प्रतिष्ठानपुरं गच्छति। तत्र दुष्यन्तो जानन्नपि तां तिरस्करोति लोकवादभिया। ततश्च नभोवाणीप्रेरितस्तां गृह्णाति चोभौ सुखमेधेते च।

कालिदासकल्पितकथायां तु शकुन्तला मुग्धा नायिका। सा स्वयमेव नैव किञ्चित्कथयति। स्वजन्मनो वृत्तान्तमपि सा सखीमुखेन ज्ञापयति। गर्भमरालसैव सा पतिगृहं प्रेष्यते कण्वेन। शकुन्तला प्रस्थापनवृत्तान्तं कविना तथा निबद्धं यथा हि तेन मन्ये दृषदपि द्रवत्वमायाति शोकविह्वला। सा च पथि शक्रतीर्थे स्नानसमये दुष्यन्तप्रदत्ताङ्गुलीयकं जले पतितमपि शापप्रभावान्नैव जानाति। तेनैव सा दुष्यन्ताय स्वपरिचयप्रदानेऽसफला भवत्यत एव तिरस्कृता च। पश्चाच्च धीवरस्तदङ्गुलीयक मत्स्योदरे प्राप्नोति निगृह्यते च तद्विक्रीणन्नापणे। ततश्च तद्राज्ञे निवेद्यते। राजाऽपि तद्दृष्ट्वा जागृतस्मृतिः पश्चात्तापेन दह्यमानान्तो भृशमुद्विग्नो भवति। एवं खिन्नचेतसं तं मातलिर्विदूषकखेदनेन पौरुषाय जागरयति। इत्थं हि तत्र दुर्वासःशापः, शकुन्तलाप्रस्थापनं, अङ्गुलीयकप्रकरणं मालतेरुपस्थितिश्च कवेर्योजनैव। शाकुन्तलस्य महिमानं तु न कोऽपि लेखन्याऽवतारयितुं प्रभवति। उक्तमेव—

'काव्येषु नाटकं रम्यं तत्र शाकुन्तलं मतम्।
तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम्॥'

एवमेव जर्मनकवेर्गेटे महाभागस्य कथनसारोऽयं—

वासन्तं कुसुमं फलञ्च युगपद् ग्रीष्मस्य सर्वं च यत्
यच्चान्यन्मनसो रसायनमतः सन्तर्पणं मोहनम्।
एकीभूतमभूतपूर्वमथवा स्वर्लोकभूर्लोकयो—
रैश्वर्यं यदि वाञ्छसि प्रियसखे शाकुन्तलं सेव्यताम्॥'

अथवा वासन्तस्य कुसुमस्य ग्रैष्मस्य फलस्य वर्षाया हरितत्वस्य, शरदः शोभायाः शिशिरस्य शीतलत्वस्य हेमन्तस्य रमणीयत्वस्य च यदि एकत्रैव युगपदेव स्पृहा विद्यते तदा शाकुन्तलं सेवनीयम्। अत्र हि दुष्यन्तस्य मृगयाविहारः, कण्वाश्रमदृश्यं, तापसकन्यकानां बाल्यभावः, शकुन्तलाया मुग्धात्वं, दुष्यन्तशकुन्तलयोः प्रेमलीला, पुत्रीपितुरवस्था, पुत्र्याः पतिगृहं प्रति प्रेषणम्, प्रासादव्यवहारः, भरतस्य बाल्यलीला च नितान्तमेव सर्वोत्कृष्टत्वस्य परमं निदर्शनम्।

मृगयाविहारो यथा—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः-
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।
शष्पैरर्धावलीढैः श्रमविवृतभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥

बालसुलभस्नेहो यथा—

आलक्ष्यदन्तमुकुलाननिमित्तहासैरव्यक्तवर्णरमणीयवचः प्रवृत्तीन् ।
अङ्काश्रयप्रणदिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसामलिनीभवन्ति ॥
(७।१७)

तापसकन्यकानां मौग्ध्यं यथा—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा बल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥

तथैव—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥ (२।१०)

पुत्रीप्रस्थापनसमये पितुरवस्था यथा—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ (४।६)
पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या
नादत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

भरतस्य बाल्यलीला यथा—

'जृम्भस्व सिंह ! दन्तांस्ते गणयिष्ये ।'

पितुर्वात्सल्यं यथा—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ (४।१८)

वियोगिनो वियोगजन्यावस्था यथा—

तव कुसुमशरत्वं शीतरश्मित्वमिन्दोः
द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।

विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥ ( ३।३ )।

नायकस्य धीरोदात्तत्वं यथा—

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ ( ५।२८ )

अयोगश्शृङ्गारो यथा—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वीस्थिता कतिचिदेव पदानि गत्वा।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु बल्कलमशक्तमपि द्रुमाणाम् ॥ ( २।२२ )।

पुत्रीपितुरितिकर्तव्यता यथा—

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधुबन्धुभिः ॥

इत्थं हि समुद्धरणे सर्वाण्यपि पद्यान्यस्योद्धृतानि भवन्ति। वस्तुतो हि कालिदासीयं प्रत्येकं वाक्यं मधुरं कूजति। शकुन्तलां दृष्ट्वा दुष्यन्तश्चिन्तयति—

इदं किलाव्याजमनोहरं वपुस्तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति ॥ ( १।१८ )

कालिदासो हि संस्कृतसाहित्ये सर्वोत्कृष्टः कविः। तस्य सरसा सरला च शैली सर्वानपि कवीनतिशेते। तस्य प्रतिभोच्चता, भावगाम्भीर्यं, अनुभूतिदार्ढ्यं, प्राञ्जला भाषा, घटनासंयोजनवैलक्षण्यञ्च नान्यत्र प्राप्यम्। स हि वैदर्भरीतेः कविस्तेन हि तस्य रचना सर्वत्र मधुरा ललिताऽल्पसमस्ता च। यथा हि—

'सरसिजमनुविद्धं शैवलेनाऽपि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।'

तस्य वर्णनाचातुरी तु प्रशंसातिगा। स हि यदेव स्पृशति तदेव नृत्यति सुमधुरम्। यथा हि—

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्। ( १।२९ )

तस्यच्छन्दसां प्रयोगोऽपि भावानुसारी दृश्यते। स हि शोकं मन्दाक्रान्तया वा वियोगिन्या, गम्भीरभावं स्रग्धरया, सुकोमलभावं मालिन्या वा प्रकटयति। तेनैव तस्य कृतौ भाषाभावयोः सुन्दरः समन्वयो दृश्यते।

कविरसौ चरित्रचित्रणं नाट्यशास्त्रीयमक्षरशोऽनुसरति । तस्य हि पात्राणि न कदाऽपि स्वीयां सीमामुल्लङ्घयन्ति । पात्राण्यस्योदात्तभावनया प्रेरितानि सन्ति सर्वत्र ।

तस्य हि पात्राणि विविधक्षेत्रेभ्यो गृहीतान्नि सन्ति । स हि तपोवनं, राजप्रासादं निम्नकोटिकजीवनमपि तथैव स्पृशति यथा तेन तत्रापि कियत्कालमुषितं स्यात् । तपोनिधिरपि कण्वः स्नेहाप्लुतपितुर्भूमिकां दर्शयति । स्पृहयन्नपि दुष्यन्तः परस्त्रीभिया शकुन्तलामपाकरोति । कवित्वभाराक्रान्तमपि कवेरस्य नाट्यं न कदाप्यौचित्यं जहाति । अनेन हि यत्र यदेवोचितं तत्र तदेव निक्षिप्तं दृश्यते । कालिदासरूपकाणां मुख्यं प्रयोजनं तु रसव्यञ्जनैव । अतस्तत्र केवलं नग्नशाङ्गारिकवातावरणं नैव दृश्यतेऽपि तु सर्वत्र संयतता समावेशिता । शकुन्तलायामासक्तोऽपि राजा धर्मपथं नैव जहातीति परमुदाहरणमस्य । कवेरस्य पुरुषपात्रापेक्षया स्त्रीपात्राणां चित्रणेऽधिकसफलता । तस्य हि प्रेम्णो लक्ष्यमुदात्तगुणतैव न तु कामुकता । तेनैव बाणः कथयति—

'निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ।'

इति । तथैव न्यायमञ्जर्यामपि—

'अमृतेनेव संसिक्ताश्चन्दनेनेव चर्चिताः ।
चन्द्रांशुभिरिवोद्धृष्टाः कालिदासस्य सूक्तयः ।'

कथ्यते हि कालिदासस्य कुन्तेश्वरदौत्यं नाम ग्रन्थोऽप्यासीद्यथा क्षेमेन्द्रः स्मरति किन्तु स सम्प्रति नैवोपलभ्यते । सर्वतोमुखप्रतिभाशालिनां किम्मात्रमशोभनम् ।

### ५ वररुचिः : उभयाभिसारिका

वररुचिना कविवरेण उभयाभिसारिकासंज्ञको भाणः प्रणीतोऽस्ति । अत्र हि कुबेरदत्तनारायणदत्तयोर्जीवनं वर्णितमस्ति । ग्रन्थेऽस्मिन् न्याय-साङ्ख्यसिद्धान्ताः प्रतिपादिताः सन्ति तथैव नृत्यकलावर्णनञ्च । अत्र भासनाटकीया विषेशता लभ्यते ।

वररुचेः कालो नैव सम्यग्ज्ञातः । कथ्यते हि वररुचिनाम्ना द्वौ विचक्षणौ प्रसिद्धौ स्तः । एकः कात्यायनो वररुचिः पाणिनीयव्याकरणोपरि वार्तिककारः अपरस्तु प्राकृतप्रकाशकारः । द्वितीयो हि वररुचिर्विक्रमसमकालीन इति विश्वस्यते । भाणोऽयं द्वितीयवररुचेः सम्भवति । विषयोऽयमधिकानुसन्धानमपेक्षते ।

### ६. अश्वघोषः : शारिपुत्रप्रकरणम्

अश्वघोषस्यापि शारिपुत्रप्रकरणं नाम रूपकं लूडर्समहोदयप्रयासेन प्राप्तमस्ति। अश्वघोषो हि कनिष्कसभासदिति तस्य स्थितिकालो वैक्रमप्रथमशतकमभितोऽनुमितः ।

शारिपुत्रप्रकरणं हि नवाङ्कप्रकरणम् । अत्र हि शारिपुत्रस्य मौद्गल्यायनस्य च भगवतो बुद्धस्योपदेशेन बौद्धधर्मग्रहणसम्बद्धा कथा वर्णिताऽस्ति। अत्र यत्र तत्र बौद्धमतसम्बद्धा उपदेशाश्च समावेशिताः सन्ति । अत्र हि भरतवाक्यवर्जं सन्ति सर्वे नाट्यपक्षा व्यवहृताः । सरलया संस्कृतगिरोपनिबद्धेऽस्मिन् ग्रन्थे सन्ति काश्चिद् व्याकरणसम्बद्धाशुद्धयोऽपि । तच्च सर्वं प्राकृतप्रभावात्सञ्जातमित्यनुमीयते । एतदतिरिक्तं हि तस्य द्वे रूपकेऽपि लभ्येते किन्तु खण्डिते नामरहिते च । तत्रैकस्मिन् हि प्रबोधचन्द्रोदये इव बुद्धिधृतिकीर्ति-बुद्धानां पात्रत्वं दृश्यते । द्वितीये हि मृच्छकटिके इव मगधवती नाम्नीवेश्यायाः कौमुदगन्धाख्यस्य विदूषकस्य च चरितमपि चित्रितमस्ति । कवेरस्य प्राकृतप्रयोगः प्रशंसनीयो दृश्यते । अस्य प्राकृते कतिपये आर्षप्रयोगा अपि दृश्यन्ते ।

### ७. ईश्वरदत्तः : धूर्तविटसंवादः

ईश्वरदत्तस्य धूर्तविटसंवादो नाम भाणग्रन्थः वैशिकप्रकरणसम्बद्धः । अत्र नान्दी नैव दत्ताऽस्ति । ग्रन्थेऽस्मिन् कुसुमपुरस्य वर्णनं विद्यते । अत्र हि दत्तकः शृङ्गाराचार्यत्वेन स्मृतः किन्तु नैव वात्स्यायनः । एतद्विषये एतदधिकं नैव किञ्चिदपि ज्ञातमस्ति ।

### ८. बोधायनः : भगवदज्जुकम्

बोधायनप्रणीत इति भगवदज्जुकसंज्ञकप्रहसनग्रन्थो लभ्यते । केचिदमुं ग्रन्थं महेन्द्रविक्रमप्रणीतमपि मन्यन्ते, यतो हि महेन्द्रविक्रमस्य राज्ञः ६६७ मितविक्रमाब्दे उट्टङ्किते शिलालेखेऽयमपि मत्तविलासप्रहसनेन सहोल्लिखितो दृश्यते । अत्र हि भगवानिति संज्ञितः कश्चिद्योगी यौगिकशक्तिप्रदर्शनार्थं मज्जुकाख्यायाः वेश्याया मृतशरीरे परकायप्रवेशं करोति प्रारभते च योगधर्मोपदेशाय । तदैव अज्जुकाया आत्मा यमराजेन परावर्तितः सन् स्वशरीरं परप्रविष्टं दृष्ट्वा योगिनः शवमेव प्रविशति प्रारभते च शृङ्गारोपदेशाय। ग्रन्थोऽयं लेखकस्य दार्शनिकज्ञानस्य प्रमाणकः ।

### ९· वीणावासवदत्तम्

अज्ञातकर्तृकेऽस्मिन् रूपके सन्ति चत्वारोऽङ्काः । अत्र हि उदयनेन सह

वासवदत्ताया वीणावादनशिक्षणसम्बद्धा कथा वर्णिताऽस्ति। ग्रन्थोऽयमपूर्ण एव। अयं हि शैलीदृष्टया भासग्रन्थैः सह साम्यं बिभर्ति।

**१०. दामकप्रहसनम्**

ग्रन्थोऽयमपि अज्ञातकर्तृकः। अत्र हि कर्णस्य परशुरामादस्त्रप्राप्तिकथा वर्णिताऽस्ति। कर्णस्य मित्रं दामको नामः। तत्सम्बन्धेनैवास्य नाम दामकमिति।

**११. दिङ्नागः : कुन्दमाला**

धीरनागापराभिधानस्य दिङ्नागस्य कवेः कुन्दमालाख्यं रूपकं लभ्यते। अत्र हि रामायणस्योत्तरकाण्डगता कथा निबद्धास्ति। ग्रन्थोऽयं षट्स्वङ्केषु विस्ततः। इदं हि सुखान्तमेव नाटकम्। सीतायाः पवित्रतायां धरित्र्या प्रमाणितायां कुशलवौ हि राजोपराजौ क्रियेते। कविरयं निश्चयमेव बौद्धनैयायिकाद् दिङ्नागाद्भिन्न एव, यतो हि यदि स बौद्धोऽभविष्यत्तदा नैव कथमपि रामायणीं कथां समाश्रितोऽभविष्यत्। अस्य भाषाभाषागुम्फनं नितान्तमेव सरलं सरसं भासस्येव स्वाभाविकञ्च। भवभूतिर्हि उत्तररामचरिते ग्रन्थादस्मात्प्रभावितो दृश्यते। भवभूतेः क्लिष्टरचनाऽस्मादुत्तरवर्तिन्येव। कविरयमज्ञातदेशकालेष्वन्यतमः। एतदनुमीयते यदसौ कालिदाससमकालिको वा तत्पूर्ववर्त्यपि सम्भवति। अधिकांशसमालोचकास्त्वमुं कालिदासप्रतिपक्षिणं मन्यन्ते। तन्मते 'दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्' इति मेघदूते समनुस्मृतो दिङ्नाग एव चेदयमेव नान्यः। अस्यापि नाटकं न कथञ्चिदपि कालिदासरूपकान्न्यूनतरकोटिकम्। विश्वस्यते ह्यस्यान्यान्यपि रूपकाण्यासन् यानि हि कालेन कवलितानि। अहो सर्वभक्षिता कालस्य।

केचित्समालोचका द्विजेन्द्रनाथप्रभृतयस्तु दिङ्नागं भवभूतिप्रभावितमत एव तत्परवर्तिनं मन्यन्ते। तेषां मते हि कुन्दमाला राजशेखरेण नैव स्मृता। ग्रन्थोऽयं प्राथम्येन भोजदेवेन ( १०७५–११२७ वै० ) स्मृतस्ततश्च रामचन्द्रेण नाट्यदर्पणे विश्वनाथेन साहित्यदर्पणे च स्मृतः, किन्तु भोजपूर्ववर्तिना न केनाऽप्यसौ स्मृत इति। किन्तु न केनाऽप्यनुल्लिखित इति न हि कालनिर्णयस्य दृढ आधारः। सन्त्येतादृशा बहवो ग्रन्था ये खलु परवर्तिभिरज्ञाता वा ज्ञात्वाऽप्युपेक्षिताश्च। बाणो हि भारविं न स्मरति इति नैव भारवेर्बाणपरवर्तित्वे प्रमाणम्। भाषासौष्ठवदृष्टया तु दिङ्नाग एव भवभूतिपूर्ववर्तीति ज्ञायते। निभाल्यतामस्य भाषासौष्ठवमत्र—

'एते रुदन्ति हरिणा हरितं विमुच्य
हंसाश्च शोकविधुराः करुणं रुदन्ति।
नृत्यं त्यजन्ति शिखिनोऽपि विलोक्य देवीं
तिर्यंग्गता वरममी न पुनर्मनुष्याः ।। ( १।१८

एवमेव—

'नीतस्तावन्मकरवसतो बन्ध्यतां शैलसेतुः
देवो वह्निर्न च विगुणितः शुद्धिसाक्ष्ये नियुक्तः।
इक्ष्वाकूणां भुवनमहिता सन्ततिर्नेक्षिता मे
किं किं मोहादहमकरवं मैथिलीं तां निरस्य ।।'

तथैव—

'नादः पातालमूलात्प्रभवति तुमुलं पूरयन्व्योमरन्ध्रं
पातक्लिष्टा इवैते दिशि दिशि गिरयो मन्दमन्दाश्चरन्ति।
बद्धानन्दात्समन्ताल्लवणजलधयो मथ्यमाना इवासन्
सीमामुल्लङ्घ्य वेगादुदनिधिसलिलैः स्वानि वेलावनानि ।।'

ईदृशं हि सरलं स्वाभाविकञ्च वर्णनं भवभूतेः क्लिष्टकठोररचनातः प्रभावितं यदि कश्चिन्मन्यते स हि पुष्पमपि पाषाणपोषितं मन्यते एव। स्पष्टमेव यद्यदि तयोरन्यतमः परमनुवदति तदा निश्चयेन भवभूतिरेव दिङ्नागं न तु दिङ्नागो भवभूतिम्।

तेन हि कुन्दमालायाः प्रणयनकालो विक्रमसमकालो वा तत्पूर्ववर्तिकालः। अत्र हि विदूषकस्योपस्थितिरप्यस्य प्राचीनत्वमेव साधयति न त्वर्वाचीनत्वम्।

## १२. विशाखदत्तः : मुद्राराक्षसम्

राजनीतिगर्भितरूपकप्रणेतृष्वस्य द्वितीयं स्थानम्। अत्र हि भासस्य प्रतिज्ञायौगन्धरायणस्य स्पष्टमेव प्रभावो दृश्यते। अस्य 'मुद्राराक्षसं' नाम रूपकं प्रसिद्धमस्ति। कवेरस्य स्थितिकालविषयेऽपि पण्डितेषु नैकमत्यं दृश्यते। केचिदमुं प्रथमचन्द्रगुप्तसमकालिकं मत्वा वैक्रमचतुर्थशतकोत्तरार्द्धभवं मन्यन्तेऽपरे तु द्वितीयचन्द्रगुप्तसमसामयिकं मत्वा तं वैक्रमपञ्चमशतकमध्यवर्तिनं मन्यन्ते। केचित्तु तं दन्तिवर्मणः सभाकविं मत्वा वैक्रमनवमशतकभवमपि समामनन्ति। तथैव परे तु तमवन्तिवर्मणः सभाकविं मत्वा त वैक्रमषष्ठशतकभवमपि मन्यन्ते। परे तु तं काश्मीरस्यावन्तिवर्मणः सभासदं मत्वा तं वैक्रमदशमशतकमध्यवर्तिनं मन्यन्ते। कथयितारस्तु यत्किञ्चिदपि कथयन्त्येव यतो हि तेषां कार्यमेव कथनमात्रम्। किन्त्वेतन्नैवावश्यकं यत्तादृशं कथनं सत्यमेव भवतीति। विशाखदत्तः स्वं सामन्तवटेश्वरदत्तपौत्रं महाराज-

पदभाजः पृथोः सुतं कथयति। किन्तु कोऽसौ वटेश्वरः कश्चासौ पृथुरिति तु नैवाद्यापि ज्ञातम्। अपरञ्च भरतवाक्यं हि कविविषये किञ्चित्प्रकाशकं भवति। अत्र हि भरतवाक्यम्—

'वाराहीमात्मयोनेस्तनुमतनुबलामास्थितस्यानुरूपो
यस्य प्राग्दन्तकोटिं प्रलयपरिगता शिश्रिये भूतधात्री।
म्लेच्छैरुद्वेज्यमाना भुजयुगमधुना पीवरं राजमूर्तेः-
स श्रीमद्बन्धुभृत्यश्चिरमवतु महीं पार्थि............॥'

इत्येतदनन्तरं कुत्रचित् 'वश्चन्द्रगुप्तः', क्वचित्तु 'वो दन्तिवर्मा', क्वचित्तु 'वो रन्तिवर्मा', कुत्रचित्तु 'वोऽवन्तिवर्मा' इत्यादिपाठा दृश्यन्ते। तत्तदाधारेण समालोचकैः कवेरस्य कालनिर्णयोऽपि दत्तो दृश्यते। तत्रापि द्वौ चन्द्रगुप्तौ, त्रयो दन्तिवर्मणश्च स्मिर्यन्ते। तेषां स्थितिकालश्चेत्थमनुमितः—प्रथमचन्द्रगुप्तस्य श्रीगुप्तपुत्रस्य समुद्रगुप्तपितुः ३७७-३९२ मितवैक्रमाब्दान्तराले, द्वितीयचन्द्रगुप्तस्य ४३२-४७१ मितवैक्रमाब्दान्तराले, अवन्तिवर्मणोरेकस्य कान्यकुब्जेश्वरस्य मौखरिवंशस्य ग्रहवर्मणः पितुः ५२०-५८० मितवैक्रमाब्दान्तराले, काश्मीरस्य राज्ञस्तु ९१२-९४० मितवैक्रमाब्दान्तराले, दन्तिवर्मणस्त्वेकस्य राष्ट्रकूटराज्ञः ६६० मितवैक्रमाब्दमभितः, अपरस्य लाटनरेशस्य ९०७ मितवैक्रमाब्दमभितः, तृतीयस्य तु पल्लववंश्यस्य ८६० मितवैक्रमाब्दमभितः। रन्तिवर्मणस्तु कालोऽपि न ज्ञातः। विशाखदत्तो हि कुसुमपुरं सम्पन्ननगररूपेण वर्णयति। वैक्रमसप्तमशतके तु तस्य भग्नावशेषत्वमेव वर्णितं ह्वेनसाङ्गेन। ह्वेनसाङ्गो हि चीनदेशीयपर्यटकः (६६२-७२१ वै०) ६८७ मितवैक्रमाब्दमभितः भारतमागत आसीत्। तथ्यमिदं समाश्रित्य केचित्समालोचका विशाखदत्तं तत्पूर्ववर्तिनमेव मन्यन्ते। किन्तु मतमिदं न तथा युक्तियुक्तं प्रतिभाति। स हि कुसुमपुरं त्वैतिहासिकनगरत्वेन वर्णयति यतो हि चन्द्रगुप्तादपि नितान्तपूर्ववर्तिनः शिशुनागस्य समये एव राजधानी राजगृहादपसार्य पाटलिपुत्रं नीताऽऽसीत्। कवेरस्य देवीचन्द्रगुप्तं नामापरमपि नाटकं लभ्यते, यत्र हि रामगुप्तस्य भ्राता समुद्रगुप्तस्य द्वितीयः पुत्रश्चन्द्रगुप्तो नायकत्वेन वर्णितोऽस्ति। अतः कवेरस्य प्रथमचन्द्रगुप्तसमकालीनतायास्तु सम्भावनैव नोदेति। तथैव कवेरस्य द्वितीयचन्द्रगुप्तसमकालिकत्वमपि नैव सम्भवति, यतो हि चन्द्रगुप्तः स्वजीवनदशायामेव तथाविधगोपनीयकृत्यप्रकाशनं कदाऽपि नानुमन्येत। राजान्तराश्रयेऽपि तथाविधग्रन्थप्रणयनमसम्भवमेव। एतावत्तु निश्चितमेव यत्कविरसौ पाटलिपुत्रं बहु जानाति श्रद्धाति च तं नगरम्। तस्य निवासिनो व्यवहारं भौगोलिकीञ्च सीमां स साधु

जानाति। तेन तेन पाटलिपुत्रवासिना वा तदभिजनेनावश्यमेव भाव्यमेव। अवन्तिवर्माश्रितो वा रन्तिवर्माश्रितो वा दन्तिवर्माश्रितोऽपि तथाविधं मागधोत्कर्षं वर्णयतीति नैव युक्तियुक्तं प्रतिभाति। तेन कविरसावश्यमेव कस्यापि गुप्तराजस्यैव राजकविः। स हि भगवतो वाराहीं तनुमपि स्मरति या हि गुप्तनृपाणां राजचिह्नमेव। गुप्तनृपेषु स्कन्दगुप्त एवैतादृशः कथ्यते यो हि वैष्णवोऽपि शैवानपि पूजयति स्म। तेन हि हूणाः पश्चिमोत्तरप्रान्ततो बहिर्निस्सारिताः शकाश्चोज्जयिनीतः समूलमपसारिताश्च। तेन हि मुद्राराक्षसस्य भरतवाक्ये 'पार्थिव—स्कन्दगुप्तः' इति पाठो मौलिकः सम्भवति कविरसौ च स्कन्दगुप्तसभासद्, स्कन्दगुप्तो हि देवीचन्द्रगुप्तनाटकनायकभूतस्य चन्द्रगुप्तस्य पौत्रः कुमारगुप्तस्य पुत्रश्च। तथा मते सत्येव कवेर्गुप्तनृपतिस्तवः स्थाने भवति। मौखरिवंश्योऽवन्तिवर्मा स्वयमेव गुप्तशासनप्रतिरोधकः कथन्नाम मगधप्रशंसकं कविं तथा सम्पूजयेत्। प्रसिद्धेतिहासिको राजबलिपाण्डेयश्च तथैवामुं स्वीकरोति निर्विशेषेण।

प्रसङ्गेऽस्मिन्नेतदप्यवधेयं यत्स्कन्दगुप्तस्य भिटारिशिलास्तम्भाभिलेखवाक्यानां मुद्राराक्षसगतवाक्यैः सह साम्यं दृश्यते। यथा हि तत्रत्यानि कानिचिद् वाक्यानि—

१४. हूणैर्यस्य समागतस्य समरे दोर्भ्यां धरा कम्पिता
१५. भीमावर्तरयस्य शत्रुषु शरा............
............विरचितं प्रख्यापितो दीप्तिदा
न द्योति नभःषु लक्ष्यत इव श्रोत्रेषु गाङ्गध्वनिः ॥ ८ ॥
१०. विचलितकुललक्ष्मीस्तम्भनायोद्यतेन
क्षितितलशयनीये येन नीता त्रियामा।
११. समुदितबलकोशान् पुष्यमित्रांश्च जित्वा
क्षितिपचरणपीठे स्थापितो वामपादः ॥ ४ ॥
१२. पितरि दिवमुपेते विप्लुतां वंशलक्ष्मीं
भुजबलविजितारिर्यः प्रतिष्ठाप्य भूयः।
जितमितिपरितोषान्मातरं सास्रनेत्रां
हतरिपुरिव कृष्णो देवकीमभ्युपेतः ॥ ६ ॥

यद्यप्येतेषु मुद्राराक्षसेन सह रचनासाम्यं दृश्यते।

अपरञ्च, महाराजस्य हस्तिनः जबलपुराभिलेखे विशाखदत्तस्योल्लेखो दृश्यते, यत्र हि विशाखदत्तप्रभृतिभ्योऽग्रहारदानमुल्लिखितम्। अभिलेखस्यास्य समयः सप्तत्युत्तरैकशतमितगुप्तवत्सरो मतः। यथा हि—

ॐ नमो महादेवाय। स्वस्ति सप्तत्युत्तरेऽब्दशतैक( के )गुप्तनृपराज्यभुक्तौ महाज्येष्ठसाम्व ( संव ) त्सरे फाल्गुण ( न ) मासशुक्लपक्षपञ्चम्यां

अस्यान्दिवसपूर्व्वायां नृपतिपरिव्राजककुलोप( त्प )न्नेन महाराज-देवाढचप्रण

प्ता ( प्त्रा ) महाराजप्रभञ्जननप्त्रा श्रीमहाराजदामोदरसुतेन।

गोसहस्रहस्त्यश्वहिरण्यानेकभूमिप्रदेन गुरुपितृमातृपूजातत्परेणात्यन्तदेव-ब्राह्मणभक्तेन

नैकसमरशतविजयिना स्ववंशामोदकरेण श्रीमहाराजहस्तिना स्वपुण्या-प्यायनार्थं ब्राह्मणकोद्रशर्म-नागशर्म-मातृगुप्त-गङ्गाभद्रस्वामि-धनदत्त-कपिल-स्वामि-अग्निशर्म-विष्णुदेव-विशाखदेव-गन्दस्वामि-परिनोषशर्म-कृष्णस्वामि-देवशर्म्म रोहशर्म्म-देवशर्म-देवाढचदत्तशर्म-मनोरथ-अग्निदत्त··· ···ती···शर्म-रुद्रदत्त-विशाखदत्त······मौनविष्णुस्वामि पुनरपि विष्णुदेव-स्वातिगङ्गघोषा-( षो )द्यानमधूकगवा·· ····

१७० मितगुप्तवत्सरमभितो मगधेषु भानुगुप्तस्य शासनमासीदिति ज्ञायते बुधगुप्तसुतस्य। यदि ह्ययमेव विशाखदत्तो मुद्राराक्षसस्य कर्ता तदा तु भरत-वाक्ये 'पार्थिवा' भानुगुप्तः इति पाठो मौलिकः सम्भवति। किन्त्वत्रापि विडम्बनाऽस्त्येव। यथा हि प्रस्तावनावाक्यानुसारं तु स सामन्तपौत्रो महा-राजपुत्र इति तस्य राजपुत्रत्वं सिध्यति, यदि तथा स परदत्तमग्रहारं कथं नाम स्वीकुर्यात्। यदि सत्यमेतत्तथा सति प्रस्तावनावाक्यस्य मिथ्यात्वमेव सिध्यति। तेन हि निश्चयेन तु न किमपि वक्तुं पार्यते, तथापि विशाखदत्तो हि प्रथमकुमारगुप्त-भानुगुप्तयोरन्तरालवर्तिसमये स्थितिमानिति तस्य ४८०-५७० मितवैक्रमाब्दाभ्यन्तरे स्थितिकालोऽनुमितः।

विशाखदत्तस्य हि मुद्राराक्षसम्, देवीचन्द्रगुप्तम्, अभिसारिकवञ्चितकम्, राघवनन्दम् इति च चत्वारि रूपकाणि प्रथितानि सन्ति। तेषु हि मुद्राराक्षसं प्राथम्येन धनिकस्य दशरूपकावलोके भोजस्य सरस्वतीकण्ठाभरणे च स्मृतं दृश्यते। एवमेव देवीचन्द्रगुप्तं रामचन्द्रस्य नाटचदर्पणे, अभिसारिकवञ्चितकं त्वभिनवभारत्यामभिनवगुप्तेन शृङ्गारप्रकाशे भोजदेवेन, राघवानन्दं तु सुभाषितसङ्ग्रहेषु च स्मृतं दृश्यते। स्वरूपतश्चरमे द्वे नैव सम्प्रति समुपलभ्येते। देवीचन्द्रगुप्तं हि खण्डितं लभ्यते। अथैतेषां संक्षिप्तः परिचयोऽत्र वर्ण्यते।

### ( क ) मुद्राराक्षसम् —

मुद्राराक्षसं ह्यैतिहासिकं नाटकम्। राजनीतिगर्भिते नाटकसमवायेऽस्य द्वितीयं स्थानम्। इदं हि सप्तस्वङ्केषु विभक्तमस्ति। अत्र हि चाणक्य-

राक्षसयोः कूटनैतिकविलासः साधु वर्णितोऽस्ति। प्रथमेऽङ्के राक्षससङ्ग्र-हायोऽद्यतश्चाणक्यो दृश्यते। चरमेऽङ्के हि राक्षसस्य चन्द्रगुप्तामात्यपद-स्वीकारो दर्शितः। अन्वर्थसंज्ञके रूपकेऽस्मिन् वस्तुतो मुद्रया राक्षसो गृह्यते। तद्वृत्तञ्चेत्थम्—

चाणक्यप्रहितश्चरो यमपटेन क्रीडन् चन्दनदासगृहं प्रविश्य तत्र पतितं राक्षसनामाङ्कितमुद्रां प्राप्नोति समर्पयति च तां चाणक्याय। चाणक्यश्च ततो लेखं शकटदासेन कारयित्वा तेन सह क्षपणकं मलयकेतुकटकं प्रेषयति। तेनैव मलयकेतुराक्षसयोर्भेदमुत्पाद्य राक्षसो गृह्यत इति वस्तुतो ग्रन्थोऽयं मुद्राराक्षसम्। ग्रन्थस्यास्य प्रतिपाद्यविषयमधिकृत्य स्वयमेव कविराहितुण्डिक-मुखेन कथयति—

'विरुद्धयोर्भृशमिह मन्त्रिमुख्ययोर्महावने वनगजयोरिवान्तरे।
अनिश्चयाद्गजवशमेव भीतया गतागतैर्भृशमिह खिद्यते श्रिया॥' (२।३)

स हि राजनीतिं रूपकेण सह तुलयति। यथा—

'कार्योपक्षेपमादौ तनुमपि रचयंस्तस्य विस्तारमिच्छन्
बीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च।
कुर्वन् बुद्धया विमर्षं प्रसृतमपि पुनः संहरन् कार्यजातं
कर्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा॥' (४।३)

राजनीतेः स्वरूपं निर्दिशन् कविः कथयति—

'नन्दस्नेहकणाः स्पृशन्ति हृदये भृत्योऽस्ति तद्विद्विषां
ये सिक्ताः स्वयमेव पाणिपयसा छेद्यास्त एव द्रुमाः।
शस्त्रं मित्रशरीरकेषु सरुषा व्यापारणीयं सदा
कार्याणां गतयो विधेरपि न यान्त्यालोचनागौरवम्॥' (७।१९)

विशाखदत्तो हि सफलो रूपककारः। यद्यपि तस्य मुद्राराक्षसे नास्ति कालिदासकृताविव रसपरिपाको नैव च शार्ङ्गारिकी चेष्टा वर्णिता। तथाप्यस्य तावतैव नाटकीयता नैव क्षता दृश्यते। अत्र हि वीरो रसो मुख्यः शृङ्गारस्तु प्रासङ्गिक एव तथापि रूपकस्यास्य रसपरिपाको न कदापि प्रयोजनम्। इदन्तु घटनाप्रधानरूपकं यत्र हि घटनायाः सजीवं वास्तविकञ्च चित्रणं विद्यते। अत्र हि पौरुषस्य उत्साहस्योर्जस्वितायाश्च चरमः प्रकर्षो विद्यते। अत्र हि स्त्रीपात्राणामभाव एव। केवलमेकवारं चन्दनदासस्य पत्नी रङ्गमञ्चमुप-स्थापिता। रूपकेऽस्मिन् अङ्के दृश्यानां विभाजनं स्पष्टमेव दृश्यते। एत-द्विपरीतं भासकालिदासरूपकेषु अङ्कानां दृश्येषु विभाजनं नैव दृश्यते। तत्र तु मुख्यपात्रं हि अङ्के प्रारम्भतः समाप्तिपर्यन्तमेव रङ्गमञ्चमुपस्थापितं

भवति। रूपकेऽस्मिन् स्वल्प एव शृङ्गारप्रसङ्गः किन्तु राजनैतिकविषयाणां शार्ङ्गारिकचित्रणमवश्यमेव लभ्यते। यथा हि—

'वामां बाहुलतां निवेश्य शिथिलं कण्ठे विवृत्तानना
स्कन्धे दक्षिणया बलान्निहितयाऽप्यङ्के पतन्त्या मुहुः।
गाढालिङ्गनसङ्गपीडितसुखं यस्योद्यमाशङ्किनी
मौर्यस्योरसि नाधुनाऽपि कुरुते वामेतरं श्रीः स्तनम्॥' (२।१२)
'उपरि घनं घनरटितं दूरे दयिता किमेतदापतितम्।
हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः॥' (१।२२)

वस्तुतो हि रूपकमिदं घटनाप्रधानं प्रतिज्ञायौगन्धरायणमिव न तु रसपरिपाकपरम्। अस्त्यत्र वीरोऽपि रसः प्रासङ्गिक एव किन्तु सार्वत्रिकः। अस्य हि शैली प्रवाहयुता ओजस्विनी च। अस्य हि वाक्यानि लघूनि किन्तु सुसंगठितानि। अत्र ह्यलङ्काराणामपि सीमित एव प्रयोगः। अत्र हि सशक्तः प्रभावोत्पादकश्च शब्दविन्यासः नात्र पद्यानां बाहुल्यं यतः कृत्रिमतोत्पद्येत। पद्यापेक्षयाऽत्र गद्यमेवाधिकं सशक्तम्। अस्य संलापेषु स्वाभाविकता व्यक्ता। अत्र हि व्यङ्ग्यार्थे एवं श्लेषस्य प्रयोगो दृश्यते। भङ्ग्यन्तरकथनं (प्रथमं हि गद्येन यत्कथ्यते तदेव पुनः पद्येन कथनम्) अपि दृश्यते बहुधा। तस्य यदा गद्यबन्ध ओजपूर्णस्तदा पद्यबन्धोऽपि लालित्यपूर्णः। चाणक्यकुटीवर्णनं यथा—

उपलशकलमेतद्भेदकं गोमयानां
वटुभिरुपहृतानां बर्हिषां स्तोममेतत्।
शरणमपि समिद्भिः शुष्यमाणाभिराभि-
र्विनमितपटलान्तं दृश्यते जीर्णकुड्यम्॥ (३।१५)

तस्य हि वार्द्धक्यवर्णनं सर्वातिशायि दृश्यते।

रूपादीन् विषयान् निरूप्य करणैर्यैरात्मलाभस्त्वया
लब्धस्तेष्वपि चक्षुरादिषु हताः स्वार्थावबोधक्रियाः।
अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि मे
न्यस्तं मूर्ध्नि पदं तवैव जरया तृष्णे मुधा माद्यसि॥ (३।१)

कालिदासस्तु तत्प्रसङ्गे—

आचार इत्यवहितेन मया गृहीता या वेत्रयष्टिरवरोधगृहेषु राज्ञः।
काले गते बहुतिथे मम सैव जाता प्रस्थानविक्लवगतेरवलम्बनार्था॥
(५।३)

राज्यभारस्य दुर्वहनीयतामादाय विशाखदत्तः कथयति—

तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न सन्तिष्ठते
मूर्खे द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि।

शूरेभ्योऽभ्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ॥ ( ३।५ )

कीदृशी सूक्ष्मदर्शिताऽस्य कवेः। स हि राजसेवकावस्थां मार्मिकभावेन वर्णयति यथा—

'भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभा-
दन्येभ्यश्च वसन्ति येऽस्य भवने लब्धप्रसादा विटाः।
दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायास्यतः
सेवा लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥' ( ३।१४ )

रूपकस्यास्य नायकश्चाणक्यो यद्यपि फलस्वामी चन्द्रगुप्त एव यतो हि सर्वेऽपि व्यापाराश्चाणक्यमेवाश्रित्य सिध्यन्ति। नाट्यशास्त्रीयपरम्परापालनाय कामं चन्द्रगुप्तस्य नामकत्वमनुमन्येत तथापि कार्योत्कर्षस्तु चाणक्ये एव पतति। राक्षसो हि विष्णुगुप्तोऽस्य प्रतिनायकः चन्द्रगुप्तनायकपक्षे तु मलयकेतुर्हि पर्वतकपुत्रः प्रतिनायकः। चाणक्यो हि धीरोद्धतप्रकृतिकः श्रोत्रियो ब्राह्मणः। स स्वयमेव कथयति 'श्रोत्रियाक्षराणि प्रयत्नेन लिखितान्यपि नियतमस्फुटानि भवन्ति' इति। स हि विगततृष्णोऽपि दृढप्रतिज्ञः। चन्द्रगुप्तप्रधानामात्योऽपि स जीर्णकुड्ये एव प्रतिवसति न तस्य राज्यात्किञ्चिद् ग्राह्यमेव। यथा कञ्चुकी कथयति—

'निरीहाणामीशस्तृणमिव तिरस्कारविषयः'

इति। स खलु राजाधिराजं चन्द्रगुप्तं वृषलशब्देनैव सम्बोधयति न तु चाटुवचोभिः। स हि दृढाशयः। नन्दानुत्खाय चन्द्रगुप्ते राज्यं निवेश्यापि तत्स्थायित्वनिमित्तं प्रयतते राक्षससङ्ग्रहाय। स हि कूटनीतेस्तु मूर्तरूप एव।

राक्षसो हि विष्णुगुप्तो जात्या ब्राह्मणः स्वामिभक्तः सेवकः। स हि व्यपेतजीवनमपि स्वामिनं स्मरति प्रयतते च तद्वधप्रतिशोधाय समनोयोगम्। एतानेव गुणान् विलोक्य चाणक्यः प्रयतते तं हि चन्द्रगुप्तसाचिव्यग्राहणाय।

चन्द्रगुप्तो हि धीरोदात्तप्रकृतिको राजा। स हि सदाचारी विनयी शिष्टाचारी च। स चाणक्याज्ञां शिरसा बिभर्ति, तदाज्ञयाऽपि तेन सह कृतकवैरायापि कष्टेनैव तत्परो भवति। स हि गुरोराज्ञापालनमेव स्वकर्तव्यं मन्यते न तु स्वेच्छाचरणम्।

चन्द्रगुप्तविषये हि विशाखदत्तः परस्परप्रतिकूलं वाक्यौघं प्रयुनक्ति। एकतस्तु तं स मौर्यपुत्रं मन्यते 'रक्ताऽसि किं कथय वैरिणि मौर्यपुत्रे'। (२।६) 'पतिं पापं मौर्यं यदसि कुलहीनं वृतवती।' ( २।७ )। अपरतः स एव तं नन्दान्वयमपि कथयति। यथा—'भागुरायण……ततो नन्दकुलभक्त्या

'नदान्वय एवायम्' इति कृत्वा सुहृज्जनापेक्षया च अमात्यराक्षसश्चन्द्रगुप्तेन सह सन्दधीत। चन्द्रगुप्तोऽपि 'पितृपारम्पर्यागत एवायम्' इति सन्धिमनुमन्येत।' ऐतिहासिका अप्यत्र विविधमतयो दृश्यन्ते। केचित्तं नन्दस्यैव मुराख्यायां शूद्रजातीयपत्न्यां जातं मन्यन्ते। परे तु तं पञ्चनदाभिजनं तुच्छक्षत्रियमपि मन्यन्ते। अन्ये तु तं मौर्यगणतन्त्रसम्बद्धमपि। नन्दान्वयत्वं मौर्यपुत्रत्वञ्च चन्द्रगुप्तस्यैतावदेव सूचयतो यद्धि चन्द्रगुप्तो मातृपक्षेण नन्दवंशेन सह पितृपक्षेण मौर्यगणेन सह सम्बद्ध आसीत्। मौर्यगणो हि शाक्यक्षत्रियाणामेवैका शाखाऽऽसीद्यो हि हिमवत्पृष्ठमाश्रित्य मयूरव्यापारेणाजीविकां करोति स्म। नन्दकृतापमानेन रुष्टस्तक्षशिलाया आचार्यः चाणक्यस्तं राज्यप्राप्तिलोभेनोत्साह्य नन्दकुलविध्वंसेऽचोदयत्।

मलयकेतुस्तु तद्विपरीतमुद्दण्डप्रकृतिकः कार्याकार्यविवेकहीनः स्वेच्छाचारी च। स हि सर्वतश्चाणक्यप्रणिधिभिराहतोऽपि स्वं नैव जानाति। राक्षसः स्वयमेव कथयति—

'यो नष्टानपि जीवनाशमधुना शुश्रूषते स्वामिन-
स्तेषां वैरिभिरक्षतः कथमसौ सन्धास्यते राक्षसः।
इत्थं वस्तुविवेकमूढमतिना म्लेच्छेन नालोचितम्
दैवेनोपहतस्य बुद्धिरथवा पूर्वं विपर्यस्यति॥' (६।८)

अन्येऽपि यानि खलु पात्राणि सन्ति तानि सर्वाण्येव स्वस्वकर्मपरायणानि दृश्यन्ते। नास्त्यत्र कोऽपि प्रमादी वा कर्तव्यच्युतः।

**(ख) देवीचन्द्रगुप्तम्—**

देवीचन्द्रगुप्तमस्यैव कवेरपरा कृतिः। रचनादृष्टया त्विदं प्रथमा कृतिः, अस्य सम्प्रति पञ्चैवाङ्का लभ्यन्ते। अत्र हि ध्रुवदेव्याश्चन्द्रगुप्तस्य च प्रेमकथा वर्णिताऽस्ति। शृङ्गारप्रधानेऽप्यस्मिन् नाटके राजनीतिस्तु निहितैव कविना। कथानकं त्वित्थम्—

समुद्रगुप्तस्य सम्राजो ज्येष्ठतनयो रामगुप्तः पितुरनन्तरं मगधसिंहासनमध्यतिष्ठत्। स हि स्वभावेन कातरोऽकर्मण्यश्चासीत्। बलदर्पितो हि शकराजस्तं हि समाक्रम्य सन्धये प्रार्थितस्तन्निमित्तं तत्पत्नीं ध्रुवदेवीमुपायनरूपेणायाचत। रामगुप्त उपायान्तरमनवेक्ष्य तत्समर्पणाय तत्परोऽभूत्। किन्तु तदनुजो हि द्वितीयश्चन्द्रगुप्तस्तन्नैवासहत। स हि भ्रातृजायां निरुध्य स्वयमेव तद्वेषेण शकराजशिविरं प्रविश्य तं घातयित्वा सकुशलं प्रत्यागतः। तद्विक्रमप्रीता हि ध्रुवदेवी रामगुप्तमुल्लङ्घ्य चन्द्रगुप्तमेव पतित्वेन वृणुत। एषैव कथाऽत्र सुनिपुणमवतारिताऽस्ति। अस्या एव ध्रुवदेव्या गर्भतः कुमारगुप्तस्य प्रथमस्य जन्म। नाटकमिदं राजनीतिमिश्रितशाङ्गारिकम्।

**( ग ) अभिसारिकावञ्चि( न्धि )तकम्—**

इदमपि ऐतिहासिकं प्रेमाख्यानपरं रूपकम्। अत्र हि वत्सराज उदयनो वासवदत्ता पद्मावती च चित्रिताः सन्ति। रूपकमिदं सम्प्रति नैवोपलभ्यते। केवलं भोजदेवेन सरस्वतीकण्ठाभरणे स्मृतं दृश्यते।

**( घ ) राघवानन्दम्—**

रूपकमिदमपि सम्प्रति नैवोपलभ्यते। रामचन्द्रगुणचन्द्राभ्यां नाटचदर्पणे स्मृतं दृश्यत इदम्।

विशाखदत्तो हि संस्कृतरूपकसाहित्ये समुज्ज्वलं नक्षत्रम्।

**१३. कौमुदीमहोत्सवम्**

पञ्चस्वङ्केषु विभक्तं नाटकमिदं केन प्रणीतमिति सम्प्रत्यपि नैव ज्ञातम्। अस्य हि चरमो भागः प्रणष्टोऽस्ति तत्र हि चरमे...... 'कया' इति लिखितमस्ति। तेनास्य प्रणेता काचित्कवयित्री प्रतिभाति। सम्भवत्येषा विज्जका वा शीलाभट्टारिकाऽपि। किन्तु विज्जका तु दण्डिनं स्मरति शीला हि गद्यकाव्ये प्रसिद्धा श्लेषप्रधाने। कथ्यते हि रूपकमिदं ३९७ मितवैक्रमाब्दाभ्यर्णे कल्याणवर्मणो राज्यारोहणावसरेऽभिनीतमासीत्। अतो हि प्रणेत्राऽस्यापि ३८० मितवैक्रमाब्दमभितः स्थितिमता भाव्यम्। काशीप्रसादस्य मतमिदं प्रमाणान्तरैः पुष्टं न दृश्यते। वरदाचार्यो हि रूपकमिदं वैक्रमचतुर्थशतकोत्तराद्धाभ्यर्णे प्रणीतं मन्यते। अस्य कथानकं त्वित्थम्—

मगधराजस्य सुन्दरवर्मणः सेनापतिश्चण्डसेनो मगधशत्रुभिस्सह सन्धाय पाटलिपुत्रमाक्रम्य सुन्दरवर्माणं हत्वा स्वयमेव मगधसिंहासनमधितिष्ठति। सुन्दरवर्मणोऽमात्यो मन्त्रगुप्तः स्वामिपुत्रं कल्याणवर्माणं विन्ध्याटवीषु प्रच्छाद्य रक्षयति। अवसरं प्राप्य मन्त्रगुप्तश्चण्डसेनविरोधे प्रजा उत्साह्य तं घातयति। एतदन्तराले कल्याणवर्मा शूरसेनराजस्य कीर्तिसेनस्य तनयां कीर्तिमतीं परिणीय कीर्तिसेनसाहाय्येन मगधसिंहासनं पित्र्यमधिकरोति। तदभिषेकावसरे हि कार्तिकपौर्णमास्यां कौमुदीमहोत्सवः समायोजितो भवति।

समालोचका हि चण्डसेनं चन्द्रगुप्तमेव द्वितीयं मन्यन्ते पश्यन्ति च तत्र मुद्राराक्षसस्य प्रभावं केचन अवन्तिसुन्दर्याः प्रभावमपि। किन्तु ३९७ मितवैक्रमाब्दमभितस्तु मगधसिंहासने समुद्रगुप्तस्य प्रथमपुत्रो रामगुप्तः प्रतिष्ठित आसीत्। तत्र कल्याणवर्मप्रभृतीनां तु चर्चैव नास्ति। तथैव कौमुदीमहोत्सवप्रवर्तननिमित्तसूचकमिदं रूपकं मुद्राराक्षसादपि प्राचीनतरं प्रतिभाति। किन्तु तत्रत्यं हि—

'शौणकमिव बन्धुमती कुमारमविमारकं कुरङ्गीव।
अर्हति कीर्तिमतीयं कान्तं कल्याणवर्माणम्॥' ( ३।१५ )

पद्यमादाय तु तत्रत्यं शौनकबन्धुमतीप्रसङ्गं दण्डिनोऽवन्तिसुन्दरीतः प्रभावितं मत्वा रूपकमिदं दण्डिनः परवर्ति मन्यन्ते केचित्। सारीकातः कौमुदीमहोत्सवस्य प्रणेतृत्वेन विज्जकैव मता। तेनास्य प्रणयनमपि वैक्रम-सप्तमशतकोत्तरार्द्धमभितोऽनुमितः।

**१४. महेन्द्रविक्रमः : मत्तविलासप्रहसनम्**

पल्लववंश्येन काञ्चीपुराधीशेन सिंहविष्णोः सुतेन महेन्द्रविक्रमेण मत्त-विलासाख्यं प्रहसनरूपकं प्रणीतमस्ति। अस्य हि प्रणयनकालः ६६७ मित-वैक्रमाब्दमभितः। अत्र हि काञ्चीपुर्याः नागरिकजीवनं चित्रितमस्ति। ग्रन्थेऽस्मिन् बौद्ध-कापालिक-पाशुपतादीनां दुर्व्यवसनग्रस्तत्वं दर्शितं सुनिपुणम्।

**१५ श्यामिलकः ( सोमिलः ) : पादताडितकम्**

वैक्रमसप्तमशतकपूर्वार्द्धाभ्यर्णे स्थितिमान् श्यामिलकः यो हि बाणभट्टेन सोमिल इति स्मृतः पादताडितकाख्यं भाणं प्रणीतवानासीत्। अन्वयनाम्नि ग्रन्थेऽस्मिन् वर्ण्यते यद्विष्णुनागाख्यस्य विप्रस्य शिरसि कयाचिद्वेश्यया पादेन प्रहृतम्। तत्प्रायश्चित्तार्थं पृष्टैर्ब्राह्मणैः कथितं यत्तदर्थं स पुनरपरस्यापि पादस्य शिरस्येव प्रहारं कारयेदिति। ग्रन्थेऽस्मिन् पारशवाख्यः कश्चित्कविः स्मृतो यं हि बाणभट्टोऽपि स्मरति। ग्रन्थस्यास्य शैली कादम्बर्याः सह संवा-दिनी। अत्र हि दत्तकवात्स्यायनौ नैव स्मृताविति कवेरस्य वात्स्यायनपूर्ववर्ति-त्वमपि केचित्कल्पयन्ति। इदमेवानुसृत्य बाणेन मुकुटताडितकं प्रणीतं दृश्यते। तेन ह्यस्य बाणपूर्ववर्तित्वं तु सिध्यत्येव। नाटकेऽस्मिन् बौद्धानां सिंहलानां कोङ्कणानामान्ध्राणाञ्चोल्लेखो दृश्यते।

**१६. श्रीहर्षः : प्रियदर्शिका, रत्नावली, नागानन्दम्**

श्रीहर्षाख्यस्य कवेः सन्ति त्रीणि रूपकाणि प्रसिद्धानि, येषु प्रियदर्शिका रत्नावली च द्वे नाटिके नागानन्दश्च नाटकम्। भारतीयपरम्परायां सन्ति हि षट् हर्षनामधारिणो येषु स्थाण्वीश्वरसम्राट् श्रीहर्षवर्धनः (६६३-७०४ वै०), मालवानरेशस्य सिन्धुराजस्य पिता, ( १०२५ वै० ), काश्मीरनरेशः श्रीहर्षः ( ११४६–११५८ वै० ), कामरूपनरेशः श्रीहर्षः ( ८१० वै० ), नैषधीय-चरितमहाकाव्यप्रणेता श्रीहर्षः ( १२२५–१२५२ वै० ) च। तथैव काव्य-प्रदीपस्य प्रणेतुर्गोविन्दठक्कुरस्य भ्राता श्रीहर्षश्च। रत्नावलीं हि जयापीडस्य (८१२–८४३ वै०) मन्त्री दामोदरगुप्तः स्वीये कुट्टनीमते स्मरतीति तदनन्तर-वर्तिनः सर्वेऽपि श्रीहर्षाः स्वत एवापास्ताः। तेन हि यदि श्रीहर्ष एव रूपक-त्रय्याः प्रणेता मन्यते तदा स्थाण्वीश्वरः श्रीहर्ष एव तन्निमित्तमवशिष्यते। रूपकत्रय्या अस्याः प्रणेतृविषये सन्ति त्रयो वादाः प्रचलिताः। ते च यथा—

रूपकत्रय्या अस्याः प्रणेता श्रीहर्षः, अस्याः प्रणेता धावकाख्यः कश्चिद्विद्वान्, अस्याः प्रणेतारस्त्रयो विभिन्नकवय इति। प्रथममते हि रूपकत्रय्येषा स्थाण्वीश्वरेश्वरश्रीहर्षप्रणीता मन्यते। मतस्यास्य समर्थनेऽधोलिखिततर्का उपस्थाप्यन्ते —

रूपकत्रय्या अस्याः प्रस्तावनाभागे आसां श्रीहर्षप्रणीतत्वमुक्तमस्ति। यथा प्रियदर्शिकायां—

सूत्रधारः ( परिक्रम्य ) अद्याहं वसन्तोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः यथा अस्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनाऽलङ्कृता प्रियदर्शिका नाम नाटिका कृतेत्यस्माभिः श्रोत्रपरम्परया श्रुता।

'श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी' ( ३ ) तथैव रत्नावल्यां यथा 'प्रियदर्शिका' इत्यस्य स्थाने 'रत्नावली' इति। शेषं पूर्ववदेव। एवमेव नागानन्देऽपि परवर्तिनो भोजराज–सोढ्डलप्रभृतयः श्रीहर्षं सफलकवित्वेन वर्णयन्ति।

इत्सिंहो हि चीनीपर्यटकः श्रीहर्षकृतत्वेन नागानन्दं नाम्नैव स्मरति। स हि श्रीहर्षस्य निधनं पश्चादेव भारतं समागत आसीत्।

द्वितीयमतानुयायिनः कथयन्ति यद्रूपकत्रितयमिदं केनचिद् धावकाख्येन कविना प्रणीय श्रीहर्षाद् बहुधनमादाय तन्नाम्ना ख्यापितमिति। मतस्यास्य समर्थका हिं महेश्वरनागेशभट्ट-जयरामवैद्यनाथ-भीमसेन-वामनप्रभृतयः। तेषां तथाचिन्तने आधारस्तु मम्मटस्य 'श्रीहर्षादेर्धावकादीनामिव धनं' इति काव्यप्रकाशवृत्तिरेव तथैव रत्नावलीगता तृतीया नान्दी च विशेषतस्तत्र गतं 'चन्द्रवपुर्नरेन्द्रचन्द्रः' इति पदञ्च। महेश्वरनागेश-वैद्यनाथजयरामा अपि धावको हि कविः रत्नावलीं प्रणीय श्रीहर्षाय समर्प्य बहुधनमादावानिति वृद्धोक्तिं स्मरन्ति। भीमसेनस्तु सुधासागरे ततोऽप्यधिकं 'श्रीहर्षानिधाद्राज्ञः सकाशाद् धावककविना रत्नावलीनाटिकां कृत्वा महद् धनं प्राप्तमिति प्रसिद्धम्। आदिपदाद्भोजप्रबन्धकारिभिर्भोजाद् माघकारिभिर्माघाख्यवैश्याद् बहुतरं धनमाप्तमित्याद्यूह्यम्' इति कथयति। वामनस्तु धावकस्तनामा कविः। स हि श्रीहर्षनृपनाम्ना रत्नावलीनाम्नीं नाटिकां कृत्वा बहु धनं लब्धवानिति प्रसिद्धिरुद्द्योतादौ स्पष्टम्। धानकनामा कश्चित्पण्डितः प्राक्परमदरिद्रश्चिन्तामणिनामकमहामन्त्रविशेषोपासनप्रसादेन विचित्रविद्याशाल्यपि निर्धनत्वेन बहु क्लिश्यमानः सन् नैषधीयचरिताख्यं शतसर्गात्मकं विचित्रं महाकाव्यं विरच्य गुणज्ञशिरोमणिं श्रीहर्षनामानं राजानं प्रदर्श्य तेनातितुष्टात्ततः प्रतिवर्षं शतसहस्रात्मकरूप्यमुद्रोत्पत्तियोग्यां भूमिं प्रतिगृह्य तत्काव्ये

प्रतिसर्गान्तिमश्लोके तत्पित्रोर्नामभ्यां सहितं तत्कर्तृत्वेन तन्नाम ग्रथितवानिति वृद्धैरुपाख्यायते इत्यच्युतरायकृत-साहित्यसारटीकायामुक्तम्' इति स्मरति। एतेषां तथा कथने हेतुरपि दृश्यते।

यदि हि मम्मटेन, यथा केचित्कथयन्ति, श्रीहर्षादिः कवीनां पोषणमेव स्मृतं स्यात्तदा तेन सद्यः पुरोवर्ती भोजः कथं न स्मृतः। भोजो हि सर्वेषु कवीनामाश्रयत्वेन प्रथितः। स हि भोजमपि जानात्येव तस्य दानशीलताञ्च प्रशंसत्येव दशमोल्लासे। तेन हि मम्मटसमये तथाप्रसिद्धिरेवाऽऽसीत् या हि पश्चाद्वर्तिभिरपि अवधारिता। अपरञ्च रत्नावल्यां त्रीणि नान्दीपद्यानि दृश्यन्ते यत्रान्तिमे 'प्रतयतु चन्द्रवपुर्नरेन्द्रचन्द्रः' इति यदुक्तं तस्य कोऽभिप्रायः। किं श्रीहर्षः स्वमेवाशीर्भिर्योजयति ? अवश्यं नैव। तर्हि पद्येनानेनावश्यमेव तदनुवर्तिना केनाऽपि कृतेन भाव्यमेव। यद्धि बाणभट्टस्य हर्षचरिते 'राज्ञां सम्भाषणेषु परित्यक्तमपि मधु वर्षन्तं काव्यकथास्वपीतामृतमुद्वमन्तमिति', 'अपि चास्य ··· ··· कवित्वस्य वाचो न पर्याप्तो विषयः' इत्यादिकथनेन हर्षस्य ग्रन्थकर्तृत्वं सिद्धं मन्यते, यथा कैश्चित्तथाऽपि मतं, तदा यदि बाणस्तथा प्रभावितः श्रीहर्षस्य कवित्वशक्त्या तदा तत्कृतग्रन्थनाम कथं तेन न गृहीतमित्यपेक्षायां तैः सह न किमप्युत्तरम्। तथैव केचित्तु काव्यप्रकाशगते तस्मिन्वाक्ये धावकस्थाने बाणशब्दं पठित्वा, यथा निदर्शनाख्यायां टीकायां तथैवास्ति, रत्नावलीं बाणकर्तृकां मन्यन्ते। ते हि रत्नावलीगतस्य द्वीपादन्यस्माद्······इत्यादिपद्यस्य हर्षचरितेऽपि सत्त्वमपि तथात्वे प्रमाणत्वेन निदर्शयन्ति।

तृतीयपक्षधरास्तु त्रयाणामेव रूपकाणां त्रीनेव कर्तॄन् मन्यन्ते। यदि हि प्रस्तावनाभाग उपेक्ष्यते तदा तेषु कथमपि रचनासाम्यं नास्ति। रत्नावल्यपेक्षया प्रियदर्शिका बालिकैव। नागानन्दापेक्षया रत्नावली किशोर्येव।

यत्र कुत्र तु—

'आदौ भासेन रचिता नाटिका प्रियदर्शिका।
तस्य रत्नावली नूनं रत्नमालेव राजते॥'

इत्यादि कथनमपि दृश्यते। यदि हि कश्चित् प्रियदर्शिकां बाणकृतिं रत्नावलीं बाणकृतिं वा धावककृतिं नागानन्दञ्च मातङ्गदिवाकरकृतिं मन्यते तेन युक्तिर्नैवावलम्बितेति कथयितुं नैव शक्यते, यतो हि प्रियदर्शिकायां बाणस्य शैली स्पष्टमेव दृश्यते दिङ्मात्रं निदर्शनं यथा—

'यं तथा नवग्रह इव गजपतिः खलखलायमान-लौहशृङ्खलाबन्धप्रतिस्खलच्चरणः शून्यदुष्करहृदयसन्तापो रोषवशात्तम्भितदृष्टिर्गुरुकरस्फोटितधरणिमार्गो रजनीष्वप्यनिद्रासुखमनुभूतोऽसि।'

किन्तु स्वल्पसाम्यमेव कर्तृकत्वं नैव साधयति । येन केनापि प्रणीतं स्यादेतद्धि रूपकत्रितयं वयं परम्परया श्रीहर्षप्रणीतमेव मन्यामहे । अथैतेषां संक्षेपेण परिचयोऽत्रोपस्थाप्यते ।

( क ) **प्रियदर्शिका**--इयं हि नाटिका तेन चतुरङ्किका । अत्र हि वत्सराज उदयनो नायको धीरललितप्रकृतिकः । नायिका च प्रियदर्शिका अङ्गराजपुत्री आरण्यकाऽऽख्या । अत्र हि मुख्यो रसः शृङ्गारो वृत्तिश्च कौशिकी । अत्र उदयनस्य पद्मावतीपरिणयनानन्तरावस्था वर्णिता । विजयसेनो हि प्रधानो राजपुरुषोऽत्र । अङ्गराजो हि दृढवर्मा स्वां दुहितरं प्रियदर्शिकामुदयनाय वत्सराजाय दित्सति । तेन दृढवर्मणा कन्यादाननिमित्तं प्रत्याख्यातः कलिङ्गराजस्तं विक्रम्य निरुणद्धि । सम्भ्रमे तस्मिन्नङ्गराजकाञ्चुकीयः प्रियदर्शिकां तन्मित्रे विन्ध्यशक्तौ निक्षिपति । विन्ध्यशक्तेरुदयनसेनयाविनष्टे विजयसेनस्तामुदयनप्रासादे प्रापयति । तां तत्र विन्ध्यशक्तिदुहितृरूपेण सर्वे जानन्ति । एकदा पुष्पादानप्रसङ्गे तां दृष्ट्वोदयनस्तस्यै स्पृहयति आरच्यते च तन्निमित्तं नाटचमपि । निद्रावशेन विदूषकेन रहस्ये प्रकाशिते देवी वासवदत्ता तां निगृह्णाति । पश्चाच्च विषयिषेण सोदयनसकाशं प्राप्यते । परिचिता च सा वासवदत्तयोदयनाय पत्नीत्वेन समर्प्यते । नाटिकेयं न तथा नाटकीयतामावहति । सम्पूर्णैव घटना कृत्रिमा दृश्यते । घटनासंयोजनाऽपि नातिप्रौढा । तथापि अस्या महत्त्वं न तथा हीनम् ।

( ख ) **रत्नावली**—इयमपि नाटिका तेन चतुरङ्किका । अत्र हि सिंहलाधिपतेः सुताया रत्नावल्या उदयनस्य च प्रेमप्रसङ्गो वर्णितोऽस्ति । सिंहलेश्वरसुता हि वत्सराजायोदयनाय पत्नीत्वेन सङ्कल्पिता नौसाधनेन सपरिवारं प्रेषिता समुद्रे विपद्यते । ततश्च तां कश्चित्कौशाम्बीयो वणिक् समुद्धृत्य विपदस्तां वत्सराजप्रासादे प्रापयति । सा हि तत्र सागरिकानाम्ना ज्ञायते । ताञ्च वसन्तोत्सवे दृष्ट्वोदयनस्तस्यै स्पृहयति । दैवीव्यवधानेन विघ्नितेऽपि मिलने पश्चात्तस्या एव प्रसादेन ज्ञातपरिचया सोदयनेन परिणीयते ।

नाटिकेयं प्रियदर्शिकापेक्षया प्राञ्जलतरा । अत्र हि घटनासंयोजनं स्वाभाविकं नाटचानुरूपञ्च । वर्णनचातुरी चात्र प्रशंस्या ।

( ग **नागानन्दम्**—नागानन्दं हि पञ्चाङ्कं नाटकम् । अत्र हि जीमूतवाहनस्यौदार्यं सुनिपुणं चित्रितमस्ति । नाटयेऽस्मिन् मुख्यो रसः शान्तो यद्यपि विषयेऽस्मिन् पण्डितेषु विवादः, नायको जीमूतवाहनो धीरोदात्तः नायिका च मलयवती तथैव ।

पित्रोः शुश्रूषां वने स्थितो जीमूतवाहनो विषयनिस्पृहोऽपि सिद्धराजमित्रावसोर्भगिनीं मलयवतीं दृष्ट्वा तदासक्तस्तस्यै स्पृहयति । सा तं कामयते ।

गुरुजनानुज्ञया तयोरुद्वाहः सम्पद्यते। ततो हि नागकुलप्रणाशदुःखितो जीमूतवाहनो गरुडाय शङ्खचूडस्थाने आत्मानं समर्पयति। गरुडोऽपि तं भक्षयन्नपूर्वमास्वादं प्राप्य भक्षणाद्विरमते। एतस्मिन्नन्तरे शङ्खचूडागमनेन सर्वं ज्ञात भवति। गौरी भगवती तं जीवयति भक्षितांश्च नागान् गरुडः पीयूषवर्षया। ततश्च प्राप्तविद्याधरचक्रवर्तिपदो जीमूतवाहनः सह प्रियया सुखमेधते।

नाटकमिदं नाट्येतिहासे मूर्धन्यं स्थानमाददाति। अत्रत्यं वृत्तं वृत्तसंयोजनं वर्णनचातुर्यं नाटकीयत्वञ्चास्य तथात्वे हेतवः। बोधिसत्त्वचरिताश्रितत्वादप्यस्य ग्राह्यत्वं विशिष्टतमम्। विषयस्यास्थायित्वमत्र तथा प्रतिपादितं यथा प्राकृतोऽपि जनस्तथाचिन्तने प्रेरितो भवति।

एषु हि रत्नावली लक्षणशास्त्रिभिर्धनिकविश्वनाथप्रभृतिभिः नाट्यशास्त्रलक्षणसम्मतेति सादरमुद्धृता दृश्यते।

श्रीहर्षस्य शैली सरला सरसा वैदर्भीप्राधान्या च। आस्वाद्यतामस्य काव्यामृतस्वादो यथा—

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरतैरातन्वतीमात्मनः।
अद्योद्यानलतामियां समदनां नारीमिवान्यां ध्रुवां
पश्यन् कोपविपाटलद्युतिमुखे देव्याः करिष्याम्यहम्॥

सम्भरेण शृङ्गारवर्णनं यथा नागानन्दे—

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया॥ (३।४)।
औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः।
दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्फलका हरेण हसता क्लिष्टा शिवायाऽस्तु वः॥
(रत्ना० १।२)।

वर्णनानैपुण्यं यथा—

व्यक्तिर्व्यञ्जनधातुना दशविधेनाऽप्यत्र लब्धामुना
विस्पष्टो द्रुतमध्यलम्बितपरिच्छिन्नस्त्रिधाऽयं लयः।
गोपुच्छप्रमुखाः क्रमेण यतयस्त्रिस्रोऽपि सम्पादिताः
तत्त्वौघानुगताश्च वाद्यविधयः सम्यक्त्रयो दर्शिताः॥
(नागा० १।१५, प्रिय० ३।१०)

प्रियदर्शिकायां रत्नावल्याञ्च मालविकाग्निमित्रस्य प्रभावो दृश्यते किन्त्वत्र तयोर्मौलिकता नैवोपहृता । नागानन्दं तु स्वप्रकृतिकं प्रथममेव रूपकं यत्र हि मूर्तिमदौदार्यमेव तत्र नायकत्वेन वर्णितम् ।

**१७. भट्टनारायणः : वेणीसंहारम्**

भट्टनारायणस्य वेणीसंहारं हि सर्वलक्षणोपेतं शास्त्रीयनाटकम् । भट्टनारायणोऽपि संस्कृतपरम्परेतरकविरिव स्वजीवनविषये नितान्तमेव मौनमालम्बते । वेणीसंहारं हि वैक्रमाष्टमशतकोत्तरार्द्धभवो वामनः काव्यालङ्कारसूत्राणां वृत्तौ स्मरति इति कवेरस्य तत्पूर्ववर्तित्वं सिध्यति । स हि सहोक्त्यलङ्कारोदाहरणे—'अस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्ता बलानि' इति मुद्राराक्षसगतस्य ( ५।१६ ) पद्यस्यान्तिमं पादमुद्धरति । एवमेवानन्दवर्धनः तृतीयोद्द्योतस्य द्वादशतमकारिकाया वृत्तौ "यथा वेणीसंहारे विलासाख्यस्य प्रतिमुखसन्ध्यङ्गस्य प्रकृतरसनिबन्धनाननुगुणमपि द्वितीयेऽङ्के भरतमतानुसरणमात्रेच्छया घटनम्" इति स्मरति । आनन्दवर्धनो हि ९०७ मितवैक्रमाब्दमभितः स्थितिमान् । अतो हि भट्टनारायणस्य वैक्रमसप्तमशतकमभितः स्थितिकालः स्पष्टः । असौ हि बाणसमकालिको वा ततोऽपि किञ्चित्कालपूर्ववर्ती । तं हि दण्डयाचार्यः अवन्तिसुन्दरीकथायां "व्याप्तुं पदत्रयेणाऽपि यः शक्तो भुवनत्रयम् । तस्य काव्यत्रयव्याप्तौ चित्रं नारायणस्य किम् ॥" इति कथयित्वा भट्टनारायणस्य काव्यत्रयं स्मरति ।

कथ्यते हि भट्टनारायणो जन्मना कान्यकुब्जीयो ब्राह्मणः पश्चाद्वङ्गनरेशानुरोधेन वङ्गदेशमाश्रितवान् । राजा चायं ७२८ मितवैक्रमाब्दमभितः स्थितिमानासीत् आदिशूराख्यः । भट्टनारायणो हि वङ्गीयठाकुरवंशस्य प्रतिष्ठापकः स्मृतः । असौ हि भट्टः मृगराजलक्ष्माऽप्यासीत् । तत्र प्रथमेन विप्रत्वं द्वितीयेन क्षत्रियत्वं सिध्यति । सम्भवति ब्राह्मणोऽसौ तीक्ष्णबुद्धित्वाद्राजकार्ये प्राधिकृतः मृगराजलक्ष्मबिभूषणं प्राप्तवान् ।

वेणीसंहारं ह्यस्य केवला समुपलभ्यमाना कृतिः । अत्र हि षट्स्वङ्केषु महाभारतयुद्धसम्बद्धा कथा चित्रिताऽस्ति । नाटकमिदं वेणीसंहारमिति अन्वर्थनाम । दुर्योधनवधानन्तरमेव केशप्रसाधनाय कृतप्रतिज्ञा द्रौपदी अवेणिकैव तिष्ठति । दुर्योधनशोणितशोणपाणिर्भीमो द्रौपदीकचानुत्तंसयतीत्यस्य वेणीसंहारं नाम यथार्थम् । अत्र हि वीरो रसो मुख्यः शृङ्गारश्चाङ्गी । अत्र सर्वेऽपि नाटकसन्धयः सन्ध्यङ्गसहिता यथायोगं समुपन्यस्ता सन्ति । तथाकरणे हि युद्धप्रकरणे विलासाख्यसन्ध्यङ्गनिर्वहणाय प्रस्तुतो भानुमतीदुर्योधनप्रेमाचारो नैव रसपुष्टयै भवतीति ध्वनिकारेण पर्यालोचितम्—सन्धिसन्ध्यङ्ग-

घटनं रसाभिव्यक्त्यपेक्षया। न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ( ३।९२ ) इति। अत्र हि पात्राणामपि द्वे अवस्थे दृश्येते कविचालिता स्वतः-सिद्धा च। अश्वस्थामा हि कर्णापेक्षया प्रशस्यतरः सम्पाद्यते कविना। तथैव दुर्योधनापेक्षया भीमस्य। रूपकमिदं गौडीरीत्या ग्रथितं यत्र ह्योजोगुणः प्राशस्त्येनाधीयते। पात्राणां स्वतन्त्रव्यक्तित्वमस्य वैशिष्ट्येष्वेकम्। अत्र हि भीमो नायको दुर्योधनः प्रतिनायकश्च किन्तु कवेः पक्षपातस्तु भीमेऽपि नैव स्पष्टं प्रतिभाति तथापि स एव वेण्याः संहारं करोतीति स एव फलस्वामी मतः। तथा हि सति नाटकमिदं सुखान्तं भवति। दुर्योधनस्य नायकत्वेऽनुमते, यथा हि केचित्तथाप्यामनन्ति नाट्यमिदं दुःखान्तं सम्पद्यते। दुर्योधनकारणे-नैव नाटकवृत्तं रोचकं सर्वग्राह्यञ्च सञ्जातमस्तीति तेषामभिमतम्।

कवेरस्य भाषा प्रवाहमयी सरसा ओजोगुणव्याप्ता च। तस्य तु सुरत-वर्णनेऽप्योज एव प्राधान्येनोपतिष्ठते। अस्य हि वर्णनाचातुरी सर्वाति-शायिनी। तत्र ओजसः स्थित्यपि प्रायोऽल्पसमासे एव दृश्यते। यथा—

'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां,
यो यः पञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्॥ (३।३२)

दीर्घसमासमण्डितपदैरोजो यथा—

'चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोभितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि! भीमः॥ ( १।२१ )

रूपकेऽस्मिन् सन्धिप्रस्तावविरोधे भीमस्य प्रतिक्रिया यथा प्रथमेऽङ्के—

'मथ्नामि कौरवशतं समरे न कोपाद्
दुश्शासनस्य रुधिरं न पिबाम्युरस्तः।
सञ्चूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन॥ ( १।१५ )

इत्यादि, दुर्योधनभानुमतीप्रेमप्रसङ्गो यथा द्वितीयेऽङ्के—

किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया
निद्राच्छेदविवर्तनेष्वभिमुखी नाद्यासि सम्भाविता।
अन्यस्त्रीजनसङ्कथालघुरहं स्वप्ने त्वया लक्षितो
दोषं पश्यसि कं प्रिये परिजनोपालम्भयोग्ये मयि॥ ( २।९ )

इत्यादि। अश्वत्थामकर्णविवादो यथा तृतीयेऽङ्के—

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य।
तव भुजबलदर्पाध्यायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम् ॥ (३।४०)

इत्यादि। तत्रैव भीमस्य गर्जनं यथा—

कृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यहृतं राज्ञां गुरूणां पुरः।
यस्योरःस्थलशोणितासवमह पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥ (३।४७)

इत्यादि। पञ्चमेऽङ्के भीमार्जुनयोर्धृतराष्ट्रं प्रति वाक्यं यथा—

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम् ॥ (५।२७)

इत्णादि। भीमस्य विजयोद्घोषो यथा—

भूमौ क्षिप्तं शरीरं निहतमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये निषण्णा चतुरुदधिपयःसीमया सार्धमुर्व्या।
भृत्या पित्राणि योधाः कुरुकुलमखिलं दाधयेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम् ॥ (६।३९

तथैव—

नाहं रक्षो न भूतो रिपुरुधिरजलप्लाविताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि।
भोः भो राजन्यवीराः समरशिखिशिखादग्धशेषाः कृतं व-
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥ (६।३७)।

इत्यादि च निकाममेव नाटकस्यास्योत्कर्षतामादधति। यच्च विलासाख्यस्य सन्ध्यङ्गस्य युद्धमुखे सन्निवेश आनन्दवर्धनमम्मटविश्वनाथादिभिर्दोषत्वेन गृहीतस्तत्र हि प्रत्यालोचकाः इदमप्यामनन्ति यद् दुर्योधनस्य नायकत्वे स्वीकृते तत्पतनतीव्रताद्योतकहेतुना सन्ध्यङ्गमिदं प्रासङ्गिकमेव।

## १८. शक्तिभद्रः : आश्चर्यचूडामणिः

शङ्कराचार्यशिष्यपरम्परायामन्यतमेन शक्तिभद्रेण आश्चर्यचूडामणिनामकं सप्ताङ्कं नाटकं प्राणायि। अद्भुतरसप्रधानेऽस्मिन्नाटके आश्रमवासिप्रदत्त-

रत्नसाहाय्येन रामो हि राक्षसप्रयुक्तमायातः स्वं रक्षितुं प्रभवतीत्यस्य संज्ञाऽऽश्चर्यचूडामणि इति। अस्य कवेः स्थितिकालः ७६५ मितवैक्रमाब्दमभितो मतः। अस्यैव कवेः 'उन्मादवासवदत्त' नाम नाटकान्तरमपि आसीदिति नाटकस्यास्य प्रस्तावनातो ज्ञायते किन्तु तत्सम्प्रति नैवोपलभ्यते।

**१९. यशोवर्मा : रामाभ्युदयम्**

कान्यकुब्जेश्वरो हि यशोवर्मा रामाभ्युदयसंज्ञकं नाटकं प्रणीतवानासीत्। अस्य च स्थितिकालः ७६०–७९० मितवैक्रमाब्दानभितो मतः। नाटकमिदं षडङ्कं भावभाषादृष्ट्या प्रशस्यतमञ्च। शारदातनयः स्मरति—

'षडङ्कं दृश्यते लोके रामाभ्युदयनाटकम्'

इति। अस्य हि कवित्वं रसोदञ्चितम्। यथा हि क्षेमेन्द्रः सुवृत्ततिलके समुधृतं पद्यम्—

यत्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये! तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते॥ (२।७१)

तत्रैव साक्षेपो यथा यशोवर्मणः—

स यस्य दशकन्धरं कृतवतोऽपि कक्षान्तरे
गतः स्फुटमवध्यतामधिपयोधि सान्ध्यो विधिः।
तदात्मज इहाङ्गदः प्रहित एव सौमित्रिणा
क्व स क्व स दशाननो ननु निवेद्यतां राक्षसाः॥ (३।८८)

ध्वनिकार आनन्दवर्धनोऽस्य निम्नाङ्कितं पद्यमुद्धरति—

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैः
त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोककेवलमहं धात्रा सशोकः कृतः॥ (२।४२।३)।

ध्वन्यालोकस्य लोचनेऽभिनवगुप्तः स्मरति—

'यदुक्तं कथामार्गे न चातिक्रमः, इति रामाभ्युदये यशोवर्मणा' इति। काव्यस्यास्य विलोपः संस्कृतजगतोऽपूरणीया क्षतिरेव।

**२०. भवभूतिः : उत्तररामचरितं, महावीरचरितं, मालतीमाधवम्**

संस्कृतनाट्यपरम्परायां भवभूतेः प्रवेशः सौभाग्याय समपद्यत। यद्यपि समालोचकाः 'उत्तरे रामचरिते भवभूतिर्विशिष्यते' इति समामनन्ति तथाप्यस्य सर्वा अपि कृतयो विशिष्टा एव।

भवभूतिर्हि कान्यकुब्जेश्वरस्य यशोवर्मणः सभापण्डित आसीदिति राजतरङ्गिण्या :—

'कविवाक्पतिराजश्रीभवभूत्यादिसेवितः ।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ॥' ( ३।१४४ )

इति वचनाज्ज्ञायते । तदनुसारेण यशोवर्मा ७९० मितवैक्रमाब्दे काश्मीर-नरेशेन लाटादित्येन विजित आसीत् । वामनाचार्यः ( ८५७ वै० ) भवभूते-र्महावीरचरिताद्—

'दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
ष्टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥ ( १।५४ )

इति पद्यमुद्धरति । तेन हि भवभूतेर्वामनपूर्ववर्तित्वं सिध्यति । तथैव बाणभट्टो हर्षसभाकविस्तं न स्मरति । बाणो हि ७१५ मितवैक्रमाब्दाभ्यर्णे स्वर्गतः इति बाणवामनमध्यवर्ती अर्थात् ७५०–८०० मितवैक्रमाब्दान्तरालवर्ती काल एव भवभूतेः स्थितिकाल इति पर्यवस्यति । तथैव यशोवर्मण एव सभा-कविर्वाक्पतिराजः—

'भवभूतिजलधिनिर्गतकाव्यामृतरसकणा इव स्फुरन्ति ।
यस्य विशेषा अद्यापि विकटेषु कथानिवेशेषु ॥'

इति तं स्मरति । अत्रत्यः 'अद्यापि' शब्दो भवभूतेर्वाक्पतिराजपूर्ववर्तित्वं सूचयति । वाक्पतिराजस्य गउडवहो काव्यमवश्यमेव ७९७ मितवैक्रमाब्द-पूर्वमेव प्रणीतमासीत्, यतो हि इदमपूर्णमेव वर्तते । सम्भवतो यशोवर्मणो ललितादित्यात्पराजयानन्तरमस्य प्रणयनं निरुद्धम् । तेन हि यदा 'गउडवहो' काव्यं प्रणीयमानमासीत्तदा भवभूतिः परां प्रसिद्धिमवाप्तवानासीदिति स्पष्ट-मेव बाणवाक्पतिराजयोरन्तराले तस्य स्थितिकालः ।

सौभाग्यवशाद्भवभूतिर्हि मालतीमाधवमहावीरचरितप्रस्तावनायां स्वपरि-चयं प्रस्तौति । तदनुसारेण स हि विदर्भस्थपद्मपुराभिजनः तैत्तिरीयशाखा-ध्यायी उदुम्बरवंशस्य विप्रस्य भट्टगोपालाख्यस्य पौत्रः नीलकण्ठाख्यस्य पुत्रः जातुकर्ण्याख्यायां जातः । तस्य हि प्रारम्भिकं नाम श्रीकण्ठः पश्चाच्च भवभूती-त्याख्यया प्रसिद्धः । कथ्यते हि तस्य 'साम्बा पुनातु भवभूतिपवित्रमूर्तिः' गिरि-जायाः कुचौ वन्दे भवभूतिसिताननौ' इति पद्यांशद्वयाधारेण हि स भवभूति-संज्ञामवाप । केचिद्भवभूतिं कुमारिलभट्टशिष्यादुम्बेकाचार्यादभिन्नं मन्यन्ते । विषयोऽयं समधिकानुसन्धानमपेक्षते । स हि उज्जयिनीवास्तव्य आसीदिति

तस्य प्रबन्धेषु कालप्रियनाथस्योल्लेखाज्ज्ञायते। भवभूतिर्हि नाटचान्येतानि अभिनयार्थमेव प्रणीतवानिति तस्य 'निसर्गसौहृदेन भरतेषु वर्तमानः' इति कथनाज्ज्ञायते। तस्य गुरुर्ज्ञानसागरो ज्ञाननिधिरासीदिति 'यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः' इतिकथनात्सिध्यति। बालरामायणे राजशेखरः स्मरति—

'बभूव वल्मीकभवः कविः पुरा ततः प्रपेदे भुवि भर्तृमेण्ठताम्।
स्थितः पुनर्यो भवभूतिरेखया स वर्तते सम्प्रति राजशेखरः॥

इति। राजशेखरस्य स्थितिकालस्तु ९५० मितवैक्रमाब्दमभितः स्मृतः। भवभूतेरुपर्युक्तरूपकत्रितयातिरिक्तं अभिराममण्याख्यममोघराघवाख्यं महावीरानन्दाख्यं च रूपकं स्मर्यते।

भवभूतेर्हि त्रिषु रूपकेषु कतमत्प्रथममित्यपेक्षायां सर्वेऽपि उत्तररामचरितस्य चरमत्वं त्वामनन्त्येव किन्तु शेषयोः कतरः प्रथम इत्यपेक्षायां परस्परविरोधिमतं दृश्यते। केचिद्धि मालतीमाधवगतम्—

'ये नाम केचिदिह नः प्रथमन्त्यवज्ञां जानन्तु ते किमपि तान्प्रति नैष यत्नः।
उत्पत्स्यते मम तु कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥'

इति पद्यं हि पूर्वरचनातिरस्कारप्रतिक्रियास्वरूपं मत्वा महावीरचरितमेव प्रथमां कृतिं मन्यन्ते। किन्तु तन्न युक्तियुक्तं प्रतिभाति। त्रिषु रूपकेषु शृङ्गार-वीर-करुणरसाः प्राधान्येनावलम्बिताः। तेन हि रचनाक्रमेणापि तदनुवर्तिनैव भाव्यम्। अतो मालतीमाधवमेव प्रथमा कृतिरित्यपरे। वस्तुतस्तु मतमिदं तथ्यसन्निकर्षं स्पृशति। मालतीमाधवं हि शृङ्गाररसप्रधानं प्रकरणमवश्यमेव कवेर्नवयौवनोत्साहस्य प्रतीकम्। ७७० मितवैक्रमाब्दमभितो यशोवर्मा राज्यमवाप। भवभूतिर्हि तस्य न केवलं सभापण्डितोऽपि तु गुरुरप्यासीत्। तस्य रामाभ्युदयं नाटकं भवभूतेः कृतितः भावभाषादिविषये प्रभावितं दृश्यते समुपलब्धश्लोकमूल्याङ्कनतः। सम्भवति एतद्यन्मालतीमाधवं हि यशोवर्मराज्याभिषेकसमयेऽभिनीतमपि। वस्तुतस्तु ग्रन्थोऽयं भवभूतेर्यशोवर्मण आश्रयग्रहणात्पूर्वमेव प्रणीतमासीदिति तस्य दाक्षिणात्यमृष्टभूमितो ज्ञायते तत आयाति वीररसप्रधानस्य महावीरचरितस्य क्रमः। ग्रन्थोऽयं यशोवर्मणो विजयमाधृत्य कविना प्रणीतं प्रतिभाति वीररसमादाय। ततश्च क्रम उत्तररामचरितस्य करुणरसमुख्यस्य। ग्रन्थोऽयं कविना चरमे वयसि प्रणीतो मनोविनोदाय स्वकीयजीवनस्योत्तरार्द्धं यशोवर्मणश्च पराजयं मनस्याधाय। अथैतेषां संक्षिप्तः परिचयोऽत्र दीयते।

(क) **मालतीमाधवम्**—ग्रन्थोऽयं दशाङ्केषु विभक्तः प्रकरणसंज्ञको वृत्तस्यास्य कविकल्पितत्वात्। अत्र हि पद्मावतीनरेशस्य मन्त्रिणो भूरिवसोः

पुत्र्या मालत्याः विदर्भराजमन्त्रिणो देवरातस्य सुतस्य माधवस्य च प्रेमकथा वर्णिताऽस्ति। भूरिवसुदेवरातौ प्रथमे वयसि सतीर्थ्यावास्ताम्। तदैव तौ प्रतिज्ञातवन्तौ यत्तयोरपत्ययोर्वैवाहिकसम्बन्धो भविष्यतीति। यदा मालती परिणययोग्या जाता तदा राजविदूषको नन्दनस्तस्यै स्पृहयामास। याचितः किन्तु प्रत्याख्यातो नन्दनो तद्राज्ञे विनिवेद्य तेन भूरिवसुं कन्यादानायाज्ञापितवान्। राजाज्ञाभङ्गभयेन भूरिवसुरनिच्छुकोऽपि यथाकथञ्चित्तत्स्वीकृतवान्। एतदन्तरे तत्प्रतिज्ञां ज्ञातवती भिक्षुकी कामन्दकी स्वशिष्यया सह सम्भूय मालतीमाधवयोः साक्षात्कारं कारितवती। प्रथमदर्शनेनैव मालती माधवश्च परस्परमनुरागसूत्रेणाबद्धौ सञ्जातौ। माधवो हि पद्मावत्यां न्यायशास्त्राध्ययनाय प्रेषित आसीद् देवरातेन। एतदन्तरे अघोरघण्टो नाम कश्चित्कापालिकः स्वशिष्यया कपालकुण्डलया सम्भूय बलिदानार्थं मालतीमाजहार चौर्येण। तामन्विष्यन् माधवस्तत्र प्राप्याघोरघण्टं हत्वा मालत्या विपद उद्धारं कृतवान्। निश्चिते च तस्या उद्वाहदिने सा शिवदर्शनयात्रामिषेण बहिरागत्य माधवेन सह पलायितवती। विवाहे च मकरन्दो माधवसुहृद् मालतीवेषं विरचय्य नन्दनगृहं प्राप्तो वधूरूपेण। ततः स स्वप्रेयसीं नन्दनभगिनीं मदयन्तिकामादाय रात्रावेव पलायमानो राजपुरुषैर्गृहीतः। अथ ज्ञातवृत्तान्तो माधवोऽपि मित्रसाहाय्याय तत्राजगाम। तयोर्मित्रयोः पराक्रमं प्रासादाट्टालिकातो दृष्ट्वा पद्मावतीशस्तयोरपराधमक्षमत। किन्त्वेतदन्तराले एव गुरुवधप्रतिशोधायोद्यता कपालकुण्डला एकाकिनीं मालतीमपहृत्य तां श्रीपर्वतं प्रापितवती। तद्विरहेण विक्षिप्तो माधव उपायान्तरमनवेक्ष्यात्महत्यायै सन्नद्धोऽभवत्। तस्य तदवस्थामसहमानो मकरन्दस्तद्विपत्तिश्रवणात्पूर्वमेवात्मानं व्यापादयितुं प्रयतमानः कयाचिद् योगिन्या सौदामिन्या न्यसेधि। तस्याः प्रयासेन मालतीमाधवौ मदयन्तिकामकरन्दौ च परस्परं मिलनसुखमनुभूय सुखेनैधेताम्। प्रकरणेऽस्मिन् मुख्यो रसः श्रृङ्गारः, वीरो बीभत्सश्चाङ्गे। काव्येऽस्मिन् कवेः रसपाकः नितान्तमेव प्रशंसनीयः।

( ख ) **महावीरचरितम्**—महावीरचरितं हि रामायणसम्बद्धं वीररसमुख्यं नाटकं, यत्र सन्ति सप्ताङ्काः अत्र हि रामायण्येव कथा स्वल्पपरिवर्तितरूपा चित्रिता। विश्वामित्रयज्ञरक्षार्थं सिद्धाश्रयं लक्ष्मणेन सह गतो रामस्तत्प्रसङ्गे माहेश्वरं धनुर्भङ्क्त्वा सीतां परिणयति। तत्पूर्वमेव रावणः सीतार्थं मिथिलायां दूतं प्रेषयति प्रत्याख्यायते च जनकेन। ततश्च रावणो मन्त्रिणो माल्यवतः परामर्शानुसारेण परशुरामं वर्धमानक्षत्रियनाशनायोत्तेजयति। किन्तु रामेण पराजितः स यथास्थानं निवर्तते। ततश्च शूर्पणखा मन्थरारूपेण कैकयीमुत्साह्य रामाभिषेके विघ्नमुत्पादयति। वनं गतो रामो दण्डकेषु

विहरति ससीतः सानुजः। रावणः प्रत्याख्यानप्रतीकाराय सीतां हरति प्रेषयति च बालिनं रामवधाय। रामेण भृशं ताडितो बाली रामेण सह सुग्रीवस्य सख्यं कारयति। रामोऽपि लङ्कां गत्वा रावणं हत्वा वह्निविशुद्धां सीतामादाय साकेतं प्रत्यागच्छति भवति च तस्याभिषेकमहोत्सवः। कृतिरियं मालतीमाधवापेक्षया क्लिष्टतरा किन्तु रसपरिपाकवशाद् हृद्यतरा।

(ग) **उत्तररामचरितम्**—करुणरसमुख्यं नाटचमिदं सप्ताङ्कम्। अत्र हि रामायणस्योत्तरकाण्डसम्बद्धा कथा कविकल्पनया समुन्नीय प्रस्तुताऽस्ति। कथ्यते हि 'उत्तरे रामचरिते भवभूतिर्विशिष्यते' इति। सीतापरित्यागः, रामविलापः, लवकुशप्राप्तिः, सीतास्वीकारश्चास्येतिवृत्तस्य मुख्यांशाः। करुणरसस्य प्रस्फुटितः प्रवाहोऽत्र प्रशस्यः। दिङ्मात्रं निदर्शनं यथा—

परिपाण्डुदुर्बलकपोलसुन्दरं दधती विलोलकवरीकमाननम्।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी ॥ (३।४)

दलति हृदयं शोकोद्वेगाद् द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ (३।३१)

तत्र कविः स्वयमेव तमसामुखेन कथयति—

एको रसः करुण एव निमित्तभेदाद्
भिन्नः पृथक्पृथगिव श्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान् विकारान्
अम्भो यथा सलिलमेव हि तत्समस्तम् ॥ (३।४७)।

किन्तु तत्र शृङ्गारोऽपि रसो नैव विस्मृतः। यथा हि—

किमपि किमपि मन्दं मन्दमासक्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेवं व्यरंसीत् ॥ (१।२७)

एवमेव—

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च सम्मीलयति च ॥ (१।३५)

भावभाषासौष्ठवमेवास्य नाटचस्य सर्वोत्कृष्टत्वे प्रमाणम्।

भवभूतेः शैली क्लिष्टा ओजस्वनी च। स्वरचनाविषये स स्वयमेव कथयति—

'भूम्ना रसानां गहनः प्रयोगः सौहार्दहृद्यानि विचेष्टितानि।
औद्धत्यमायोजितकामसूत्रं चित्रा कथा वाचि विदग्धता च॥
(मालती० १।४)

भवभूतेर्विचारे प्रेम हि नैव केवलं भावात्मककार्यमपितु द्वयोरात्मनोरात्मिकसंयोगः। यथा हि—

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यो
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।
कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते॥
(उत्तर० १।३९)

प्रेयो मित्रं बन्धुता वा समग्राः सर्वे कामा शेवधिर्जीवितं वा।
स्त्रीणां भर्ता धर्मदाराश्च पुंसामित्यन्योन्यं वत्सयोर्ज्ञातमस्तु॥
(मालती ६।१८)

प्रेम्णः पूर्णता सन्ततिमाध्ययेन जायते। यथा हि—

अन्तस्करणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति पठ्यते॥ (उत्तर० ३।१७)

स हि कविपरम्परां नैवानुसरति। तेनैव हि तत्र कोकिलचूतमञ्जरीबकुलाशोकप्रभृतीनां वर्णन नैव दृश्यते। स हि माधवेन नरमांसं विक्रापयति। कथावर्णने भवभूतेर्न कापि विशेषयोग्यता दृश्यते। तत्र समयैक्यमपि न दृश्यते। तथापि तस्य चरित्रचित्रणं प्रशंसनीयं दृश्यते। तस्य सर्वाण्येव पात्राणि सजीवानि भावपूर्णानि च। तस्य रूपके विदूषकस्याभावोऽप्युल्लेखनीयः पक्षः। तस्य हि प्रेमाख्यानुमन्तःपुराद्बहिरेव सञ्चरति, अस्ति च तत्रोदात्तता। स हि शृङ्गारार्थं तु वैदर्भीं प्रयुनक्ति, वीरार्थं गौडीमपि। वस्तुतः स गौडीमेव ध्यायति। तस्य हि वाक्येषु कवित्वापेक्षया भावानामेवाधिक्यं दृश्यते। स हि प्रयुनक्ति विविधानिच्छन्दांसि किन्तु तस्य शिखरिण्यां वैशिष्ट्यं दृश्यते यथा कालिदासस्य मन्दाक्रान्तायां भारवेर्वंशस्थे। यथा वदति क्षेमेन्द्रः सुवृत्ततिलके—

'भवभूतेः शिखरिणी निरर्गलतरङ्गिणी।
रुचिरा धनसन्दर्भे या मयूरीव नृत्यति॥ (३।३३)।

महत्त्वदृष्ट्या ख्यातिगणनया च नाटककारेषु कालिदासानन्तरं भवभूतेरेव स्थानं दृश्यते। चरित्रचित्रणे रचनायां च स हि नवीनतामादधाति।

कालिदासो हि प्रकृतेः सुकोमलरूपमधिकरोति, यदा भवभूतिस्तस्याः कठोर-रूपमेव। प्रथमो हि नाटचशास्त्रीयसीमायामाबद्धः, किन्तु द्वितीयस्तु यथेच्छं विहरन् कौशलप्रदर्शनाय पूर्वापेक्षया सुविस्तृतं क्षेत्रं गृह्णाति। स हि व्याघ्र-श्मशानप्रभृतीनां रङ्ग एवोपस्थितिं वर्णयति। भावभाषाकल्पनाक्षेत्रे आद्यो-ऽपरमतिशेते, यदाऽपरः गम्भीरभावाभिव्यक्तौ प्रथमं न्यक्करोति। आद्यो हि कथनीयं संक्षेपेण व्यञ्जनयाऽभिव्यनक्ति, यदाऽपरः विस्तारेण, किन्तु ओजस्वि-वाक्यैः। कालिदासस्य पात्राणि रसिकाणि काल्पनिकानि च यदा भवभूतेः सांसारिकाणि वास्तविकानि च। प्रथमः सदाऽऽशावादी द्वितीयस्तु निराशा-प्रेरितः। प्रथमस्य सूक्तयः सामान्योपदेशकाः, किन्तु द्वितीयस्य तु विशिष्ट-शन्देशवाहिकाः कवेरनुभूततथ्यप्रकाशिका। आद्यस्य कृतौ मनोरञ्जनस्यापि स्थानं किन्तु द्वितीयस्य तु विशिष्टानुभूतेरेव।

भवभूतेर्वैशिष्टचं वर्णयन् धनपालः कथयति—

स्पष्टभावरसा चित्रैः पदन्यासैः प्रवर्तिता।
नाटकेषु नटस्त्रीव भारती भवभूतिना॥

स्वां शैलीमुपवर्णयन् कविरेव कथयति—

यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति ततस्तदेव यमकं पाण्डित्यवैदग्ध्ययोः।

कथ्यते हि भवभूतेः करुणरसेन जडोऽपि सचेतनो भवति सचेतना अपि जडाः। यथोक्तम्—

जडानामपि चैतन्यं भवभूतेरभूद् गिरा।
ग्रावाऽप्यरोदीत्पार्वत्याः हसतः स्म स्तनावपि॥

प्रेमविषये स कथयति यत्तद्धि बाह्यकारणेषु नैवावलम्बितं भवति। यथोक्तम्—

व्यतिषजति पदार्थानन्तरः कोऽपि हेतुः
न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते।
विकसति च हि पतङ्गस्योदये पुण्डरीकं
द्रवति च निजरश्मावुद्गते चन्द्रकान्तः॥ (६।१२)

केचित्तु एतत्पर्यन्तमपि कथयन्ति—

'कवयः कालिदासाद्याः कालिदासो महाकविः।
तरवः पारिजाताद्याः स्नुहीवृक्षो महातरुः॥'

अपरे कथयन्ति यदभिज्ञानशाकुन्तलं हि शरदः पूर्णा कौमुदी यदा उत्तर-रामचरितं तु ताराखचितं नीलगगनम्। आद्यं हि व्यञ्जनमपरं हविष्यान्नम्।

प्रथमं वसन्तो द्वितीयं वर्षा। प्रथमं नृत्यमपरमश्रु। आद्यमुपभोगोऽपरं पूजनमेव।

## २१. अनङ्गहर्षः : तापसवत्सराजम्

अनङ्गहर्षस्य कवेः तापसवत्सराजं हि षट्सु अङ्केषु विभक्तम्। तापसवत्सराजस्य—

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षिताऽसि॥

इति पद्यमुद्धरति। तच्च वत्सराजस्येदं परिदेवितवचनमिति लोचने स्पष्टम्। तेन हि तस्य स्थितिकालो भवभूत्यानन्दवर्धनयोरन्तरालवर्तीति (८००-९०० वै०) अनुमीयते अनङ्गहर्षं हि राजशेखर-कुन्तक-भोज-मम्मट-हेमचन्द्रादयोऽपि समुद्धरन्ति। अत्र हि वत्सराजस्योदयनस्य कथा चित्रिताऽस्ति। लावाणके वासवदत्ता दग्धेति मिथ्याप्रचारेण भृशमभितप्तो वत्सराजो राज्यमप्युज्झित्य संन्यासी भूत्वा जीवनं प्रत्येव निराशः नद्यामात्मप्रवाहेण जीवनावसानं वाञ्छति। तथैव वासवदत्ताऽपि आत्मप्रवाहाय तत्रैवागच्छति। तत्र द्वयोः सङ्गमेन सुखीभूतौ तौ सुखमेधेते।

ग्रन्थेऽस्मिन् भवभूतेः प्रभावः स्पष्टमेव लक्ष्यते विशेषतः क्लिष्टशैल्यामुदात्तभावचित्रणे। कविनाऽनेनापि भवभूतेः कामन्दकीव साङ्कृत्यायन्याख्या बौद्धभिक्षुकी कल्पिताऽस्ति। अस्य हि वर्णनचातुरी नितान्तमेव प्रशस्यतमा। विरहावस्थावर्णनं यथा—

तद्वक्त्रेन्दुविलोकनेन दिवसो नीतः प्रदोषस्तथा
तद्गोष्ठ्यैव निशाऽपि मन्मथकृतोत्साहैस्तदङ्गार्पणैः।
तां सम्प्रत्यपि मार्गदत्तनयनां द्रष्टुं प्रवृत्तस्य मे
बद्धोत्कण्ठमिदं मनः किमथवा प्रेमाऽसमाप्तोत्सवः॥

इत्यादि। कविरसावपि करुणकथारमणो भवभूतिरिव। केचिदमुमेव मातृराजं मत्वाऽमुमुदात्तराघवस्यापि प्रणेतारं मन्यन्ते। मातृराजस्य 'मायुराज' इति वा 'माउराज' इति विकृतं रूपं ते कल्पयन्ति। मायुराजं राजशेखरः—'माउराजो नान्यः कलचुरिः कविः' इति स्मरति।

## २२. कुलशेखरः : तपतीसंवरणम्, सुभद्राधनञ्जयम्

८६० मितवैक्रमाब्दमभितः स्थितिमानित्यनुमितेन केरलशासकेन प्रणीते तपतीसंवरणं सुभद्राधनञ्जयञ्चेति द्वे रूपके स्तः। प्रथमे हि षडङ्काः सन्ति

यत्र हि तपत्याः संवरणस्य च प्रेमप्रसङ्गो वर्णितोऽस्ति। द्वितीयं तु पञ्चाङ्कं यत्र सुभद्राया अर्जुनस्य च प्रणयप्रसङ्गश्चित्रितोऽस्ति। केचिदस्य स्थितिकालं १०९२–१११२ मितवैक्रमाब्दान्तरालमपि मन्यन्ते।

## २३ मुरारिः : अनर्घराघवम्

कविवरो मुरारिः मौद्गल्यगोत्रस्य माहिष्यतीपुरवास्तव्यस्य वर्धमानाख्यस्यात्मजः। माताऽस्य तन्तुमती। असौ हि कलचुरिवंशयस्य कस्यचिद्राज्ञः सभाकविरप्यासीत्। अत्रेदमप्यवधेयं यदसौ कवि 'मुरारेस्तृतीयः पन्था' इति स्मृताद् दार्शनिकाद्भिन्न एव। स तु कश्चिन्मैथिलो वा गौडीय आसीदिति विदुषां मतम्।

स हि भवभूतेरुत्तररामचरितगतं 'लौकिकानाम्' ( १।१० ) इति पद्यं 'मीमांसते' ( २।५८ ) इति पद्येऽनुकरोति। तथैव 'व्यतिषजति पदार्थान्' ( ६।१२ ) इत्युत्तररामचरितगतं पद्यं रत्नाकरो 'जनयिता' ( १।५९ ) इति पद्येऽनुकरोति। तथैव महावीरचरितगतं 'उत्पत्तिर्जमदग्नितः स भगवान्' ( २।३६ ) इति पद्यं 'आदेष्टा भगवान् भृगुर्जननयो' ( ४।२९ ) इति पद्येऽनुकरोति। तेनाऽयं भवभूतेः परवर्तीति सिध्यति। तथैव स रत्नाकरेण ( ९०७ वै० ) महाकविना हरविजयमहाकाव्ये—

'अङ्कोत्थनाटक इवोत्तमनायकस्य नाशं कविर्व्यधित यस्य मुरारिरित्थम्।'

इति स्मर्यते। तेनास्य रत्नाकरपूर्ववर्तित्वं सिध्यति। अतोऽयं भवभूतिरत्नाकरयोरन्तरालकालवर्ती, अर्थात् ८००-९६० मितवैक्रमाब्दान्तरालवर्तिनि समये यदा कदाप्यासीत्। सामान्यतः ८००–८८० मितवैक्रमाब्दकाल एवास्य स्थितिकालत्वेनानुमितः।

अनर्घराघवं हि सप्ताङ्कं नाटकम्। अत्र हि रामायणगता विश्वामित्रस्य रामलक्ष्मणनिमित्तं दशरथप्रासादोपस्थितित आरभ्य रामराज्याभिषेकपर्यन्ता कथा चित्रिताऽस्ति। प्राचीनाऽपि कथैषा कविना स्वप्रतिभयोद्भाव्य तथोपस्थिता येन स बालवाल्मीकिरित्यभिधीयते। नाटकमिदं साहित्यस्य मेरुदण्डो व्याकरणनैपुण्यस्य परीक्षानिकषमपि मन्यते। भट्टोजिदीक्षितोऽपि सिद्धान्तकौमुद्यां नाटकादस्मादनेकान्युद्धरणानि गृह्णाति। कविः स स्वयमेव कथयति—

'दैवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः।
अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः॥'

पुनश्च स उद्घोषयति—

'तस्मै वीराद्भुतारम्भगम्भीरोदात्तवस्तवे ।
जगदानन्दकाव्याय सन्दर्भाय त्वरामहे ॥' (१।६)।

इति । वस्तुत एवास्य नाटकीयवस्तुतत्त्वं तु न तथा प्रकर्षं द्योतयति यथाऽस्य प्रौढपाण्डित्यपाटवमित्यालोचकानां मतम् । कथ्यते हि 'मुरारिपदचिन्तायां भवभूतेस्तु का कथा' इति । तथैव—

'भवभूतिमतादृत्य निर्वाणगतिना मया ।
मुरारिपदचिन्तायामिदमाधीयते मनः ॥'

कविरपि स्वस्य भवभूतेरप्युत्कर्षं स्वयमेव वर्णयति । यथा—…'सभासदः कुतश्चिद् द्वीपादागतेन कलहकन्दलनाम्ना कुशीलवेन रौद्रबीभत्सभयानकाद्भुतरसभूयिष्ठं कमपि प्रबन्धमभिनयता नित्यं किलायमुद्वेजितो लोकः' इति । स्पष्टमेवाऽत्र कविर्भवभूतेर्मालतीमाधवं सङ्केतयति यत्र हि रौद्रादयो रसा रसान्तरापेक्षया प्रकृष्टत्वेन साधिताः । तस्य हि कृतिर्नाट्यापेक्षयाऽधिकं काव्यात्मकतां बिभर्ति । निभाल्यतामस्य प्रकृतिचित्रणक्षमता—

दृश्यन्ते मधुमत्तकोकिलवधूनिर्धूतचूताङ्कुर-
प्राग्भारप्रसरत्परागसिकतादुर्गास्तटोभूमयः ।
याः कृच्छ्रादतिलङ्घ्य लुब्धकभयात्तैरेव रेणूत्करैः
धारावाहिभिरस्ति लुप्तपदवीनिःशङ्कमेणीकुलम् ॥ (५।६)

तथैवास्य गौडशैलीप्रावीण्यं निभाल्यताम्—

न्यञ्चन्न्यञ्चद्धरित्रीधृतचरणभरश्चन्द्रहासैकदृष्टि-
र्व्यावल्गद्यौगपद्योत्सुकशकलभुजाक्रान्तदिक्चक्रवालः ।
क्रोधक्रूराक्षिरक्तोत्पलरचितवियत्तोरणस्रञ्जि बिभ्रद्
वक्त्राणि प्रत्यनीकप्रसरसरमसो निर्जिहीते दशास्यः ॥ (६।२४)।

किन्तु तस्य शृङ्गारवर्णनं वैदर्भीकौशलमपि न तथा निकृष्टम् । यथा—

अनेन रम्भोरु भवन्मुखेन तुषारभानोस्तुलया धृतस्य ।
ऊनस्य नूनं परिपूरणाय तारास्फुरन्ति प्रतिमानखण्डाः ॥ (७।८१)

अपरञ्च निभाल्यतामस्य प्रौढोक्तिः—

यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपा-
मुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिना ।
अयं कः सम्बन्धो यदनुहरते तस्य कुमुदं
विशुद्धाः शुद्धानां ध्रुवमनभिसन्धिप्रणयिनः ॥ (१।६८)

## २४. हनुमान् : महानाटकम्

महानाटकनाम्ना एकं चतुर्दशाङ्कं तथैव हनुमन्नाटकनाम्नाऽपरं दशमाङ्कं काव्यं लभ्यते। कथ्यते ह्यस्य प्रणेता पवनतनयो हनूमानासीत्। अनभिनेयो ग्रन्थोऽयं वस्तुतः काव्यात्मतां विधत्ते श्रव्यमयत्वात्। तदभिलक्ष्य केचिदिदं नाटकविकासप्रारम्भिककालप्रणीतं मन्यन्तेऽपरे तु रूपकह्रासयुगीनमपि। अत्रेदमवधेयं यद्भारवेरुदयेन पद्यसाहित्येन स्वाभाविकं रूपं त्यक्त्वा पाण्डित्यभारः स्वीकृतस्तथैव बाणोदयेन गद्येन भाषितरूपमपास्य पाण्डित्यपदविः स्वीकृता, एवमेव भवभूतेरुदयेन नाट्येनाऽपि नाटकीयतां दुत्कृत्य केवलकाव्यात्मकतोरीकृता। प्रस्तुतग्रन्थोऽपि नाम्ना तु नाटकमेव कथ्यते किन्तु अत्र नास्त्यस्याभिनेयता दृश्यताऽपि। तेन हीदं भवभूत्यनन्तरकालप्रणीतमेव मन्यन्ते कतिपये समालोचकाः। अस्य प्रणेतुः प्रणयनकालस्य विषयस्तु केवलमनुमानाभासविषय एव किन्त्विदमानन्दवर्धनो ध्वन्यालोके स्मरतीत्यस्य तदाऽस्तित्वं तु सिध्यत्येव कामं तस्य स्वरूपं यद्वा तद्वा स्यात्। स हि हनुमन्नाटकगतं (१४।५) धिग्धिक् शक्रजितं···इति पद्यं पादव्यत्ययेन धिक्कारशब्दस्थाने न्यक्कारशब्दं विन्यस्य स्मरति तृतीयोद्द्योते षोडशतमकारिकावृत्तौ सुप्तिङादिभिरलक्ष्यक्रमव्यङ्ग्यद्योतनोदाहरणाय।

अस्य हि द्वे संस्करणे लभ्यते, एकं दामोदरमिश्रसङ्कलितं संवर्धितञ्च संस्करणं चतुर्दशाङ्कयुक्तं महानाटकसंज्ञितं ५७९ सङ्ख्याकपद्यमण्डितमपरञ्च मधुसूदनमिश्रसङ्कलितं संवर्धितञ्च नवाङ्कविभक्तं ७९१ सङ्ख्याकपद्यशोभितं हनुमन्नाटकसंज्ञितम्। तत्र दामोदरमिश्रसंस्करणे उक्तं यद्—

'रचितमनिलपुत्रेणाथ वाल्मीकिनाब्धौ
निहितममृतबुद्ध्या प्राङ्महानाटकं यत्।
सुमतिनृपतिभोजेनोद्धृतं यत्क्रमेण
ग्रथितमवतु विश्वं मिश्रदामोदरेण॥ (१४।९६)

इति। तत्रैव मधुसूदनस्तु कथयति—

एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीरश्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते
स्वर्गारोहणनामकोऽत्र नवमोऽङ्कः पूर्ण एवेत्यसौ॥ (९।४९)

एवमेवाऽस्य कालिदाससंस्करणं धनपालसंस्करणमपि यत्र तत्र स्मृते दृश्येते। विश्वनाथो हि कविराजः साहित्यदर्पणे (६।२२३) दशाङ्कं महानाटकं स्मरति। राजशेखरस्यापि बालरामायणमपि दशाङ्कमेव। विषयस्य हि

स्पष्टीकरणापेक्षया रहस्यीकरणं हि समालोचकानां स्वभाव एव कामं तथाकरणे तथ्यमुपेक्षितमपि किं न स्यात्। "वस्तुतस्तु भरतो वा धनञ्जयोऽपि महानाटकस्य लक्षणमेव नैवाकार्ष्यम्। आलङ्कारिकेषु विश्वनाथ एव महानाटकलक्षणं करोति"। इत्येवतैव नाटकस्यास्य धनञ्जयपश्चाद्वर्तित्वं नैव सिध्यति। नाटकस्यास्योभयसंस्करणे केवलं ३३० सङ्ख्याकपद्यान्येव साम्यं भजन्ते शेषाणि तु कथमपि नैव संवादीनि। अतो हि मूलरूपेण नाटकमिदं वर्तमानोपलभ्यसंस्करणापेक्षया लघुतरमपि सम्भवति। पश्चाच्च तत् सङ्ग्रहितृभिर्यथेच्छं संवर्धितमपि स्यात्। उभावप्यस्य संस्कारकौ नाटकमिदं हनुमतः कृतिं मन्येते मूलतः। कथ्यते हि नाटकमिदं हनुमता रामस्मृत्यर्थं मनोविनोदाय प्रणीतमासीत्। आसीच्च तत्पाषाणतले समुट्टङ्कितमपि। यदा हि वाल्मीकिस्तदपश्यत् तदा स भृशं चिन्तितोऽभवद्यदस्य सत्त्वे मम रामायणं को वा श्रद्धधीतेति। ततस्तेन तस्य समुद्रे निक्षेपणाय हनुमान् बहुप्रार्थितः। सोऽपि भक्तवत्सलस्तत्सन्तोषाय नाटकोट्टङ्कितपाषाणखण्डानि जलनिधौ निक्षिप्य क्वापि गतः। पश्चाच्च मधुसूदनानुसारेण विक्रमादित्येन दामोदरमिश्रानुसारेण तु भोजदेवेन तदुद्धृत्य संस्कार्यं च प्राकाश्यं नीतमिति। बल्लालसेनोऽपि भोजप्रबन्धे कथामेतां स्मरति। वस्तुतस्त्विदं भोजदेवसमये लुप्तप्रायमेवाऽऽसीत् सम्भवति तेन हि समुन्नाय्य प्रकाशितं स्यात्प्राचीनताकर्षणेन। अस्य भाषाप्रयोगो भावाभिव्यक्तिस्त्विदमाचार्ययुगीनं साधयति न तु पण्डितयुगीनम्। तेन हीदं वाल्मीकिरामायणसमकालिकमपि सम्भवति मूलतः। निरूप्यतामस्य सारल्यं सारस्यञ्च—

अद्यापि स्तनतुङ्गशैलशिखरे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगितिक्रोधादिवालोहितः।
उद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिःसरदलिश्रेणी कृपाणं शशी॥ (२१५)

यातस्यास्तमनन्तरं दिनकृतो वेषेण रागान्वितः
स्वैरं शीतकरः करं कमलिनीमालिङ्गितुं योजयन्।
शीतस्पर्शमवाप्य सम्प्रति तथा युक्ते मुखाम्भोरुहे
हास्येनैव कुमुद्वतीवनितया वैलक्ष्यपाण्डूकृतः॥ (२१६)

ग्रन्थेऽस्मिन् दशरथवर्णनादारभ्य रामाभिषेकपर्यन्ता कथा यत्र कुत्र स्वकल्पनया संस्कार्यापि पद्यबाहुल्येन वाक्येन वर्णिता। अत्र हि प्राकृतभाषा, विदूषकादिपात्राणि च नैव दृश्यन्ते। तथैवाऽत्र गेयमेव दृश्यते न तु दृश्यम्। अत्र गद्यांशमपि स्वल्पमेव दृश्यते तदपि वर्णनात्मकम्।

## २५. भीमटः : नाटकपञ्चकम्

भीमटाख्यं कविं पञ्चानां नाटकानां प्रणेतृत्वेन राजशेखरः ( ९५० वै० ) स्मरति। अतो हि कविरसौ तत्पूर्ववर्तीति ज्ञायते। अस्य हि पञ्चसु रूपकेषु केवलं त्रीण्येव ज्ञायन्ते तान्यपि नाममात्रेणैव न तु स्वरूपतः। तानि च स्वप्नदशाननं, प्रतिज्ञाचाणक्यं, मनोरमावत्सराजञ्चेति। तेषु प्रथममितरापेक्षयोत्कृष्टतरं मतम्। यथोक्तम्—

कालिञ्जरपतिश्चक्रे भीमटः पञ्चनाटकीम्।
प्राप प्रबन्धराजत्वं तेषु स्वप्नदशाननम्॥

इति। असौ हि भीमटश्चन्देलवंश्यः प्रतीयते।

## २६. राजशेखरः : रूपकचतुष्कम्

संस्कृतसाहित्ये राजशेखरो हि बहुचर्चितविचक्षणेष्वेकः। तस्य सन्ति चत्वारि रूपकाणि ख्यातानि बालरामायणं, बालभारतं ( प्रचण्डपाण्डवम् ), विद्धशालभञ्जिका, कर्पूरमञ्जरी च येषु हि कर्पूरमञ्जरी सट्टकं, विद्धशालभञ्जिका नाटिका, बालरामायणं महानाटकम्।

असौ हि यायावरकुलोत्पन्नो महाराष्ट्रीयब्राह्मणः। पिताऽस्य दुर्दुकाख्यो माता च शीलवती।

राजशेखरो हि आनन्दवर्धनं ध्वनिकारं स्मरति, स च यशस्तिलकचम्पूकारेण सोमदेवेन स्मर्यत इति तयोरन्तरालवर्तिसमये एव तस्य स्थितिः। आनन्दवर्धनस्य स्थितिकालोऽवन्तिवर्मणः सभाकवित्वाद् ९०७-९६० मितवैक्रमाब्दाभ्यर्णेऽनुमितस्तथैव सोमदेवस्य १०१६ वैक्रमाब्दाभ्यर्णे स्थितिकालः। तथैव राजशेखरो जयापीडस्य सभाध्यक्षमुद्भटं स्मरति। तस्य हि स्थितिकालः ८३०-८८० मितवैक्रमाब्दान्तरालेऽनुमितः। अपरञ्च राजशेखरः स्वाश्रयत्वेन रघुवंश्यं महेन्द्रपालं कान्यकुब्जेश्वरं स्वशिष्यत्वेन तत्सुत महीपालञ्च स्मरति। यथा हि—

नमितमुरलमौलिः पाकलो मेकलानां
रणकलितकलिङ्गः केलिकृत्केरलेन्द्रैः।
अजनि जितकुलूतः कुन्तलानां कुठारो
हठविहतमठश्रीः श्रीमहीपालदेवः॥ ( प्रचण्डपाण्डवे १।७ )

तस्य पिता महेन्द्रपालः निर्भयदेवनाम्नाऽपि ख्यातः इति "तेन च रघुवंशमुक्तामणिनार्यावर्तमहाराजाधिराजेन श्रीनिर्भयनरेन्द्रनन्दनेनाराधिताः सभासदः" इति तत्रत्यकथनेन ज्ञायते। अपरञ्च, स एव तत्रैव—

'देवो यस्य महेन्द्रपालनृपतिः शिष्यो रघुग्र मणीः।' ( १।११ )

इति च स्मरति। महेन्द्रपालः कान्यकुब्जेश्वरः ९५०-९६० मितवैक्रमाब्दमभितः स्थितिमान् तथैव महीपालः ९६१-९६४ मितवैक्रमाब्दानभितोऽनुमितः। तथैव १०६० मितवैक्रमाब्दाभ्यर्णे प्रणीतायां तिलकमञ्जर्यां धनपालोऽपि राजशेखरं स्मरति। एभिरन्यैश्च प्रमाणैः राजशेखरस्य स्थितिकालः ९२०-९८० मितवैक्रमाब्दानभितोऽनुमितः। अथाऽस्य नाटचग्रन्थानां संक्षिप्तः परिचर्याऽत्रोपस्थाप्यते।

( क ) **कर्पूरमञ्जरी**—प्रकृत्या सट्टकमिदं रूपकं चतुर्षु जवनिकान्तरेषु विभक्तम्। प्राकृतभाषानिबद्धेऽस्मिन् ग्रन्थे चण्डपालस्य कर्पूरमञ्जर्याश्च वर्णनं कृतमस्ति। अत्र ह्यद्भुतो रसो मुख्यः। लघुकथानकमविशदचरित्रचित्रणमपि सट्टकमिदं कतिपयपक्षैर्महत्त्वपूर्णं दृश्यते। इदं हि प्राकृतभाषानिबद्धमेकमात्रं रूपकम्। तस्य प्राकृतभाषामयत्वस्यौचित्यं प्रतिपादयन् कविः कथयति—

अत्थविसेसा ते चिअ सद्दा ते चेअ परिणमंता वि।
उत्तिविसेसो कव्वं भासा जा होइ सा होउ॥ ( १।७ )
परुसा सक्कअबंधा पाउअबंधो वि होइ सुउमारो।
पुरिसमहिलाणं जेत्तिअमिहंतरं तेत्तिअमिमाणम्॥ ( १।८ )

कथ्यते ह्यस्य पदलालित्यं मननीयं विद्यते। अत्र हास्य रसस्यापि मनोहारि चित्रणं दृश्यते। अत्र हि पद्यानि महाराष्ट्रीप्राकृते गद्यभागश्च शौरसेन्यां गुम्फितोऽस्ति। निभाल्यतामस्य रचनासौष्ठवम्—

दंसेमि तं पि ससिणं वसुहावइण्णं
थंभेमि तस्स वि रविस्स रहं णहद्धे।
आणेमि जक्खसुरसिद्धगणं गणाओ
तं णत्थ भूमिवलए मह जं ण सज्झं॥ ( १।२५ )

अत्र हि नान्द्यनन्तरं स्थापकः प्रविश्य कृत्यमुद्घोषयति। न स्तोऽत्र प्रवेशकविष्कम्भकौ। कविः स्वयमेवोद्घोषयति—

सो सट्टओ त्ति भण्णइ दूरं जो णाडिआएं अणुहरइ।
किं उष पवेसविक्कंभकाइं केवलं ण दीसंति॥ ( १।६ )

अर्थात् सट्टकं नाम नान्यद्विष्कम्भकप्रवेशकहीना नाटिकैव पदलालित्यादिप्रकृष्टगुणयुक्तोऽपि ग्रन्थोऽयं केवलं काव्यत्मकतां बिभर्ति न तु नाटकीयताम्। पाण्डित्यप्रदर्शनमेवात्र कवेर्लक्ष्यम्। काव्यकोटचामयमुच्चस्तरं भजते।

( ख ) **विद्धशालभञ्जिका**—हि चतुरङ्किका नाटिका। अत्र हि शृङ्गारो रसो मुख्यः। अत्र हि मृगाङ्कावल्या विद्याधरमल्लस्य च तथैव तस्य कुवलया-

वल्याश्च प्रणयप्रसङ्गो विवाहश्च वर्णितोऽस्ति। लाटेशश्चन्द्रवर्मा निजदुहितरं मृगाङ्कावलीं पुरुषवेषेण विद्याधरमल्लप्रासादं प्रेषयति। विद्याधरमल्लश्च स्वप्ने तामेव दृष्ट्वा तस्यामनुरक्तो भवति। मृगाङ्कावली च मृगाङ्कवर्मनाम्ना ख्यातो भवति। विद्याधरमल्लमहिषी तेन सह कुन्तलराजपुत्र्याः कुवलयावल्याः परिणयं वाञ्छति। अन्यानुरक्तं राजानं ज्ञात्वा तत्प्रतिशोधाय राज्ञी मृगाङ्कवर्माणं पुरुषमेव ज्ञात्वा तं स्त्रीवेषेण सज्जयित्वा तेन सह राज्ञः परिणयं रचयति किन्तु पतिवञ्चनतत्परा सा स्वमेव वञ्चयति। पश्चाच्च रहस्यं ज्ञात्वा विवशा सा कुवलयावल्या अपि राज्ञा सहैव परिणयं रचयति। विद्धशालभञ्जिका हि मृगाङ्कावल्या एव मूर्तिः, नाटकीयदृष्टचा विद्धशालभञ्जिका कर्पूरमञ्जर्यपेक्षया सफलाऽधिकम्। अत्र कवेर्वर्णनाचातुरी प्रशस्या दृश्यते।

(ग) बालरामायणम्—बालरामायणमस्य दशाङ्कं नाटकम्। अत्र हि रामचरितमेव सविशेषं चित्रितमस्ति। अत्र हि रावणः सीतायाः प्रेमित्वेन चित्रितोऽस्ति। सीतावियोगमसहमान स वने इतस्ततः परिभ्रमति। अतिमात्रविस्तृतकथानकमिदं नाटकमपि नाटकीयतापेक्षया काव्यात्मकतामभिधत्ते।

(घ) बालभारतम—अस्य तु द्वावेवाङ्कौ लभ्येते। अत्र हि द्रौपदीस्वयंवर-द्यूतपर्वसम्बद्धा कथा दृश्यते। अत्रापि नाटकीयतापेक्षया काव्यात्मकत्वमेव दृश्यते प्राधान्येन।

वस्तुतस्तु राजशेखररूपकेष्वस्ति वास्तविकपात्राणामभावः। एवमेव नाटकीयताऽभावः, शिथिलं कथानकं तत्समायोजनञ्च, दीर्घतमवाक्यभावात्मकमद्योपस्थित्या नीरसत्वश्चात्र।

तथापि काव्यनिर्माणे राजशेखरः सफलः। स हि कविराज इति सश्रद्धं स्मिरयते विचक्षणैः।

## २७ क्षेमीश्वरः : चण्डकौशिकम्, नैषधानन्दम्

कान्यकुब्जेश्वरमहीपाला-( ९७१ वै० )-श्रितेन क्षेमीश्वराख्यकविना प्रणीते चण्डकौशिकं नैषधानन्दञ्च द्वे रूपके प्रसिद्धे स्तः। तेन हि कविरसौ ९४०-९९० मितवैक्रमाब्दानभितः स्थितिमान्। चण्डकौशिके सन्ति पञ्चाङ्का यत्र हरिश्चन्द्रविश्वामित्रयोः कथोपवर्णिताऽस्ति। नैषधानन्दे सप्ताङ्का यत्र नलस्य चरितं चित्रितमस्ति।

## २८. ...तरङ्गदत्तं, पुष्पदूषितकं, पाण्डवानन्दं, चलितरामम्

दशरूपकावलोककारो धनिकः ( १०६० वै० ) उपर्युक्तं नाटकचक्रं स्मरति। एतेषां हि नाटकानां प्रणेतॄणां विषये प्रणयनकालविषये च नैव

किञ्चिदपि ज्ञातमस्ति। तद्विषये एतावदेव ज्ञातमस्ति यत्तानि हि वैक्रमदशम-शतकपूर्वमेव प्रणीतान्यासन्। केचिदेतेषां क्षेमीश्वरकर्तृत्वं विचिन्तयन्ति। तरङ्गदत्तं हि प्रकरणं यत्र काचिद्वेश्या नायिका चित्रिताऽस्ति। पुष्पदूषितक-मपि प्रकरणमेव किन्तु तत्रास्ति चित्रिता कुलीना नायिका। तत्र तस्या मूल-देवमित्रेण समुद्रदत्तेन सह प्रेमलीला वर्णिताऽस्ति। पाण्डवानन्दं हि महाभारतकथाश्रितं, चलितरामे रामायणकथा वर्णिता।

एवमेव हि—

क्षेमेन्द्रेण महाकविना ( ११०७ वै० ) प्रणीते चित्रभारतं कनकजानकी चेति द्वे रूपके आस्ताम्। तयोः कवेरस्यैव ग्रन्थान्तरेषु समुद्धरणानि लभ्यन्ते किन्तु स्वरूपतस्तु ते नैव लभ्येते सम्प्रति। तयोर्हि आद्यं महाभारतसम्बद्ध-मपरं यदा रामायणसम्बद्धमासीत्।

महाकवेर्विल्हणस्य ( ११३७ वै० ) कर्णसुन्दरीसंज्ञिता नाटिका विद्यते। नाटिकायामस्यामनहिलवादनरेशस्य कामदेवत्रैलोक्यमल्लस्य ह्रासोन्मुखे वयसि कर्णाटराजकुमार्या मियनल्लदेव्याः सह विवाहस्य वर्णनमस्ति।

कविराजेन शङ्खधरेण वैक्रमद्वादशशतकमध्यभागे लटकमेलकं नाम प्रहसनं प्रणीतमस्ति।

पद्मचन्द्रस्य पुत्रेण यशश्चन्द्रेण वैक्रमद्वादशशतकोत्तरार्धभागे मुद्रितकुमुद-चन्द्रं नाम नाटकं प्रणीतमस्ति यत्र श्वेताम्बरेण देवसूरिणा दिगम्बरस्य कुमुद-चन्द्रस्य शास्त्रार्थे पराजयो वर्णितः। कथ्यते ह्येषा घटना ११८१ मितवैक्र-माब्दे सम्पन्ना। वैक्रमद्वादशशतकोत्तरार्द्धाभ्यर्णे स्थितिमान् काञ्चनाचार्यः धनञ्जयविजयं नाम व्यायोगं प्रणीतवानासीत्। अत्र विराटनगरतो गोहरण-प्रवृत्तकौरवोपरि धनञ्जयस्य विजयो वर्णितः। ११४५-१२२९ मितवैक्र-माब्दान्तराले स्थितिमतो हेमचन्द्राचार्यस्य शिष्येण रामचन्द्राख्येन बुधेन सन्ति शताधिकाग्रन्थाः प्रणीता येषु चत्वारि सन्ति रूपकाणि। तेष्वपि नल-विलासं नाम सप्ताङ्कं नाटकं यत्र नलस्य चरितं चित्रितमस्ति, निर्भयभीमाख्यो व्यायोगो यत्र भीमस्य पराक्रमो वर्णितः, सत्यहरिश्चन्द्रं नाम षडङ्कं नाटकं, कौमुदीमित्रानन्दं नाम दशाङ्कं नाटकम्। स हि स्वसमयस्य सर्वोत्कृष्ट आचार्यः। तस्य परिष्कृता ओजस्वनी च शैली दृश्यते। अस्य स्थितिकालः ११५०-१२३३ मितवैक्रमाब्दान्तरालवर्ती।

चाह्मानवंश्यस्य विग्रहराजदेवापराभिधानस्य विशालदेवस्य १२१० मितवैक्रमाब्दाभ्यर्णे प्रणीतं हरकेलिनाटकमपि संस्कृतनाटकपरम्पराया-मुल्लेखनीयो ग्रन्थः। अत्र हि किरातवेषधारिणः शिवस्य अर्जुनेन सह प्रवृत्तं

युद्धं वर्णितमस्ति । नाटकमिदमपूर्णमेव लभ्यते अजमेरनगरपार्श्वे शिलाया-मुट्टङ्कितम् ।

विग्रहराजदेवाश्रितेन कविना सोमदेवेन ललितविग्रहराजं नाम नाटकं प्रणीतमस्ति यत्र हि विग्रहराजस्य देशालदेव्या सह प्रणयप्रसङ्गो वर्णितोऽस्ति । इदमपि अजमेरनगरपार्श्वे शिलायामुट्टङ्कितमस्ति अपूर्णमेव । सोमदेवस्य स्थितिकालः ११५०-१२३० मितवैक्रमाब्दान्तरालवर्ती ।

२९. कृष्णमित्रः : प्रबोधचन्द्रोदयम्

कृष्णमित्रस्य प्रबोधचन्द्रोदयं नाटकं संस्कृतनाटचपरम्परायां रूपकात्मक-नाटचपरम्परामुदाययति । यद्यपि परम्परैषा अश्वघोषेनाऽपि प्रारब्धेति विम्ब-स्यते किन्तु तस्य खण्डितप्रतेरेवोपलब्धेस्तन्न तथा प्रभावकारित्वेन सिद्ध-मासीत् । कृष्णमित्रो हि कालञ्जरभूपतेः कीर्तिवर्मणः सभाकविरासीदिति प्रबोधचन्द्रोदयप्रस्तावनायां तदुल्लेखतो ज्ञायते । कीर्तिवर्मण एकं ११५५ मितवैक्रमाब्दे समुट्टङ्कितं शिलाभिलेखं लभ्यते । तेन हि तदाश्रितत्वेन कृष्ण-मित्रस्य स्थितिकालोऽपि ११३०-११९० मितवैक्रमाब्दान्तरालवर्ती मतः । षडङ्के नाटकेऽस्मिन् विवेक-मोह-दम्भ-काम-श्रद्धा-अहङ्काराः पात्रत्वेनोप-स्थापिताः । विवेकमहामोहयोः प्रवृत्ते युद्धे प्रबोधोदयेन महामोहः पराजीयते । अत्र जैनबौद्धकापालिकादीनां संवादोऽपि चित्रितः । ग्रन्थेनानेनास्य प्रणेता स्वसम्मतमद्वैतमतं प्रचिचारयिषति । तत्राहङ्कारः कथयति—

तुल्यत्वे वपुषां मुखाद्यवयवैर्वर्णक्रमः कीदृशो
योषेयं वसु वा परस्य यदमुं भेदं न विद्मो वयम् ।
हिंसायामथवा यथेष्टगमने स्त्रीणां परस्वग्रहे
कार्याकार्यकथास्तथापि यदमी निष्पौरुषाः कुर्वते ॥

तथैवोपसंहारवाक्यं यथा—

प्रशान्नारातिरगमद्विवेकः कृतकृत्यताम् ।
नीरजस्के सदानन्दे स्वे पदेऽहं निवेशितः ॥

इति । इदमपि—

शान्तेऽनन्तमहिम्नि निर्मलचिदानन्दे तरङ्गावली-
निर्मुक्तेऽमृतसागराम्भसि मनाङ् मग्नोऽपि नाचामति ।
निःसारे मृगतृष्णिकार्णवजले श्रान्तोऽपि मूढः पिब-
त्याचामत्यभिगाहतेऽभिरमते मज्जत्यथोन्मज्जति ॥ (४१६)

इत्यादि । परम्परेयं पश्चाद्वर्तिभिः कविभिरपि अक्षुण्णत्वेन प्रतिपालिता । यज्ञपालस्य जैनस्य (१२८७ वै०) पञ्चाङ्कं मोहपराजयनाटकं, वेदान्तदेशिकस्य

( १३८० वै० ) सङ्कल्पसूर्योदयं, गोकुलनाथस्य ( १५८० वै० ) अमृतोदयं, श्रीनिवासस्य ( १६२७ वै० ) भावनापुषोत्तमनाटकं, कर्णपूरस्य (१६५० वै०) चैतन्यचन्द्रोदयं, वेदकवेः ( १७४१-१७८५ वै० ) विद्यापरिणयः, जीवानन्दनञ्च । अयमेव आनन्दरायमखीति केचित् । भूदेवस्य ( १७९४ वै० ) धर्मविजयनाटकञ्च परम्पराया अस्याः प्रतिपोषकाः ।

### ३०. वत्सराजः : रूपकषट्कम्

वत्सराजो हि कालञ्जरनरेशस्य परमर्द्धिदेवस्य १२२०-१२६० मितवैक्रमाब्दाभ्यन्तरे स्थितिमतः अमात्यः कविश्च रूपकषट्कं प्रणीतवान् । तेषु हि किरातार्जुनीयव्यायोगः, कर्पूरचरितभाणः, हास्यचूडामणिप्रहसनं, रुक्मिणीहरणेहामृगश्चतुरङ्कः, त्रिपुरदाहो डिमश्चतुरङ्ककः, समुद्रमन्थनाख्यस्त्र्यङ्ककः समवकारः ।

वत्सराजो हि कर्पूरचरितभाणे परमर्द्धिदेवं स्मरति यस्य शासनकालः १२२०-१२६० वैक्रमाब्दान्तराले पतति । तथैव स किरातार्जुनीयव्यायोगे त्रैलोक्यमल्लदेवं परमर्द्धिदेवसुतं स्मरति यस्य शासनकालः १२६२-१२९८ मितवैक्रमाब्दान्तरालवर्ती । अतः कवेरस्य स्थितिकालः १२०७-१२८२ मितवैक्रमाब्दान्तरालवर्तीति स्पष्टमेव ।

वत्सराजः परमधार्मिको महामाहेश्वर आसीदिति शिवस्तुतिपरकनान्दीवाक्येभ्यो ज्ञायते । तथैव स किरातार्जुनीयव्यायोगे ( ४० ) कथयति —

एकः करः कलयति स्फटिकाक्षमालां घोरं धनुस्तदितरश्च बिभर्ति हस्तः ।
धर्मः कठोरकलिकालकदर्थ्यमानः सत्क्षत्रियस्य शरणं किमिवानुयातः ॥

वत्सराजो हि संस्कृतनाट्यकविषु मूर्द्धन्य इति कथने न मनागप्यतिशयोक्तिः । तेन हि न केवलं रूपकषट्कमेव प्रणीतमपितु कतिपयेषां दुर्लभानां रूपकभेदानामपि प्रणयनं कृतम् । ईहामृगस्य समवकारस्य च अद्यावधि रुक्मिणीहरणं समुद्रमन्थनमेवोदाहरणम् । भासप्रणीतानीवास्य रूपकाणि लघुकायानि स्वभिनेयानि च । तानि हि स्वल्पकाले एवाभिनेयानि तथैवैषां दृश्ययोजनाऽपि स्वल्पश्रमसाध्या । एतेषां हि मनोरञ्जनात्मकता त्वस्ति एव, सहैव तानि जीवनोपयोगिन आदर्शानपि सन्दिशन्ति । तेषु हि न कथावस्तुनोऽनावश्यकविस्तारो नैव च वर्णनाधिक्यमेव । तेन हि नैव तत्र रूपकाणां कार्यान्विनौ अभिनेयतायाश्च काचिद्बाधा । एषु हि सर्वाऽपि नाट्यविधयः सम्यक्परिपालिताः सन्ति, चरित्रचित्रणे औचित्यं सम्यगेव निर्वाहितमस्ति, लघुवाक्यगतसंवादेन कथागतिरपि नितान्तमेवाक्षुण्णा वर्तते, कथाव्यापारस्य निर्वाहोऽपि साधु कृतः । अस्य भाषा सरला सुबोधा च । यत्र कुत्रापि श्लेष-

प्रयोगोऽपि स प्रसन्नश्लेष एव न तु क्लिष्टश्लेषः। कविरसावनुप्रासोपमयोः प्रियः। एषु हि रसपरिपाकोऽपि प्रशस्यः। नैकमपि वाक्यमस्य रसप्रतिकूलं पाण्डित्यं प्रदर्शयति। स स्वयमेव कथयति–'रसपरवशवाणीवत्सलो वत्सराजः' इति। दिङ्मात्रं निदर्शनं यथा—

इहास्ति नूनं तुहिनांशुबिम्बे कलङ्कधूमानुमितो हुताशः।
अस्यांशुपूरः कथमन्यथाऽसौ ज्वालावलीडम्बरमातनोति॥
( कर्पूर० १३ )

तथैव—

मय्यारब्धकथे सखीजनमभिप्रस्तौति वार्तान्तरं
साकूतं कुरुते मुहुर्मम समस्याऽन्यस्य गर्हाग्रहम्।
मद्विज्ञानकलासु कूणितमुखी मौनं समालम्बते
निद्रां नाटयते करोति च पुनर्व्यक्तिं पुराणागसाम्॥ ( रु० २० )

तेन हि नाट्यवनितायाः—

'भासो हासः कविकुलगुरुर्वत्सराजो विलासः'।
भासः श्रीकालिदासश्च वत्सराज इति त्रयः।
नाट्यसीमन्तिनीहावविलासाः कवयः परे॥ इति।

## ३१. जयदेवः : प्रसन्नराघवम्

जयदेवाख्यस्य महाकवेः प्रसन्नराघवं नाम सप्ताङ्कं नाटकमस्ति। कविरसौ, यथा प्रस्तावनायामुक्तः, महादेवाख्यस्य तनयः सुमित्राकुक्षिजश्च कौण्डिन्यगोत्रीयः। मातृपितृनामसादृश्येन कविरसौ चन्द्रालोकस्य प्रणेतुर्जयदेवादभिन्नः प्रतीयते। किन्तु तदसादृश्येनासौ गीतगोविन्दकृतो जयदेवात्तु भिन्न एव। स हि भोजदेवस्य तनयो रामादेवीकुक्षिजः। गीतगोविन्दस्य प्रणेता वङ्गाधिपस्य लक्ष्मणसेनस्य सभापण्डितः। कविरसौ तु दाक्षिणात्यः कुण्डिननगरवास्तव्य इति केचित्, मिथिलानिवासी इत्यपरे। किन्त्वसौ दाक्षिणात्यप्रदेशपक्षपातीति अस्य कुण्डिनपुरवासित्वमेव युक्तियुक्तम्। कविरसौ चन्द्रालोके—

अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।
असौ न मन्यते कस्मादनुष्णमनलं कृती॥ ( १।८ )

इति कथनेन मम्मटभट्टस्य 'अनलङ्कृती पुनः क्वापि' इति कथनं प्रत्याख्याति। तेन ह्ययं मम्मटभट्टपश्चाद्वर्तीति सिध्यति। मम्मटभट्टोऽपि-उदात्तालङ्कारोदाहरणे 'यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम्' इति भोजं स्मरति। भोजदेवस्य समयस्तु १०६७-१११२ मितवैक्रमाब्दान्तरालवर्तीति

प्रसिद्धमेव। तथैव जयदेवश्चन्द्रालोके रुय्यकप्रस्तुतं विकल्पालङ्कारं विशदयतीति तस्य रुय्यकापरवर्तित्वं सिध्यति। रुय्यको हि मम्मटं स्मरति विदधाति च काव्यप्रकाशस्य टीकामिति स मम्मटपरवर्त्येव। अतो हि तस्य स्थितिकालः १२०७ मितवैक्रमाब्दादर्वाचीन एव। यतो हि भोजराजरुय्यकमध्यवर्ती मम्मटः ११०७-१२०६ मितवैक्रमाब्दान्तरालवर्ती। काव्यप्रकाशस्य माणिक्यचन्द्रः १२१६ मितवैक्रमाब्दे सङ्केताख्यां व्याख्यां प्रणीतवानिति—

रसवक्त्रग्रहाधीशवत्सरे मासि माधवे।
काव्ये काव्यप्रकाशस्य सङ्केतोऽयं समर्थितः॥

इति कथनाज्ज्ञायते। स हि रुय्यकं स्मरति। तेन रुय्यकस्यापि १२१६ मितवैक्रमाब्दात्पूर्वमेव स्थितिः। अत इदं पर्यवस्यति यद् १२०६ मितवैक्रमाब्दो जयदेवस्थितिकालस्य पूर्वसीमा। तथैव साहित्यदर्पणे विश्वनाथो जयदेवस्य 'कदली कदली' ( प्रसन्नराघवे १।३७ ) इति पद्यमर्थान्तरसङ्क्रमितवाच्यध्वनेरुदाहरणे ( ४।४ ) प्रस्तौति। तेन हि जयदेवस्य विश्वनाथपूर्ववर्तित्वं सिध्यति। विश्वनाथस्तु १३७३ मितवैक्रमाब्दे मृतमलाउद्दीनाख्यं यवनपतिं 'अलाउद्दीननृपतौ न सन्धिर्न च विग्रहः' इति स्मरतीत्यस्य तस्य समकालिकता सिध्यति वा सद्यः पश्चात्कालवर्तित्वम्। अत एव विश्वनाथो हि १३८० मितवैक्रमाब्दाभ्यर्णे स्थितिमान्। इदमेव जयदेवस्थितिकालस्यापरसीमा। अतो ह्यसौ कविः १२००-१२८० मितवैक्रमाब्दान्तराले स्थितिमानिति स्पष्टमेव। एवमेव १४२० मितवैक्रमाब्दाभ्यर्णे प्रणीतायां शाङ्गंधरपद्धतौ प्रसन्नराघवस्य सन्त्यनेकानि पद्यानि समुद्धृतानि। तथैव १३८७ मितवैक्रमाब्दाभ्यर्णे स्थितिमता शिङ्गभूपालेन च रसार्णवसुधाकरे प्रसन्नराघवपद्यानि गृहीतानि दृश्यन्ते।

नाटकीयतादृष्ट्याऽतथासफलमपि काव्यसामान्यदृष्ट्योत्तमेऽस्मिन्प्रबन्धे सन्ति सप्ताङ्काः। अत्र हि रामस्य प्रसिद्धा कथा स्वानुकूल्येनोपस्थापिता नवीनकल्पनयोद्भाव्य, नाटकमिदं पद्यबाहुल्यमतोऽत्र नास्ति कथायां गत्यात्मकता तथैवाभिनेयता च।

जयदेवो हि सिद्धहस्तः कविः। तस्य प्रसादमधुरकवितामाधृत्य हि स पीयूषवर्ष इति सम्मानितः। तस्य कृतौ कवित्वं प्रस्फुटितमिव दृश्यते सह करुणरसेन। स्वप्रबन्धमधिकृत्य स कथयति स्वयमेव—

प्रत्यङ्कमङ्कुरितसर्वरसावतारं
नव्योल्लसत्कुसुमराजिविराजिबन्धम्।
धर्मेतरांशुमिव वक्रतयाऽतिरम्यं
नाट्यप्रबन्धमतिमञ्जुलसंविधानम्॥ ( १।७ )

अपि च—

विलासो यद्वाचामसमरसनिष्यन्दमधुरः
कुरङ्गाक्षीबिम्बाधरमधुरभावं गमयति।
कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः॥ (१।१४)

अस्य हि कवित्वं सर्वातिशायि। दिङ्मात्रं निदर्शनं यथा—

तपःशान्तं चेतः स्फटिकमणिमालापरिकरः
कुशाः कण्डी दण्डः सततमुटजावासनिरतिः।
मुनीनामेतद्वः समुचितमुदग्रं न वचनं
न वक्रभ्रूभङ्गो न शरधनुषि नाऽपि परशुः॥ (४।३१)
त्वया मम समेतस्य कल्पा अपि समासमाः।
भवता विप्रयुक्तस्य कल्पकल्पः क्षणोऽपि मे॥ (५।९)

रावणवधेन सीतालाभेन च प्रसन्नस्य राघवस्य चरितमत्र वर्ण्यत इत्यस्यान्वर्थसंज्ञा प्रसन्नराघवमिति।

### ३२. सुभटः : दूताङ्गदम्

यथा हि कृष्णमित्रस्य प्रबोधचन्द्रोदयं रूपकात्मकनाटचस्य प्रवर्तकं तथैव सुभटस्य दूताङ्गदमपि संस्कृतनाटचपरम्परायां छायानाटकं प्रवर्तयति। छायानाटकपरम्परायां दूताङ्गदमनुसृत्य सन्त्यन्यान्यपि छायानाटकानि प्रणीतानि यथा रामदेवस्य (१४४० वै०) सुभद्रापरिणयं, रामाभ्युदयं, पाण्डवाभ्युदयञ्च, विट्ठलस्य आदिलवंशकथा (१७१० वै०), शङ्करलालस्य सावित्रीचरितं (१९३९ वै०) च।

कथ्यते हि सुभटस्य दूताङ्गदं कुमारपालदेवस्य यात्रायां त्रिभुवनपालदेवस्याज्ञयाऽभिनीतमासीत्। कुमारपालदेवो हि हेमचन्द्रशिष्यो रामचन्द्राश्रयो ग्रेन पश्चाद्रामचन्द्रः शूले आरोप्य व्यापादितः। कुमारपालस्य निधनं १२३८ मितवैक्रमाब्दे सञ्जातम्, तदनु त्रिभुवनपालदेवस्य शासनं प्रवर्तितं कुमारपालस्योत्तराधिकारिरूपेण। कुमारपालात्तृतीयस्य राज्ञो भीमदेवस्य पुरोहितः सोमेश्वरः कीर्तिकौमुद्याख्यग्रन्थे सुभटकविमित्थं स्मरति—

'सुभटेन पदन्यासः स कोऽपि समितौ कृतः।
येनाधुनाऽपि धीराणां रोमाञ्चो नापचीयते॥

इति। अत्र 'अधुना' इति पदं तस्य निधनं सूचयति। सोमेश्वरस्य स्थितिकालस्तु १२३६–१३१९ मितवैक्रमाब्दान्तरालवर्ती तस्य भीमदेववीसलदेवपुरोहितत्वेन। अतो हि १२५० मितवैक्रमाब्दो हि सुभटस्य स्थितिकालस्या-

परसीमा। कुमारपालो हि १२०७ मितवैक्रमाब्देऽभिषिक्तः, १२२९ मितवैक्रमाब्दं यावद्भुवं शशास। तेन हि सत्यपि त्रिभुवनपाल-कुमारपालयोर्वंशविपर्यये ११७० मितवैक्रमाब्दात्पूर्ववर्ती तु न कदापि सुभटः तथा सति उभयमपि सिध्यति त्रिभुवनपालस्य शासने कुमारपालस्य यौवराज्यं वा त्रिभुवनपालस्य समये कुमारपालस्यैतिहासिकत्वमपि। तेन हि ११७०–१२५० मितवैक्रमाब्दान्तराले हि सुभटस्य स्थितिकालः।

सुभटस्य हि एक एव ग्रन्थो लभ्यते दूताङ्गदाख्यः। ग्रन्थमिमं कविः स्वयमेव छायानाटकशब्देन जानाति। छायानाटकमिति संस्कृतनाट्यपरम्परायां नवीनपदम्। छायानाटके हि पात्राणि जवनिकान्तरितान्येव संवादं प्रस्तुवन्ति। जवनिकायां तत्संवादीनि चित्राणि संलग्नानि भवन्ति। यतो हि दर्शकाः पात्राणां छायामेव पश्यन्ति। अतो हि ईदृक्प्रकृतिकं नाटकं छायानाटकमिति कथ्यते। छायात्मना पटे प्रतिबिम्बितश्चित्ररूपोऽभिनय एव छायानाटकस्य स्वरूपं व्यपदिश्यते।

ग्रन्थोऽयं स्वल्पकायोऽपि कवेः प्रौढपाण्डित्यस्य परिचायकः। अस्य हि प्रतिपाद्यो विषयः अङ्गदरावणसंवादरूपा रामायणीया कथा। क्लिष्टशैल्याश्रितोऽपि ग्रन्थोऽयं रसपरिपाकदृष्ट्या सफलः। कुत्रचिद्विचित्राः पदप्रयोगा अपि दृश्यन्ते। अत्र हि स्वपूर्ववर्तिकवीनामपि श्लोकाः सङ्गृहीताः सन्ति। रामस्य दूतो भूत्वा अङ्गदः रावणप्रासादं गच्छति तदधिकृत्य प्रणीतमिति दूताङ्गदं नामास्यान्वर्थम्। तत्सिद्धिस्तु मतुबर्थीयाच्प्रत्ययेन। अस्य हि कवित्वं नाटकीयत्वञ्चोभे एव प्रशस्ये। दिङ्मात्रमुदाहरणं यथा—

सन्धौ वा विग्रहे वापि मयि दूते दशाननी।
अक्षता वा क्षता वापि क्षितिपीठे लुठिष्यति ॥ (१०)।

रे रे रावण रावणाः कति बहूनेतान् वयं शुश्रुम
प्रागेकं किल कार्तवीर्यनृपतेर्दोर्दण्डपिण्डीकृतम्।
एकं नर्तनदापितान्नकवलं दैत्येन्द्रदासीजनै-
रेकं वक्तुमपि त्रपामह इति त्वं तेषु कोऽन्योऽथवा ॥ (२२)

रणरसिकसुरस्त्रीमुक्तमन्दारदामा
स्वयमयमवतीर्णो लक्ष्मणन्यस्तहस्तः।
विरचितजयशब्दो वन्दिभिः स्यन्दनाङ्काद्
दिनकरकुललक्ष्मीवल्लभो रामभद्रः ॥ ५३ ॥

एवमेव—

परमारवंशस्य धाराधीशस्यार्जुनवर्मणः सभाकविना मदनेन पारिजातमञ्जरी नाम्नी नाटिका प्रणीताऽस्ति। ग्रन्थोऽयं विजयश्रीसंज्ञयाऽपि ज्ञायते।

अत्र सन्ति चत्वारोऽङ्काः। असौ हि बालसरस्वतीत्युपाधिनाऽपि विभूषित आसीत्। नाटिकाया अस्याः द्वौ अङ्कौ धारायां शिलापट्टे उट्टङ्कितौ स्तः। अत्र हि वर्ण्यते यदर्जुनवर्मण उरसि एका माला पतति नभस्तः। सा हि स्त्रीरूपे परिणमते भवति च तस्या अर्जुनवर्मणा सह परिणयः।

१२८७ मितवैक्रमाब्दमभितः स्थितिमता जयसिंहेन सूरिणा हम्मीरमदमर्दनं नाम पञ्चाङ्कं नाटकं प्रणीतमस्ति यत्र वीरधवलेन धोलकनरेशेन गुर्जरेषु आक्रामकाणां यवनानां पराजयो वर्णितः।

१३५७ मितवैक्रमाब्दमभितः स्थितिमता प्रह्लादेन परमारवंश्येन पार्थपराक्रमव्यायोगः प्रणीतः। अत्र हि विराटगोहरणसक्तानां कौरवानामुपरि पार्थस्य विजयो वर्णितः।

१३६० मितवैक्रमाब्दाभ्यर्णे स्थितिमान् मोक्षादित्यो भीमविक्रमाख्यव्यायोगं प्रणीतवान्।

१३६१ मितवैक्रमाब्दाभ्यर्णे स्थितिमता रामभद्रमुनिना षडङ्कं प्रबुद्धरौहिणेयनामकं नाटकं प्रणीतमस्ति। अत्र हि साहसिकस्य रौहिणेयस्य पराक्रमो वर्णितः।

केरलराजवंश्येन रविवर्मणा १३६१ मितवैक्रमाब्दाभ्यर्णे पञ्चाङ्कं प्रद्युम्नाभ्युदयनाटकं प्रणीतमस्ति। अत्र हि वज्रपुरराजस्य वज्रनाभस्य नाशो वर्णितस्तथा प्रद्युम्नस्य राजपुत्र्या प्रभावत्या सह परिणयोऽपि।

१३५५ मितवैक्रमाब्दमभितः स्थितिमतो गोविन्दभट्टपुत्रस्य पाण्डचराजाश्रितस्य हस्तिमल्लस्य सन्त्यनेकानि रूपकाणि प्रसिद्धानि, येषु विक्रान्तकौरवं, मैथिलीकल्याणं, अञ्जनापवनञ्जयं, सुभद्रा, उदयनराजं, भरतराजं अर्जुनराजं, मेघेश्वरञ्चेति प्रभृतीनि ज्ञातानि। कविरसौ नितान्तप्रतिभासम्पन्न आसीत्।

विक्रान्तकौरवे सन्ति षडङ्काः। तत्र सोमप्रभस्य राज्ञः पुत्रस्य जयकुमारस्य अकम्पनस्य पुत्र्याः सुलोचनायाश्च परिणयप्रसङ्गो वर्णितोऽस्ति। इदं हि रूपकं शृङ्गारवीरसारम्। वारङ्गलराजस्य रुद्रदेवस्य (१३६० वै०) एका नाटिका, ययातिचरितं नाटकञ्च प्रसिद्धग्रन्थौ।

१३६० मितवैक्रमाब्दाभ्यर्णे स्थितिमान् विद्यानाथः प्रतापरुद्रियकल्याणं पञ्चाङ्कं नाटकं प्रणीतवान्। अत्र हि वरगलस्य राज्ञः प्रतापरुद्रस्य (१३५१–१३८२ वै० ) राज्यारोहणं वर्णितम्। ग्रन्थोऽयमस्यैव कवेः प्रतापरुद्रयशोभूषणं साहित्यशास्त्रे समावेशितमस्ति।

विद्यानाथस्य भ्रातुष्पुत्रेण नरसिंहाख्येन १४०७ मितवैक्रमाब्दाभ्यर्णे

कादम्बरीकल्याणमष्टाङ्कं नाटकं प्रणीतमस्ति यत्र कादम्बरी कथा नाटकीयरूपेण प्रस्तुता। नरसिंहस्यानुजेन विश्वनाथेन १४०७ मितवैक्रमाब्दाभ्यर्णे द्वे रूपके प्रणीते स्तः सौगन्धिकाहरणव्यायोगः चन्द्रकलानाटिका च। १३५० मितवैक्रमाब्दाभ्यर्णे कविशेखरोपाधिविभूषितेन ज्योतिरीश्वरेण धूर्तसमागमाख्यं प्रहसनं प्रणीतमस्ति।

भास्कराख्येन केनचिद्विदुषा सम्भवतः १४०७ मितवैक्रमाब्दाभ्यर्णे स्थितिमता उन्मत्तराघवं नामैकाङ्किनाटकं प्रणीतमस्ति विक्रमोर्वशीयस्य चतुर्थमङ्कमनुसृत्य। अत्र हि सीतावियोगेनोन्मत्तो रामश्चित्रितोऽस्ति। देवी सीता स्त्रीनिषिद्धं किञ्चिदुपवनं प्रविशति गच्छति चादृश्यताम्। तद्विरहेण राम उन्मत्त इवाचरति। तस्योपरि दयां कृत्वा मुनिरगस्त्यः सीताप्राप्त्युपायमुपदिशति। स एव तौ सम्मेलयति च।

विजयनगरस्य राज्ञो द्वितीयहरिहरस्य पुत्रेण विरूपाक्षेणापि उन्मत्तराघवं नामैकाङ्किनाटकं प्रणीतमस्ति। अस्यापि स्थितिकालः १३६० मितवैक्रमाब्दमभितोऽनुमितः। इदं हि प्रेक्षणकनाटकमुच्यते समालोचकैः। सीताहरणजन्यशोकेन राम उन्मत्त आसीत्। लक्ष्मणो हि सीताया हर्तारं रावणमाक्राम्यति सम्पादयति च तस्य वधमपि। यदा हि लक्ष्मणो रावणं हत्वा सीतामादाय प्रत्यागतस्तदैव रामः स्वप्रकृतिमागतः। कवेरस्यैवापरं नाटकं नारायणविलासाख्यम्।

१३७५ मितवैक्रमाब्दाभ्यर्णे माणिकनाम्ना केनचिन्नैपालदेशीयकविना भैरवानन्दं नाम नाटकं प्रणीतमस्ति। अत्र हि भैरवस्य मदनवत्याख्यया कयाचित् स्वर्गीयदेव्या सह प्रेमप्रसङ्गो वर्णितः।

## ३३. शिङ्गभूपालः : कुवलयावली

श्रीशैलाधीशेन रेकालवंश्येन रसार्णवसुधाकरप्रणेत्रा शिङ्गभूपालेन १३८७ मितवैक्रमाब्दाभ्यर्णे कुवलयावली नाम्नी रत्नपाञ्चालिकाऽपराभिधा नाटिका प्रणीताऽस्ति। अत्र चत्वारोऽङ्का यत्र श्रीकृष्णस्य कुवलयावल्या सह प्रेमप्रसङ्गो वर्णितोऽस्ति। नाटिकेयं रत्नावलीमनुकरोति कथासंयोजने। नारदो हि देवर्षिः कुवलयावलीं रुक्मिणीहस्ते न्यासरूपेण निक्षिपति। कालयवनं हत्वा प्रतिनिवृत्तः श्रीकृष्ण उद्यानगतस्तां पश्यति साऽपि तम्। तत्र तयोरनुराग उत्पद्यते परस्परम्। पश्चाच्च रुक्मिणीप्रसादेन तयोर्मिलनं सम्पद्यते।

नाटिकेयं वस्तुतो नाट्यसाहित्यं श्रीहर्षयुगमभितः प्रत्यावर्तयति। अत्र न हि मनागपि प्रयोगकाठिन्यं नैव च पाण्डित्यप्रदर्शनप्रयासः। अस्याभिनेयता

तु रत्नावलीमपि अतिशेते। अस्य हि सारल्यं सारस्यञ्च निभालनीयं विद्यते। दिङ्मात्रनिर्दशनं यथा—

प्रत्यालोकनलालसैरपि सखे मन्दाक्षमन्दीकृतैः
सव्याजं प्रविसारितैरपि परं कातर्यपर्याकुलैः।
संवादे परिवर्तितैरनुपदं गाम्भीर्यसम्प्रेक्षितैः
विक्रीतोऽस्मि विलोकितैर्वरतनोराकूतकर्णेजपैः॥ (२।९)।

तथैव—

आस्ते पीठे क्षणमिव बहिर्मन्त्रिवृद्धानुरोधाद्
धत्ते हेलां परिजनवचोविक्रियासु क्रियासु।
नेच्छत्यन्तःपुरपरिचयं राजकार्यापदेशात्
तस्याः प्रेम्णा तरलितधृतिश्चक्रवर्ती यदूनाम्॥ (४।१)

## ३४. शङ्करमिश्रः : गौरीदिगम्बरप्रहसनम्

प्रसिद्धविपश्चितो भवनाथमिश्रस्य तनुजेन भवानीदेव्यां जातेन शङ्करमिश्रेण मैथिलमहाराजपुरुषोत्तमाश्रितेन १३६० मितवैक्रमाब्दमभितः स्थितिमता शङ्करमिश्रेण सन्ति त्रीणि रूपकाणि प्रणीतानि गौरीदिगम्बरप्रहसनं, कृष्णविनोदनाटकं, मनोभवपराभवनाटकञ्च। तत्र गौरीदिगम्बरप्रहसनं भगवतो महादेवस्य गौर्याश्च विवाहप्रसङ्गमादाय प्रणीतम्। इदं हि पितुर्भवनाथस्याज्ञया प्रणीतमासीद्यस्य नान्दीश्लोकः, स च यथा—

दिदीन्दीन्दीन्दीधधिकतनदन्नन्दिमुरजं
द्रणद्राणद्राणद्रणरणरणद्घर्घररवम्।
स्फुरत् फू फू फू फू फणिपतिफणाफूत्कृतिशतं
शिवम्भूयो भूयः प्रथमनरमाख्यन्दिशतु वः॥ १॥

एतत्पूर्वमेव कविना पूर्वोक्ते द्वे नाटके प्रणीते आस्तामित्यस्य प्रस्तावनातो ज्ञायते।

कृतिरियं स्वप्रकृतौ नितान्तमेव सफलम्। भगवन्मैनाकसंवादः, नन्दिनः स्वामिनिमित्तं चिन्ता, नारदवाक्यञ्च वास्तवमेव हास्योत्पादकम्। नन्दिनः परितापो यथा—

'मण्डपप्रवेशावसरे नारीसहस्रेण परिवार्यमाणस्य यदि मान्मथो विकारः स्यात्तदा च किं स्यात्।'

तथैव ब्रह्मणो वाक्यं यथा—

'अद्य वैशाखशुक्लामावास्यायां तिथौ' इत्यादि।

### ३५. उद्दण्डकविः : मल्लिकामारुतम्

१४६० मितवैक्रमाब्दमभितः स्थितिमता उद्दण्डाख्येन कविना मल्लिकामारुतं नाम दशाङ्कं प्रकरणं प्रणीतमस्ति। इदं हि मालतीमाधवस्य स्पष्टमनुकरणमेव। प्रकरणस्य प्रस्तावनायामसौ एकत्र उद्दण्ड कविरिति अन्यत्र दण्डिकविरिति च कथितोऽस्ति। समाप्तिवाक्यं तु यथा—

उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा
त्रैविद्येशो महर्षिर्निरवधिमहिमा यद्धिते जागरूकः।
तस्य श्रीविक्रमाज्ञाबहुमतिरचिते मल्लिकामारुतेऽस्मिन्
मूर्धन्योऽगान्नवानां प्रकरणतिलके निष्कलङ्को·········।

प्रस्तावनायामुक्तमस्ति यद्—

"तत्र च आमुष्यायणस्य आपस्तम्बशाखाध्यायिनो वाधूलकुलतरुपल्लवस्य कवितावल्लभस्य पञ्चमोञ्चितकीर्तेरुपाध्यायगोकुलनाथपौत्रस्य श्रीकृष्णसूनोः भट्टरङ्गनाथस्य प्रियनन्दनः इरुगुपनाथापरपर्यायो दण्डिकविर्नाम इति।"

"श्लाघ्यः सत्कवितासु षट्स्वपि पटुर्भाषासु सत्त्वं क्षितौ।
सर्वोद्दण्डकविः प्रकाण्डददसे कस्मै न विस्मेरताम्॥"

अनेन हि विक्रमाख्यस्य नृपस्याज्ञया प्रकरणमिदं प्रणीतमित्यपि तत्रोल्लिखितमस्ति। परन्तु विक्रम इति तत्र नैव स्पष्टम्। स हि ताम्रचूडक्रीडनगरस्य शासक इति सङ्केतस्तत्र मिलति। केचिदमुं कल्याणनरेशं षष्ठविक्रमादित्यं त्रिभुवनमल्लं ( ११३२-११८३ वै० ) मन्यन्ते यस्य सभायां विल्हण-विज्ञानेश्वरप्रभृतयः कवयो विचक्षणाश्चासन्। ग्रन्थप्रस्तावनायां 'कथितमप्येतन्मीमांसकचक्रवर्तिना महर्षिपुत्रेण परमेश्वरेण' इति यदुक्तं सम्भवति तद्विज्ञानेश्वरमेव सङ्केतितं स्यात्। सति तथा तु कवेरस्य वैक्रमद्वादशशतकमभितः स्थितिकालः सम्भवति। केचित्त्विमं काव्यादर्शस्य प्रणेतुर्दण्डिकवेरभिन्नमेव मन्यन्ते। तन्मते तस्य उद्दण्ड इति उपाधिरेव प्रौढपाण्डित्यस्य कृते राजसमर्पितः। ते हि ग्रन्थस्यास्य काव्यादर्शेन सह रचनासाम्यमपि पश्यन्ति। यथां हि मल्लिकामारुते—

स्पर्श एव हृदयङ्गमः सुधावर्षवद्वपुषि को विभाव्यते।
चन्द्रचन्द्रमणिहारमालतीगन्धसारघनसारशीतलः॥

एवमेव काव्यादर्शे—

चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः।
स्पर्शस्तथेत्यतिशयं बोधयन्ति बहूपमा॥

इति। एवमेव मल्लिकामारुते—

'सञ्चरन्ति मृगनाभिचर्चिता मेचकाम्बरकृतावगुण्ठनाः।
प्राणनाथमभिसर्तुमुद्यताः सुभ्रुवस्तिमिरदेवता इव॥'

एवमेव काव्यादर्शेऽतिशयोक्तिस्थले—

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः॥ (२।२१५)।

तथैव एतत्प्रकरणे—

'मध्योऽस्ति वा नास्ति वा'

एवमेव संशयातिशयोक्त्युदाहरणे काव्यादर्शे—

स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये तव।
अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्तते॥ (२।२१७)

इति। ते एतदपि कल्पयन्ति यत् त्रिषु दण्डिप्रबन्धेष्विदमन्यतममिति, तदनुसारेण हि प्रबन्धद्वये एव तत्र तत्र वर्णनप्रकाराणां परस्पराभेदसंवादितया ईदृशवर्णनप्रकाराणामेतत्प्रबन्धद्वयादन्यत्र प्रायशो दृष्टचरत्वाभावाच्चैतत्प्रबन्धद्वयनिर्मात्रोरन्यतरस्य चोरकवित्वापातः। प्रबन्धे एव उद्दण्डदण्डिशब्दौ निर्विशेषरूपेण प्रयुक्तौ दृश्येते। तेन हि तयोरैक्यं निश्चप्रचम्। मतस्यास्य समर्थकानामग्रणीर्जीवानन्दः। स हि स्वप्रणीतपरिमलाख्यव्याख्यायां प्रबन्धस्यास्य स्पष्टमेव वदति—

'अथ तत्र भवान् महाकविरुद्दण्डापरनामा दण्डयाचार्यः……' इत्यादि जीवानन्दस्य तर्को नितान्तं युक्तियुक्तः। किन्तु काव्यादर्शे हि—

इति साक्षात्कृते देवे राज्ञो यद्राजवर्मणः।
प्रीतिप्रकाशनं तच्च प्रेय इत्यवगम्यताम्॥ (२।२७९)

इत्यत्र राजवर्मणः पाठान्तरे रातवर्मणः, तथैव—

नासिक्यमध्या परितश्चतुर्वर्णविभूषिता।
अस्ति काचित्पुरी यस्यामष्टवर्णाह्वया नृपाः॥ (३।११४)

इत्यत्र काञ्चीनगरीं पुण्ड्रकवंश्यनृपांश्च स्मरति। किन्तु मल्लिकामारुतस्य प्रणेता तु लाटपुराभिजनः ताम्रचूडक्रीडनगरं विक्रमाह्वयश्च राजानं स्मरति। ग्रन्थयोरेवोभयोरेककर्तृकत्वे उभयत्र हि समानस्थानेन समानेनैव नृपेण च स्मृतेन भाव्यम्। वस्तुतस्तु विषयोऽयमधिकतरमनुसन्धानमपेक्ष्यते। सामान्यतः कविरसौ दण्डयाचार्याद्भिन्न एवेति बहवो विश्वसन्ति।

प्रकरणेऽस्मिन् विश्वावसुनन्दिन्या मल्लिकाया कुन्तलेश्वरामात्यस्य ब्रह्मदत्तस्य पुत्रेण मारुतेन सह प्रणयप्रसङ्गो वर्णितः। ग्रन्थेऽस्मिन् न पदलालित्यं

नैव चाभिनेयता। केवलं हि कवेः ग्रन्थप्रणयनकुतूहलशामक एवायं ग्रन्थः। प्रायशोऽप्रचलितशब्दानामत्र प्रयोगः पाण्डित्यसिद्धये। भावभाषादिदृष्ट्याऽपि ग्रन्थोऽयं न तथा प्रशस्यः।

**३६. वामनभट्टबाणः : रूपकत्रयी**

वामनभट्टबाणाख्यस्य कवेः पार्वतीपरिणयनाटकं कनकलेखाकल्याण-नाटिका शृङ्गारभूषणभाणश्चेति त्रयः प्रबन्धाः प्रथिताः। कविरसावपि स्वजीवनविषये मौनमेवावलम्बते। असौ हि वत्सान्वयसम्भवो विप्रः। अस्य स्थितिकालः १४७० मितवैक्रमाब्दमभितोऽनुमितः कैश्चित्कैश्चिच्च वैक्रमसप्त-दशशतकोत्तरार्द्धमभितः। केचिदस्य बाणभट्टस्य कादम्बरीकृत ऐक्यमनुमान्ति किन्तु तन्न युक्तियुक्तम्। कादम्बरीकृद् वात्स्यायनवंशसम्भवोऽसौ तु वत्सान्वय-भवः। भावभाषादिदृष्ट्याऽपि न तत्सङ्गच्छते। कादम्बरीकृतः कृते कालिदासः केवलमतीतविषयः किन्तु पार्वतीपरिणये तु कालिदास एव रूपान्तरेण वक्ति। पार्वतीपरिणयं हि पञ्चाङ्कं नाटकम्। कुमारसम्भवकथाश्रिते नाटकेऽस्मिन् पार्वतीशिवयोः परिणयप्रसङ्गो वर्णितोऽस्ति। नाटकस्यास्योपादेयताविषये कविः स्वयमेव सूत्रधारमुखेन कथयति—

सन्निधानस्य सामग्र्यं रसानां परिपुष्टता।
सन्दर्भसौकुमार्यञ्च सभ्यानां रञ्जने क्षमम्॥ (१।५)

इति। वस्तुत एव नाटकस्यास्य कवित्वमभिनेयत्वञ्च प्रशस्यं दृश्यते। सत्यमेवोक्तं तेन स्वयमेव—

'नृत्यति यद्रसनायां वेधोमुखलासिका वाणी'।

इति। अस्य हि कवित्वं यथा—

जगत्त्रयीलोचनबालचन्द्रिका कुलस्य रत्नं भवती क्व भूभृतः।
क्व कृत्तिवासाः पितृकानने वसन्नमङ्गलाचाररतिस्त्रिलोचनः॥ (४।१३)

इत्यादि। एवमेव काशीपतिकविराजस्य मुकुन्दानन्दसंज्ञितो भाणः। (१४९० वै०)

कविषु प्रसिद्धः।

१५१७ मितवैक्रमाब्दाभ्यर्णे स्थितिमता गङ्गाधरेण गङ्गादासप्रताप-विलासाख्यं नाटकं प्रणीतमस्ति। अत्र १५०७ मितवैक्रमाब्दाभ्यर्णे स्थितिमतो राजकुमारस्य चम्पानीरस्य गुर्जरशासके शाहाख्येन सह युद्धप्रसङ्गो वर्णितो-ऽस्ति।

वैक्रमपञ्चदशशतकोत्तरार्द्धभवेन हरिहराख्येन केनचित्कविना भर्तृहरि-निर्वेदाख्यं नाटकं प्रणीतमस्ति। अत्र हि राज्ञो भर्तृहरेर्वैराग्यं सप्रपञ्चं वर्णित-

मस्ति। केचिदस्यैव कवेः कृतित्वेन प्रभावतीपरिणयाख्यं नाटकमप्यामनन्ति केचित्तत्प्रत्याख्यान्ति। प्रत्याख्यानपक्षानुसारेण हि प्रभावतीपरिणयस्य प्रणेता हि मैथिलः १६५२ मितवैक्रमाब्दाभ्यर्णे जात आसीत्। प्रभावतीपरिणयं हि सप्ताङ्कं नाटकं यत्र श्रीकृष्णात्मजस्य प्रद्युम्नस्य प्रभावत्या सह परिणय-प्रसङ्गो वर्णितः। इदं हि शृङ्गारोद्भावितं नाटकम्। भर्तृहरिनिर्वेदं तु शान्तरसभूयिष्ठम्। वस्तुतस्तु भर्तृहरिनिर्वेदकृद्धरिहरो धर्मशास्त्रमग्नचित्तः शान्तरसानुगतो यदा प्रभावतीपरिणयस्य प्रणेता कविहृदयः शृङ्गारचेताश्च। प्रथमे हि विषयप्राधान्यं द्वितीये कवित्वस्याभिनेयत्वस्य च सुन्दरः समन्वयः। अतस्तयोरैक्यं न तथा सिध्यति।

१५६० मितवैक्रमाब्दमभितः स्थितिमतो रूपगोस्वामिनः सन्ति त्रीणि रूपकाणि प्रथितानि, यत्र सप्ताङ्कं विदग्धमाधवं, दशाङ्कं ललितमाधवं दानकेलिकौमुदीभाणश्च। एषु हि श्रीकृष्णस्तुतिपरक एव विषयो वर्णितः।

मैथिलस्य हि गोकुलनाथस्य १६१५ मितवैक्रमाब्दाभ्यर्णे स्थितिमतः मुदितमदालसानाटकं सप्ताङ्कममृतोदयाख्यं रूपकात्मकं नाटकञ्च प्रसिद्धम्। अमृतोदये हि विवेकान्मोहस्य पराजयो वर्णितः।

१६३० मितवैक्रमाब्दमभितः स्थितिमता रत्नखेटश्रीनिवासदीक्षितेन भैमीपरिणयाख्यं नाटकं प्रणीतमस्ति यत्र नलदमयन्त्योः परिणयप्रसङ्गो वर्णितः।

१६४० मितवैक्रमाब्दमभितः स्थितिमता नेपालनरेशाश्रितेन राज्ञा जगज्ज्योतिर्मल्लेन हरगौरीविवाहाख्यं सङ्गीतप्रधानं नाटकं प्रणीतमस्ति।

१६६० मितवैक्रमाब्दमभितः स्थितिमान् शेषकृष्णः कंसवधाख्यं सप्ताङ्कं नाटकं प्रणीतवान्। अत्र कृष्णेन कंसस्य वधः, उग्रसेनस्य राज्यारोहणमित्यादिकथा वर्णिता।

१६९० मितवैक्रमाब्दमभितः स्थितिमता यज्ञनारायणेन तञ्जीरस्य राज्ञो रघुनाथस्य (१६७१–१६८९) चरितमादाय रघुनाथविलासाख्यं नाटकं प्रणीतमस्ति।

१६९० मितवैक्रमाब्दाभ्यर्णे स्थितिमतो गुरुरामस्य सन्ति त्रीणि रूपकाणि प्रसिद्धानि। तानि हि मदनगोपालविलासभाणः, सुभद्राविजयं नाम पञ्चाङ्कं नाटकं, रत्नेश्वरप्रसादनाख्यञ्च पञ्चाङ्कं नाटकमिति १६९० मितवैक्रमाब्दमभितः सता राजचूडामणिना आनन्दराघवं नाम नाटकं, कमलिनीकलहंसाख्यं नाटकं शृङ्गारसर्वस्वभाणश्च प्रणीताः सन्ति।

१७१० मितवैक्रमाब्दाभ्यर्णे सता नीलकण्ठेन कविना नलचरिताख्यं षडङ्कं नाटकं प्रणीतमस्ति। नाटकमिदमपूर्णमेव प्रतिभाति।

१७१० मितवैक्रमाब्दमभितः सता हि वेङ्कटाध्वरिणा प्रद्युम्नानन्दं नाम षडङ्कं नाटकं प्रणीतमस्ति यत्र हि प्रद्युम्नस्य रत्या सह परिणयो वर्णितः।

१७२० मितवैक्रमाब्दाभ्यर्णे स्थितिमता रुद्रदासेन चन्द्रलेखाख्या नाटिका प्रणीताऽस्ति यत्र चन्द्रलेखाया मानवेदराजस्य परिणयो वर्णितः।

१७०८ मितवैक्रमाब्दमभितः सता महादेवाख्येन कविना अद्भुतदर्पणं नाम नाटकं प्रणीतमस्ति सविदूषकम्। अत्र हि लङ्कायां घटिता घटना वर्णिताः सन्ति।

१७५० मितवैक्रमाब्दमभितः स्थितिमता रामभद्रेण जानकीपरिणयं नाम नाटकं प्रणीतमस्ति यत्र हि प्रचलितकथायां कल्पितोऽप्यंशो भूम्ना निक्षिप्तोऽस्ति। अस्यैव कवेः शृङ्गारतिलकभाणोऽपि प्रसिद्धो यो हि अय्याभाण इत्यपि कथितः।

१७६० मितवैक्रमाब्दाभ्यर्णे सतो नल्लाकवेः सुभद्रापरिणयनाटकं शृङ्गारसर्वस्वभाणश्च प्रसिद्धग्रन्थौ।

१७७० मितवैक्रमाब्दाभ्यर्णे स्थितिमान् कवितार्किकः कौतुकरत्नाकरनामकं प्रहसनं प्रणीतवान्।

१७७५ मितवैक्रमाब्दमभितः स्थितिमतः सामराजस्य धूर्तनर्तकं नाम प्रहसनं श्रीदामचरितं नाम पञ्चाङ्कं नाटकं प्रसिद्धमस्ति।

१७८० मितवैक्रमाब्दमभितः स्थितिमतः श्रीलक्ष्मीधरात्मजस्य विश्वेश्वरपण्डितस्य रुक्मिणीपरिणयं नाम नाटकं, नवनाटिकानाम्नी नाटिका शृङ्गारमञ्जरीसट्टकञ्च प्रसिद्धानि।

१८१० मितवैक्रमाब्दाभ्यर्णे सता देवराजाख्येन कविना बालमार्तण्डविजयाख्यं नाटकं प्रणीतमस्ति। पञ्चाङ्केऽस्मिन् नाटके ट्रावनकोरनरेशस्य मार्तण्डवर्मणश्चरितं चित्रितमस्ति।

१८२० मितवैक्रमाब्दमभितः स्थितिमतो वरदाचार्यस्य वसन्ततिलकभाणः प्रसिद्धः।

१८२० मितवैक्रमाब्दमभितः स्थितिमतो घनश्यामस्य कवेः सन्ति शताधिका ग्रन्थाः प्रणीताः, येषु मदनसञ्जीवनाख्यो भाणः, द्वे सट्टके नवग्रहचरितं आनन्दसुन्दरी च, डमरुकाख्यमेकं प्रहसनञ्च।

१८१४–१८४६ मितवैक्रमाब्दान्तराले स्थितिमतष्ट्रावनकोरयुवराजस्य रामवर्मणः स्तो द्वे नाटके प्रसिद्धे रुक्मिणीपरिणयं शृङ्गारसुधाकरञ्च।

१८३० मितवैक्रमाब्दाभ्यर्णे सतो विश्वनाथाख्यस्य कवेः मृगाङ्कलेखाख्या नाटिका प्रसिद्धा रत्नावलीमनुसृत्य प्रणीता।

१८७७ मितवैक्रमाब्दमभितः प्रणीतो रामाख्यकवेः मन्मथोन्मथनाख्यो डिमः प्रसिद्धोऽस्ति।

१८३०–१८७० मितवैक्रमाब्दान्तराले स्थितिमतो धर्माधिकारिकृष्णपण्डितस्य कामकन्दलं नाम नाटकमस्ति। अत्र सन्ति त्रय एवाङ्काः। नाटकेऽस्मिन्नस्ति महान् शब्दाडम्बरः किन्तु नाटकीयत्वं तु नाममात्रमेव।

कोटिलिङ्गपुरस्य राजकुमारेण युवराजाख्येन १९०७ मितवैक्रमाब्दमभितः प्रणीतो रससदनभाणो भाणेषु नृपायते।

अज्ञातकालमपि जगदीशभट्टाचार्यस्य द्वयङ्कं प्रहसनं हास्यार्णवं प्रहसनकाव्येषु वरिष्ठम्।

एवमेव मथुरादासस्य वृषभानुजा, गोपीनाथस्य कौतुकसर्वस्वं, नीलकण्ठस्य कल्याणसौगन्धिकं, लोकनाथस्य कृष्णाभ्युदयं, कृष्णमिश्रस्य वीरविजयं, शङ्करकवेः शारदातिलकं, रामकृष्णस्य गोपालकेलिक्रीडा, माधवस्य सुभद्राहरणञ्च कानिचिज्ज्ञातानि रूपकाणि येषां प्रणयनकालो नैवाधुनाऽपि ज्ञातः।

१९१० मितवैक्रमाब्दाभ्यर्णे स्थितिमतो मुकुन्दाख्यकवेः जानकीपरिणयश्चतुर्ष्वङ्केषु विभक्तः। अत्र हि सीतास्वयंवरादारभ्य रामायणीया कथा स्वप्रतिभयाऽप्युद्भाव्य संक्षेपेण वर्णिताऽस्ति। वस्तुतस्त्वयं काव्यमेव यतो ह्यस्य नास्त्यभिनेयत्वं रङ्गे। अत्र हि श्राव्यमेव वस्तु भूम्ना।

१९४३ मितवैक्रमाब्दमभितः स्थितिमतो मूलशङ्करमाणिक्यलालयाज्ञिकस्य छत्रपतिसाम्राज्यं संयोगितास्वयंवरं प्रतापविजयञ्च सन्ति प्रसिद्धा ग्रन्थाः। तेषु हि—

छत्रपतिसाम्राज्यं हि दशाङ्कं नाटकम्। अत्र महाराजशिवस्य छत्रपतित्वप्राप्तिर्वर्णिता।

संयोगितास्वयंवरे जयचन्द्रसुतायाः संयोगितायाः पृथ्वीराजस्य चाहमानवंश्यस्य च प्रणयप्रसङ्गो वर्णितः।

प्रतापविजये तु प्रतापसिंहस्य विजयकार्याणि वर्णितानि।

राधाप्रसादात्मजस्य विद्वन्मूर्धन्यस्य कपिलदेवद्विवेदिनोः वर्तमानशतकीनस्य परिवर्तनं नाम समयप्रतिबिम्बि नाटकं साम्प्रतिकविचक्षणेषु प्रियमस्ति। अत्र सन्ति पञ्चाङ्काः विवाहनिश्चय-गृहविक्रय-विवाहोत्सव-द्रव्यार्जन-न्यायालयनिर्णयाख्याः।

परशुरामात्मजेन लोकमणिना नेपालाभिजनेन द्विजेन वत्सान्वयजातेन प्रणीताऽस्ति चतुरङ्किका कमलाक्षी नाम नाटिका। अत्र हि पर्वतराजपुत्र्याः कमलाक्ष्याः पालपेश्वरपुत्रस्यार्यकेतुना सह प्रणयप्रसङ्गो वर्णितः।

इत्थं भासादारभ्य लोकमणिपर्य्यन्तं सन्त्यनेकैः कविभिः प्रणीतानि विविधानि रूपकाणि ज्ञातानि तथैव सम्भवन्ति कतिपयान्यज्ञातान्यपि वा कालकवलितानि। तानि च रूपकाणि सन्ति दशसु मुख्यभेदेषु विभक्तानि अष्टादशसु उपभेदेषु च। तत्र नाटक-प्रकरण-भाण-व्यायोग-समवकार-डिम-ईहामृग-अङ्क-बीथी-प्रहसनाख्या रूपकस्य मुख्यभेदाः। तथैव नाटिका-त्रोटक-गोष्ठी-सट्टक-नाट्यरासक-प्रस्थान-उल्लाप्य-काव्य - प्रेङ्क्षण - रासक - संलापक - श्रीगदित-शिल्पक-विलासिका-दुर्म्मल्लिका-प्रकरणी-हल्लीशाभाणिकाख्यानि अष्टादशोपरूपकाणि। विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्। तत्र—

नाटक ख्यातेतिवृत्तं यथास्थानं मुख-प्रतिमुख-गर्भ-विमर्श-उपसंहारेति-सन्धिपञ्चकयुतं विलास-ऋद्धि-प्रभृतिनानाविभूतियुक्तं सुखदुःखसमुद्भूतियुक्तं नानारसविलसितं भवति। तत्र चतुरधिका अङ्का दशपराः, प्रख्यातवंशो धीरोदात्तप्रकृतिको राजर्षिर्नायकः, शृङ्गारवीरयोरन्यतमोऽङ्गिरसोऽन्ये त्वङ्गानि, निर्वहणेऽद्भुतरसः, चत्वारः पञ्च वा मुख्यपुरुषाः, बन्धनन्तु गोपुच्छाग्रसमानम्। भासस्य स्वप्नवासवदत्तं, सुबन्धोर्वत्सराजचरितं, कालिदासस्य अभिज्ञानशाकुन्तलं, दिङ्नागस्य कुन्दमाला, श्रीहर्षस्य नागानन्दं, भवभूतेरुत्तररामचरित, विशाखदत्तस्य मुद्राराक्षसम्, भट्टनारायणस्य वेणीसंहारम्, जयदेवस्य प्रसन्नराघवं च कानिचित्प्रख्यातनाटकानि। रामायणं, महाभारतं, पुराणानि, इतिहासश्चैषां कथाधाराः।

प्रकरणे वृत्तं कविकल्पितं भवति नायकश्च विप्रो वा वणिक्। धीरप्रशान्तप्रकृतिकः शृङ्गारोऽङ्गी रसः। शेषं नाटकवद्भवति। कानिचित्प्रकरणानि यथा भासस्य दरिद्रचारुदत्तं, शूद्रकस्य मृच्छकटिक, भावभूतेर्मालतीमाधवं, उद्दण्डकवेर्मल्लिकामारुतं, रामचन्द्रस्य कौमुदीमित्रानन्दं, रामभद्रस्य प्रबुद्धरौहिणेयं, यशश्चन्द्रस्य मुद्रितकुमुदचन्द्रं च।

भाणो हि धूर्तचरितो नानावस्थान्तरात्मक एकाङ्कः एकपात्रकः। इतिवृत्तं तत्रोत्पाद्यं शृङ्गारवीरौ सूच्यौ मुखनिर्वहणे सन्धी। यथा हि शूद्रकस्य पद्मप्राभृतकं, वररुचेरुभयाभिसारिका, ईश्वरदत्तस्य धूर्तविटसंवादः, श्यामिलकस्य पादताडितकं, बाणस्य मुकुटताडितकम्, वामनभट्टबाणस्य शृङ्गारभूषणम्, रामभद्रस्य शृङ्गारतिलकम्, वरदाचार्यस्य वसन्ततिलकं, शङ्करकवेः शारदातिलकम्, नल्लाकवेः शृङ्गारसर्वस्वम्, युवराजस्य रससदनभाणः, अज्ञातकर्तृको लीलामधुकरः, वत्सराजस्य कर्पूरचरितम्, कविराजस्य मुकुन्दानन्दः, रूपगोस्वामिनो दानकेलिकौमुदी, गुरुरामस्य मदनगोपालविलासः, राजचूडामणेः शृङ्गारतिलकम्, घनश्यामस्य मदनसञ्जीवनञ्च।

प्रहसनं हि कविकल्पितं निन्द्यानां वृत्तम्। अत्र नारभटी न च विष्कम्भक-प्रवेशकौ। अङ्गिरसो हास्योऽत्र। सन्ध्यादयस्त्वत्र भाण इव। कानिचित्प्रहसनानि यथा बोधायनस्य भगवदज्जुकम्, महेन्द्रविक्रमवर्मणो मत्तविलासः, शङ्खधरस्य लटकमेलकं, ज्योतिरीश्वरकविशेखरस्य धूर्तसमागमः, जगदीश्वरस्य हस्यार्णवः, गोपीनाथस्य कौतुकसर्वस्वं, सामराजस्य धूर्तनर्तकम्, अज्ञातकर्तृकं दामकं, कवितार्किकस्य कौतुकरत्नाकरम्, घनश्यामस्य डमरुकं च।

व्यायोगः ख्यातेतिवृत्तः स्वल्पस्त्रीपात्रकः, हास्यशृङ्गारशान्तवर्जमङ्गी, एकाङ्कश्च। केचिद्व्यायोगा यथा भासस्य मध्यमव्यायोगः, दूतवाक्यं, दूतघटोत्कचः, कर्णभारं, ऊरुभङ्गः, कनकाचार्यस्य धनञ्जयविजयः, रामचन्द्रस्य निर्भयभीमः, प्रह्लादस्य पार्थपराक्रमः, वत्सराजस्य किरातार्जुनीयव्यायोगः, विश्वनाथस्य सौगन्धिकाहरणं, कञ्चनपण्डितस्य धनञ्जयविजयः, मोक्षादित्यस्य भीमविक्रमम्, च।

समवकारो वीरो रसो देवासुराश्रयं वृत्तं नायकास्तु द्वादश। यथा वत्सराजस्य समुद्रमन्थनम्।

डिमो हि ख्यातवृत्तौ रौद्रप्रधानश्चतुरङ्ककः। यथाऽज्ञातकर्तृकस्त्रिपुरदाहः, वेङ्कटवर्यस्य कृष्णविजयः, रामकवेः मन्मथोन्मथनम्।

ईहामृगो हि मिश्रवृत्तश्चतुरङ्ककः। अत्र नरदिव्यानियतौ नायकप्रतिनायकौ। यथा वत्सराजस्य रुक्मिणीपरिणयः अज्ञातकर्तृकः कुसुमशेखरविजयः।

अङ्के हि प्रसिद्धं वृत्तं, प्रधानो रसः करुणः। यथा भास्करकवेरुन्मत्तराघवम्, अज्ञातकर्तृकः शर्मिष्ठाययातिः।

वीथीकथिते रूपकभेदे एक एवाङ्कः शृङ्गारो हि सूच्यो रसः। यथा माधवीवीथी, मालविका च।

एवमेवाष्टादशोपरूपकाणि। तानि चेत्थम्—

नाटिका क्लृप्तवृत्ता स्त्रीप्राया चतुरङ्किका यत्र धीरललितः प्राख्यातो नायकः। यथा हिश्रीहर्षस्य रत्नावली, प्रियदर्शिका, मदनपालस्य पारिजातमञ्जरी, मथुरादासस्य वृषभानुजा, राजशेखरस्य विद्धशालभञ्जिका।

त्रोटकं हि सप्ताष्टनवञ्चाङ्कं दिव्यमानुषसंश्रयं प्रत्यङ्कं सविदूषकम्। यथा कालिदासस्य विक्रमोर्वशीयम्, अज्ञातकर्तृकं लम्भितरम्भम्।

गोष्ठी कामशृङ्गारयुक्ता नोदात्तवचना प्राकृतैः पुरुषैर्युक्ता। यथा रैवतमदनिका।

सट्टकं हि प्राकृताशेषपाठ्यमप्रवेशकम् । यथा राजशेखरस्य कर्पूरमञ्जरी ।
नाट्यरासकं हि बहुगेयं हास्यप्रधानञ्च । यथा नर्मवती ।
प्रस्थानकं हीननायकं दासीनायिकञ्च । यथा शृङ्गारतिलकम् ।
उल्लाप्यं हि एकाङ्कमुदात्तनायकम् । यथा देवीमहादेवम् ।
काव्यमेकाङ्कं स्त्रीनायकम् । यथा यादवोदयम् ।
प्रेङ्खणमसूत्रधारं हीननायकञ्च । यथा बालिवधम् ।
रासकं हि पञ्चपात्रयुतं मूर्खनायकञ्च । यथा मेनकाहितम् ।
संलापकं हि चतुरङ्कं पाखण्डनायकम् । यथा मायाकापालिकम् ।
श्रीगदितं हि प्रख्यातनायकद्वययुक्तम् । यथा क्रीडारसाहालम् ।
शिल्पकं चतुरङ्कं ब्राह्मणनायकम् । यथा कनकावतीमाधवम् ।
विलासिका शृङ्गारभूयिष्ठा एकाङ्का । नैवोदाहरणं श्रुतम् ।
दुर्मल्लिका चतुरङ्का कौशिकीवृत्तियुता । यथा बिन्दुमती ।
प्रकरणिका सार्थवाहादिनायका । अस्या अप्युदाहरणं मृग्यम् ।
हल्लीशः एकाङ्कः स्त्रीबहुलः । यथा केलिरैवतकम् ।
भाणिका हि भाणवद्दृप्ता । यथा कामदत्ता ।

---

# परिशिष्टम्—१

## काव्यसरणिः एकविलोकने

### ( क ) महाकाव्यानि

| ग्रन्थकारः | ग्रन्थः |
|---|---|
| पाणिनिः | जाम्बवतीविजयम् |
| व्याडिः | बलचरितम् |
| कात्यायनः | स्वर्गारोहणम् |
| पतञ्जलिः | महानन्दमयम् |
| कालिदासः | कुमारसम्भवं, रघुवंशम् |
| अश्वघोषः | बुद्धचरितं, सौन्दरनन्दम् |
| कुमारदासः | जानकीहरणम् |
| समुद्रगुप्तः | कृष्णचरितम् |
| भारविः | किरातार्जुनीयम् |
| धनेश्वरः | शत्रुञ्जयमहाकाव्यम् |
| भट्टिः | रावणवधमहाकाव्यम् |
| माघः | शिशुपालवधम् |
| भीमकभट्टः | रावणार्जुनीयम् |
| रत्नाकरः | हरविजयम् |
| शिवस्वामी | कप्फाणाभ्युदयम् |
| नीतिवर्मा | कीचकवधम् |
| अभिननः | कादम्बरीकथासारः |
| हरिश्चन्द्रः | धर्मशर्माभ्युदयः |
| कनकसेनवादिराजः | यशोधरचरितम् |
| हलायुधः | कविरहस्यम् |
| पद्मगुप्तः | नवसाहसाङ्कचरितम् |
| क्षेमेन्द्रः | शशिवंशमहाकाव्यम् |
| विल्हणः | विक्रमाङ्कदेवचरितम् |
| कृष्णलीलांशुकः | गोविन्दाभिषेकम् |
| शङ्कराराध्यः | वसवेशविजयम् |

| | |
|---|---|
| सोमनाथः | पण्डिताराध्यचरितम् |
| चण्डकविः | पृथ्वीराजविजयम् |
| लोलिम्बराजः | हरिविलासमहाकाव्यम् |
| हेमचन्द्राचार्यः | कुमारपालचरितम् |
| वाग्भटः | नेमिनिर्वाणकाव्यम् |
| धनञ्जयः | द्विसन्धानकाव्यम् |
| जल्हणः | सोमपालविलासः |
| मङ्खकः | श्रीकण्ठचरितम् |
| वासुदेवः | युधिष्ठिरविजयं, वासुदेवविजयम् |
| कविराजः | राघवपाण्डवीयम् |
| जयदेवः | गीतगोविन्दम् |
| श्रीहर्षः | नैषधीयचरितम् |
| सोमेश्वरः | सुरथोत्सवः, कीर्तिकौमुदी |
| जयरथः | हरचरितचिन्तामणिः |
| अभयदेवः | जयन्तविजयः |
| अमरचन्द्रः | बालभारतम् |
| वीरनन्दी | चन्द्रप्रभचरितम् |
| कृष्णानन्दः | सहृदयानन्दम् |
| वेदान्तदेशिकः | यादवाभ्युदयम् |
| त्रिविक्रमाचार्यः | उषाहरणम् |
| मलधारिदेवप्रभः | पाण्डवचरितम् |
| वस्तुपालः | नरनारायणानन्दम् |
| बालचन्द्रः | वसन्तविलासः |
| भानुदत्तः | गीतगौरीपतिकाव्यम् |
| मल्लिनाथः | रघुवीरचरितम् |
| वामनभट्टबाणः | नलाभ्युदयम्, रघुनाथचरितम् |
| चन्द्रचूडः | कार्तवीर्यविजयम् |
| राजनाथः | अच्युतरामाभ्युदयम् |
| गोविन्दमखी | हरिवंशसारचरितम् |
| रुद्रकविः | राष्ट्रौढवंशमहाकाव्यम् |
| रामभद्रः | पतञ्जलिचरितम् |
| हरदत्तः | राघवनैषधीयम् |
| देवविमलगणिः | हरिसौभाग्यम् |

| | |
|---|---|
| वेङ्कटेश्वरः | रामचन्द्रोदयम् |
| नीलकण्ठः | शिवलीलार्णवम्, गङ्गावतरणम् |
| त्र्यम्बकशेवडेः | विन्ध्यवासिनीविजयम्, शुम्भवधम् |
| अरिसिंह | सुकृतकीर्तनम् |
| माधवाचार्यः | यमकभारतम् |
| अमरचन्द्रः | बालभारतम् |
| त्रिविक्रमः | उषाहरणकाव्यम् |
| नारायणः | पारिजातहरणम् |
| विद्याचक्रवर्ती | रुक्मिणीकल्याणम् |
| अगस्त्यः | बालचरितम् |
| नयचन्द्रः | हम्मीरविजयमहाकाव्यम् |
| साकल्यमल्लः | उदारराघवम् |
| माधवः | नरकासुरविजयम् |
| व्यासतीर्थः | जयतीर्थविजयम् |
| कृष्णः | जयतीर्थविजयाब्धि |
| सङ्कर्षणः | जयतीर्थविजयम् |
| श्रीनिवासः | जयीन्द्रोदयः |

प्राकृतमहाकाव्यानि

| | |
|---|---|
| प्रवरसेनः | सेतुबन्धम् |
| वाक्पतिराजः | गउडवहो |

## ( ख ) खण्डकाव्यानि

| | |
|---|---|
| कालिदासः | मेघदूतम्, ऋतुसंहारम् |
| घटखर्परः | घटखर्पर ( यमक ) काव्यम् |
| भर्तृमेण्ठः | हयग्रीववधम् |
| दामोदरगुप्तः | कुट्टनीमतम् |
| शङ्कुकः | भुवनाभ्युदयम् |
| क्षेमेन्द्रः | दशावतारचरितम् |
| बिल्हणः | चौरपञ्चाशिका |
| माणिक्यसूरिः | यशोधरचरितम् |
| शम्भुकविः | राजेन्द्रकर्णपूरः |
| श्रीहर्षः | अर्णववर्णनं, नवसाहसाङ्कचरितं, गौडोर्वीशकुलप्रशस्तिः |

| | |
|---|---|
| सन्ध्याकरनन्दी | रामपालचरितम् |
| अमरचन्द्रः | काव्यकल्पलता, जिनेन्द्रचरितम् |
| मलधारिदेवप्रभः | मृगावतीचरितम् |
| वेदान्तदेशिकः | हंससन्देशः |
| वामनभट्टबाणः | रघुनाथचरितम् |
| नीलकण्ठः | लघुकाव्यम्, कलिविडम्बनम्, सभारञ्जनम्, शान्तविलासः |
| जगन्नाथः | भामिनीविलासः, जगदाभरणम्, आसफविलासः, प्राणाभरणम् |
| हरिकृष्णभट्टः | सीतास्वयंवरकाव्यम् |
| क्षेमेन्द्रः | दर्पदलनम् |
| वासुदेवः | वासुदेवविजयकाव्यम् |
| अज्ञातकर्तृकं | धातुकाव्यम् |
| कृष्णकविः | ताराशशाङ्कम् |
| धनपालः | ऋषभपञ्चाशिका |
| दक्षिणामूर्तिः | लोकोक्तिमुक्तावलिः |
| सूर्यकविः | रामकृष्णविलोमकाव्यम् |
| विद्यावागीशः | कौन्तेयवृत्तम् |
| दामोदरगुप्तः | कुट्टनीमतम् |
| माधवकविः | दानलीलाकाव्यम् |
| नीलकण्ठः | कालिविडम्बनम् |
| नारायणभट्टः | कोटिविरहम् |
| कृष्णानन्दः | सुदर्शनचम्पूकाव्यम् |
| सोमप्रभाचार्यः | सूक्तिमुक्तावली |
| विमलाचार्यः | प्रश्नोत्तरमाला |

## ( ग ) शतककाव्यानि

| | |
|---|---|
| मयूरकविः | सूर्यशतकम् |
| भर्तृहरिः | नीतिशतकम्, शृङ्गारशतकम्, वैराग्यशतकम् |
| अमरुकः | अमरुशतकम् |
| शम्भुकविः | अन्योक्तिमुक्तालताशतकम् |
| नागराजः | भावशतकम्, शृङ्गारशतकम् |

| | |
|---|---|
| नीलकण्ठः | अन्यापदेशशतकम्, वैराग्यशतकम् |
| बाणभट्टः | चण्डीशतकम् |
| आनन्दवर्धनः | देवीशतकम् |
| कुसुमदेवः | दृष्टान्तकलिकाशतकम् |
| कामराजः | शृङ्गारकलिकात्रिशती |
| धनदराजः | शृङ्गारधनदशतकं, नीतिधनदशतकं, वैराग्यधनदशतकम् |
| जनार्दनभट्टः | वैराग्यशतकम् |
| नीलकण्ठः | शान्तिविलासशतकम् |
| अप्पयदीक्षितः | वैराग्यशतकम् |
| रुद्रकविः | भावविलासशतकम् |
| मधुसूदनसरस्वती | आमन्दमन्दाकिनीशतकम् |
| क्रूरनारायणः | सुदर्शनशतकम् |
| विश्वेश्वरः | रोमावलीशतकम् |
| नागराजः | भावशतकम् |
| भल्लटः | भल्लटशतकम् |
| नीलकण्ठः | सभारञ्जनशतकम् |
| नरहरिः | शृङ्गारशतकम् |
| जम्बुगुरुः | जिनशतकम् |
| पद्मानन्दः | वैराग्यशतकम् |
| अज्ञातकर्तृकम् | खड्गशतकम् |
| जनार्दनभट्टः | शृङ्गारशतकम् |
| अवतारकविः | ईश्वरशतकम् |
| मधुसूदनः | अन्यापदेशशतकम् |
| उत्प्रेक्षावल्लभः | सुन्दरीशतकम् |
| सुन्दराचार्यः | गीतिशतकम् |
| गोकुलनाथः | शिवशतकम् |
| मूलकविः | पञ्चशती |
| वीरेश्वरः | अन्योक्तिशतकम् |
| कृष्णवल्लभः | काव्यभूषणशतकम् |
| गुमानिः | उपदेशशतकम् |

( घ ) स्तवकाव्यानि

| | |
|---|---|
| कल्हणः | अर्धनारीश्वरस्तोत्रम् |
| लल्लादीक्षितः | आनन्दमन्दिरस्तोत्रम् |

| | |
|---|---|
| रामभद्रः | विश्वगर्भस्तवः, रामाष्टप्रासः |
| शङ्कराचार्यः | शिवपादादिकेशान्तवर्णनस्तोत्रम् |
| शङ्कराचार्यः | शिवकेशादिपादान्तवर्णनस्तोत्रम् |
| वीरराघवचैतन्यः | महागणपतिस्तोत्रम् |
| लङ्केश्वरः | शिवस्तुतिः |
| कालिदासः | श्यामलादण्डकम्, नवरत्नमाला |
| कुलशेखरनृपतिः | मुकुन्दमाला |
| जगन्नाथः | सुधालहरी, करुणालहरी, लक्ष्मीलहरी, अमृतलहरी |
| शङ्कराचार्यः | विष्णुपादादिकेशान्तवर्णनस्तोत्रम् |
| शङ्कराचार्यः | अम्बाष्टकम् |
| शङ्कराचार्यः | मुकुन्दमुक्तावली |
| श्रीनिवासाचार्यः | जानकीचरणचामरम् |
| दुर्वासाः | श्रीललितास्तवरत्नम्, त्रिपुरामहिम्नस्तोत्रम् |
| नारायणभट्टः | स्वाहासुधाकरः |
| रामभद्रः | रामचापस्तवः, रामबाणस्तवः |
| मानतुङ्गः | भक्तामरस्तोत्रम् |
| सिद्धसेनदिवाकरः | कल्याणमन्दिरस्तोत्रम् |
| वादिराजः | एकीभावस्तोत्रम् |
| धनञ्जयः | विषापहारस्तोत्रम् |
| भूपालकविः | जिनचतुर्विंशतिका |
| देवनन्दी | सिद्धिप्रियस्तोत्रम् |
| जम्बुगुरुः | जिनशतकम् |
| जिनप्रभः | सिद्धान्तागमस्तवः |
| जिनवल्लभः | महावीरस्तोत्रम् |
| हेमचन्द्रः | महावीरस्वामीस्तोत्रम् |
| जिनप्रभः | पार्श्वनाथस्तवः, गोतमस्तोत्रम्, वीरस्तवः चतुर्विंशतिजिनस्तवः, पार्श्वस्तवः, वीरनिर्वाणककल्याणस्तवः |
| शोभनमुनिः | चतुर्विंशतिजिनस्तुतिः |
| नीलकण्ठः | आनन्दसागरस्तवः |
| मयूरः | सूर्यशतकम् |
| बाणभट्टः | चण्डीशतकम् |

| | |
|---|---|
| आनन्दवर्धनः | देवीशतकम् |
| अवतारकविः | ईश्वरशतकम् |
| लक्ष्मणाचार्यः | चण्डीकुचपञ्चाशिका |
| उत्प्रेक्षावल्लभः | सुन्दरीशतकम् |
| शङ्कराचार्यः | सौन्दर्यलहरी |
| नारायणपण्डितः | शिवस्तुतिः |
| शङ्कराचार्यः | त्रिपुरासुन्दरी-मानसिकोपचार-पूजास्तोत्रम् |
| सामराजः | त्रिपुरसुन्दरी-मानसपूजनस्तोत्रम् |
| शङ्कराचार्यः | चतुःषष्ट्युपचारमानसपूजास्तोत्रम् |
| रत्नाकरः | वक्रोक्तिपञ्चाशिका |
| गोकुलनाथः | शिवशतकम् |
| धर्माचार्यः | पञ्चस्तवी |
| मूककविः | पञ्चशती |
| लोष्टककविः | दीनाक्रन्दनस्तोत्रम् |
| हर्षवर्द्धनः | अष्टमहाश्रीचैत्यस्तोत्रम् |
| उत्पलदेवः | परमेशस्तोत्रावलिः |
| साम्बकविः | साम्बपञ्चाशिकाः |
| लीलांशुकः | कृष्णकर्णामृतम् |
| जगद्धरभट्टः | स्तुतिकुसुमाञ्जलिः |
| रूपगोस्वामी | पद्यावली |
| वेङ्कटाध्वरिः | लक्ष्मीसहस्रस्तोत्रम् |
| युवराजः | सुधानन्दलहरी |

### ( ङ ) पञ्चाशिकाकाव्यानि

| | |
|---|---|
| विल्हणः | चौरपञ्चाशिका |
| धनपालः | ऋषभपञ्चाशिका |
| लक्ष्मणाचार्यः | चण्डीकुचपञ्चाशिका |
| रत्नाकरः | वक्रोक्तिपञ्चाशिका |

### ( च ) सुभाषितकाव्यानि

| | |
|---|---|
| अमितगतिः | सुभाषितरत्नसन्दोहः |
| कश्चिद्बौद्धः | कवीन्द्रवचनसमुच्चयः |
| जल्हणः | सुभाषित( सूक्ति )मुक्तावली |

| | |
|---|---|
| श्रीधरदासः | सदुक्ति( सूक्ति )कर्णामृतम् |
| शङ्करानन्दयतिः | प्रश्नोत्तररत्नमाला |
| शाङ्र्गधरः | शाङ्र्गधरपद्धतिः |
| वल्लभदेवः | सुभाषितावलिः |
| श्रीधरः | सुभाषितावलिः |
| नीलकण्ठः | सभारञ्जनम् |
| हरिहरः | हरिहरसुभाषितानि |

## ( छ ) गद्यकाव्यानि

| | |
|---|---|
| सुबन्धुः | वासवदत्ता |
| दण्डी | दशकुमारचरितम् |
| बाणभट्टः | हर्षचरितं, कादम्बरी |
| धनपालः | तिलकमञ्जरी |
| वादीभसिंहः | गद्यचिन्तामणिः |
| वामनभट्टबाणः | वेमभूपालचरितम् |

## ( ज ) कथासाहित्यम्

| | |
|---|---|
| गुणाढ्यः | बृहत्कथा |
| | ललितविस्तरः |
| मातृचेटः | |
| विष्णुशर्मा | पञ्चतन्त्रम् |
| आर्यशूरः | जातकमाला |
| दण्डी | अवन्तिसुन्दरीकथा |
| सिद्धर्षिः | उपमितिभवप्रपञ्चकथा |
| नारायणः | हितोपदेशः |
| धनपालः | भविसयत्तकहा |
| सोड्ढलः | उदयसुन्दरीकथा |
| सोमदेवः | कथासरित्सागरः |
| शुकः | शुकसप्ततिः |
| पूर्णभद्रः | जैनतन्त्राख्यायिका |
| शिवदासः | शालिवाहनकथा, वेतालपञ्चविंशतिः कथार्णवः |
| मेरुतुङ्गः | प्रबन्धचिन्तामणिः |
| माधवाचार्यः | शङ्करदिग्विजयम् |

| | |
|---|---|
| राजशेखरः | प्रबन्धकोषः, चतुर्विंशतिप्रबन्धः |
| विद्यापतिः | पुरुषपरीक्षा |
| जिनकीर्तिः | चम्पकश्रेष्ठिकथानकं, बालगोपालकथानकं द्वात्रिंशत्पुत्तलिका, सिंहासनद्वात्रिंशिका |
| वल्लालकविः | भोजप्रबन्धः |

( झ ) चम्पूकाव्यानि

| | |
|---|---|
| त्रिविक्रमभट्टः | नलचम्पूः, मदालसाचम्पूः |
| सोमदेवः | यशस्तिलकचम्पूः |
| भोजदेवः | चंम्पूरामायणम् |
| अभिनवकालिदासः | भागवतचम्पूः, अभिनवभारतचम्पूः |
| कर्णपूरः | आनन्दवृन्दावनचम्पूः |
| जीवगोस्वामी | गोपालचम्पूः |
| शेषकृष्णः | पारिजातहरणचम्पूः |
| नीलकण्ठः | नीलकण्ठचम्पूः |
| वेङ्कटाध्वरीः | विश्वगुणादर्शचम्पूः |
| अनन्तकविः | चम्पूभारतम् |
| केशवभट्टः | नृसिंहचम्पूः |
| रामनाथः | चन्द्रशेखरचम्पूः |
| श्रीकृष्णकविः | मन्दारमरन्दचम्पूः |
| विट्ठलः | गजेन्द्रचम्पूः |
| तिरुमलाम्बाः | वरदाम्बिकापरिणयचम्पूः |

( ञ ) नाटकानि

| | |
|---|---|
| भासः | स्वप्नवासवदत्तं, प्रतिज्ञायौगन्धरायणं, प्रतिमानाटकं, अभिषेकनाटकं, पञ्चरात्रं, बालचरित्रं, मध्यमव्यायोगः, दूतवाक्यं, दूतघटोत्कचं, कर्णभारं, अरुभङ्गः, चारुदत्तः, अविमारकम् । |
| कालिदासः | मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलम् |
| शूद्रकः | मृच्छकटिकम् |
| महेन्द्रविक्रमः | मत्तविलासप्रहसनम् |
| हर्षवर्धनः | रत्नावली, प्रियदर्शिका, नागानन्दम् |
| भट्टनारायणः | वेणीसंहारम् |

| | |
|---|---|
| भवभूतिः | मालतीमाधवम्, महावीरचरितम्, उत्तररामचरितम् |
| अनङ्गहर्षः | तापसवत्सराजचरितम् |
| मुरारिः | अनर्घराघवम् |
| विशाखदत्तः | मुद्राराक्षसम् |
| राजशेखरः | कर्पूरमञ्जरी, बालरामायणम्, बालभारतम्, विद्धशालभञ्जिका |
| क्षेमीश्वरः | चण्डकौशिकम्, नैषधानन्दम् |
| कृष्णमिश्रः | प्रबोधचन्द्रोदयम् |
| कुलशेखरनृपतिः | तपतीसंवरणम्, सुभद्राधनञ्जयम् |
| दामोदरः | भल्लानाटकम् |
| मधुसूदनमिश्रः | हनुमन्नाटकम् |
| रामचन्द्रः | निर्भयभीमव्यायोगः, सत्यहरिश्चन्द्रम्, कौमुदीमित्रानन्दम्, रघुविलासः, नलविलासः |
| वत्सराजः | रुक्मिणीहरणम्, त्रिपुरदाहः, समुद्रमन्थनम्, कर्पूरचरितम्, हास्यचूडामणिः, किरातार्जुनीयव्यायोगः |
| विल्हणः | कर्णसुन्दरी |
| प्रह्लाददेवः | पार्थपराक्रमम् |
| जयसिंहः | हम्मीरमदमर्दनम् |
| यशःपालः | मोहराजपराजयम् |
| रविवर्मदेवः | प्रद्युम्नाभ्युदयम् |
| जयदेवः | प्रसन्नराघवम् |
| वेदान्तदेशिकः | सङ्कल्पसूर्योदयम् |
| विद्यानाथः | प्रतापरुद्रकल्याणम् |
| वामनभट्टबाणः | पार्वतीपरिणयम्, शृङ्गारभूषणभाणः |
| कर्णपूरः | चैतन्यचन्द्रोदयम् |
| गोकुलनाथः | अमृतोदयम् |
| शेषकृष्णः | कंसवधम् |
| काञ्चनाचार्यः | धनञ्जयविजयम् |
| उद्दण्डः | मल्लिकामारुतम् |
| महादेवः | अद्भुतदर्पणम् |
| आनन्दरायमखी | विद्यापरिणयम् |

# परिशिष्टम्—२

## उपयोजितग्रन्थसूचिः


| ग्रन्थः | ग्रन्थकारः |
|---|---|
| राजतरङ्गिणी | पं० रामतेज पाण्डेय |
| शुकराजतरङ्गिणी | रघुनाथ सिंह |
| ऐतिहासिक एवं साहित्यिक अभिलेख ( H. & L I. ) | राजबली पाण्डेय |
| प्रबन्धरत्नाकरः | रमेशचन्द्र शुक्ल |
| संस्कृतभाषाविज्ञानम् | रामाधीन चतुर्वेदी |
| संस्कृतसाहित्येतिहासः | विश्वनाथ शास्त्री |
| महाकविर्माघो महाकविर्दामोदरश्च | गौरीनाथ |
| संस्कृतसाहित्येतिहासः | हंसराज अग्रवाल |
| प्रबन्धकल्पलतिका भाग १, २ | रेवतीकान्त भट्टाचार्य |
| सस्कृतसाहित्येतिहासविमर्शः | द्विजेन्द्रनाथ |
| संस्कृतकविजीवितम् | |
| संस्कृतसाहित्यस्येतिहासः | रामचन्द्र मिश्र |
| संस्कृत महाकाव्य की परम्परा | केशवराव |
| संस्कृत-सुकविसमीक्षा | बलदेव उपाध्याय |
| संस्कृतकविदर्शन | भोलाशङ्कर व्यास |
| नेपाली साहित्य का इतिहास | दीनानाथ शरण |
| संस्कृत साहित्य का इतिहास- | ए० बी० कीथ अनु० मङ्गलदेव |
| A Short History of Sanskrit Literature | T. K. Ramchandra |
| A Compendions History of English Literature | R. D. Trivedi |
| The Indian Theatuse | E. P. Horrwitz |
| Alberuni's India | E. C. Sachau |
| History of Classical Sanskrit Litarature | M. Krishnamachariar |
| संस्कृत काव्यशास्त्र का इतिहास | पी० वी० काणे, अनुवादक— इन्द्रचन्द्र शास्त्री |

| | |
|---|---|
| संस्कृत शास्त्रों का इतिहास | बलदेव उपाध्याय |
| संस्कृत साहित्य का इतिहास | वाचस्पति गिरौला |
| संस्कृतसाहित्यकोश | राजवंशसहाय हीरा |
| संस्कृत साहित्य का संक्षिप्त इतिहास | सीताराम शास्त्री, विश्वनाथ भारद्वाज |
| संस्कृत के विद्वान् एवं पण्डित | रामचन्द्र मालवीय |
| भारतीय वाङ्मय के अमररत्न | जयचन्द्र |
| संस्कृत नाटक और नाटककार | राम अवध पाण्डेय, रविनाथ मिश्र |
| संस्कृत व्याकरणशास्त्र का इतिहास (भाग १, २, ३) | युधिष्ठिर मीमांसक |
| भारतीय साहित्य का इतिहास | विन्तनित्स, अनु० सुभद्र झा |
| संस्कृत साहित्य का इतिहास | हंसराज अग्रवाल |
| संस्कृत विद्या का इतिहास | |
| संस्कृत साहित्य की रूपरेखा | चन्द्रशेखर पाण्डेय एवं शान्तिकुमार भानुकुमार व्यास |
| संस्कृत साहित्य का इतिहास | वे० वरदाचार्य, अनु० कपिलदेव |
| संस्कृत साहित्य का समीक्षात्मक इतिहास | कपिलदेव द्विवेदी |
| संस्कृत साहित्य का इतिहास | मैकडोन, अनु० चारुचन्द्र |
| प्राचीन भारतीय साहित्य का इतिहास | एम० विण्टरनीज, अनु० विशिष्ट अनुवाद समिति |
| योरोपीय साहित्यकार | विनोदशङ्कर व्यास |
| प्राचीन भारतीय साहित्य | विण्टरनीज, अनु० रामचन्द्र पाण्डेय |
| संस्कृत साहित्य का इतिहास | राजवंश सहाय हीरा |
| संस्कृत साहित्य का बृहद् इतिहास | राजवंश सहाय |
| संस्कृत साहित्य का संक्षिप्त इतिहास | बलदेव उपाध्याय |
| भारतीय इतिहास का परिचय | राजबली पाण्डेय |
| प्राचीन भारत का राजनैतिक तथा सांस्कृतिक इतिहास | विमलचन्द्र पाण्डेय |
| प्राचीन भारतीय संस्कृति एवं सभ्यता | सत्यप्रकाश शर्मा |
| प्राचीन भारत का इतिहास | रमाशङ्कर त्रिपाठी |

तत्तद्ग्रन्थ जिन-जिन का यहाँ विवेचन हुआ है—

| | |
|---|---|
| आयुर्वेद का इतिहास | सूरमचन्द्र |
| आयुर्वेद का इतिहास | वागीश्वर शुक्ल |
| पाणिनिकालीन भारतवर्ष | वासुदेवशरण अग्रवाल |
| पतञ्जलिकालीन भारत | प्रभुदयाल अग्निहोत्री |
| भारतीय ज्योतिष का इतिहास | गोरखप्रसाद |
| गणकतरङ्गिणी | सुधाकर द्विवेदी |
| भारतीय ज्योतिष | शिवनाथ झारखण्डी |
| वैदिक साहित्य का इतिहास | कुँवरलाल जैन |
| व्याकरणशास्त्रेतिहासप्रबन्धः | लोकमणि दाहालः |

## परिशिष्टम्—३

### ग्रन्थकर्तृ-परिचयः

**लोकमणिदाहालः**

नेपालाभिजनः

वत्सगोत्रीयः

श्रीपरशुरामतनयो विष्णुमायागर्भजः

काशीवास्तव्यः

**प्रकाशितकृतयः**

मौलिकाः—

१. प्राचीनराजशास्त्रार्थशास्त्रदर्शनम् ( अनुसन्धानात्मकम् )

२. सूर्यमहिम्नः स्तोत्रम् ( १९८७ )

३. देवीमहिम्नः स्तोत्रम् ( १९८७ )

४. मुद्राराक्षसविवेकः ( १९८७ )

५. साहित्यशास्त्रीयनिबन्धः ( १९८८ )

६. व्याकरणशास्त्रेतिहासप्रबन्धः ( १९८९ )

७. संस्कृतसाहित्येतिहासप्रबन्धः ( १९८९ )

टीकाटिप्पण्यः—

१. मध्यमव्यायोगे कलाव्याख्या ( १९८४ )

२. चम्पूरामायणे ,, ( १९८२ )

३. कुमारसम्भवे ,, ( १९८६ )

४. रसरत्नहारे ,, ( १९८६ )

५. काव्यालङ्कारसूत्रेषु ,,

६. दशरूपके ,, ( १९८७ )

७. हरविजयमहाकाव्ये ,, ( १९८६ )

८. वक्रोक्तिजीविते ,, ( १९८८ )

९. शिवमहिम्नःस्तोत्रे लीलाव्याख्या ( १९८७ )

१०. ध्वन्यालोके ,, ( १९८९ )

११. भट्टिमहाकाव्ये कलाव्याख्या ( १९८९ )

अनुवादः—तत्तद्ग्रन्थेषु प्रतिकलाऽनुवादो हिन्दी भाषायाम् ।

स्फुटरचना—विविधासु पत्रपत्रिकासु प्रकाशिताः पञ्चाशदधिकाः ।

# नवीनवैदिकसञ्चयनम् (न्यू वैदिक सेलेक्शन)

वेद विश्वसाहित्य के प्राचीनतम उपलब्ध ग्रन्थरत्न है। मानव संस्कृति के प्राचीनतम रूप तथा विकास को समझने के लिए, वेदों का परिशीलन अपरिहार्य है। मानवजाति के इतिहास के ज्ञान के लिए, भारतीय संस्कृति को समझने के लिए और भाषा-वैज्ञानिक गुत्थियों को सुलझाने के लिए वेदों का अध्ययन आवश्यक माना जाता है। वेद भारतीय सभ्यता एवं संस्कृति की अमूल्य निधि हैं जो आज भी वैज्ञानिक उपलब्धियों के बीच अपने ज्ञान-गौरव की अक्षुण्णता का निर्बाध रूप से उद्घोष कर रहे हैं। वेदों के ही आधार पर भारतीय दार्शनिक, धार्मिक तथा सामाजिक ज्ञान के भव्य प्रासाद को प्रतिभा सम्पन्न वाक्-शिल्पियों ने खड़ा किया है। अत एव वेदों का अनुशीलन तथा उनके मौलिक सिद्धान्तों और तथ्यों का उद्घाटन ज्ञान के संवर्धन एवं उन्नयन के लिए विशेष उपयोगी है।

वेदों में पारलौकिक तथा इहलौकिक विषयों का उद्घाटन हुआ है। इस प्रकार वेद सम्पूर्ण ज्ञानराशि के कोष हैं। पारलौकिक ज्ञान के साथ-साथ इहलौकिक [illegible]ों का भी समावेश होने से वेद इहलौकिक समस्याओं के समाधान के लिए भी उपयोगी हैं, वह स[illegible] सामाजिक [illegible] [illegible]जनैतिक हो, ऐतिहासिक हो, वैज्ञानिक हो अथवा अन्य किसी प्रकार की हो। आज के [illegible]रिवेश में भी [illegible] वाली समस्त समस्याओं का समाधान वेदों द्वारा किया जा सकता है। अतः वेदों के ज्ञा[illegible] जितनी अ[illegible]कता वैदिक-काल में थी, उतनी ही नहीं, प्रत्युत उससे भी अधिक आवश्यकता [illegible] है। वेदों के [illegible] और उसके अनुसार आचरण करने से मानव-जाति ही क्या, समस्त प्रकृति के चरा[illegible]त् के सम्मु[illegible]ई समस्या ही नहीं रह जाएगी।

वेद-ज्ञान की उपयोगिता को दृष्टि में रखकर ही आज भी [illegible] सभी भारत[illegible]श्वविद्यालयों की स्नातक एवं स्नातकोत्तर कक्षाओं में वेदों का अध्ययनाध्यापन [illegible] है। नवीनवै[illegible]सञ्चयनम् में स्नातक कक्षाओं में पढ़ाये जाने वाले वैदिकमन्त्रों का सङ्कलन किया [illegible]। इस सङ्कलन [illegible]न्त्र, पदपाठ, ऋग्वेद और अथर्ववेद के मन्त्रों पर सायणभाष्य, अन्वय, पदार्थ, अनुवाद तथा व्याकरणात्मक टिप्पणी दी गयी है जिससे अध्यापक और अध्येक्षा दोनों लाभान्वित हो सकें। विद्यार्थियों के लिए उपयोगी भूमिका में वैदिक साहित्य का सामान्य परिचय तथा सङ्कलित मन्त्र के देवताओं का परिचय दिया गया है। इस संस्करण से वैदिक अध्येताओं का अल्पमात्र भी लाभ हुआ तो किया गया परिश्रम सार्थक हो जाएगा।

*डॉ. जमुना पाठक एवं डॉ. उमेश प्रसाद सिंह*



प्रथम भाग १५०.००



द्वितीय भाग २५०.००



*Also can be had from*

**Chowkhamba Sanskrit Series Office**

K. 37/99, Gopal Mandir Lane
Near Golghar (Maidagin)
Post Box 1008, Varanasi-221 001 (U.P) India
Phone : Office : (0542) 2333458, Res. : (0542) 2334032 & 2335020
Fax : (0542) 2333458, e-mail : cssoffice@satyam.net.in
Web site : www.chowkhambaseries.com

ISBN : 81-218-0028-5 Price Rs. 125.00